पृष्ठसंख्या


तिथित्रयसंगमे निर्णयः ... ३०५
जयन्त्याः त्रैविध्यम् ... ३०६
तत्र ब्रह्मजयन्ती ... ३०८
विष्णुजयन्ती ... ३०८
रुद्रजयन्ती ... ३०८
जन्माष्टमीनिर्णयः ... ३०९
निशीथयोगस्य जन्माष्टमीत्वम् ... ३१०
पाञ्चरात्रानुसारेण जयन्तीजन्माष्टमीनिर्णयः ... ३११
वैखानसानुसारेण ,, ... ३१२
श्रीरामनवमीनिर्णयः ... ३१३
श्रीरामनवम्यां वेधादिनिर्णयः ... ३१३
जयन्तीपारणनिर्णयः ... ३१५
रात्रिपारणस्यायुक्तता ... ३१५
पाञ्चरात्रोक्तरात्रिपारणस्य तन्त्रदीक्षितविषयकत्वम् ... ३१५
दुर्गानवमीनिर्णयः ... ३१६
दशमीनिर्णयः ... ३१७
कृत्तिकादीपविधिः ... ३१८
दीपोत्सवकालः ... ३१८
पर्वदिनस्य चतुर्दशीभरणीदुष्टत्वे प्रतिपदः ग्राह्यता ... ३१८
उदयकालपर्वासंभवे सङ्गवस्पृशो ग्राह्यत्वम् ... ३१८
पाञ्चरात्रानुसारेण कृत्तिकादीपनिर्णयः ... ३१९
एकमासे कृत्तिकाद्वयसंभवे परत्रैव दीपारोपणम् ... ३२०
कृत्तिकायाः संक्रान्तिदुष्टत्वे अपर्वकत्वे च विशेषः ... ३२१
रोहिणीयोगाभावे विशेषः ... ३२१
भौमवारयुक्तपर्वणस्त्याज्यता ... ३२१
भरणीचतुर्दशीयुक्तपर्वणस्त्याज्यता ... ३२१
संक्रमविषुवायनादिषु स्नानदानादिपुण्यकालनिर्णयः ... ३२२
रात्रौ स्नानदानयोर्विशेषाः ... ३१५
मन्वादिपुण्यतमकालेष्वेव स्नानादेः कार्यता ... ३२६
मुख्यकालासंभवे गौणकालस्य ग्राह्यता ... ३२६
भगवतः स्नपननिमित्तकालादिनिर्णयः ... ३२७
समूर्तयजनममूर्तयजनञ्च ... ३२८
मानसपूजा ... ३२८

| | | पृष्ठसंख्या |
|---|---|---|
| विधर्मपरधर्मादीनां त्याज्यता | ... | ३२९ |
| भोज्यान्यन्नानि | ... | ३२९ |
| भोजननियमाः | ... | ३२९ |
| भोजनानन्तरमुदराभिमर्शनम् | ... | ३३० |
| आचमनविषये विशेषः | ... | ३३१ |
| हुतानुमन्त्रणम् | ... | ३३१ |
| ताम्बूलचर्वणम् | ... | ३३२ |
| सायं प्रातश्च प्राणाग्निहोत्रस्य कार्यता | ... | ३३२ |
| हरिवासरादिषु मन्त्रजपेन प्राणाग्निहोत्रकरणम् | ... | ३३२ |
| ऋणत्रयापाकरणस्य आवश्यकता | ... | ३३३ |
| मुमुक्षोरपि ऋणत्रयापाकरणम् | ... | ३३४ |
| अथ पाणिग्रहणम् | ... | ३३६ |
| विवाहस्याष्टविधत्वम् | ... | ३३६ |
| तत्र ब्राह्मविवाहलक्षणम् | ... | ३३६ |
| वरदोषाः कन्यादोषाश्च | ... | ३३७ |
| दैवविवाहलक्षणम् | ... | ३३७ |
| प्राजापत्यविवाहलक्षणम् | ... | ३३७ |
| आर्षविवाहलक्षणम् | ... | ३३८ |
| आसुरविवाहलक्षणम् | ... | ३३८ |
| गान्धर्वविवाहलक्षणम् | ... | ३३८ |
| राक्षसविवाहलक्षणम् | ... | ३३८ |
| पैशाचविवाहलक्षणम् | ... | ३३८ |
| ब्राह्मणस्य प्रथमे चत्वारो विवाहाः प्रशस्ताः | ... | ३३९ |
| क्षत्रियस्य प्रशस्तो विवाहः | ... | ३३९ |
| वैश्यस्य प्रशस्तो विवाहः | ... | ३३९ |
| शूद्रस्य प्रशस्तो विवाहः | ... | ३३९ |
| आसुरादिविवाहप्रतिपादनस्य फलम् | ... | ३४० |
| गान्धर्वादिषु समन्त्रकं पुनर्विवाहः | ... | ३४० |
| ब्राह्मणक्षत्रिययोः शूद्राविवाहनिषेधः | ... | ३४१ |
| भार्यात्वनियामकविषये पक्षभेदाः | ... | ३४१ |
| तोयप्रदानं भार्यात्वनियामकमिति पक्षनिरासः | ... | ३४१ |
| पाणिग्रहणं ,, ,, | ... | ३४२ |
| सप्तपदक्रमादि ,, ,, | ... | ३४२ |

पृष्ठसंख्या

ध्रुवदर्शनं भार्यात्वनियामकमिति पक्षनिरासः .... ३४२
क्षतयोनित्वं ,, ,, ... ३४३
शेषहोमान्तसंगमनपर्यन्तं भार्यात्वनियामकमिति सिद्धान्तः ... ३४३
ब्राह्मीपुत्रस्य एकविंशतिपुरुषपावयितृत्वम् ... ३४४
कन्यावरणानन्तरं सपिण्डैः सह भोजनम् ... ३४६
सपिण्डाविवाहनिषेधः ... ३४६
सापिण्ड्यलक्षणम् ... ३४६
मातुलसुताविवाहनिषेधः ... ३४६
दाक्षिणात्याचारो मातुलसुतोद्वाहः ... ३४७
सगोत्रविवाहनिषेधः ... ३४८
विवाहयोग्यकन्यालक्षणम् ... ३४८
कन्याया दुष्टलक्षणानि ... ३४९
नग्निकालक्षणम् ... ३५०
विवाहयोग्यनक्षत्रलग्नादि ... ३५१
विवाहदिनात्पूर्वेद्युः नान्दीमुखं कन्यावरणञ्च ... ३५२
वधूवरयोः परस्परमीक्षणम् ... ३५२
वरस्य कन्यागृहं प्रति गमनप्रकारः ... ३५२
कन्यादानप्रकारः ... ३५३
कन्याप्रदानमन्त्रः ... ३५३
वरेण कन्याप्रतिग्रहप्रकारः ... ३५३
माङ्गल्यधारणम् ... ३५४
ततो वध्वै कूर्चदानम् ... ३५५
विवाहशालाया लक्षणम् ... ३५५
मङ्गलाष्टकम् ... ३५५
प्रधानहोमः ... ३५६
अश्माऽऽस्थानम् ... ३५६
पाणिग्रहणम् ... ३५६
लाजहोमविधिः ... ३५६
त्रिधा लाजहोमः ... ३५८
लाजहोमान्ते मूलहोमः ... ३५८
प्रवेशहोमः ... ३५८
सप्तपदाक्रमणम् ... ३५८
स्तोमारोपणम् ... ३५९

| | | पृष्ठसंख्या |
|---|---|---|
| स्तोमद्रव्याणि | ... | ३५९ |
| स्तोमारोपणेन विवाहसिद्धिः | ... | ३५९ |
| पाणिग्रहणस्य ध्रुवदर्शनान्तत्वमिति पक्षः | ... | ३५९ |
| चतुर्थीवासविधिः | ... | ३६० |
| रात्रिविवाहे विशेषः | ... | ३६० |
| शकुनविषये विशेषाः | ... | ३६३ |
| उपश्रुतिः | ... | ३६३ |
| सुनिमित्तानि दुर्निमित्तानि च | ... | ३६४ |
| वधूवरयोरुपवेशार्थं चर्म | ... | ३६४ |
| नक्षत्रदर्शनपर्यन्तं वाचंयमत्वम् | ... | ३६५ |
| ध्रुवदर्शनम् | ... | ३६५ |
| आग्नेयस्थालीपाकविधिः | ... | ३६६ |
| स्विष्टकृद्यागः | ... | ३६६ |
| श्रोत्रियसंतर्पणम् | ... | ३६७ |
| विप्राणां दशविधत्वं, तेषां प्रत्येकलक्षणं च | ... | ३६७ |
| दुर्ब्राह्मणलक्षणम् | ... | ३६८ |
| पार्वणस्थालीपाकविधिः | ... | ३७० |
| देशकालाद्यपेक्षया स्थालीपाकव्यवस्था | ... | ३७० |
| औपासनविधिः | ... | ३७१ |
| हविष्येषु मुख्यामुख्यनिर्णयः | ... | ३७२ |
| होमकालनिर्णयः | ... | ३७२ |
| स्वयंकृतहोमस्य श्रैष्ठ्यम् | ... | ३७३ |
| अग्न्यन्तरसंसर्गप्रायश्चित्तप्रकारः | ... | ३७५ |
| अग्निनाशप्रायश्चित्तम् | ... | ३७७ |
| अग्निनाशे पुनरौपासनम् | ... | ३७८ |
| प्राजापत्यादिकृच्छ्राः | ... | ३७९ |
| तत्र पादकृच्छ्रः | ... | ३७९ |
| भावकृच्छ्रः | ... | ३७९ |
| कृच्छ्रातिकृच्छ्रः | ... | ३७९ |
| तप्तकृच्छ्रः | ... | ३७९ |
| सांतपनकृच्छ्रः | ... | ३८० |
| पराककृच्छ्रः | ... | ३८० |
| महासांतपनकृच्छ्रः | ... | ३८० |

श्वोभूतेऽपराह्ले कर्तव्यम्
अमावास्यायाः अपराह्णव्यापित्वादि
श्राद्धतिथिनिर्णयः
पिण्डपितृयज्ञस्य भगवद्यजनत्वम्
दर्शश्राद्धपिण्डपितृयज्ञान्वाधानानां वासरैक्यतन्त्रत्वादि
जीवत्पितृकस्य श्राद्धकर्तृत्वादि
पिण्डदानप्रकारः
पिण्डलक्षणम्
अभ्यञ्जनकशिपूपबर्हणवासोऽञ्जनानि
पिण्डोद्वासनं, ब्राह्मणभोजनञ्च
गार्हपत्योपस्थानम्
चरुपाकहोमौ
पत्नीप्राशनम्
द्विपितृकपुत्रकर्तव्यः पिण्डयज्ञः
पात्राणां आहरणम्
मासिश्राद्धम्
श्राद्धफलम्
पिण्डदाने विशेषः
मृतपित्रादिसंस्कारे अधिकारिनिर्णयः
सपिण्डीकरणकालादिनिर्णयः
एकोद्दिष्टादिनिर्णयः
सपिण्डीकरणाकरणे दोषाः
प्रेतस्य मृतौ प्रशस्ताप्रशस्तनक्षत्राणि
प्रेतपूजायाः पितृपूजात्वम्
चैत्रीविधिः (पाकयज्ञः)
चैत्र्यां पौर्णमास्यां दम्पत्योरलंकरणम्
होमः
आश्वयुजी (पाकयज्ञः)
नित्यार्चाविधिः
नित्यार्चनस्य सर्वदेवार्चनरूपत्वम्
विष्णोः सर्वदेवाधिपतित्वादि
समूर्तार्चनश्रैष्ठ्यम्
भगवदर्चनाभावे दोषः

पृष्ठसंख्या

| | | |
|---|---|---|
| विष्णोः बिम्बक्लृप्तिप्रकारः श्रौतः | ... | ६२० |
| ,, भारतोक्तः | ... | ६२० |
| बिम्बनिर्माणप्रकारः | ... | ६२० |
| अङ्गुललक्षणम् | ... | ६२१ |
| षण्मानलक्षणम् | ... | ६२१ |
| आयादिकम् | ... | ६२२ |
| बेरलक्षणम् | ... | ६२४ |
| शिलासंग्रहणप्रकारः | ... | ६२५ |
| शिलादोषाः | ... | ६२६ |
| शिलाप्रभेदाः | ... | ६२८ |
| वर्ज्यावर्ज्यशिलाः | ... | ६२९ |
| लौहबिम्बनिर्माणप्रकारः | ... | ६३३ |
| रूपकल्पनप्रकारः | ... | ६३५ |
| प्रतिष्ठाकालनिर्णयः | ... | ६३८ |
| प्रतिष्ठाविधौ आचार्यलक्षणादिकम् | ... | ६४१ |
| अङ्कुरार्पणप्रकारः | ... | ६४२ |
| नेत्रोन्मीलनम् | ... | ६४३ |
| जलाधिवासः | ... | ६४४ |
| स्नपनम् | ... | ६४४ |
| देवालंकरणं पूजा च | ... | ६४५ |
| प्रतिसरबन्धः, शयनाधिवासश्च | ... | ६४५ |
| पञ्च शयनानि | ... | ६४५ |
| कुम्भार्चनम् | ... | ६४६ |
| कुम्भे प्रक्षेप्तव्यानि द्रव्याणि | ... | ६४६ |
| कुम्भे ध्यानावाहनादि | ... | ६४६ |
| आसनप्रकारः | ... | ६४७ |
| ध्यानप्रकारः | ... | ६४७ |
| आवाहनप्रकारः | ... | ६४८ |
| होमः | ... | ६४९ |
| नित्यार्चनविधिविशेषः | ... | ६५१ |
| ध्यानप्रकारः | ... | ६५१ |
| पाद्याचमनालंकारादि | ... | ६५२ |
| पुष्पगन्धधूपादि | ... | ६५२ |

| | | पृष्ठसंख्या |
|---|---|---|
| अतिकृच्छ्रः | ... | ३८० |
| चान्द्रायणविधिः | ... | ३८१ |
| कृच्छ्रप्रत्याम्नायाः | ... | ३८३ |
| चान्द्रायणादीनां प्रत्याम्नायाः | ... | ३८४ |
| अग्न्यनुगतप्रायश्चित्तकृच्छ्रम् | ... | ३८४ |
| पितृयज्ञाद्यत्यये प्रायश्चित्तम् | ... | ३८५ |
| प्रवासादिनिमित्तेषु पक्षहोमः | ... | ३८६ |
| आत्मसमारोपणम् | ... | ३८७ |
| अवरोपणप्रकारः | ... | ३८८ |
| वैश्वदेवविधिः | ... | ३८९ |
| वैश्वदेवस्यावश्यकर्तव्यता | ... | ३८९ |
| बलिहरणम् | ... | ३९० |
| बलिशेषनिर्वापः | ... | ३९२ |
| वायसबलिः | ... | ३९३ |
| वैखानसानुसारेण मनुनोक्तः बलिप्रकारः | ... | ३९३ |
| पत्न्यादिभिर्वा बलिकर्मणः करणम् | ... | ३९४ |
| वैश्वदेवकालः | ... | ३९५ |
| वैश्वदेवप्रकारः | ... | ३९६ |
| अतिथिसत्कारः | ... | ३९६ |
| तस्यावश्यकर्तव्यता | ... | ३९७ |
| अतिथेर्वैश्वानररूपत्वम् | ... | ३९९ |
| शेषहोमः | ... | ४०० |
| संस्कारहोमः | ... | ४०१ |
| आलिङ्गनमैथुने | ... | ४०१ |
| स्त्रीधर्माः | ... | ४०२ |
| अग्निद्वयसंसर्गप्रयोगः | ... | ४०३ |
| संसृष्टाग्नेर्विभागप्रयोगः | ... | ४०६ |
| रजस्वलाधर्माः | ... | ४०७ |
| आर्तवस्य चातुर्विध्यम् | ... | ४०७ |
| ऋतुकाललक्षणम् | ... | ४०७ |
| रजस्वलायाः मलवद्वासस्त्वादि | ... | ४०८ |
| रोगिण्याः रजस्वलायाः विशेषधर्माः | ... | ४१० |
| रजस्वलास्पर्शादिदोषाः | ... | ४११ |

पृष्ठसंख्या

रजस्स्वलासंगमननिषेधः ... ४१२
अथ निषेकः ... ४१२
ऋतुरात्रयो द्वादश षोडश वा ... ४१२
स्त्रीसंगमनकालनिर्णयः ... ४१३
आहारनियमाः ... ४१४
स्त्रीउपगमनमन्त्रः ... ४१५
प्रथमार्तवफलानि ... ४१६
स्त्रीसंगमादिषु वर्ज्या नक्षत्रादयः ... ४१८
अभ्यञ्जनकालः ... ४२०
अभ्यङ्गार्हतैलानि ... ४२०
नरकचतुर्दश्यामभ्यञ्जनस्नानम् ... ४२०
स्त्रीगमने केचिन्नियमाः ... ४२१
स्त्रीसंगमे वाजीकरणप्रयोगः ... ४२१
,, सुदर्शनादिमन्त्रजपः ... ४२२
गर्भिणीत्वप्राप्त्युपायाः ... ४२२
निषेकप्रकारः ... ४२३
गृहीतगर्भायाः चिह्नानि ... ४२४
गर्भचिह्नज्ञानानन्तरं कर्तव्यानि कर्माणि ... ४२४
शरीरोत्पत्तिप्रकारः ... ४२४
शरीरावयवाद्युत्पत्तिः ... ४२६
कामक्रोधादीनामुत्पत्तिस्थानानि ... ४२७
पुंसवनविधिः ... ४३०
सीमन्तोन्नयनविधिः ... ४३२
विष्णुबलिः ... ४३४
जातकर्मविधिः ... ४३६
अरिष्टागारलक्षणम् ... ४३६
गृहनिर्माणार्थतिथिनक्षत्रादि ... ४३६
आसन्नप्रसवगर्भिण्याः कर्तव्यानि ... ४३८
प्रसवकाले शुभाशुभपरीक्षणम् ... ४३९
जाते कुमारे कर्तव्यानि ... ४४४
सूतकादौ सन्ध्यादीनां नत्यागः ... ४४५
जातकाग्नेरुत्पत्तिप्रकारः ... ४४७

उत्पन्नाग्निलक्षणम् ...
धूपदानम् ...
घृतकरणम् ...
घृतप्राशनम् ...
शयनादिशोधनम् ...
जननात्सप्तमे दिने विशेषः ...
वास्तुसवनम् ...
दीक्षाविसर्जननिर्णयः ...
पुराणभाण्डत्यागादि ...
पात्रादिशुद्धिप्रकारः ...
वास्तुपुरुषलक्षणं वास्तुपरीक्षा च ...
वास्तुहोमार्थकुण्डविधिः ...
वास्तुसवनाघारहोमः ...
पुण्याहजलेन गृहे सर्वत्र प्रोक्षणम् ...
ततः केचन होमाः ...
उत्थानविधिः ...
उत्थानलक्षणम् ...
नामकरणम् ...
सूतकाशौचकालमानम् ...
नामकरणकालः ...
नामलक्षणम् ...
रहस्यं प्रकाशं चेति नामद्वयम् ...
पुण्याहवाचनम् ...
कर्णवेधः ...
वर्षवर्धनम् ...
उपनयनपर्यन्तं जन्मनक्षत्रे होमः कर्तव्यः ...
शिष्टाचारनिर्णयः ...
आर्यावर्तम्लेच्छदेशौ ...
शताभिषेकविधिः ...
चान्द्र-सावन-सौरवर्षमासादीनां लक्षणम् ...
अनावृष्टिगणाः ...
दानलक्षणम् ...

पृष्ठसंख्या

नित्यादिदानत्रयम् ... ४८४
दानस्य हेतुद्वयम् ... ४८४
धर्मदानादीनि षट् दानानि ... ४८४
दानाङ्गानि षट् ... ४८५
दानस्य षड्विपाकाः ... ४८५
दानस्य श्रैष्ठ्यम् ... ४८६
दानकालाः ... ४८७
संक्रमाः द्वादश ... ४८८
विष्णुपदषडशीत्यादीनां लक्षणम् ... ४८८
स्नानदानयोर्निमित्तानि ... ४८९
वर्षवर्धनस्याश्वमेधतुल्यता ... ४९०
गृह्यपरिशिष्टोक्तः शताभिषेकविधिः ... ४९१
अन्नप्राशनविधिः ... ४९६
कुमारभोजनम् ... ४९७
प्रवासागमनम् ... ४९७
पिण्डवर्धनम् ... ४९९
चौलम् ... ५००
चौलकालः ... ५००
क्षौरकर्मणि शुभाशुभतिथ्यादयः ... ५०१
क्षुरतीक्ष्णीकरणादिमन्त्राः ... ५०३
चूडाविभजनम् ... ५०३
स्नानादिब्राह्मणतर्पणान्तम् ... ५०५
श्रीवाजपेयभाष्यसंग्रहः ... ५०६
अथ स्थालीपाकविधिः ... ५२७
पर्वद्वयनिर्णयः ... ५२७
प्रथमस्थालीपाकस्यारम्भकालः ... ५२८
मलमासे स्थालीपाकः कार्यो न वेति विचारः ... ५३२
स्थालीपाकप्रयोगः ... ५३२
आग्रयणस्थालीपाकविधिः ... ५३५
अष्टकाविधिः ... ५३७
अष्टकाकालनिर्णयः ... ५३७
प्रशस्तकालातिक्रमे दोषः ... ५३९

पृष्ठसंख्या

पञ्चमपक्षस्याधिमासत्वे सप्तमः पक्ष एव श्राद्धकालः ... ५३९
नित्यादिश्राद्धानि ... ५४१
अष्टकायां निमन्त्रणीया ब्राह्मणाः ... ५४२
अपरेद्युरपराह्णे स्थालीपाकः ... ५४४
अनेकविधश्राद्धानां कालनिर्णयः ... ५४५
कुतपकालः ... ५४६
मलमासादिविषये श्राद्धनिर्णयः ... ५४७
आब्दिककालः ... ५४८
उपवासदिने श्राद्धनिर्णयः ... ५४९
मृतदिनमासाज्ञाने विशेषः ... ५५१
देशान्तरगते प्रेते विशेषः ... ५५१
ग्रहणे श्राद्धनिषेधः ... ५५२
आशौचे विशेषः ... ५५२
भार्यायाः रजस्स्वलात्वे विशेषः ... ५५२
आमश्राद्धम् ... ५५३
शूद्रेण आमश्राद्धस्यैव कार्यता ... ५५४
एकदिने श्राद्धद्वयनिषेधः ... ५५४
औपासनाग्नौ कर्तव्यानि कर्माणि ... ५५५
श्राद्धकरणेऽधिकारिणः ... ५५६
होमभोजनपिण्डदानानां प्राधान्यम् ... ५५६
ब्राह्मणभोजनं प्रधानं पिण्डहोमावङ्गभूतौ ... ५५६
संकल्पश्राद्धम् ... ५५७
श्राद्धार्हानर्हद्रव्याणि ... ५५८
अष्टकाश्राद्धप्रयोगक्रमः ... ५५९
पादप्रक्षालनादि ... ५६०
शुद्धाचमनम् ... ५६०
ब्राह्मणानामुपवेशनम् ... ५६१
वस्त्रगन्धाद्युपचाराः ... ५६१
वस्त्रलक्षणम् ... ५६२
श्राद्धहोमः ... ५६३
पिण्डदानक्रमः ... ५६६
सप्तपितृगणेषु चत्वारो मूर्तिमन्तः, त्रयः अमूर्ताः ... ५६७
ब्राह्मणभोजनम् ... ५७१

पृष्ठसंख्या


ब्राह्मणानां संकर्षणादिरूपेण वस्वादिरूपेण वा वरणं कर्तव्यमिति विचारः ५७२
आवाहनप्रकारः ... ५७५
परिषेचनादि अन्नदानान्तम् ... ५७५
भोजनकाले ऋक्पठनादि ... ५७८
षण्डादीनां लक्षणम् ... ५७९
तत्र षण्डः ... ५७९
मार्जारः ... ५८०
आखुः ... ५८०
कुक्कुटः ... ५८०
पतितः ... ५८०
अपविद्धः ... ५८०
चण्डालः ... ५८०
उत्तरापोशनम् ... ५८०
अन्नविकिरणम् ... ५८१
निमन्त्रितब्राह्मणेभ्यः मुखवासदक्षिणादिदानम् ... ५८१
विश्वेदेवपूर्वकं विष्ण्वन्तं च सर्वं कर्तव्यम् ... ५८२
पितृप्रार्थनप्रतिवचने ... ५८४
पिण्डोद्वासनम् ... ५८४
ब्राह्मणानां प्रवासनम् ... ५८५
पिण्डस्य काकादीतरस्पर्शे प्रायश्चित्तम् ... ५८५
ततः पञ्चमहायज्ञादि ... ५८५
तिलतर्पणनिर्णयः ... ५८७
एकदिने श्राद्धद्वयभोजननिषेधः ... ५८९
श्राद्धकर्त्रा वर्जनीयानि कर्माणि ... ५९०
श्राद्धभोक्त्रा वर्जनीयानि कर्माणि ... ५९०
पिण्डपितृयज्ञः ... ५९२
अमावास्यापौर्णमास्योर्लक्षणे ... ५९२
पौर्णमासीद्वैविध्यम् ... ५९३
राका, अनुमतिश्च ... ५९३
सिनीवाली, कुहूरित्यमावास्याप्रभेदौ ... ५९३
कुहूः ... ५९३
पूर्वाह्णकर्तव्यम् ... ५९४
दर्भलक्षणं तत्प्रभेदाश्च ... ५९४

| | | पृष्ठसंख्या |
|---|---|---|
| श्वोभूतेऽपराह्णे कर्तव्यम् | ... | ५९४ |
| अमावास्याया: अपराह्णव्यापित्वादि | ... | ५९५ |
| श्राद्धतिथिनिर्णय: | ... | ५९६ |
| पिण्डपितृयज्ञस्य भगवद्यजनत्वम् | ... | ५९९ |
| दर्शश्राद्धपिण्डपितृयज्ञान्वाधानानां वासरैक्यतन्त्रेदादि | ... | ५९९ |
| जीवत्पितृकस्य श्राद्धकर्तृत्वादि | ... | ६०२ |
| पिण्डदानप्रकार: | ... | ६०३ |
| पिण्डलक्षणम् | ... | ६०३ |
| अभ्यञ्जनकशिपूपबर्हणवासोऽञ्जनानि | ... | ६०३ |
| पिण्डोद्वासनं, ब्राह्मणभोजनञ्च | ... | ६०४ |
| गार्हपत्योपस्थानम् | ... | ६०४ |
| चरुपाकहोमौ | ... | ६०४ |
| पत्नीप्राशनम् | ... | ६०४ |
| द्विपितृकपुत्रकर्तव्य: पिण्डयज्ञ: | ... | ६०५ |
| पात्राणां आहरणम् | ... | ६०५ |
| मासिश्राद्धम् | ... | ६०७ |
| श्राद्धफलम् | ... | ६०७ |
| पिण्डदाने विशेष: | ... | ६०८ |
| मृतपित्रादिसंस्कारे अधिकारिनिर्णय: | ... | ६०८ |
| सपिण्डीकरणकालादिनिर्णय: | ... | ६०९ |
| एकोद्दिष्टादिनिर्णय: | ... | ६११ |
| सपिण्डीकरणाकरणे दोषा: | ... | ६१२ |
| प्रेतस्य मृतौ प्रशस्ताप्रशस्तनक्षत्राणि | ... | ६१३ |
| प्रेतपूजाया: पितृपूजात्वम् | ... | ६१३ |
| चैत्रीविधि: (पाकयज्ञ:) | ... | ६१५ |
| चैत्र्यां पौर्णमास्यां दम्पत्योरलंकरणम् | ... | ६१५ |
| होम: | ... | ६१५ |
| आश्वयुजी (पाकयज्ञ:) | ... | ६१७ |
| नित्यार्चाविधि: | ... | ६१९ |
| नित्यार्चनस्य सर्वदेवार्चनरूपत्वम् | ... | ६१९ |
| विष्णो: सर्वदेवाधिपतित्वादि | ... | ६१९ |
| समूर्तार्चनश्रैष्ठ्यम् | ... | ६१९ |
| भगवदर्चनाभावे दोष: | ... | ६२० |

पृष्ठसंख्या

विष्णोः बिम्बक्लृप्तिप्रकारः श्रौतः ... ६२०
,, भारतोक्तः ... ६२०
बिम्बनिर्माणप्रकारः ... ६२०
अङ्गुललक्षणम् ... ६२१
षण्मानलक्षणम् ... ६२१
आयादिकम् ... ६२२
बेरलक्षणम् ... ६२४
शिलासंग्रहणप्रकारः ... ६२५
शिलादोषाः ... ६२६
शिलाप्रभेदाः ... ६२८
वर्ज्यावर्ज्यशिलाः ... ६२९
लोहबिम्बनिर्माणप्रकारः ... ६३३
रूपकल्पनप्रकारः ... ६३५
प्रतिष्ठाकालनिर्णयः ... ६३८
प्रतिष्ठाविधौ आचार्यलक्षणादिकम् ... ६४१
अङ्कुरार्पणप्रकारः ... ६४२
नेत्रोन्मीलनम् ... ६४३
जलाधिवासः ... ६४४
स्नपनम् ... ६४४
देवालंकरणं पूजा च ... ६४५
प्रतिसरबन्धः, शयनाधिवासश्च ... ६४५
पञ्च शयनानि ... ६४५
कुम्भार्चनम् ... ६४६
कुम्भे प्रक्षेप्तव्यानि द्रव्याणि ... ६४६
कुम्भे ध्यानावाहनादि ... ६४६
आसनप्रकारः ... ६४७
ध्यानप्रकारः ... ६४७
आवाहनप्रकारः ... ६४८
होमः ... ६४९
नित्यार्चनविधिविशेषः ... ६५१
ध्यानप्रकारः ... ६५१
पाद्याचमनालंकारादि ... ६५२
पुष्पगन्धधूपादि ... ६५२

| | | पृष्ठसंख्या |
|---|---|---|
| दीपसमर्पणम् | ... | ६५३ |
| अर्घ्यदानम् | ... | ६५४ |
| हविर्निवेदनम् | ... | ६५४ |
| पानीयाचमनमुखवासादि | ... | ६५५ |
| पुष्पाञ्जलिविधिः | ... | ६५५ |
| मुखवासलक्षणम् | ... | ६५५ |
| पूजान्ते ध्यानविधिः | ... | ६५५ |
| प्रणामस्य पञ्चविधत्वम् | ... | ६५६ |
| तत्र मस्तिष्कप्रणामः | ... | ६५७ |
| — संपुटप्रणामः | ... | ६५७ |
| — प्रह्वाङ्गप्रणामः | ... | ६५७ |
| — दण्डप्रणामः | ... | ६५७ |
| — पञ्चाङ्गप्रणामः | ... | ६५७ |
| ग्रहशान्तिविधिः | ... | ६५८ |
| लोकयात्रायाः ग्रहायत्तत्वम | ... | ६५८ |
| नव ग्रहाः | ... | ६५८ |
| ग्रहपूजाप्रकारः | ... | ६५९ |
| ग्रहाधिदेवताः | ... | ६५९ |
| रवेः ध्यानार्चनादिप्रकारः | ... | ६६० |
| चन्द्रस्य ,, | ... | ६६१ |
| अङ्गारकस्य ,, | ... | ६६१ |
| बुधस्य ,, | ... | ६६१ |
| बृहस्पतेः ,, | ... | ६६२ |
| शुक्रस्य ,, | ... | ६६२ |
| शनैश्चरस्य ,, | ... | ६६३ |
| राहोः ,, | ... | ६६४ |
| केतोः ,, | ... | ६६४ |
| नवग्रहदेवताभ्यो होमः | ... | ६६५ |
| ग्रहशान्तेर्निमित्तानि | ... | ६६७ |
| ग्रहपूजापूर्वकं सर्वकर्मणामारम्भणीयता | ... | ६६८ |
| दहनविधिः | ... | ६६९ |
| आहिताग्नेः पत्न्याः दाहे विशेषः | ... | ६८८ |
| दायविभागः | ... | ६९० |

| | पृष्ठसंख्या |
|---|---|
| स्वीयायुःपरीक्षणक्रमः ... | ६९१ |
| मरणचिह्नानि ... | ६९१ |
| मरणचिह्नज्ञानानन्तरं जपितव्यो मन्त्रः ... | ६९३ |
| कालसंकर्षणी विद्या ... | ६९६ |
| मृत्युकालविचारः ... | ६९७ |
| मरणस्यावश्यंभावितया प्रतीक्षणम् ... | ६९९ |
| पञ्चविधबन्धूनामाह्वानम् ... | ६९९ |
| मुमूर्षुदक्षिणवामकर्णयोर्जपितव्यौ मन्त्रौ ... | ७०० |
| दहनाधिकारिणः ... | ७०१ |
| औरसपुत्रस्य लक्षणम् ... | ७०१ |
| पुत्रिकासुतस्य ,, ... | ७०१ |
| क्षेत्रजसुतस्य ,, ... | ७०१ |
| दत्त्रिमस्य ,, ... | ७०२ |
| कृत्रिमस्य ,, ... | ७०२ |
| गूढजस्य ,, ... | ७०२ |
| अपविद्धस्य ,, ... | ७०२ |
| कानीनस्य ,, ... | ७०२ |
| सहोढस्य ,, ... | ७०२ |
| क्रीतस्य ,, ... | ७०२ |
| पौनर्भवस्य ,, ... | ७०२ |
| स्वयंदत्तस्य ,, ... | ७०२ |
| पुत्राभावे पत्न्याः पत्युश्च कर्तृत्वम् ... | ७०२ |
| सर्वप्रायश्चित्तप्रयोगः ... | ७०३ |
| अतिदिष्टम् ... | ७०५ |
| उपपातकम् ... | ७०५ |
| अनुपातकानि पापानि ... | ७०६ |
| मलिनीकरणानि ,, ... | ७०६ |
| संकरीकरणानि ,, ... | ७०७ |
| अपात्रीकरणानि ,, ... | ७०७ |
| जातिभ्रंशकरणानि ,, ... | ७०७ |
| प्रकीर्णकानि ,, ... | ७०७ |
| गतिद्वयम् ... | ७०७ |
| वैखानससूत्रोक्तधर्मानुष्ठातॄणामर्चिरादिगतिः ... | ७०८ |

| | | पृष्ठसंख्या |
|---|---|---|
| बेरपूजाया अपि ब्रह्मविद्यात्वम् | ... | ७०८ |
| देवयानमार्गः | ... | ७०९ |
| धूमादिमार्गः | ... | ७११ |
| ज्योतिष्मतीजपः | ... | ७११ |
| अभ्यस्तयोगस्य मुमूर्षोः कर्तव्यम् | ... | ७१२ |
| इन्द्रियेन्द्रियार्थनिरोधप्रकारः | ... | ७१२ |
| प्रणवार्थानुसन्धानक्रमः | ... | ७१४ |
| शेषशेषिभावानुसन्धानम् | ... | ७१५ |
| अन्तिमस्मृतेरावश्यकता | ... | ७१५ |
| मरणकाले पञ्चभूतलयप्रकारः | ... | ७१६ |
| उत्क्रमणप्रकारः | ... | ७१८ |
| गच्छता जीवेन सह धर्माधर्मादिगमनम् | ... | ७१९ |
| मरणानन्तरं कर्तव्यानि प्रेतस्नापनादीनि | ... | ७२१ |
| दशदानानि | ... | ७२२ |
| प्रेताधानम् | ... | ७२३ |
| अनाहिताग्निविषये विशेषाः | ... | ७२५ |
| धनिष्ठापञ्चकमृतौ विशेषाः | ... | ७२६ |
| संस्कारत्रैविध्यम् | ... | ७२७ |
| कर्णजपः | ... | ७२७ |
| संकल्पलक्षणम् | ... | ७२७ |
| प्रेतशरीराच्छादनादि | ... | ७२८ |
| यज्ञभाण्डादीनां प्रेतस्योत्तरपूर्वदिशि न्यासः | ... | ७२८ |
| यज्ञपात्राणि | ... | ७२९ |
| अध्वर्युः स्नात्वा मृताग्निहोत्रादिकं कुर्यात् | ... | ७२९ |
| शववाहकाः | ... | ७३० |
| पुत्रैः अग्निग्रहणप्रकारः | ... | ७३० |
| शवहरणप्रकारः | ... | ७३० |
| शवावतारणम् | ... | ७३१ |
| ब्रह्मविष्णुरुद्रपूजा | ... | ७३१ |
| होमकार्यम् | ... | ७३१ |
| शवप्रदक्षिणादि | ... | ७३३ |
| चितासंस्कारादि | ... | ७३३ |
| शवस्य चितायामवतारणम् | ... | ७३५ |

पृष्ठसंख्या


| | | |
|---|---|---|
| ध्यशकलप्रक्षेपः | ... | ७३५ |
| तण्डुलादीनामास्ये निक्षेपः | ... | ७३९ |
| र्युत्त्रादिजपः | ... | ७३९ |
| त्रसंस्कारः | ... | ७३९ |
| त्रासादनम् | ... | ७४१ |
| प्रकारान्तरम् | ... | ७४२ |
| जिनास्तरणम् | ... | ७४४ |
| त्वानां सिग्वातोपजीवनम् | ... | ७४४ |
| दनक्षेपादि | ... | ७४५ |
| णादानम् | ... | ७४५ |
| नीयाद्यग्निप्रदानक्रमः (दाहः) | ... | ७४६ |
| नुवाकजपः | ... | ७४६ |
| ष्ठबन्धमोचनम् | ... | ७४७ |
| थानम् | ... | ७४७ |
| हिताग्निविषये उपस्थानदाहौ | ... | ७४७ |
| ध्वसंस्कारः | ... | ७४७ |
| रिविधवादीनां दाहक्रमः | ... | ७४९ |
| ज्येष्ठपुत्रस्याधिकारः | ... | ७४९ |
| नीतस्यापि पुत्रस्याधिकारः | ... | ७५० |
| तेनापि पितृसंस्कारं कृत्वा यज्ञशेषसमापनम् | ... | ७५१ |
| विचारः | ... | ७५१ |
| रणम् | ... | ७५२ |
| ताग्नेरप्सु मरणे प्रायश्चित्तम् | ... | ७५३ |
| ध्यादीनां श्वसूकरादिस्पर्शे प्रायश्चित्तम् | ... | ७५३ |
| षां सकृन्मरणे विशेषः | ... | ७५३ |
| शाहमध्ये पितृमरणे विशेषः | ... | ७५४ |
| शौचमध्ये मातुर्मरणे विशेषः | ... | ७५४ |
| मरणे विशेषः | ... | ७५४ |
| नमरणे विशेषः | ... | ७५५ |
| स्वलाया अनुमरणे विशेषः | ... | ७५६ |
| या अनुमरणनिषेधः | ... | ७५६ |
| रणरजस्स्वलात्वादौ श्राद्धनिर्णयः | ... | ७५६ |
| र्तरि विदेशस्थे विशेषः | ... | ७५७ |

| | | पृष्ठसंख्या |
|---|---|---|
| पुत्रातिरिक्तेन दाहे विशेषः | ... | ७५७ |
| पुत्रेषु देशान्तरस्थेषु ,, | ... | ७५८ |
| श्मशानात्प्रत्यागमनप्रकारः | ... | ७६० |
| उदकाञ्जलिप्रदानम् | ... | ७६० |
| स्नात्वा कर्मारम्भः | ... | ७६१ |
| पाषाणस्थापनम्, उदकाञ्जलिदानं च । | ... | ७६१ |
| गृहागमनकालकर्तव्यम् | ... | ७६२ |
| गृहशोधनादि | ... | ७६३ |
| अश्मस्थापनादि | ... | ७६४ |
| बलिदानम्, तत्र सूत्रभेदाश्च | ... | ७६४ |
| नवश्राद्धम् | ... | ७६७ |
| पुनर्दहनविधिः | ... | ७६८ |
| द्वितीयदिनादिकर्तव्यानि | ... | ७७१ |
| तत्र केचिन्नियमाः | ... | ७७२ |
| वत्सरपर्यन्तं ब्रह्मचारिव्रतम् | ... | ७७२ |
| सपिण्डीकरणान्तमेव व्रतमिति निर्णयः | ... | ७७३ |
| सपिण्डीकरणविषये केचन विशेषाः | ... | ७७५ |
| चतुर्थेऽहन्यस्थिसञ्चयनम् | ... | ७७७ |
| अस्थिसञ्चयने विषये व्याख्यातुर्निर्णयः | ... | ७७८ |
| सप्तमेऽहनि चितापिधानादि | ... | ७८० |
| दशमदिनकर्तव्यानि | ... | ७८२ |
| प्रभूतबलिदानम् | ... | ७८४ |
| पाषाणोत्थापनम् | ... | ७८४ |
| वपनम् | ... | ७८५ |
| शान्तिहोमः | ... | ७८५ |
| एकोद्दिष्टविधिः | ... | ७८५ |
| वानप्रस्थस्य पत्न्याश्च गृहस्थवद्दहनम् | ... | ७८६ |
| अनग्निकानां आत्मयाजिप्रभृतीनां दाहसंस्कारनिषेधः | ... | ७८७ |
| तेषां खननसंस्कारः | ... | ७८७ |
| संन्यासिनां खननसंस्कारः | ... | ७८८ |
| द्वादशेऽहनि नारायणबलिः | ... | ७८९ |
| संन्यासिनामेकोद्दिष्टाभावः | ... | ७८९ |
| संन्यासिनां पुत्रेण सपिण्डीकरणं न कार्यम् | ... | ७८९ |

पृष्ठसंख्या

आब्दिकं तु कर्तव्यम् ... ७८९
आपद्दहनविधिः ... ७९०
आपद्दाह्याः ... ७९०
समन्त्रकापद्दहनविधानप्रयोगः ... ७९१
अवटनिक्षेपविधिः ... ७९४
अवाह्याः ... ७९५
महापापरोगाः ... ७९५
अप्रमादमरणे विशेषः (आत्महत्यादि) ... ७९७
प्रमादमरणे ,, ... ७९९
दन्तजननपर्यन्तं न दाहः ... ८०२
आपञ्चमाद्बालकस्य, आसप्तमात्कन्यायाश्च नाग्निः ... ८०३
तयोर्बलिनिर्वापणम् ... ८०४
आकृतिदहनम् ... ८०६
देशान्तरमृतानां पलाशवृन्तकल्पितशरीरप्रकृतिदहनम् ... ८०६
देशान्तरमृतत्वेन संभावितस्य पुनरागमने कर्तव्यम् ... ८०८
प्रोषितपितृमरणे विशेषः ... ८०९
प्रोषितभ्रातृमरणे ,, ... ८१०
गोत्रान्तरप्रविष्टानां दायादिनिवृत्तिः ... ८११
अतीतकालाशौचनिर्णयः ... ८११
मात्राशौचमध्ये पितृमरणे, पित्राशौचमध्ये मातृमरणे च विशेषः ... ८१२
आशौचविषयनिर्णयः ... ८१३
ब्राह्मणे शूद्रौर्ध्वदेहिकस्याकर्तव्यता ... ८१४
अकृताग्निद्वयसंसर्गविषये विशेषः ... ८१५
सूतकानन्तरकर्तव्यम् ... ८१६
एकादशेऽह्नि वृषोत्सर्जनम् ... ८१६
वृषोत्सर्जनप्रयोगः ... ८१९
एकोद्दिष्टविधिः ... ८२१
मात्रादिमरणे दशमेऽह्नि अनशनम् ... ८२१
पात्रलक्षणम् (निमन्त्रणे) ... ८२२
निमन्त्रितब्राह्मणसंख्या ... ८२२
एकोद्दिष्टप्रयोगः ... ८२३
श्राद्धकुण्डलक्षणम् ... ८२४

| | | पृष्ठसंख्या |
|---|---|---|
| ब्राह्मणालाभे विशेषः | ... | ८२७ |
| मासिकश्राद्धविधिः | ... | ८२९ |
| मासि मासि पिण्डनिर्वापः | ... | ८२९ |
| षोडश श्राद्धानि | ... | ८२९ |
| सोदकुम्भश्राद्धम् | ... | ८३१ |
| सपिण्डीकरणविधिः | ... | ८३१ |
| सपिण्डीकरणकालनिर्णयः | ... | ८३१ |
| सपिण्डीकरणप्रयोगः | ... | ८३४ |
| सपिण्डीकरणविषये स्मृतिवचनानि | ... | ८४० |
| आब्दिकविषये विशेषः | ... | ८४४ |
| अथ प्रायश्चित्तम् | ... | ८६७ |
| आघारलोपे प्रायश्चित्तम् | ... | ८६७ |
| स्थण्डिले परिस्तरणादिसंभारे च हीने प्रायश्चित्तम् | ... | ८६८ |
| ब्रह्मसोमयोः ऋत्विजोरभावे ,, | ... | ८६८ |
| अग्न्यादौ कृम्यादिपतने ,, | ... | ८६८ |
| अग्न्यायतने गोवराहादिगमने ,, | ... | ८६९ |
| परिस्तरणादिसंभाराणां दाहभेदादौ ,, | ... | ८६९ |
| आघारे कृते अग्नौ समुत्सन्ने ,, | ... | ८६९ |
| स्विष्टकृत्प्रभृत्यन्तहोमे हीने ,, | ... | ८६९ |
| अन्नदोषे ,, | ... | ८६९ |
| मुख्यकाललोपे ,, | ... | ८७० |
| निषेकलक्षणम् ,, | ... | ८७२ |
| षोडशाहमृतुस्नातभार्यासंगमनहीने प्रायश्चित्तम् | ... | ८७२ |
| भार्यायां पुत्रहीनायां कन्यान्तरविवाहः | ... | ८७३ |
| गर्भाधानादिसंस्कारेषु नान्दीमुखहीने प्रायश्चित्तम् | ... | ८७३ |
| गर्भाधानकालातिक्रमे ,, | ... | ८७६ |
| पुंसवने सीमन्ते च हीने प्रायश्चित्तम् | ... | ८७६ |
| विष्णुबलौ हीने | ... | ८७६ |
| अकृते गर्भसंस्कारे गर्भाधातरि मृते | ... | ८७६ |
| प्रथमगर्भकृतसंस्कारस्य सर्वगर्भसंस्काररूपता | ... | ८७७ |
| कुमारस्य कुमार्याश्च जनने आशौचप्रकारः | ... | ८७८ |
| कुमारस्य कुमार्याश्च मरणे आशौचप्रकारः | ... | ८७८ |

पृष्ठसंख्या

| | | |
|---|---|---|
| आशौचे सूतके प्रेतके च वर्जनीयकर्माणि | ... | ८८१ |
| जातकाग्नौ हीने प्रायश्चित्तम् | ... | ८८२ |
| उत्थानकालातिक्रमे ,, | ... | ८८२ |
| नामकरणकालातिक्रमे ,, | ... | ८८३ |
| नक्षत्रहोमे हीने ,, | ... | ८८४ |
| अन्नप्राशनकालातीते ,, | ... | ८८४ |
| प्रवासागमनपिण्डवर्धनयोर्हानयोः प्रायश्चित्तम् | ... | ८८४ |
| चौलकालातिक्रमे प्रायश्चित्तम् | ... | ८८४ |
| निषेकादीनां सामान्यप्रायश्चित्तम् | ... | ८८५ |
| उपनयनकालातिक्रमे प्रायश्चित्तम् | ... | ८८६ |
| पुत्रपरिग्रहविधिः | ... | ८८७ |
| नित्यस्नानहीने प्रायश्चित्तम् | ... | ८८९ |
| सन्ध्योपासनहीने ,, | ... | ८८९ |
| तर्पणे हीने ,, | ... | ८८९ |
| ब्रह्मयज्ञविहीने ,, | ... | ८८९ |
| प्रातःसमिद्धोमे हीने ,, | ... | ८८९ |
| दिनत्रयं स्नानादौ हीने ,, | ... | ८८९ |
| सप्तरात्रं स्नानादौ हीने ,, | ... | ८९० |
| अवकीर्णप्रायश्चित्तम् | ... | ८९१ |
| पुनरुपनयननिमित्तानि | ... | ८९२ |
| पुनरुपनयनविधिः | ... | ८९३ |
| पुनःसंस्कारे वर्ज्यानि | ... | ८९३ |
| पारायणव्रतबन्धविसर्गहीने प्रायश्चित्तम् | ... | ८९४ |
| प्रथमोपाकर्महीने ,, | ... | ८९४ |
| समावर्तनक्रियाहीने ,, | ... | ८९५ |
| पुनर्विवाहे कर्तव्यानि | ... | ८९५ |
| समावर्तनं कृत्वा विवाहकालात्यये ,, | ... | ८९६ |
| आसुरे गान्धर्वे वा विवाहे पुनर्विवाहः | ... | ८९६ |
| उद्भूतरजसः कन्याया विवाहे कृते प्रायश्चित्तम् | ... | ८९८ |
| विवाहे होमकाले कन्याया रजस्युत्पन्ने ,, | ... | ८९९ |
| व्रतदिनेषु पत्न्याः रजस्वलात्वे कर्तव्यानि | ... | ८९९ |
| ज्येष्ठे तिष्ठत्यनुजेन विवाहे कृते प्रायश्चित्तम् | ... | ९०१ |
| परिवेत्तृलक्षणम् | ... | ९०१ |

पृष्ठसंख्या

परिवित्तिलक्षणम् ... १०१
परिविन्दकलक्षणम् ... १०१
परिवेदने दोषतदभावनिर्णय: ... १०१
परदेशगते ज्येष्ठे, द्वादशवर्षेऽतीते कर्तव्यम् ... १०४
ब्रह्महत्याद्यै: ज्येष्ठे पतिते प्रायश्चित्तम् ... १०४
स्त्रीणां पतनहेतव: ... १०५
ब्रह्महत्यादीनां प्रायश्चित्तप्रकार: ... १०५
गर्भहनने प्रायश्चित्तम् ... १०७
आत्रेयीवधे ,, ... १०७
अनृतसाक्ष्ये ,, ... १०७
निक्षेपापहरणे ,, ... १०७
स्त्रीसुहृद्वधे ,, ... १०७
सुरापाने ,, ... १०७
सुवर्णस्तेये ,, ... १०८
गुरुस्त्रीगमने ,, ... १०८
गोवधे ,, ... १०८
जातिभ्रंशकर्मकरणे प्रायश्चित्तम् ... १०९
मार्जारादिवधे ,, ... १०९
फलप्रदवृक्षच्छेदने ,, ... ११०
ओषधिच्छेदने ,, ... ११०
सुरापात्रस्थजलपाने ,, ... १११
अज्ञानाद्विण्मूत्रप्राशने ,, ... १११
स्तेयदोषे ,, ... १११
अगम्यागमने ,, ... ११२
अभोज्यभोजने ,, ... ११४
सूतके मृतकेऽपि वा भोजने ,, ... ११५
शूद्रगृहे भोजने ,, ... ११५
ब्रह्मौदनसोमादौ भोजने ,, ... ११६
सायंहोमे हीने प्रायश्चित्तम् ... ११८
त्र्यहे होमे विच्छिन्ने ,, ... ११८
अग्न्यनुगतप्रायश्चित्तम् ... ११८
पुनराधानविधि: ... ११९
समारोपणे कृते होमे विच्छिन्ने प्रायश्चित्तम् ... १२०

| | | पृष्ठसंख्या |
|---|---|---|
| पञ्चमहायज्ञहीने प्रायश्चित्तम् | ... | १२२ |
| औपासनहीने ,, | ... | १२३ |
| वैश्वदेवहीने ,, | ... | १२४ |
| पाकयज्ञसंस्थानां हीने ,, | ... | १२५ |
| पर्वणि स्थालीपाकहोमे हीने प्रायश्चित्तम् | ... | १२५ |
| आग्रयणहोमे हीने ,, | ... | १२५ |
| अष्टकाहीने ,, | ... | १२६ |
| पिण्डपितृयज्ञे मासिश्राद्धे च हीने ,, | ... | १२७ |
| चैत्रीयज्ञविहीने ,, | ... | १२७ |
| आश्वयुजीयज्ञविहीने ,, | ... | १२७ |
| विष्णोर्नित्यार्चने हीने ,, | ... | १२७ |
| मृतसंस्कारप्रायश्चित्तम् | ... | १३९ |
| मृतशरीरसंस्काराधिकारिणः | ... | १३९ |
| मृतसंस्कारक्रमः | ... | १४० |
| मृतपत्नीसंस्कारक्रमः | ... | १४२ |
| सहमरणे संस्कारक्रमः | ... | १४२ |
| कृतचौलस्यानुपनीतस्य मृतस्य संस्कारक्रमः | ... | १४३ |
| जातदन्तस्य मृतस्य संस्कारक्रमः | ... | १४३ |
| अजातदन्तस्य मृतस्य संस्कारक्रमः | ... | १४३ |
| शवे अन्याशौचयुक्ते प्रायश्चित्तम् | ... | १४५ |
| देशान्तरमृते दहनहीने ,, | ... | १४५ |
| अमन्त्रकं शवे दग्धे ,, | ... | १४५ |
| सूतिकाया मृतायाः संस्कारक्रमः | ... | १४६ |
| सगर्भायाः मरणे संस्कारक्रमः | ... | १४७ |
| सूतकप्रेतकयोरेकाहसंनिपाते कर्तव्यम् | ... | १४७ |
| पापमृतस्य संस्कारक्रमः | ... | १४८ |
| शवस्य दहनकालेऽतीते क्रियाहीने विपर्यासे च प्रायश्चित्तम् | ... | १४९ |
| शवदहनार्थाग्नावुत्सन्ने ,, | ... | १४९ |
| आशौचविधिः | ... | १५० |
| उपनयनादूर्ध्वं मरणे आशौचक्रमः | ... | १५० |
| दन्तजननादूर्ध्वं ,, | ... | १५० |
| नामकरणादूर्ध्वं ,, | ... | १५० |
| जननादूर्ध्वं ,, | ... | १५० |

| | | पृष्ठसंख्या |
|---|---|---|
| स्त्रियाः मरणे आशौचक्रमः | ... | १५० |
| मातापित्रोर्भ्रातॄणां च मरणे ,, | ... | १५० |
| गर्भे मृते ,, | ... | १५० |
| सूतकेऽन्यसूतके प्राप्ते ,, | ... | १५१ |
| प्रेतके अन्यप्रेतके प्राप्ते ,, | ... | १५१ |
| सूतके शावाशौचप्राप्तौ ,, | ... | १५१ |
| असपिण्डशवस्य स्नानालंकरणे कृते ,, | ... | १५१ |
| असपिण्डशवस्य वहने कृते ,, | ... | १५१ |
| रात्रौ दहनवहनादिकरणे ,, | ... | १५२ |
| प्रेतानुगमने ,, | ... | १५३ |
| दहनदिनात् द्वितीयेऽहनि कर्तव्यम् | ... | १५३ |
| प्रातर्बलौ सायंबलौ वा हीने कर्तव्यम् | ... | १५४ |
| अश्मनि श्वकुक्कुटादिभिः स्पृष्टे कर्तव्यम् | ... | १५४ |
| चितास्थ्नां नद्यां समुद्रे वा प्रक्षेपः | ... | १५४ |
| जातदन्तस्य चौलकात्पूर्वं मरणे कर्तव्यम् | ... | १५६ |
| एकोद्दिष्टनिमित्तश्राद्धक्रमः | ... | १५६ |
| निमित्तश्राद्धकालातिक्रमादौ प्रायश्चित्तम् | ... | १५६ |
| सपिण्डीकरणे विशेषः | | १५७ |
| सपिण्डीकरणे हीने प्रायश्चित्तम् | ... | १५८ |
| अष्टकायाः अवश्यकर्तव्यता | ... | १५९ |
| गृहस्थस्यौपासनादौ विच्छिन्ने यदि मरणं भवेत्तदा विशेषः | ... | १६० |
| अथ वर्णाश्रमधर्माः | ... | १६१ |
| चत्वारो वर्णाः | ... | १६१ |
| ब्राह्मणस्य धर्माः | ... | १६१ |
| क्षत्रियवैश्ययोर्धर्माः | ... | १६१ |
| शूद्रस्य धर्माः | ... | १६२ |
| ब्राह्मणस्य चत्वार आश्रमाः | ... | १६२ |
| क्षत्रियस्य त्रयः आश्रमाः | ... | १६२ |
| वैश्यस्य द्वावाश्रमौ | ... | १६२ |
| उपनीतस्य धर्माः | ... | १६३ |
| चतुर्विधा ब्रह्मचारिणः | ... | १६५ |
| तत्र गायत्राख्यब्रह्मचारिणः धर्माः | ... | १६५ |

पृष्ठसंख्या

| | | |
|---|---|---|
| ब्राह्माख्यब्रह्मचारिणः धर्माः | ... | ९६५ |
| प्राजापत्याख्यब्रह्मचारिणः धर्माः | ... | ९६५ |
| नैष्ठिकाख्यब्रह्मचारिणः धर्माः | ... | ९६६ |
| गृहस्थस्य धर्माः | ... | ९६९ |
| चतुर्विधा गृहस्थाः | ... | ९७१ |
| तत्र वार्तावृत्तेः धर्माः | ... | ९७१ |
| शालीनवृत्तेः धर्माः | ... | ९७२ |
| यायावरस्य धर्माः | ... | ९७२ |
| घोराचारिकस्य धर्माः | ... | ९७२ |
| वानप्रस्थस्य धर्माः | ... | ९७३ |
| वानप्रस्थे सपत्नीकापत्नीकादिप्रभेदाः तद्धर्माश्च | ... | ९७५ |
| भिक्षुकस्य धर्माः | ... | ९७९ |
| भिक्षुकाश्चतुर्विधाः | ... | ९७९ |
| तत्र कुटीचकस्य धर्माः | ... | ९७९ |
| बहूदकस्य धर्माः | ... | ९७९ |
| हंसस्य धर्माः | ... | ९८० |
| परमहंसस्य धर्माः | ... | ९८० |
| सकामं निष्काममिति कर्मद्वैविध्यम् | ... | ९८१ |
| निष्कामस्य प्रवृत्तिर्निवृत्तिरिति द्वैविध्यम् | ... | ९८१ |
| योगिनस्त्रिविधाः | ... | ९८४ |
| योगाश्चतुर्विधाः | ... | ९८४ |
| तत्र मन्त्रयोगस्य लक्षणम् | ... | ९८४ |
| हठयोगस्य लक्षणम् | ... | ९८५ |
| लययोगस्य ,, | ... | ९८५ |
| राजयोगस्य ,, | ... | ९८५ |
| सारङ्गाख्यस्य योगिनः प्रभेदाः धर्माश्च | ... | ९८६ |
| एकार्ष्याख्यस्य ,, ,, ,, | ... | ९८६ |
| विसरकाख्ययोगिनः धर्माः | ... | ९८६ |
| वानप्रस्थस्य श्रामणकविधानम् | | ९९४–१००३ |
| संन्यासक्रमः | ... | १००४ |
| सदाचाराः | ... | १०१० |
| मूत्रपुरीषविसर्गक्रमः | ... | १०१० |

| | पृष्ठसंख्या |
|---|---|
| शौचक्रमः | ... १०१० |
| आचमनक्रमः | ... १०१२ |
| प्राणायामः | ... १०१२ |
| अभिवादनक्रमः | ... १०१२ |
| अध्ययनक्रमः | ... १०१४ |
| अनध्यायाः | ... १०१४ |
| समावर्तनम् | ... १०१५ |
| स्नानक्रमः | ... १०१६ |
| भोजनक्रमः | ... १०१७ |
| भक्ष्याभक्ष्यविवेकः | ... १०१९ |
| गृहस्थधर्माः | ... १०२१ |
| सर्वशुद्धिः - अर्थस्त्रीअन्नशुद्धीनां श्रैष्ठयम् | ... १०२५ |
| पात्रशुद्धिप्रकारः | ... १०२५ |
| वस्त्रशुद्धिप्रकारः | ... १०२६ |
| तोयशुद्धिप्रकारः | ... १०२६ |
| योषिदास्यादीनां सर्वदा शुद्धता | ... १०२६ |
| फलशुद्धिप्रकारः | ... १०२६ |
| पाकालयादौ शौचस्याविचारणीयता | ... १०२६ |
| वानप्रस्थधर्माः | ... १०२८ |
| भिक्षुधर्माः | ... १०३० |
| मृतसंन्यासिसंस्कारक्रमः | ... १०३४ |
| नारायणबलिक्रमः | ... १०३५ |
| अनुलोमप्रतिलोमादीनां नामवृत्त्यादि | ... १०३७ |
| ऋषिगोत्रप्रवराणां नामादिकथनम् | ... १०४६ |
| अनुबन्धः | ... 1 |

विषयसूची समाप्ता

---

श्रीमद्विखनसमहागुरवे नमः

श्री श्रीनिवासपरब्रह्मणे नमः

श्री श्रीनिवासमखिकृते श्रीवैखानसगृह्यसूत्रतात्पर्यचिन्तामणौ

# दशविधहेतुनिरूपणम्



वैखानसकुलोद्भूतं वेङ्कटेशार्चनारतम् ।
वेदान्तदेशिकं वन्दे श्रीनिवासार्यदीक्षितम् ॥



श्रीवेङ्कटेशमखिलेशमनन्तमाद्यं
कारुण्यवारिधिमशेषसुरैस्सुवन्द्यम् ।
वन्दे समस्तजगतां स्थितिसृष्टिहेतुं
मान्यान् गुरूंश्च शतशो भृगुकश्यपादीन् ॥

श्रुतिस्मृतिनदीपूर्णं शास्त्रकल्लोलसङ्कुलम् ।
विष्णुभक्त्युदकं शुद्धं वन्दे वैखानसार्णवम् ॥

येनान्यकल्पसूत्राणां नेत्रं निस्तिमिरीकृतम् ।
सूत्रं वैखानसं ह्येतत् चतुर्वर्गफलप्रदम् ॥

श्रुतिस्मृतीतिहासाद्यैः प्रतिपादितवैभवाम् ।
परमात्मपरां वन्दे सूत्रोपनिषदं पराम् ॥

श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना ।
श्रीवेङ्कटेशपादाब्जसपर्यासु रतात्मना ॥

श्रुतिस्मृतिपुराणादिसिद्धमार्गानुवर्तिना ।
पूर्वाचार्यपरिक्षुण्णसम्प्रदायानुयायिना ॥

वेदान्ताचार्यवर्येण श्रीनिवासार्ययज्वना ।
वैखानसस्य सूत्रस्य व्याख्या सम्यक् प्रकाश्यते ॥

अथ सत्यत्वादिसमस्तकल्याणगुणविशिष्टात् परब्रह्मणः श्रीमन्नारायणादुत्पन्नेन विखनश्शब्दवाच्येन चतुर्मुखब्रह्मणा प्रणीतस्य वैखानससूत्रस्य सर्वसूत्रोत्तमत्वे तत्सूत्रोक्तधर्मानुष्ठातॄणां सर्वोत्कृष्टतमत्वे च दशविधहेतवो निरूप्यन्ते यथा —

अखिलजगत्कारणभूतेन विखनसा प्रणीतत्वात् । सर्वसूत्राणामादित्वात् । सर्वकर्मसु श्रुतिमार्गानुसारित्वात् । समन्त्रकसर्वक्रियाप्रतिपादकत्वात् । निषेकसंस्कारादिमत्वात् । अष्टादशशारीरसंस्कारप्रतिपादकत्वात् । साङ्गक्रियाकलापवत्त्वात् । मन्वाद्यैः स्वीकृतत्वात् । अखिलजगदेककारणभूतश्रीमन्नारायणैकपरत्वात् । एतत्सूत्रोक्तधर्मानुष्ठानवतामेव भगवत्प्रियतमत्वोपपत्तेश्च' इति ।

एभिर्हेतुभिः अस्य सूत्रस्य सर्वसूत्रोत्तमत्वं एतत्सूत्रोक्तधर्मानुष्ठानादेव वैखानसानां सर्वेभ्यः श्रेष्ठतमत्वञ्च श्रुतिस्मृतिपुराणादिमुखेन प्रतिपाद्यते । तत्रादौ अखिलजगत्कारणभूतेन विखनसा प्रणीतत्वादिति हेतुर्निरूप्यते ।

विखनश्शब्दार्थनिर्णयः

विखना नाम कश्चिदृषिः, उत नारायणः? नारायण एव । केवलं मुनिमात्रस्य वैखानसशब्दवाच्यत्वेन प्रतिपादनाभावात् । परमात्मनो नारायणस्य विखनोवैखानसादिशब्दवाच्यत्वं श्रुतिस्मृतिपुराणादिष्ववगम्यते । यथा–

तत्र श्रुतौ — 'धेनुर्वहानामदितिस्सुराणां ब्रह्मा ऋभूणां विखना मुनीनाम्' इति श्रूयते । अयमर्थः । वहानां अनडुहादीनां धेनुः उत्पत्तिकारणम् । सुराणां इन्द्रादीनाम् अदितिः । ऋभूणां –

'साध्या विश्वे च वसवो मरुतो ऋभवस्तथा ।
तथैवाङ्गिरसो रुद्रा आदित्याश्च तथैव च ।
एते देवगणाश्चाष्टौ मन्वन्तरगणेश्वराः' ॥

इति भृगूक्तानां साध्यादीनां ब्रह्मा । मुनीनां मुनिशब्दवाच्यानां विखनाः । ब्रह्मणो मुनिशब्दवाच्यत्वं भारते चावगम्यते –

निशां सुप्त्वाऽथ भगवान् क्षपान्ते प्रत्यबुद्ध्यत ॥

पश्चाद्बुद्ध्वा ससर्जापः तासु वीर्यमवासृजत् ।
तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ॥
अहंकृत्या ततस्तस्मिन् ससर्ज प्रभुरीश्वरः ।
हिरण्यगर्भं विश्वात्मा ब्रह्माणं जलजं मुनि' मिति ॥

अण्डबहुत्वाभिप्रायेण मुनीनामिति बहुवचनम् । यथा —

'अण्डानान्तु सहस्राणां सहस्राण्ययुतानि च ।
ईदृशानामनन्तानां कोटिकोटिशतानिचे' ति ॥ स्मरणात् ।

निशा चात्र प्रलयः, सा एतावतीति कुतावगम्यत इति चेत् ।

महाभारते — 'चतुर्युगसहस्राणि चतुर्युगशतानि च ।
प्राहुः कल्पसहस्रन्तु ब्राह्मणास्तत्त्वदर्शिनः ।
दशकल्पसहस्राणि अप्ययस्सा महानिशा' ॥ इति ।

अनया खिलश्रुत्या भगवतो विखनश्शब्दवाच्यत्वं कथमवगम्यत इति चेत् उच्यते ।

'दुर्बोधा वैदिकाश्शब्दा प्रकीर्णत्वाच्च ये खिलाः ।
तद्ज्ञैस्त एव स्पष्टार्थाः स्मृतितन्त्रे प्रतिष्ठिताः' ॥ इति

'यदि विद्याच्चतुर्वेदान् साङ्गोपनिषदान् द्विजः ।
न चेत्पुराणसद्विद्या न वेदार्थविचक्षणः' ॥ इति

'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुवाद्वेदो मामयं प्रतरिष्यति ॥ इति च

स्मरणात् इतिहासपुराणाभ्यामेवार्थनिर्णयः कर्तव्यः । भारते मोक्षधर्मे नारदस्तुतौ —

'नमस्ते देवदेवेश' इत्यारभ्य स्तोत्रमध्ये फेनपाचार्यवालखिल्यविखनो-विखनस वैखानसाचार्य अभग्नयोग अभग्नपरिसङ्ख्यान' इति

तत्रैव — 'यत्तस्मिन्नुपलभ्यं ते तत्तेजस्तत्त्रयीमयम् ।
तद्वैखानः परं ब्रह्म इति वेदविदो विदुः' ॥ इति चोक्तम् ।

तथा नामसहस्राध्याये —

'वैखानस्सामगायनः' इति स्मर्यते ।

पञ्चरात्रे आत्मसंहितायाम् —

'महाभूतेन भूतेन व्याप्तं विखनसा जगत् ।
तमेव शरणं गच्छ जगत्कारणमच्युतम्' ॥

इति शाण्डिल्येन शतानन्दमभिलक्ष्योक्तम् ।

वैखानसे आनन्दसंहितायाम् —

'वेदान्ततत्त्वमीमांसाखननं कृतवान् हरिः ।
नाम्ना विखनसं प्राहुर्यञ्च वैखानसं तथा' ॥ इति प्रोक्तम् ।

अत्र खननशब्देन सङ्कल्प उच्यते । 'सोऽकामयत । बहुस्यां प्रजायेयेति स तपोऽतप्यत' इत्यादि श्रुतिभ्यः । अवाप्तसमस्तकामस्यापि भगवतः सृष्टिकार्ये प्रवृत्तिर्भवति ।

ननु सत्यत्वादिसमस्तकल्याणगुणविशिष्टस्य भगवतः

'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥'

इति समग्रषाड्गुण्यपरिपूर्णस्य अवाप्तसमस्तकामस्य किमर्थं सृष्ट्यादिकमिति चेदुच्यते ।

'अप्रमेयोऽनियोज्यश्च यत्र कामगमो वशी ।
मोदते भगवान् भूतैः बालः क्रीडनकैरिव' ॥

इत्यादि भारतवचनानुसारेण लीलार्थमेवेति ।

जगत्सृष्ट्यादिलीलानुभवार्थं भगवता समष्टिसृष्टेरनन्तरं व्यष्टिसृष्टौ देवमनुष्यादिविविधविशेषसृष्ट्यर्थं चतुर्मुखसृष्टिं प्रति ध्यानं कृतम् । एषा चिदचिदात्मिका सृष्टिः भगवता क्रियते । व्यष्टिसृष्टिस्तु ब्रह्मणा । समष्टिसृष्टिर्नाम—

'भूतैस्तु पञ्चभिः प्राणैः स्वान्तैर्दशभिरिन्द्रियैः ।
चतुर्विंशतितत्त्वानि साङ्ख्यशास्त्रविदो विदुः ॥

महान् कालः प्रधानञ्च मायाऽविद्याच पूरुषः ।
इति पौराणिकाः प्राहुः त्रिंशत्तत्वानि तैस्सह ' ॥

इति वचनात् तत्त्वसृष्टिरित्यवगम्यते । 'स्वान्तै' रित्यनेन 'मनोबुद्धिरहङ्कारश्चित्तञ्च करणान्यमी' इत्यन्तःकरणचतुष्टयमुच्यते । व्यष्टिसृष्टिर्नाम — अण्डान्तर्वर्तिभूतजातसृष्टिः । 'अजामेकां लोहितशुक्लकृष्णाम्' 'नित्यो नित्यानां चेतनश्चेतनाना।' मित्यादिश्रुतिभिः नित्यत्वेन श्रुतानां प्रकृतिपुरुषाणां सृष्टिर्नाम प्रलयदशायां सूक्ष्मरूपेण अविभक्तनामरूपेण च परमात्मन्येकीभूतानां सृष्टिकाले परमात्मनोऽनुप्रवेशानन्तरं स्थूलरूपवत्वं विभक्तनामरूपभाक्त्वञ्च । 'तत्सृष्ट्वा । 'तदेवानुप्राविशत् । तदनुप्रविश्य । सच्च त्यच्चाभवत्' इत्यादिश्रुतेः ।

विष्णुपुराणे — 'तदेतदक्षयं नित्यं जगन्मुनिवराखिलम् ।
अविर्भावतिरोभावजन्मनाशविकल्पवत् ॥
प्रकृतिं पुरुषञ्चैव प्रविश्यात्मेच्छया हरिः ।
क्षोभयामास सम्प्राप्ते सर्गकाले व्ययाऽव्ययौ' ॥ इति

गीतासु — प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।
मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।
सम्भवस्सर्वभूतानां ततो भवति भारत' ॥

इति चोक्तरीत्या सृष्टिकाले जगद्योनिभूतं महद्ब्रह्म तदीयं प्रकृत्याख्यमाचिद्वस्तु यत्, तस्मिन् चेतनाख्यं गर्भं योजयति । तत्कृताचिदचित्संसर्गात् देवादिस्थावरान्तानामचिन्मिश्राणां सर्वभूतानां सम्भवो भवति । एवमेव परमात्मना पञ्चीकृतानां भूतानामन्योन्यसंयोगादिना अण्डोत्पत्त्यादिकं श्रीविष्णुपुराणे प्रतिपाद्यते । यथा —

'आकाशवायुतेजांसि सलिलं पृथिवी तथा ।
शब्दादिभिर्गुणैर्ब्रह्मसंयुक्तान्युत्तरोत्तरैः ॥
शान्ता घोराश्च मूढाश्च विशेषास्तेन ते स्मृताः ।
नानावीर्याः पृथग्भूताः ततः ते संहतिं विना ॥

नाशक्नुवन् प्रजाः स्रष्टुमसमागम्य कृत्स्नशः ।
समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः ॥

एकसङ्घातलक्ष्याश्च संप्राप्यैक्यमशेषतः ।
पुरुषाधिष्ठितत्वाच्चाप्यव्यक्तानुग्रहेण च ॥

महदाद्या विशेषान्ता ह्यण्डमुत्पादयन्ति ते ।
तत्क्रमेण प्रबुद्धं तज्जलबुद्बुदवत्समम् ॥

भूतेभ्योऽण्डं महाबुद्धे प्रवृद्धमुदकेशयम् ।
प्राकृतं ब्रह्मरूपस्य विष्णोः स्थानमनुत्तमम् ॥

तत्राव्यक्तस्वरूपोऽसौ व्यक्तरूपी जगत्पतिः ।
विष्णुर्ब्रह्मस्वरूपेण स्वयमेव व्यवस्थितः ॥

इत्यारभ्य —

'तस्मिन्नण्डेऽभवद्ब्रह्मा सदेवासुरमानुषः' ।

इत्यादिभिः समष्टिसृष्ट्यादिकमुक्तम् । विशेषेण व्यष्टिसृष्टावपि ब्रह्मणोऽण्डादिषूत्पत्तिप्रकारः श्रूयते । यथा—

महोपनिषदि — 'अथातो महोपनिषदं व्याख्यास्यामः । एको ह वै नारायण आसी' दित्यारभ्य 'तस्य ध्यानान्तस्स्थस्य यज्ञस्तोममुच्यते । तस्मिन् चतुर्दशपुरुषा जायन्ते । एका कन्या । दशेन्द्रियाणि मन एकादशं तेजो द्वादशमहङ्कारः त्रयोदशः प्रणाश्चतुर्दशः आत्मा पञ्चदशः बुद्धिर्भूतानि पञ्चतन्मात्राणि पञ्चमहाभूतानि च स एकः पञ्चविंशः पुरुषः' 'अथ पुनरेव नारायणस्सोऽन्यत्कामो मनसा ध्यायत तस्य ध्यानान्तस्स्थस्य ललाटात्स्वेदोऽपतत्, त इमाः प्रतता आपः, तासु तेजः, तत्तेजो हिरण्मयमण्डं तत्र ब्रह्मा चतुर्मुखोऽजायत' इति ।

यजुषि — 'स प्रजापतिरेकः पुष्करपर्णे समभवत्' इति च ।

मनौ— एवं 'अप एव ससर्जादौ तासु वीर्यमवासृजत्' इत्यारभ्य

'तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः' इति

भारते — ‘स्वपतस्तस्य देवस्य पद्मं सूर्यसमप्रभम् ।
नाभ्यां विनिस्सृतमभूत्तत्रोत्पन्नः प्रजापतिः’ ॥ इति च स्मर्यते

ननु नाभ्यामण्डे चोत्पत्तिरेकस्य कथमुपपद्यत इति चेत् — तत् कल्पान्तर इति वक्तव्यम् । तदुक्तं हयशिर उपाख्याने —

‘त्वत्तो मे मानसं जन्म प्रथमं द्विजपूजितम् ।
चाक्षुषं वै द्वितीयं मे आसीज्जन्म पुरातनम् ॥
त्वत्प्रसादाच्च मे जन्म तृतीयं वाचिकं महत् ।
त्वत्तो मे श्रावणञ्चापि चतुर्थं जन्म वै प्रभो ॥
नासिक्यञ्चैव मे जन्म त्वत्तः पञ्चममुच्यते ।
अण्डजञ्चापि मे जन्म त्वत्तः षष्ठं विनिर्मितम् ॥
इदन्तु सप्तमं जन्म पद्मजं मेऽमितप्रभ’ ॥ इति ।

अतस्समस्तजगज्जन्मस्थितिध्वंसमहानन्दैकहेतोः भगवतः परब्रह्मणो नारायणस्य वैखानसादिशब्दवाच्यत्वसम्भवात् तन्नाभिनलिनसञ्जातस्य ब्रह्मणोऽपि ‘अङ्गादङ्गादिति मन्त्रोक्तप्रकारेण भारतादिप्रतिपादितरीत्या च वैखानसादिशब्दवाच्यत्वमुपपद्यते ।

शान्तिपर्वणि — ‘विशेषेणाखनत् यस्मात् भावनामुनिसृष्टये ।
तस्माद्विखनसो नाम स आसीदण्डजः प्रियः’ ॥ इति

तत्रैव ‘स्रष्टुं स तु समुद्युक्तो ब्रह्मयोनिमयः प्रभुः ।
खनित्वा चात्मनाऽऽत्मानं धर्मादिगुणसंयुतम् ।
ध्यानमाविश्य योगेन ह्यासीद्विखनसो मुनिः’ ॥ इति

श्रीभागवते — ‘न खलु गोपिकानन्दनो भवान्
अखिलदेहिनामन्तरात्मदृक् ।
विखनसार्थितो विश्वगुप्तये
सख उदेयिवान् सात्त्वतां कुले’ ॥ इति

गारुडे — श्रीरङ्गमाहात्म्ये ॥

‘ब्रह्माऽपि दिव्यहंसेन सितमेघोपमेन च ।
पृष्ठतोऽऽनुययौ विष्णुं वस्त्रेणोच्छाद्य चाननम् ॥

तत्रार्चको महाभागो भगवान् विखनास्तदा ।
ददौ प्रसादं देवानां रङ्गनाथाभ्यनुज्ञया ' ॥ इति

श्रीवैखानसे—आनन्दसंहितायाम् ॥

'अन्तर्हितानां खननाद्वेदानान्तु विशेषतः ।
स विभुः प्रोच्यते सर्वैः विखना ब्रह्मवादिभिः ।
वैखानसश्च भगवान् प्रोच्यते स पितामहः ' ॥ इति

व्यासनिघण्टौ – 'विखनसञ्च विधातारं विरिञ्चं तं चतुर्मुखम् ' । इति
'नाभिजन्माण्डजः पूर्वो विखनाः कमलासनः ॥

शतानन्दश्शतधृतिस्सत्यको हंसवाहनः ।
पद्मासनो विखनसश्चतुर्मुख इतीरितः ' ॥ इति च प्रतिपादितम् ।

एवं कार्यकारणयोरभेदावगमात् प्रमाणबाहुल्याच्च भगवति नारायणे चतुर्मुखे च वैखानसशब्दप्रयोगप्रकारः प्रतिपादितः ।

### वैखानसानामुत्पत्तिप्रकारः

वैखानसानामुत्पत्तिः विशेषेण श्रूयते । यजुषि आरुणकेतुके इष्टकोपधानकथनानुवाके सृष्टिप्रकरणे – 'आपो वा इदमासन् सलिलमेव। स प्रजापतिरेकः पुष्करपर्णे समभवत् । तस्यान्तर्मनसि कामस्समवर्तत । इदं सृजेयमिति ' । इत्यारभ्य 'स तपस्तप्त्वा । शरीरमधूनुत । तस्य यन्मांसमासीत् । ततोऽरुणाः केतवो वातरशना ऋषय उदतिष्ठन् । येऽनखाः ते वैखानसाः । ये वालाः ते वालखिल्याः ' इति । अस्यार्थः । समष्टिसृष्टेरनन्तरं व्यष्टिसृष्टौ चतुर्मुखः देवमनुष्यादिविविधविशेषसृष्ट्यर्थं मत्स्यादिरूपेणावतरिष्यमाणस्य भगवतो नारायणस्य परमवैदिकत्वेन सम्प्रतिपन्न श्रीवैखानसभगवच्छास्त्रमार्गेण समाराधनार्थञ्च स्वात्मतुल्याः प्रजास्सम्भवेयुरिति स्वान्तर्यामिणं परमात्मानं ध्यानेनानुकृतवान् । अयमेवार्थो ब्राह्माण्डेऽप्युच्यते –

'ओमित्येकाक्षरं ब्रह्म व्याहरन् संस्मरन् हरिम् ।
पद्मासनस्थो भगवान् परमं तप आस्थितः ' ॥

इत्यारभ्य ब्रह्मणा बहुशः कृतं तपश्चरणमुक्तम्। तपश्चरणकाले साक्षात्कृत-भगवत्स्वरूपवैभवानुभवातिशयात् भगवद्दत्तसृष्टिशक्तिलाभात् तदुपजनितविशेषवेगाच्च पुलकितसर्वाङ्गः शरीरमधूनुत—कम्पमकरोत्। 'तस्य यन्मांसमासीत्' मांसं—मानसमिति यावत्। 'अर्थात्प्रकरणाल्लिङ्गादौचित्यादर्थनिर्णयः' इत्यर्थादिभिः समीचीनार्थनिर्णयविधानात् 'अक्षरसाम्यान्निर्ब्रूया' दिति निरुक्तविधानाच्च।

तथा च तस्य मनः परमात्मनि संसन्नमासीदिति यत्, तेन हेतुना तदनुग्रहस्समजनि। तेनानुगृहीतात् ब्रह्मणः अरुणाः केतवो वातरशनाः ऋषयः उदतिष्ठन्। अरुणाः परमात्मनि वसन्तः तदितरविरक्ताः केतवः उच्छ्रितस्वभावाः परमात्मप्रवणानामग्रेसराः वातरशना दिग्वाससः ऋषयः सर्वार्थदर्शिनः सनकादयः उदतिष्ठन् उत्कृष्य समभवन् इति।

इदं विष्णुपुराणेपि—'सनन्दनादयो ये च पूर्वं सृष्टास्तु वेधसा।
न ते लोकेष्वसज्जन्त निरपेक्षाः प्रजाविधौ॥
सर्वे ते योगिनो जाता वीतरागा विमत्सराः।
तेष्वेवं निरपेक्षेषु लोकसृष्टौ महात्मनः' इत्यादिना प्रतिपादितम्॥

स प्रजापतिः एवंविधान् स्वकार्यासाधकान् तान् दृष्ट्वा किञ्चिद्विषादमापन्नः पुनरपि स्वकारणं भगवन्तं ध्यानपर्यायेण खननेनातोषयत्। 'ये नखा' इत्यादि। भगवदनुग्रहविकसिते प्रजापतेर्मनसि वैखानसा नाम ऋषयस्सम्भूताः अत्र ये नखा इत्यत्र आद्यन्तवर्णविपर्ययो भवति। कश्यपः पश्यको भवती' तिवत् खना इत्येतत् नखा इति विपर्यस्तमिति यावत्।

'सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च।
व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिद्ध्यति बाहुलकेन'॥

इति, 'बहुलं छन्दसी' ति चात्र प्रमाणम्।

अत्र 'अनखा' इति छित्त्वा केचिदेवमूचुः[1]। अनखा इत्यनेन सौम्येन्द्रियवत्त्वमुक्तमिति।

---

1. न विद्यन्ते खानि इन्द्रियाणि येषां ते नखाः। न नखाः अनखाः नञ्द्वयेन सौम्येन्द्रियवत्वं फलितम्।

एवञ्च सति 'सौम्यं जितेन्द्रियं' 'सुप्रसन्नेन्द्रियं' इत्यादिना भगवच्छास्त्रेष्वाचार्यलक्षणस्य प्रतिपादितत्वात् 'वैखानस विखनसाचर्य' इति विष्णोराचार्यत्वेन शान्तिपर्वण्यभिहितत्वात्,

'विखना इति वै विष्णुस्तज्जा वैखानसाः स्मृताः ।
विष्णोरेव समुत्पन्ना भृग्वाद्या मुनयस्तथा ॥'

इति वचनात्, 'गुरोस्सानवृत्तिर्वैखानस' इति बोधायनसूत्रे उक्तत्वाच्च भागवतादिषु प्रतिपादितमाचार्यपुंस्त्वमेतेषां वैखानसानामेवेत्यवगम्यते ॥

यद्वा 'अनघा' इति पाठः । अनेन त्रिशुक्लत्वं सूच्यते । जन्म विद्या कर्म चेति । अद्वारकत्वेन भगवतः, चतुर्मुखाच्चोत्पत्तिश्रवणात्,

'तत्कर्म यन्न बन्धाय सा विद्या या विमुक्तये ।
आयासायापरं कर्म विद्याऽन्या शिल्पनैपुणम्' ॥

इत्युक्तरीत्या अद्वारकभगवत्स्वरूपज्ञानतदाराधनविधिप्रतिपादकशास्त्रनिष्ठत्वेन च एषां त्रिशुक्लत्वम् । शुक्लवतामेवाधिक्यं आरण्यपर्वणि प्रथमाध्याये प्रतिपादितम् । यथा—

'येषां त्रीण्यवदातानि योनिर्विद्या च कर्म च ।
ते सेव्यास्तैस्समास्या हि शास्त्रेभ्योऽपि गरीयसी' ति ॥

श्रीवैखानसे आनन्दसंहितायां विखनसोत्पत्त्यादिकं प्रतिपादितम् ।

'अथ सस्मार भगवान् विश्वसृष्ट्यर्थमच्युतः ।
धातारं विश्वनिर्माणचतुरं चतुराननम् ॥

स्मरणानन्तरादेव प्रादुरासीत्पुरः प्रभोः ।
धाता समस्तजगतामुत्पत्तिकरणक्षमः ॥

तं प्राह भगवान् विष्णुः प्रणतं पुरतः स्थितम् ।
श्रीभगवानुवाच—'ब्रह्मन् त्वया जगत्सर्वं कर्तव्यं सचराचरम् ॥

लोके विहर्तुमिच्छामि यदहं पद्मसम्भव ।
ततस्त्वत्सृष्टजगतामविच्छिन्नप्रवृत्तये ॥

धर्मसंरक्षणार्थाय वेदशास्त्रार्थसिद्धये ।
अलसा अल्पसत्वाश्च मनुष्यास्स्वल्पबुद्धयः ॥

ते परव्यूहविभवानात्मानञ्च न मेनिरे ।
सौलभ्याय तु भक्तानां सर्वलोकानुकम्पया ॥

अर्चावताररूपेण लोकेऽस्मिंश्चतुरानन! ।
अवतारं करिष्यामि मया लक्ष्म्या समन्वितः ॥

मदर्चायै सृज ब्रह्मन् सृष्ट्यादौ मुनिसत्तमम् ।
इत्याज्ञप्तस्तदा ब्रह्मा मुहूर्तं तत्सिसृक्षया ॥

चिन्तयामास तत्कर्मा क्षणमेकं महामुनिः ।
ऊचे न शक्नुयामेवं स्रष्टुमिच्छन् तथाविधम् ॥

तस्य तद्वचनं श्रुत्वा देवदेवो हरिस्स्वयम् ।
चिन्तयामास देवेशः स्वनिर्मलतरात्मनि ॥

वेदान्ततत्त्वमीमासाखननं कृतवान् हरिः ।
नाम्ना विखनसं चक्रे तत्पदान्वर्थयोगतः ॥

तथा चिन्तयतस्तस्य मनसो द्वौ बभूवतुः ।
सङ्कल्पधर्मौ, सन्नम्य प्राञ्जलिं पुरतःस्थितम् ॥

ब्रह्माणमब्रवीद्विष्णुर्भूतसृष्ट्यन्तहेतवे (कारकं) ।
सङ्कल्पधर्मौ भवतस्तव सृष्ट्यन्तहेतवे ॥

शुद्धसत्त्वसमुत्पन्नो निर्मितोऽयं तवाग्रतः ।
मुनिश्रेष्ठो महातेजा मत्कार्यकरणक्षमः ॥

मत्कार्यसाधकानेव त्वं वै स्रष्टुमथार्हसि ।
हृषीकेशस्य तद्वाक्यमभ्याधाय कृताञ्जलिः ॥

चतुर्मुखश्चापि तथा सनकादिमुनीश्वरान् ।
ध्यायन्मुखैश्चतुर्भिस्तु क्रमादसृजदब्जभूः ॥

सनत्कुमारञ्च तथा सनकञ्च सनातनम् ।
सनन्दनमिति ख्यातान् ब्रह्मविद्याविशारदान् ॥

ततस्ते च मुनिश्रेष्ठा ज्ञानातिशयवैभवात् ।
विरक्तचित्तास्सञ्जग्मुः कैवल्यं पदमुत्तमम् ॥

स्वकार्यसाधकान् ब्रह्मा सृष्टवान् पुनरेव हि ।
प्राणाच्च चक्षुषस्तद्वदभिमानाच्च कर्मणः ॥

हृदयाच्छिरसः श्रोत्रादुदानाद्व्यानतस्ततः ।
समानाच्च तथाऽपानादृषिश्रेष्ठानिमान् दश ॥

दक्षं मरीचिनं नीललोहितं भृगुमेव च ।
तथाऽङ्गिरसमत्रिञ्च पुलस्त्यं पुलहं तथा ॥

वसिष्ठञ्च क्रतुञ्चैव क्रमादसृजदब्जभूः ।
नव ब्रह्माण एवैते विना स्युर्नीललोहितम् ॥

धर्मसङ्कल्पसहितास्सनकाद्या मुनीश्वराः ।
भृग्वादिमुनयश्चैव श्रुतिस्मृत्यादिवेदनात् ॥

शिष्या विखनसः प्रोक्तास्सर्वशास्त्रार्थपारगाः ।
वैखानसानां भृग्वाद्या वंशकर्तार ईरिताः ॥

सर्वेषामग्रजं श्रेष्ठमात्मपुत्रं मुनिं तथा ।
तं हरेः पुरतः कृत्वा प्रोक्तवान् कमलासनः ॥

ब्रह्मोवाच — 'देवदेव जगन्नाथ सृष्टिस्थित्यन्तकारण ।
भगवंस्त्वत्प्रभावेन सृष्टोऽयं मुनिसत्तमः ॥

जातश्चिन्तयतो मत्तस्त्वत्सृष्टौ मुनयस्त्विमे ।
एतैरपि कृतं सर्वं जगदेतच्चराचरम् ॥

मत्पुत्राणाञ्च सर्वेषामग्रजः पुरुषोत्तमः ।
वैष्णवेष्वग्रजः श्रेष्ठो मुनीनां प्रथमो मुनिः ॥

विशेषखननाज्जातो विष्णोर्वैखानसस्तथा ।
भृग्वादीनुपनीयाथ सावित्रीमुपदेक्ष्यति ॥

परब्रह्मोपदेष्टासावयमेव गुरुस्स्मृतः ।
एतदुक्तप्रकारेण सर्वे वै मम सूनवः ॥

चरिष्यन्ति यथान्यायं लौकिकाध्यात्मवैदिकान् ।
एभिः प्रवर्तिता सृष्टिरविच्छिन्ना प्रवर्त्तते ॥

भवानवतरत्वत्र मम सृष्टौ जनार्दन! ।
शुद्धसत्त्वसमुत्पन्नो निर्मितोऽयं त्वया विभो ॥

ऋषिश्रेष्ठो महातेजाः त्वत्कर्मकरणक्षमः ।
तथाऽसौ खननाद्विष्णोः ध्यायादन्तश्च गर्भतः ॥

यस्मात्तव समुत्पन्नो ज्ञेयोऽसौ गर्भवैष्णवः ।
इत्युक्तो भगवान् प्राह मुनिश्रेष्ठं तपोनिधिम् ॥

श्रीभगवानुवाच– 'देवब्रह्मऋषीणान्तु मदीयाराधनं प्रति ।
मया सञ्चोदितो यस्मात्त्वमेव मुनिसत्तम ॥

तपोधनो भवानेव धन्योऽसि भुवनत्रये ।
आत्मार्थं वा परार्थं वा नित्यनैमित्तिकादि यत् ॥

तत्सर्वं मत्प्रसादेन मदीयाराधनं कुरु ।
अथाह स ऋषिस्तस्मै प्रणम्य जगदात्मने ॥

श्रीविखाना उवाच–'भवताऽनुगृहीतोऽहं धन्योऽस्मि पुरुषोत्तम ।
नातः परतरं कार्यं किमप्यन्यद्दिवौकसाम् ॥

तथापि देवदेवेश स्वकर्म मुनिभिस्सदा ।
उदयाद्यस्तपर्यन्तं क्रियते नियतात्मभिः ॥

सर्वेषाञ्च द्विजातीनां श्रुतिस्मृतिसमीरितम् ।
कर्तव्यं सततं देव स्वस्वकर्म प्रयत्नतः ॥

भवदाराधनं विष्णो कथंकारं करोम्यहम् ।
त्वत्कर्म क्रियते चेत्तु कर्मलोपो भवेन्मम ॥'

इत्युक्तो भगवानाह मुनिना तत्त्ववेदिना ।
श्रीभगवानुवाच–' विखनस्त्वं मुनिश्रेष्ठ मदाराधनकर्मणि ॥

स्वकर्मलोपसन्त्रासव्याकुलीकृतचेतसः ।
तव कर्माण्यनूनानि सन्तु नित्यं मदाज्ञया ॥

त्वद्वंशजानां सर्वेषां काले वै कृतकर्मणाम् ।
निषेकादिश्मशानान्ताः कार्याः मन्त्रसमन्विताः ॥

अष्टादश च कर्माणि शारीराणि प्रचक्षते ।
यज्ञाश्च विंशतिर्द्वौ च धर्मं वैष्णवमुत्तमम् ॥

वेदे वैखानसे सूत्रे यो धर्मः परिकीर्तितः ।
सर्वैस्स धर्मोऽनुष्ठेयो नात्र कार्या विचारणा ॥ *

त्वदाज्ञयैव भृग्वाद्या नारायणपारायणाः ।
वदन्ति परमं धर्मं वैष्णवं श्रुतिसम्मतम् ॥

तद्धर्मनिरता ये तु ते वै भागवताः स्मृताः ।
मत्कर्मकारिणां तेषां कर्मलोपो न विद्यते ॥

तिस्रः कोट्यो मुनीनां तु कर्म कुर्वन्ति मे सदा ।
ज्ञात्वा यजूंषि साङ्गानि मन्मतास्सर्व एव ते ॥

मन्मन्त्रकल्पजातानि मत्पुराणान्यनुक्रमात् ।
अधीत्य सर्वकर्माणि कुर्वते ते मदर्चनम् ॥

कृताधिकारिणस्ते तु कृतसम्बन्धिनो मम ।
मत्प्रसादभुजस्सौम्या अतिप्रियतमा मम ॥

षट्कर्मनिरतास्ते वै सात्विकाहारतत्पराः ।
वैखानसेन सूत्रेण निषेकादिक्रियान्विताः ॥

भवन्ति भावितात्मानो मत्कर्मैककरणक्षमाः ।
तस्माद्भागवतश्रेष्ठा भवन्त्यप्राकृता भुवि ॥
सर्वथा 'येनखास्ते वैखानसा' इति वेदतः ।
तस्माद्वैखानसास्शुद्धास्सर्वकर्मसु पूजिताः ॥'
ततः प्राह मुनिश्रेष्ठस्तमेवं वादिनं हरिम् ।
श्रीविखना उवाच-'भगवंस्त्वत्प्रसादेन कर्म साङ्गं यथोदितम् ॥
सर्वेषां मत्कुलीनानां भवत्येव न संशयः ॥' इति

अतोऽत्र श्रुत्युक्तमार्गेण वैखानसानां सृष्ट्यादिकं, अद्वारकभगवद्यजनेनैतेषां नित्यकर्मानुष्ठानपूर्णत्वं च प्रतिपादितम् ।

'अथ पञ्चमवेदत्वेन प्रसिद्धे महाभारते आनुशासनिकपर्वणि ८५ तमे अध्याये भृग्वादिमहर्षीणां वैखानसानाञ्चोत्पत्तिः निरूपिता ॥ यथा –

वसिष्ठः— 'अपि चेदं पुरा राम श्रुतं मे ब्रह्मदर्शनम् ।
पितामहस्य यद्वृत्तं ब्रह्मणः परमात्मनः ॥
देवस्य महतस्तात! वारुणीं बिभ्रतस्तनुम् ।
ऐश्वर्ये वारुणे राम रुद्रस्येशस्य वै प्रभोः ॥
आजग्मुर्मुनयस्सर्वे देवाश्चाग्निपुरोगमाः ।
यज्ञाङ्गानि च सर्वाणि वषट्कारश्च मूर्तिमान् ॥
मूर्तिमन्ति च सामानि यजूंषि च सहस्रशः ।
ऋग्वेदश्चागमत्तत्र पदक्रमविभूषितः ॥
लक्षणानि सुरास्तोमा निरुक्तं सुरपङ्क्तयः ।
ओङ्कारश्छन्दसां नेत्रं निग्रहप्रग्रहौ तथा ॥
तथा वेदास्सोपनिषदो विद्यास्साविञ्यथापि च ।
भूतं भव्यं भविष्यच्च दधार शिरसा शिवः ॥
सञ्जुहावात्मनाऽऽत्मानं स्वयमेव तथा प्रभो ।
यज्ञञ्च शोभयामास बहुरूपं पिनाकधृत् ॥

द्यौर्नभः पृथिवी स्रष्टा तथा चैवैष भूपतिः ।
सर्वविघ्नेश्वरश्श्रीमानेष चापि विभावसुः ॥

एष ब्रह्मा शिवो रुद्रो वरुणोऽग्निः प्रजापतिः ।
कीर्त्यते भगवान् देवस्सर्वभूतपतिश्शिवः ॥

तस्य यज्ञः पशुपतेस्तपः क्रतव एव च ।
दीक्षा दीप्तव्रता देवी दिशश्च सदिगीश्वराः ॥

देवपत्न्यश्च कन्याश्च देवानाश्चैव मातरः ।
आजग्मुस्सहितास्तत्र तदा भृगुकुलोद्वह ॥

यज्ञं पशुपतेः प्रीता वरुणस्य महात्मनः ।
स्वयम्भुवस्ता दृष्ट्वा तु रेतस्समपतद्भुवि ॥

तस्य शुक्रस्य निष्प्यन्दात् पांसून् सङ्गृह्य भूमितः ।
प्रास्यत्पूषा कराभ्यां वै तस्मिन्नेव हुताशने ॥

ततस्तस्मिन् सम्प्रवृत्ते सत्रे ज्वलितपावके ।
ब्रह्मणो जुह्वतस्तत्र प्रादुर्भावो बभूव ह ॥

स्कन्नमात्रन्तु तच्छुक्रं स्रुवेण परिगृह्य सः ।
आज्यवन्मन्त्रवच्चापि सोऽजुहोद्भृगुनन्दन! ॥

ततस्तु जनयामास भूतग्रामञ्च वीर्यवान् ।
तस्य तत्तेजसः तस्मात् जज्ञे लोकेषु तैजसम् ॥

तमसस्तामसा भावा व्यापि सत्त्वं तथोऽभयम् ।
स गुणस्तेजसो नित्यस्तस्य चाकाशमेव च ॥

सर्वभूतेषु च तथा सत्त्वं तेजस्त्वथोत्तमम् ।
शुक्रे हुतेऽग्नौ तस्मिंस्तु प्रादुरासंस्त्रयः प्रभो ॥

पुरुषा वपुषा युक्तातस्तैस्तैः प्रसवजैर्गुणैः ।
भर्जनाद्भृगुरित्येवमङ्गारेभ्योऽङ्गिरा भवत् ॥

(भृगित्येव भृगुः पूर्वमङ्गारेभ्योऽङ्गिरा भवत् ।
अङ्गारसंश्रयाच्चैव कविरित्यपरोऽभवत् ॥

सहज्वालाभिरुत्पन्नो भृगुस्तस्माद्भृगुस्स्मृतः ।)
मरीचिभ्यो मरीचिस्तु मारीचः काश्यपो ह्यभूत् ॥

अङ्गारेभ्येऽङ्गिरास्तात वालखिल्याः कुशोच्चयात् ।
अत्रैवात्रेति च विभो जातमत्रिं वदन्त्यपि ॥

तथाऽग्नेस्तस्य भस्मभ्यो ब्रह्मर्षिगणसम्मताः ।
वैखानसास्समुत्पन्नास्तपश्श्रुतगुणेप्सवः ॥

अश्रुतोऽस्य समुत्पन्नावश्विनौ लोकसम्मतौ ।
शेषाः प्रजानां पतयस्स्रोतोभ्यस्तस्य जज्ञिरे ॥

ऋषयो रोमकूपेभ्यस्स्वेदाच्छन्दो बलान्मनः ।
एतस्मात्कारणादाहुरग्निः सर्वाश्च देवताः ॥

ऋषयश्श्रुतसम्पन्ना वेदप्रामाण्यदर्शनात् ।
यानि दारूणि ते मासा निर्यासाः पक्षसंज्ञिताः ॥

अहोरात्रा मुहूर्ताश्च पित्तं ज्योतिश्च वारुणम् ।
रौद्रं लोहितमित्याहुर्लोहितात् कनकं स्मृतम् ॥

तन्मैत्रमिति विज्ञेयं धूमाच्च वसवस्स्मृताः ।
अर्चिषो याश्च? ते रुद्रास्तथाऽऽदित्या महाप्रभाः ॥

उद्दिष्टास्ते तथाऽङ्गारा ये धिष्ण्येषु दिवि स्थिताः ।
आदिकर्ता च लोकस्य तत्परं ब्रह्म तद्ध्रुवम् ॥

सर्वकामदमित्याहुस्तद्रहस्यमुवाच ह ।
ततोऽब्रवीन्महादेवो वरुणः पवनात्मकः ॥

वरुणः — 'मम सत्रमिदं दिव्यमहं ग्रहपतिस्त्विह ।
त्रीणि पूर्वाण्यपत्यानि मम तानि न संशयः ॥

इति जानीत खगमा मम यज्ञफलं हि तत्' ।

अग्निः— 'मदङ्गेभ्यः प्रसूतानि मदाश्रयकृतानि च ॥
ममैवैतान्यपत्यानि वरुणो ह्यवशात्मकः' ।

ब्रह्मा— 'अथाब्रवील्लोकगुरुः ब्रह्मा लोकपितामहः ॥
ममैवैतान्यपत्यानि मम शुक्रं हुतं हि तत् ॥'

ईश्वरः— 'अहं कर्ता हि सत्रस्य होता शुक्रस्य चैव हि ।
यस्य बीजं फलं तस्य शुक्रश्चेत्कारणं मतम् ॥'

ततोऽब्रुवन् देवगणाः पितामहमुपेत्य वै ।
कृताञ्जलिपुटास्सर्वे शिरोभिः प्रणिपत्य वै ॥

'वयञ्च भगवन्! सर्वे जगदेतच्चराचरम् ।
तवैव प्रसवं सर्वं तस्मादग्निर्विभावसुः ॥

वरुणश्चेश्वरो देवो लभतां काममीप्सितम् ।
निसर्गाद्वरुणश्चापि ब्रह्मणो यादसां पतिः ॥

जग्राह वै भृगुं पूर्वमपत्यं सूर्यवर्चसम् ।
ईश्वरोऽङ्गिरसञ्चाग्नेरपत्यार्थे ह्यकल्पयत् ॥

पितामहस्त्वपत्यं वै कविं जग्राह धर्मतः ।
तदा स वारुणिः ख्यातो भृगुः प्रसवकर्मकृत् ॥

आग्नेयस्त्वङ्गिराः श्रीमान् कविर्ब्राह्मो महायाशाः ।
भार्गवाङ्गिरसौ लोके लोकसन्तानलक्षणौ ॥

एते हि प्रसवास्सर्वे प्रजानां पतयस्त्रयः ।
सर्वं सन्तानमेतेषामिदमित्यवधारय' ॥

इत्यादिना वैखानसानामुत्पत्त्यादिकं विशेषेण प्रतिपादितम् ।

पुराणान्तरे— 'यज्ञे देवस्य वितते महतो वरुणस्य ह ।
ब्रह्मणोऽप्सरसं दृष्ट्वा रेतश्चस्कन्द कर्हिचित् ॥

तत्प्रतीक्ष्य स पर्णेन संजुहाव विभावसौ ।
ततोऽर्चिषोऽभूद्भगवान् भृगुरङ्गारतोऽङ्गिराः ॥

अत्रैवान्वेषणादत्रिः खननाद्विखना मुनिः ।
खननं तत्त्वमीमांसेत्याहुः केचन सूरयः ॥

अपरे निगमार्थानां खननादिति नश्श्रुतम् ।
ततस्तद्वंशजा विप्रा वेदवेदाङ्गवेदिनः ॥ इति ।

'ये वालाः ते वालखिल्याः' इत्यत्र बकारस्थाने वकारः । ज्ञानाति-शयवैभवात् कामादिदोषराहित्येन च बाला उच्यन्ते । श्रूयते हि – 'तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत् बाल्यञ्च पाण्डित्यञ्च निर्विद्य मुनिः' इति ॥

अत्र केचिदेवमूचुः—ब्रह्मणः विधूताच्छरीरात् यन्मांसं विकीर्णमभव-ततोऽरुणाः केतवो वातरशना ऋषय उदतिष्ठन्निति । तदसत् । एवमर्थस्वीक-सृष्टिकारणभूतस्य ब्रह्मशरीरस्य शैथिल्यमुक्तं स्यादिति ।

किञ्च 'तस्यान्तर्मनसि कामस्समवर्तत' इत्यादिना 'कामस्तदग्रे समवर्त-ताधि' इत्यन्तेन सोपपत्तिकं वर्तमानं सङ्कल्परूपं मननव्यापारमुक्त्वा 'मनस-रेतः प्रथमं यदाऽसी' दित्यत्र तत्र विद्यमानस्य व्यापारस्य प्रजापतेः स्सृष्टिकारण-रेतश्शब्देनोक्त्वा 'सतो बन्धुमसति निरविन्द' न्नित्यारभ्य 'य एवं वेद' इत्यन्ते-ब्रह्मणस्तत्कालविद्यमानमानसशक्तिमात्रेण व्यष्टिसृष्टेरनिष्पन्नत्वमुक्त्वा मनसो व्यष्टि-कारणलाभाय 'स तपोऽतप्यत' इति भगवदुपासनमकरो दित्युक्तम् । अयमेवार्थ-'ओमित्येकाक्षरं ब्रह्म' त्यादिना ब्रह्माण्डेऽप्युक्तः ।

भगवन्मानसपुत्रा भृग्वादय इति भगवतैवोक्तम् —

'महर्षयस्सप्त पूर्वे चत्वारो मनवस्तथा ।
मद्भावा मानसा जाता येषां लोक इमाः प्रजाः' ॥ इति

भृग्वादय एव वैखानसानां वंशकर्तारः इति भारतेऽप्युक्तम् ।

यथा शान्तिपर्वणि —

'भृग्वङ्गिरोमरीच्यत्रिपुलस्त्यपुलहाः क्रतुः ।
तथा वसिष्ठो दक्षश्च नव स्वायम्भुवा द्विजाः ॥
एते वैखानसानान्तु ऋषीणां भावितात्मनाम् ।
वंशकर्तार उच्यन्ते सात्त्विकाहारभोजिनाम्' ॥ इति

तस्माद्भगवता नारायणेन ब्रह्मणा च सृष्टानां भृग्वादीनामृषीणां तद्वंशजानां च निषेकादिक्रियावतामद्वारकभगवद्यजनाधिकारवतामेव लोके वैखानसा इति प्रसिद्धिः ।

ननु ब्रह्मणा सृष्टानां सर्वेषामपि मनुष्याणां वैखानसत्वं समानम् । कथमेतेष्वेव व्यवह्रियते इति चेत् सत्यम् । नामरूपकृत्यविभागादिकं वेदशब्देभ्य एव ब्रह्मणा कृतमिति श्रूयते । 'वेदेन नामरूपे व्याकरोत् सतासती प्रजापति'रिति ।

यथा भारते — 'अनादिनिधना ह्येषा वागुत्सृष्टा स्वयम्भुवा ।
आदौ वेदमयी दिव्या यतस्सर्वाः प्रसूतयः ॥ इति ।

श्रीविष्णुपुराणे — 'नाम रूपञ्च भूतानां कृत्यानाञ्च प्रपञ्चनम् ।
वेदशब्देभ्य एवादौ देवादीनां चकार सः' ॥ इति ।

मनुः — 'सर्वेषाञ्च स नामानि कर्माणि च पृथक् पृथक् ।
वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे' ॥

इति च नामरूपविभागस्य श्रुतिस्मृतिषु प्रतिपादितत्वात् ब्रह्मणा तादृशश्रुतिस्मृत्यनुसारेण सृष्टानामेव वैखानसत्वव्यवहारः । नान्येषाम् ।

किञ्च एकस्मिन् परमपुरुषे मुखादिषु जातानां यथा ब्राह्मणादिव्यवहारः, यथा विश्वामित्र भारद्वाजादि गोत्रेषूत्पन्नानामेकसूत्रनिष्ठत्वं विना अनेकसूत्रानुसारित्वं, यथा च कुमुदकह्लारादिषु 'पङ्के जायत' इति व्युत्पत्त्या पङ्कजत्वे समानेऽपि योगरूढिभ्यां पङ्कजत्वं तामरस एव वर्तते तथैव वैखानसत्वमपि । तथोक्तम् —

'कल्पे कल्पे क्षयोत्पत्त्या ब्रह्मविष्णुमहेश्वराः ।
श्रुतिस्मृतिसदाचारनिर्णेतारस्तु सर्वदा ॥

न कश्चिद्वेदकर्ताऽस्ति वेदवक्ता चतुर्मुखः ।
तथैव धर्मं स्मरति मनुः कल्पान्तरान्तरे ' ॥ इति ।

ननु — ' ब्रह्मचारी गृहस्थश्च भिक्षुर्वैखनसस्तथा ' इति । तत्र तत्र तृतीयाश्रमनिष्ठानामेव वैखानसत्वावगमात् त एव वैखानसशब्दवाच्याः किं न स्युरिति चेत् न । श्रुतिस्मृतिपुराणादिषु उक्तप्रकारेण ब्रह्मणा सृष्टानामेव वैखानसत्वावगमात् तेषामेव तत्र तत्रोत्कृष्टत्वप्रतिपादनाच्च ।

तथा हि – श्रुतावेव वैखानसानामुत्पत्तिः श्रूयते । ' ये नखाः ते वैखानसाः ' इति । छन्दोगब्राह्मणे । ' वैखानसा वा ऋषय इन्द्रस्य प्रिया आसन् ' ' पौरुहन्महं भवति । पुरुहान्नादो वा एतेन वैखानसोऽञ्जसा स्वर्गं लोकमपश्यत् ' इति । अत्र इन्द्रशब्देन परमात्मा नारायण उच्यते । ' स ब्रह्मा स शिवस्सेन्द्रस्सोऽक्षरः परमस्स्वराट् ' इत्यादिश्रुतिभ्यः ।

' अश्वत्थः कपिला गावस्तुलसी विखनास्तथा ।
चत्वारो मत्प्रिया राजंस्तेषां वैखानसो वरः ' ॥

इत्युपबृंहणात् । ब्रह्मसूत्रे इन्द्रप्राणाधिकरणे तथा निर्णयाच्च ।

आनुशासनिके – ' तथाऽग्नेस्तस्य भस्मभ्यो ब्रह्मर्षिगणसम्मिताः ।
वैखानसास्समुत्पन्नास्तपश्श्रुतगुणेप्सवः ' ॥

इति वैखानसनाम्नैवोत्पत्तिप्रतिपादनात् ।

तथा किष्किन्धाकाण्डे —

' शृङ्गं सौमनसं नाम जातरूपमयं ध्रुवम् ।
तत्र पूर्वं पदं कृत्वा पुरा विष्णुस्त्रिविक्रमे ॥
द्वितीयं शिखरे रौद्रं चकार पुरुषोत्तमः ।
तदुत्तरे प्रतिक्रम्य जम्बूद्वीपं दिवाकरः ॥
दृश्यो भवति भूयिष्ठं शिखरं तन्महोच्छ्रयम् ।
तत्र वैखानसा नाम वालखिल्या महर्षयः ॥
प्रकाशमाना दृश्यन्ते सूर्यवर्णास्तपस्विनः ' ॥ इति ।

तत्रैव चत्वारिंशेऽध्याये —

'मैनाकश्च विचेतव्यस्ससानुप्रस्थकन्दरः ।
स्त्रीणामश्वमुखीनाञ्च निकेतास्तत्र तत्र तु ॥
तं देशं समतिक्रम्य आश्रमं सिद्धसेवितम् ।
सिद्धा वैखानसास्तत्र वालखिल्याश्च तापसाः ॥
वन्द्यास्ते तु तपस्सिद्धास्तपसा वीतकल्मषाः ।
प्रष्टव्या चापि सीतायाः प्रवृत्तिर्विनयान्वितैः ॥
हेमपुष्करसञ्छन्नं तत्र वैखानसं सरः' ॥

इति च वानप्रस्थपरत्वं विना 'वैखानसा वालखिल्या' इति वालखिल्यसमानतया पृथग्वंशत्वेन कीर्तनात् ।

तथा श्रीविष्णुपुराणे — द्वितीयांशे नवमेऽध्याये —

'ततः प्रयाति भगवान् ब्राह्मणैरभिरक्षितः ।
वालखिल्यादिभिश्चैव प्रभुर्वैखानसैरपि ॥
महात्माभिर्महात्मा वै जगतां पालनोद्यतः' ॥ इति

तथा सभापर्वणि-'पितामहस्य भवनं जग्मुश्च कृपयाऽन्विताः ।
ततो ददृशुरात्मानं सह देवैः पितामहम् ॥
सिद्धैर्महर्षिभिश्चैव समन्तात्परिवारितम् ।
तत्र विष्णुर्महादेवस्तत्राग्निर्वायुना सह ॥
चन्द्रादित्यौ च धर्मश्च परमेष्ठी तथा बुधाः ।
वैखानसा वालखिल्यास्सोमपाश्च मरीचिपाः ॥
अजाश्चैवाजमीढाश्च तेजोगर्भास्तपस्विनः ।
ऋषयस्सर्व एवैते पितामहमुपासते' ॥

इति च वैखानसानां ब्रह्मसभाप्रवेशवर्णनात् । तस्य च तृतीयाश्रमनिष्ठेष्व-सम्भवात् ।

तथा आनुशासनिके —

'शृणु राजन् वसिष्ठस्य मुख्यं कर्म यशस्विनः ।
वैखानसविधानेन गङ्गातीरं समाश्रिताः ॥
आदित्यास्सत्रमीहन्ति सरो वैखानसं प्रति' ॥ इति

अत्र वानप्रस्थविधौ सत्रयागक्रमविधानाभावात् वानप्रस्थाश्रमप्रविष्टा तेन शरीरेण पुनरपि देवत्वयोग्यताऽसम्भवाच्च वैखानसविधानेनेति वैखानसपदे वानप्रस्थानां गृहीतुमशक्यत्वात् ।

किञ्च श्रीभागवते एकादशस्कन्धे—

'वन्यैश्चरुपुरोडाशैर्निर्वपेत्कालचोदितान् ।
न तु श्रौतेन विधिना मां यजेत वनाश्रमी' ॥

इति वानप्रस्थानां श्रौतविधिनिषेधप्रतिपादनात् ।

तथा वृद्धमनौ —'वेदान्तवेदिभिर्विप्रैस्तद्वैखानससूत्रिभिः ।
याजयेद्यज्ञपुरुषं विष्णुं राजा जगद्धितः' ॥ इति

तथा आश्वमेधिके —

युधिष्ठिरः— 'कथं त्वमर्चनीयोऽसि मूर्तयः कीदृशाश्च ते ।
वैखानसाः कथं ब्रूयुः कथं वा पाञ्चरात्रिकाः ॥

श्रीभगवान् — 'शृणु पाण्डव तत्सर्वमर्चनाक्रममात्मनः ।
स्थण्डिले पद्मकं कृत्वा साष्टपत्रं सकर्णिकम् ॥
अष्टाक्षरविधानेन अथवा द्वादशाक्षरैः ।
वैदिकैरथवा मन्त्रैर्मम सूक्तेन वा पुनः ॥
स्थितं मां मन्त्रतस्तस्मिन्नर्चयेत् सुसमहितः ।
विष्णुश्च पुरुषं सत्यमच्युतश्च युधिष्ठिर ॥
अनिरुद्धश्च मां प्राहुर्वैखानसविदो जनाः ।
अन्ये त्वेवं विजानन्ति मां राजन् पाञ्चरात्रिकाः ॥

वासुदेवश्च राजेन्द्र सङ्कर्षणमथापि वा ।
प्रद्युम्नश्चानिरुद्धश्च चतुर्मूर्तिं प्रचक्षते ॥
एताश्चान्याश्च राजेन्द्र संज्ञाभेदेन मूर्तयः ।
विद्ध्यनर्थान्तरा एव मामेवञ्चार्चयेद्बुधः ' ॥ इति

तथा पाञ्चरात्रे पौष्करसंहितायाम् —

' विप्रा वैखानसाख्या ये ते भक्तास्तत्त्वमुच्यते ।
एकान्तिनस्सुसत्त्वस्था देहान्तं नान्ययाजिनः ॥
कर्तव्यमिति देवेशं संयजन्ते फलं विना ' ॥ इति

तथा तत्रैव तन्त्रभेदनिर्णये —

' शुद्धश्च वैदिकश्चैति तान्त्रिकश्च त्रिधा भवेत् ।
पाञ्चरात्रेण पूजा तु शुद्धं विष्णोरिति स्मृतम् ॥
वैखानसेन सूत्रेण पूजयेद्विष्णुमव्ययम् ।
वैदिकं तदितिप्रोक्तं द्विजातीनां प्रशस्यते ॥ इति

तथा विष्णुस्मृतौ —

' पौरुषं सूक्तमास्थाय ये यजन्ति द्विजोत्तमाः ।
संहिताजपमास्थाय ते मां प्राप्स्यन्ति वै द्विजाः ॥
अलाभे वेदमन्त्राणां पाञ्चरात्रोदितेन च ' ॥ इति

तथा सङ्कर्षणसंहितायाम् —

' पूजयेत्पञ्चरात्रैस्तु मन्त्रैर्मोक्षफलप्रदैः ।
वैखानसोक्तैर्दिव्यैर्वा मन्त्रैस्सर्वार्थसिद्धये ' ॥ इति

तथा शिल्पे हरिहरादीनां स्थाननिर्णये —

' सहस्रविप्रावासेषु शतविप्राधिकेषु ।
पञ्चमूर्तिविधानेन मध्ये विष्णुं समर्चयेत् ॥
तद्वास्त्वन्तरालये विष्णुं तान्त्रिकेण न चार्चयेत् ।
अर्चयेद्वैदिकोक्तेन वैखानसविधानतः ' ॥ इति

तथा ज्यौतिषे हयग्रीवसंहितायाम्—

'श्रीशास्त्रेणैव कर्तव्यं ग्राममध्यालयार्चनम् ।
पाञ्चरात्रविधानेन नाचरेदिति शासनम्' ॥ इति

तथा शैवे च सुप्रभेदे—

'सहस्रभूसुरादूर्ध्वे ग्रामे ब्रह्माङ्गणेऽपि च ।
वैखानसेन सूत्रेण निषेकादिसुसंस्कृतैः ॥
भार्गवादिमहातन्त्रमन्त्रभेदविचक्षणैः ।
अनुद्धृतैर्मन्त्रगणैर्वेदवेदान्तसम्भवैः ॥
क्रमाध्ययनसम्पन्नैस्साङ्गोपाङ्गैश्च संस्कृतैः ।
पञ्चमूर्तिप्रकारेण प्रतिष्ठाप्यार्चयेद्धरिम् ॥
वैदिकं तदिति प्रोक्तं राजराष्ट्रविवर्धनम्' ॥ इति

तथा कारणे ग्रामविन्यासविधौ—

'ब्रह्मांशं तु चतुर्भागं कृत्वा वायव्यभागतः ।
पञ्चमूर्तिक्रमेणैव विष्णुं संस्थाप्य पूजयेत्' ॥ इति

तथा भीमसंहितायाम् समयभेदोपन्यासावसरे—

'शैवमेवं समाख्यातं वैष्णवन्त्वधुनोच्यते ।
वैष्णवञ्च त्रिधा प्रोक्तं तथा समयभेदवत् ॥
पाञ्चरात्रं भागवतं तथा वैखानसं मतम् ।
शुद्धं मिश्रं तथा सौम्यं यथासंख्यक्रमेण तु ॥
वैदिकाचारबाह्यं यत्तद्रौद्रमिति कीर्तितम् ।
वैदिकाचारसम्बन्धात्सौम्यं श्रेष्ठमुदाहृतम् ॥
ग्रामादीनां समीपे तु मिश्रोक्तं स्थापयेद्बुधः ।
अब्धिनद्यादितीरेषु शुद्धोक्तं स्थापयेत्तथा ॥
विप्रावासेषु सर्वेषु सौम्योक्तेनैव कारयेत्' ॥ इति

तथा गारुडे— 'अध्वर्युभिर्विप्रवरैर्मते विखनसस्स्थितैः ।
तत्राऽराधनमीहस्व विष्णोरमिततेजसः' ॥ इति

तथा तत्रैव श्रीरङ्गमाहात्म्ये—

'ब्रह्माऽपि दिव्यहंसेन सितमेघोपमेन च ।
पृष्ठतोऽनुययौ विष्णुं क्त्रेणाच्छाद्य चाननम् ॥
तत्रार्चको महाभागो भगवान् विखनास्तथा ।
ददौ प्रसादं देवानां रङ्गनाथाभ्यनुज्ञया' ॥ इति

तथा उपरिचरवसुचरिते—

'वैखानसानां वचनैर्जपहोमार्चनादिभिः ।
यजेद्धरिं सुरपतिं भूमेर्विवरगोऽपि सन्' ॥ इति

तथा वृषगिरिमाहात्म्ये —

'अन्तःप्रविश्य मुनयस्सह वैखानसैर्द्विजैः ।
प्रणमन्त्यन्वहं देवं नारायणमनामयम्' ॥ इति

तथा आग्नेयपुराणे फुल्लारण्यमाहात्म्ये—

'फुल्लशिष्यास्तु यक्षास्ते पूजयन्ति युगे युगे ।
वैखानसेन विधिना यथा फुल्लमुखाच्च्युतम् ॥
मानुषाः पूजयन्तीह वैखानसमते श्रिताः' ॥ इति

तथा ब्रह्मकैवर्ते पुष्करतीर्थवैभववर्णने —

'निम्नगानां यथा गङ्गा देवानां भगवान् हरिः ।
वर्णानां ब्राह्मणाश्श्रेष्ठा आश्रमाणां यतिर्यथा ॥
श्रुतीनामादिभूतानामादिरेकायनी यथा ।
व्यूहानामादिभूतस्तु वासुदेवो यथा वरः ।
त्रिमूर्तीनां यथा विष्णुश्शिवानान्तु सदाशिवः ॥
धर्माणां वैष्णवो धर्मः स्मृतीनां मानवी स्मृतिः ।
विप्राणां वेदविदुषां यथा वैखानसो वरः ॥

सूत्राणां तन्मणीतन्तु यथाश्रेष्ठतमं स्मृतम् ।
तथैव पुष्करो राजंस्तीर्थानामुत्तमोत्तमः ' ॥

इति च प्रतिपादनात् ईदृशानां वैखानसानामेव श्रुतिस्मृतीतिहासपुराणादिषु चतुर्मुखात् सामान्यत्वेन विना सर्वोत्कृष्टत्वेनोत्पत्तिश्रवणात् ब्रह्मसभाप्रवेशसूर्यपथाद्याश्रयणादि प्रतिपादनाच्च वैखानसा न तृतीयाश्रमनिष्ठाः, न वा ब्रह्मणा सामान्यतः सृष्टा भवितुमर्हन्ति ।

श्रीविष्णुपुराणे — ' अत्रापि भारतं श्रेष्ठं जम्बूद्वीपे महामुने ।
यतो हि कर्मभूरेषा ह्यतोऽन्या भोगभूमयः ॥
कृतं त्रेता द्वापरञ्च कलिश्चान्यत्र न क्वचित् ।
तपस्तप्यन्ति यतयो जुह्वते चात्र यज्वनः ॥
दानानि चात्र दीयन्ते परलोकार्थमादरात् ।
पुरुषैर्यज्ञपुरुषो जम्बूद्वीपे सदेज्यते ॥
यज्ञैर्यज्ञमयो विष्णुरन्यद्वीपेषु चान्यथा ।
अत्र जन्मसहस्राणां सहस्रैरपि सत्तम ॥
कदाचिल्लभते जन्तुर्मानुष्यं पुण्यसञ्चयात् ' ॥

इति भारतखण्डव्यतिरिक्तस्थलेषु ब्रह्मचर्याद्याश्रमादिव्यवस्थाव्यवहाराद्यभावात् पाञ्चरात्रशिल्पज्यौतिषादिषु एषामद्वारकभगवद्यजनाधिकारित्वपरमवैदिकपरमैकान्तित्वादेः प्रतिपादनाच्च एष्वेव वैखानसत्वं नैसर्गिकम् । वानप्रस्थेषु वैखानसत्वं न नैसर्गिकम् ।

किन्तु तेषां सूत्रान्तरेष्वनुक्तानां वानप्रस्थाश्रमस्वीकारप्रयोगश्रामणकाग्निकुण्डविधानादीनां विखनस्सूत्रे प्रतिपादितानां तत्सूत्रोक्तप्रकारेण वानप्रस्थाश्रमस्वीकारादिनैव वैखानसत्वसिद्धिरिति ।

इदमेवाह बोधायनः —

' वानप्रस्थो वैखानसशास्त्रसमुदाचारो वने मूलफलाशी तपश्शीलस्सवनेषूदकमुपस्पृशन् श्रामणकेनाग्निमाधायाग्राम्यभोजी देवपितृमनुष्यभूतर्षिपूजकः

सर्वातिथिः प्रतिषिद्धवर्जं भैक्षमप्युपयुञ्जीत । न फालकृष्टमधितिष्ठेत् ग्रामं वा न प्रविशेत् ' इति ।

मनुः—' अतः परं प्रवक्ष्यामि धर्मं वैखानसाश्रयम् ' । इत्यारभ्य

' पुष्पमूलफलैर्वापि केवलैर्वर्तयेत्सदा ।
कालपक्वैस्स्वयंशीर्णैर्वैखानसमते स्थितः ' ॥ इति

हारीतः—' वानप्रस्थो ग्राम्या ओषधीः परिवर्जयेत् । त्रेताग्नीनां स्थाने श्रामणकं वाऽग्निमाधाय वल्कलशाणचर्मकुशमुञ्जादिवल्कलं वा वसानो वैखानसप्रोक्तेन विधिना वानप्रस्थो भवति । अनुज्ञायिकोऽनुप्रस्थायिक ' इति ।

यमः—' श्रामणकेन विधानेन सायंप्रातरुपस्पृशे ' दिति ।

शङ्खलिखितौ—' श्रामणकेनाग्निमाधाय काले कुरुविन्दवेणुश्यामाकनीवारादिभिर्वर्तये ' दिति ।

वसिष्ठोऽपि—' श्रामणकेनाग्निमाधायाहिताग्निर्वृक्षमूलिक ' इति ।

**अस्य यज्ञस्वामिव्याख्याने—**

' श्रामणकं नाम वैखानसशास्त्रम् । तदुक्तेन विधिनाग्निमाधाय ' इति ।

**शुकानुशासने व्यासोऽपि—**

' मूलैरेके फलैरेके पुष्पैरेके दृढव्रताः ।
वर्तयन्ति यथान्यायं वैखानसमते स्थिताः ' ॥ इति

**स्मृत्यन्तरमपि**—' यस्मिन्नेव तु सम्प्रोक्तं सूत्रे विखनसा परम् ।
वनस्थानान्तु सर्वेषां विधिश्श्रामणकाभिधः ॥
वानप्रस्थास्ततस्सर्वे ये द्विजास्त्वन्यसूत्रिणः ।
तत्सूत्रविध्यनुष्ठानात्स्मृता वैखानसास्तु ते ' ॥ इति च वर्णयन्ति ।

अतश्च वानप्रस्था मुख्यत्वेन वैखानसशब्दवाच्या न भवन्ति ।

**आनुशासनिके च—**

' तं पतन्तमभिप्रेक्ष्य पेक्ष्य चर्षिगणानथ ।
आसीनान वसुभिस्सार्धं सत्रेण जगतीपतेः ॥

वैखानसानामेतेषां वालखिल्यगणानपि ।
तस्य भीराविशत्तत्र पतगेन्द्रस्य भारत ॥
तुण्डेन गृह्य तां शाखामुत्पपात खगेश्वरः ' ॥ इति

तत्रैवोमामहेश्वरसंवादे —

' वैखानसानां वै धर्मं श्रोतुमिच्छामि धर्मतः ' इत्यारभ्य
' तेषु वैखानसा नाम वानप्रस्थाश्शुभेक्षणे ।
तीव्रेण तपसा युक्ता दीप्तिमन्तस्सुतेजसः ' ॥ इति

हरिवंशे च अक्रूरागमनसमये —

' शकपोलाव्यया? मोदे प्रदोषेऽभ्याशतस्करे ।
किञ्चिदभ्युदिते सोमे शातितेषु तमस्सु च ॥
वन्यैर्वैखानसैर्मन्त्रैः हूयमाने हुताशने ' ॥ इति

पाद्मे च — ' ब्राह्मणं वृद्धहारीतं वैखानसमते स्थित ' मिति च वर्णनात् वानप्रस्थस्य श्रौतविषये पृथक्त्वेन मन्त्रप्रतिपादनाभावाच्च बोधायनादिभिरुक्तप्रकारेण वानप्रस्थस्य वैखानसत्वं वैखानससूत्रोक्तवानप्रस्थाश्रमस्वीकारादेवेत्यवगन्तव्यम् । एतावता विखनश्शब्दार्थो निर्णीतः ।*

### आद्यहेतु निरूपणप्रकारः

अथ वैखानससूत्रशास्त्रयोः अखिलजगत्कारणभूतेन विखनसा प्रणीतत्वमुपपाद्यते ।

विष्णुधर्मे — ' कथयामि यथापूर्वं मत्पित्रा कथितं मम ।
तस्यापि किल तत्पित्रा तस्मै चाह किलोशनाः ॥

---

* विखनोवैखानसादिशब्दानां (1) नारायणे (2) तन्नाभिनलिन संभूतेचतुरानने (3) महर्षिप्रवरे, (4) तन्नामसु मन्त्रद्रष्टृषु, (5) भृग्वादिषु वैखानसवंशकर्तृषु भगवन्मानसपुत्रेषु, (6) वैखानससूत्रेण अष्टादशसंस्कारवत्सु भगवत्प्रियतमेष्वर्चकेषु, (7) तत्सूत्रोक्तधर्मानुष्ठातृषु कल्पसूत्रान्तरसंस्कृतेषु हारीतादिषु, (8) तत्सूत्रोक्तविधिना तृतीयाश्रमधर्मानुष्ठातृषु सौभर्यादिषु, (9) विखनसा सृष्टे समस्ते जगति, च यथायथं मुख्यया वृत्त्या उपचारेण वा प्रवृत्तिर्भवतीति इयता गन्थेन प्रतिपादितं भवति।

तेनापि भृगुमाराध्य प्राप्तमाराधनं हरेः ।
सकाशाद्ब्रह्मणः प्राप्तं भृगुणाऽपि महात्मना ॥
प्राप्तं सकाशाद्देवस्य ब्रह्मणोऽव्यक्तजन्मनः ' ॥ इति

हारीतस्मृतौ — 'पूर्वं विखनसे विष्णुः प्रोक्तवान् स्वयमच्युतः ।
भृगोः प्रोक्तं विखनसा भृगुणा च ममेरितम्' ॥ इति

गारुडे — 'पुरा चतुर्मुखादेशाच्चत्वारो मुनयोऽमलाः ।
प्रणीय वैष्णवं शास्त्रं भूमावभ्यर्चयन्नृप ॥

मरीचिर्मन्दरे विष्णुमर्चयामास केशवम् ।
आदेशाद्ब्रह्मणो विष्णुं श्रीनिवासेऽत्रिरर्चयेत् ॥

कश्यपो विष्ण्वधिष्ठाने शुभक्षेत्रे भृगुर्मुनिः ।
गङ्गाया दक्षिणे तीरे सीम्नि तस्यान्तिकेऽपि च ॥
तत्सन्धौ शुचिषण्णामा भृगुणा स्थापितो हरिः ॥ इति चोक्तम्

पाञ्चरात्रे — 'आद्ये कलियुगे प्राप्ते सोमकेन हृता त्रयी ।
अवैदिकेषु लोकेषु दैवतेषु मुनिष्वपि ॥

भगवन्तं समासाद्य नारायणमनामयम् ।
अनन्तो गरुडश्चैव विष्वक्सेनः पितामहः ॥

शङ्करश्चैव पञ्चैते पप्रच्छुः शरणं गताः ।
क्षणमप्यच्युतस्यार्चां त्यक्तुमेव न शक्नुमः ॥

अवैदिकेषु लोकेषु किं कुर्मश्चलमानसाः ।
तस्मादुपायं लक्ष्मीश वदास्माकं चिरन्तन ॥

इत्युक्तस्सहरिस्तेभ्यः पञ्चरात्रविधिं क्रमात् ।
एकैकरात्रमेकस्मै तन्त्रं समुपदिष्टवान् ॥
पञ्चलक्षप्रमाणेन पञ्चरात्रं प्रपञ्चितम्' ॥ इत्युपक्रम्य

'प्रथमं ब्रह्मरात्रन्तु द्वितीयं रुद्ररात्रकम् ।
तृतीयमिन्द्ररात्रं यच्चतुर्थं ग्रहरात्रकम् ॥

पञ्चमं मुनिरात्रन्तु पञ्चरात्रं विधीयते ।
रात्रिभिः पञ्चभिः प्रोक्तं श्रुतं शिष्यैश्च पञ्चभिः ॥
तस्मात्तत्पञ्चरात्राख्यां लब्ध्वा तिष्ठति भूतले ' ॥

इत्यन्तेन पाञ्चरात्रस्योत्पत्त्यादिकं निरूप्य परमवैदिकस्य श्रीवैखानसस्योत्पत्त्यादि प्रतिपाद्यते ।

'अथ मत्स्याकृतिः श्रीशः प्रविश्याम्बुधिमध्यमम् ।
निर्मथ्य सोमकं वेदानदात्पङ्कजयोनये ॥
तादृशं पुण्डरीकाक्षं स्तोत्रैस्सन्तोष्य पद्मभूः ।
उवाच वचनं प्रेम्णा दण्डवत्प्रणिपत्य च ॥
'तान्त्रिकेण त्वया प्रोक्तं मार्गेण भवदर्चनम् ।
न प्रसीदति तेनास्मन्मनः कमललोचन ॥
वैदिकेन त्वदर्चां मे यथापूर्वं वदाच्युत ' ।
इत्युक्तो भगवान् देवः शास्त्रं श्रुतिपथाऽगतम् ॥
सहस्रकोटिभिः श्लोकैस्सङ्ख्यातं बहुविस्तरम् ।
सूत्रमूलमनाद्यन्तं कल्पेकल्पे समाश्रितम् ॥
उवाच जगतां प्रीत्यै यज्ञानां पूरणाय च ।
मूलं सर्वागमानाञ्च पुराणानां तथैव च ॥
स्मृतीनां सर्वसूत्राणां प्रत्यङ्गोपाङ्गशोभिनाम् ।
वेदाश्च विखनश्शास्त्रं प्रमाणमिति चेरयन् ॥
यथा 'वैखानसं पूर्वेऽहन् सामभवती ' ति च ।
'ये नखा ' भुवि सञ्जातास्ते वै वैखानसा ' इति ॥
श्रुत्युक्तं तदिदं शास्त्रं वैखानसमहार्णवम् ' ।
इत्युक्त्वा भगवानाद्यस्तत्रैवान्तरधीयत ॥
ततः परं चतुर्वक्त्रो जटाकाषायदण्डभृत् ।
नैमिशारण्यमासाद्य द्विजसङ्घनिषेवितम् ॥

तपस्तप्त्वा चिरं कालं ध्यायंस्तेजस्तु वैष्णवम् ।
पश्चादपश्यद्विष्णूक्तमागमं विस्तरात्तदा ॥

सश्रौतञ्च सगृह्यञ्च वेदमन्त्रैरभिष्टुतम् ।
संक्षिप्य सारमादाय शाणोल्लिखितरत्नवत् ॥

धाता विखनसो नाम मरीच्यादिसुतान्मुनीन् ।
अबोधयदिदं शास्त्रं सार्धकोटिप्रमाणतः ॥

कल्पेकल्पे पुरा विष्णुरुद्भूतः पूर्ववत्तदा ।
तस्माद्वैदिकमाचारं यः कर्तुं भुवि वाञ्छति ॥

तस्येदं शास्त्रमित्युक्तं नेतरेषामितीरितम्' ॥ इति

पुरातन्त्रे सप्तचत्वारिंशेऽध्याये —

ऋषय ऊचुः — 'वैखानसस्य सूत्रस्य किं माहात्म्यं महामुने ।
विहाय सर्वसूत्राणि यत्त्वया चानुवर्तितम् ॥

तत्सूत्रिणाञ्च माहात्म्यं श्रोतुमिच्छामहे वयम् ।
समूर्तस्यास्य यज्ञस्य ये योग्याः इति कीर्तिताः' ॥

भृगुः — 'युष्माभिः परिपृष्टं यत् सम्यग्वक्ष्यामि सुव्रताः ।
शृण्वन्तु मुनयस्सर्वे सूत्रमाहात्म्यमुत्तमम् ॥

सुप्तोत्थितश्चिरं ब्रह्मा स्रष्टुकामः पुराऽभवत् ।
सस्मार वेदानखिलान् न सृष्टिस्सम्प्रवर्तते ॥

चिरं सुप्तस्य वै धातुस्तमसाऽऽक्रान्तचेतसः ।
विस्मृता निखिला वेदा हृदये तस्य संस्थिताः ॥

चिन्तातुरस्तदा ब्रह्मा नालंकर्तुं किमप्यभूत् ।
ततश्चिन्तान्तु तां त्यक्त्वा स्वस्थचित्तः प्रजापतिः ॥

हृत्पद्ममध्ये पुरुषं परमेण समाधिना ।
अर्चयामास वै विष्णुमृग्यजुस्सामरूपिणम् ॥

तुष्टाव च तदा ब्रह्मा हरिप्रवणमानसः ।
ननाम च तदा विष्णुं शङ्खचक्रगदाधरम् ॥

ब्रुवतो भगवद्ध्यानात् विनष्टतमसो विधेः ।
सत्त्वोद्रिक्तस्य तस्याशु नैर्मल्यं हृदयेऽभवत् ॥

ततस्तु भगवान् ब्रह्मा छन्दोमूलमवाप्तवान् ।
तस्य दक्षिणतो वक्त्रात् तुष्टाव जगतः पतिम् ॥

सस्मार विविधान् वेदान् साङ्गानुपनिषद्गणान् ।
पुराणन्यायमीमांसाधर्मशास्त्राणि सर्वशः ॥

अन्तर्हितानां खननाद्वेदानान्तु विशेषतः ।
स विभुः प्रोच्यते सर्वैर्विखना ब्रह्मवादिभिः ॥

वैखानसश्च भगवान् प्रोच्यते स पितामहः ।
ततस्ससर्ज भगवान् विश्वयोनिः पितामहः ॥

जगत्सर्वमशेषेण वेददृष्टेन वर्त्मना ।
प्राणाच्च चक्षुषस्तद्वदभिमानाच्च कर्मणः ॥

हृदयाच्छिरसश्श्रोत्रादुदानाद्व्यानतस्ततः ।
समानाच्च तथाऽपानाद्दृष्टिश्रेष्ठानिमान् दश ॥

दक्षं मरीचिनं नीललोहितं भृगुमेव च ।
तथाऽङ्गिरसमत्रिञ्च पुलस्त्यं पुलहं तथा ॥

वसिष्ठञ्च क्रतुञ्चैव क्रमादसृजदब्जभूः ।
नव ब्रह्माण एवैते विना स्युर्नीललोहितम् ॥

वेदानां व्यसनादर्वाक् प्राग्रूपं मिलितन्तु यत् ।
तान्तु वैखानसीं शाखामादावध्यापयन्मुनीन् ॥

(नाम्ना विखनसं प्राहुर्यञ्च वैखानसं तथा ।
भृग्वङ्गिरोमरीच्यत्रिपुलस्त्यपुलहाः क्रतुः ॥

तथा वसिष्ठो दक्षश्च नव ब्रह्माण ईरिताः ।
नव ब्रह्माण एवैते विना स्युर्नीललोहितम् ॥ )

एते विखनसश्शिष्याः श्रुतिस्मृतिविधानतः ।
तच्छिष्यास्तु महात्मनो मुनयस्तत्त्वदर्शिनः ॥

वेदानुगानि शास्त्राणि चक्रुर्लोकहितैषिणः ।
केचित्सूत्राणि वै चक्रुः गृह्यश्रौतात्मिकानि तु ॥

धर्मशास्त्राणि केचित्तु पुराणानि च केचन ।
इतिहासांस्तथा कल्पान् प्रोचुरन्ये महर्षयः ॥

तान्तु वैखानसीं शाखां स्वसूत्रे विनियुक्तवान् ।
पद्मभूः परमो धाता तस्मिन्नाराधनत्रयम् ॥

तान्तु वैखानसीं शाखां व्यासस्तु भगवान् मुनिः ।
चक्रे ऋगादिभेदैस्तु व्यसित्वा तु पृथक् पृथक् ॥

औद्गात्रं सामभिर्योगे ब्राह्ममाथर्वणेन च ।
हौत्रमृग्भिर्यजुर्मन्त्रैराध्वर्यवमकारयत् ॥

आम्नायस्य विधिर्ब्राह्मः पञ्चकाण्डात्मिका तु सा ।
सा च वैखानसी शाखा तैत्तिरीया च कीर्तिता ॥

आदिकाले तु भगवान् ब्रह्म तु विखाना मुनिः ।
यजुश्शाखानुसारेण चक्रे सूत्रं महत्तरम् ॥

वर्णाश्रमाचारयुतं श्रौतस्मार्तसमन्वितम् ।
यस्मिन्नेव तु सम्प्रोक्तं सूत्रे विखनसा परम् ॥

वनस्थानान्तु सर्वेषां विधिश्श्रामणकाभिधः ।
वानप्रस्थास्ततस्सर्वे ये द्विजाश्चान्यसूत्रिणः ॥

तत्सूत्रविध्यनुष्ठानात्स्मृता वैखानसास्तु ते ।
यत्सूत्राद्यन्तमध्येषु भगवान् विष्णुरव्ययः ॥

यष्टव्यो गीयते यस्मात्सर्वसूत्रोत्तमन्तु तत् ।
वेदे वैखानसे सूत्रे यो धर्मः परिकीर्तितः ॥

सर्वैस्स धर्मोऽनुष्ठेयो नात्र कार्या विचारणा ।
स्वसूत्रस्य परित्यागादन्यसूत्रस्य संश्रयात् ॥

सद्यः पतति वै विप्रो न वेदस्य समाश्रये ।
एतद्वैखानसं सूत्रमन्यशास्त्रानपेक्षितम् ॥

एतद्वैखानसं सूत्रं सर्ववेदार्थसङ्ग्रहम् ।
वैष्णवं सर्वविप्राणां सामान्यमभिधीयते ॥

वैखानसस्य सूत्रस्य चाग्नेः श्रामणकस्य च ।
नारायणस्य देवस्य माहात्म्यं नावबुद्ध्यते ॥

यथा वेदेषु सर्वेषु सामवेदः प्रशस्यते ।
तथा सूत्रेषु सर्वेषु सूत्रमेतत् प्रशस्यते ॥

अग्निर्वैखानसं शास्त्रं विष्णुर्वेदाश्च शाश्वताः ।
गायत्री वैष्णवा विप्रास्सप्तैतेऽतिपवित्रकाः ॥

यदधीतेषु वेदेषु साङ्गेषु लभते फलम् ।
तत्फलं लभते सद्यः सूत्रमेतत्पठन् द्विजः ॥

अग्नीषोमादयो देवा ये यज्ञांशहविर्भुजः ।
.... .... .... .... .... ।
[1] शारीराण्यन्यसूत्राणि तथा स्वर्गफलानि च ॥

वैष्णवं सूत्रमेत्तु सर्वसिद्धिकरं परम् ।
आद्यत्वात्सर्वसूत्राणां वैष्णवत्वाच्च तत्तु वै ॥

मयाऽनुवर्तितं तद्वत्कश्यपात्रिमरीचिभिः ।
गृहे पुरुषपूजाया विधानमृषिसत्तमाः ॥

---

1. **शारीराणि** – भगवच्छरीरभूतदेवतान्तराराधनमात्रप्रतिपादकानि ।

उक्तं सङ्क्षेपतः सूत्रे नोक्तमालयपूजनम् ।
प्रोक्तं विखनसा सूत्रे ऋषीणां ब्रह्मवादिनाम् ॥

तेषान्तु हविरादत्ते विष्णुस्साक्षात् सनातनः ।
शतक्रतूनां यजतो यत्फलं परिकीर्तितम् ॥

आलये पञ्चमूर्तीनामर्चनन्त्वधिकं भवेत् ।
आलयार्चा गृहार्चेति चोभयं श्रुतिचोदितम् ॥

तेनादौ सकलं नोक्तं ग्रन्थविस्तरभीरुणा ।
उक्तशेषमनुक्तञ्च विस्तरेण मयोच्यते ॥

विष्णुञ्च पुरुषं सत्यमच्युतञ्चानिरुद्धकम् ।
'एष पुरुषः पञ्चधा पञ्चात्मे' त्याह च श्रुतिः ॥

अस्माभिरपि तत्सूत्रमतगामिभिरेव तु ।
पञ्चमूर्तिविधानेन शास्त्रमेतदुदाहृतम् ॥

तस्मादत्र मयोक्तस्य होमस्याग्न्यालयस्य च ।
पुण्याहवास्तुसामान्यहोमादीनाञ्च कर्मणाम् ॥

येऽन्ये च मन्त्रास्ते ग्राह्यास्सूत्रे विखनसा स्मृताः ।
आलयार्चाविधिस्सोऽयं वैदिकस्सर्वसिद्धिदः ॥

सर्वलोकहितार्थाय प्रोक्तोऽस्माभिर्विशेषतः ।
आलयार्चनकर्मेदं वैदिकं भगवत्प्रियम् ॥

अनुष्ठेयं द्विजश्रेष्ठैः तद्वैखानससूत्रिभिः ।
ये वैखानससूत्रेण संस्कृतास्तु द्विजातयः ॥

ते विष्णुसदृशा ज्ञेयाः सर्वेषामुत्तमोत्तमाः ।
वैखानसानां सर्वेषां गर्भवैष्णवजन्मनाम् ॥

नारायणः स्वयं गर्भे मुद्रां धारयते निजाम् ।
विप्रा वैखानसाख्या ये ते स्मृता भगवत्प्रियाः ॥

एकान्तिनस्सुसत्त्वस्था देहान्तं नान्ययाजिनः ।
विष्णोः प्रियतमा लोके चत्वारः परिकीर्तिताः ॥

अश्वत्थः कपिला गावस्तुलसी विखनास्तथा ।
द्विजेषु ब्राह्मणाः श्रेष्ठाः ब्राह्मणेषु च वैष्णवाः ॥

वैष्णवेषु द्विजाः श्रेष्ठा ये वैखानससूत्रिणः ।
वैष्णवीं प्रतिमां लोके विप्रं वैखानसं तथा ॥

गङ्गां विष्णुपदीं दृष्ट्वा सर्वपापैः प्रमुच्यते ।
तस्माद्वैखानसा विप्रा वैष्णवा मुनिसत्तमाः ॥

आलयार्चनयोग्याश्च योग्या नान्ये द्विजातयः ।
पुरा तु पृष्टवान् ब्रह्मा देवदेवं जनार्दनम् ॥

'कथं केन प्रकारेण पूजनीयोऽसि कैरपि ।'
इत्येवं भगवान् पृष्टः प्राह वै चतुराननम् ॥

'आलयेत्वर्चनं स्यात्तु परिवारान्वितस्य मे ।
वैखानसविधानेन वैदिकेन विशेषतः ॥

वैखानसैस्तु विप्रेन्द्रैरर्चनं मम तुष्टिदम् ।
अमूर्तश्च समूर्तश्च द्विधा वैदिकमुच्यते ॥

अमूर्तं गार्हपत्याद्यं समूर्तं बेरपूजनम् ।
यथा कर्मण एकस्य कल्पिताः पञ्च वह्नयः ॥

तथा चैकविमानस्य पञ्चबेराणि कल्पयेत् ।
ग्रामादावालये तस्माद्देवदेवो जनार्दनः ॥

अनेन विधिना पूज्यो विप्रैर्वैखानसैस्तथा ।
पूजा वैखानसैर्विप्रैरालये स्याद्विशेषतः ॥

सर्वसम्पत्करश्चैव सर्वाशुभविनाशनम् ।
तद्ग्रामवासिनां तद्वदैहिकामुष्मिकप्रदम् ॥

वर्षदं पुष्टिदं श्रेष्ठं राजराष्ट्राभिवृद्धिदम् ।
कर्षणादिप्रतिष्ठार्चाप्रायश्चित्तावसानकम् ॥

अनुष्ठेयो विधिस्सोऽयं विप्रैर्वैखानसैस्ततः ।
अवैखानससूत्रैस्तु विप्रैराराधनं हरेः ॥

आलये सर्वलोकानां विनाशाय भविष्यति ।
अज्ञानादर्थलोभाद्वा भयाद्वाऽप्यालयार्चनम् ॥

यद्यवैखानसैर्विप्रैः क्रियते सर्वनाशनम् ।
यद्यवैखानसो विप्र आलयार्चनमाचरेत् ॥

षण्मासात्पतनं याति नरकञ्चैव गच्छति ।
अपि साङ्गचतुर्वेदी यद्यवैखानसो द्विजः ॥

आलये त्वर्चनं कुर्यात् सद्यः पतति देवलः ।
अवैखानसविप्रो यः पूजयेदालये हरिम् ॥

स वै देवलको नाम सर्वकर्मबहिष्कृतः ।
आलापं दर्शनञ्चैव स्पर्शनञ्च विशेषतः ॥

श्राद्धादौ वरणञ्चैव तस्य विप्रस्य वर्जयेत् ।
अवैखानससूत्रेण स्पृष्टे बिम्बे प्रमादतः ॥

स्नापयेत्कलशैर्देवं प्रोक्षयेत्पञ्चगव्यकैः ।
एवमेव तथा कुर्याद्विप्रैरन्यैः प्रपूजिते ॥

कलशैस्स्नापयित्वा तु ध्रुवोक्तां शुद्धिमाचरेत् ।
त्र्यहन्तु पूजिते तद्वद्वास्तुहोमं समाप्य च ॥

पर्यग्निपञ्चगव्याभ्यां महाशान्तिञ्च कारयेत् ।
अर्चने तु महाविष्णोस्सप्ताहन्तु विशेषतः ॥

महाशान्तिं यजित्वा तु शुद्धिं पूर्ववदाचरेत् ।
द्वादशाहं समारभ्य मासान्तन्तु विशेषतः ॥

अवैखानसपूजायां तन्त्रसङ्कर एव च ।
मासत्रयं च षण्मासमन्यविप्रैस्तु पूजने ॥
न तत्र बिम्बे सान्निध्यं देवदेवस्य शार्ङ्गिणः ।
तस्मात्तद्दोषशान्त्यर्थं महाशान्तेरनन्तरम् ॥
अधिवासत्रयं कृत्वा प्रतिष्ठां पुनराचरेत् ।
संवत्सरे तु देवस्य विप्रैर्वैखानसेतरैः ॥
पूजाऽऽभिचारिकी प्रोक्ता तत्र सर्वं विनश्यति ।
तस्मात्तत्कर्षणाद्यञ्च निष्कृत्यन्तालयार्चनम् ॥
कारयेद्विधिवद्विद्वान् तद्वैखानससूत्रिभिः ।
तान्त्रिकार्चाविधौ चापि तान्त्रिकैरेव दीक्षितैः ॥
पूजनीयो हरिः सम्यक् विप्रैः नान्यैः कदाचन ।
अन्येन विधिना मन्त्रैरन्यैरन्यार्चकेन वा ॥
आलये त्वर्चनं स्याच्चेन्महादोषो भवेद्ध्रुवम् ।
तस्मात्तु वैदिके त्वस्मिन्नालयार्चाविधौ द्विजाः ॥
प्रतिष्ठादिषु सङ्ग्राह्याः प्रोक्ता वैखानसा द्विजाः ।
अत्रापि भगवान् देवो हरिर्नारायणः स्मृतः ॥
नाविष्णुर्जायते विष्णुर्नाविष्णुर्विष्णुमर्चयेत् ।
सुप्रीतेनार्चकेनैव यदुक्तं देवसन्निधौ ॥
तद्देवेनैव सम्प्रोक्तं तथैव च भविष्यति ।
अर्चकं तोषयेद्विष्णुं यस्तोषयितुमिच्छति ॥
तुष्टेऽर्चके जगन्नाथस्तुष्ट एव न संशयः ।
स्वप्ने स्वरूपं भक्ताय प्रत्यक्षयति माधवः ॥
प्रवक्ति भगवान् विष्णुः सुखदुःखद्वय नृणाम् ॥ इति

स्कान्दे—

वैखानसीं महाशाखां स्वसूत्रे विनियुक्तवान् ॥

पद्मभूः परमो धाता तस्मिन्नाराधनत्रयम् ।
उक्तवान् निगमार्थानामाचारं प्रविभागशः ॥ इति

ब्रह्मकैवर्तवचनानि पूर्वमेवोक्तानि ।

ननु ऋग्यजुस्सामाथर्वाण इति वेदानां लोके प्रसिद्धेः सर्वशाखा-मूलभूतो यजुर्वेद इति पूर्वोक्तं कथमुपपद्यते इति चेदुच्यते ।

श्रीविष्णुपुराणे

'वेदद्रुमस्य मैत्रेय शाखाभेदास्सहस्रशः ।
न शक्या विस्तराद्वक्तुं सङ्क्षेपेण शृणुष्व तम् ॥

द्वापरे द्वापरे विष्णुर्व्यासरूपी महामुने ।
वेदमेकं सुबहुधा करोति जगतां हितः ॥

वीर्यं तेजो बलञ्चाल्पं मनुष्याणामवेक्ष्य च ।
हिताय सर्वभूतानां वेदभेदं करोति सः ॥

इत्यारभ्य—

'एक आसीद्यजुर्वेदस्तं चतुर्धाव्यकल्पयत् ।
चातुर्होत्रमभूद्यस्मिंस्तेन यज्ञमथाकरोत् ॥

आध्वर्यवं यजुर्भिस्तु ऋग्भिर्होत्रं तथा मुनिः ।
औद्गात्रं सामभिश्चक्रे ब्रह्मत्वञ्चाप्यथर्वभिः ॥

ततस्स ऋच उद्धृत्य ऋग्वेदं कृतवान्मुनिः ।
यजुर्भिश्च यजुर्वेदं सामवेदञ्च सामभिः ॥

राज्ञान्त्वथर्ववेदेन सर्वकर्माणि स प्रभुः ।
कारयामास मैत्रेय ब्रह्मत्वञ्च यथास्थिति ॥

सोऽयमेको महान् वेदतरुस्तेन पृथक्कृतः ।
चतुर्धा च ततो जातं वेदपादपकाननम् ॥

इत्यन्तेन स्पष्टं प्रतिपादितत्वाद् यजुर्वेद एक एव प्रथममासीदित्यव-गम्यते ॥

स च यजुर्वेदः – 'बहुशृङ्गश्चतुस्सानुः पृथुलो वेदपर्वतः,' इत्यारभ्योक्तरीत्या वेदव्यासरूपिणा भगवता यदा व्यस्तः, ततः पूर्वमेकरूपेणावस्थितस्य तस्य वेदपर्वतस्य वैखानसशाखात्वप्रसिद्धिरासीदिति पूर्वमेव प्रतिपादितम् ॥

**वैखानसानां श्रैष्ठ्यम्**

प्रसङ्गात् वैखानसशाखामूलकत्वेन प्रणीतसूत्रानुष्ठातॄणां श्रेष्ठत्वमच्छिद्रपञ्चकालपरायणत्वादिकञ्च प्रतिपाद्यते ।

**यथा सामब्राह्मणे:** —

'वैखानसा वा ऋषय इन्द्रस्य प्रिया आसन्' इति

वाराहे:—

'अश्वत्थः कपिला गावस्तुलसी विखनास्तथा ।
चत्वारो मत्प्रिया राजंस्तेषां वैखानसो वरः ॥' इति

**वृद्धयाज्ञवल्क्ये:**–

'वैखानसो वैदिकेषु ब्रह्मनिर्दिष्टमाचरेत् ।
तं ब्राह्मणन्तु दृष्ट्वैव सर्वं पापं व्यपोहति ॥

वैष्णवीं प्रतिमां लोके विप्रं वैखानसं तथा ।
गङ्गां विष्णुपदीं दृष्ट्वा सर्वपापैः प्रमुच्यते ॥ इति

**शान्तिपर्वणि** —

[1] 'मन्त्रिणाञ्च सहस्रेभ्यो ब्रह्मचारी विशिष्यते ।
ब्रह्मचारिसहस्रेभ्यो नित्ययाजी विशिष्यते ॥

नित्ययाजिसहस्रेभ्यस्सोमयाजी विशिष्यते ।
सोमयाजिसहस्रेभ्यो वेदवेदान्तपारगः ॥

वेदान्तगसहस्रेभ्यो विष्णुभक्तो विशिष्यते ।
विष्णुभक्तसहस्रेभ्यो विप्रो वैखानसो वरः ॥' इति

---

1. मन्त्रिणां – अधीतिनामित्यर्थः ।

ब्रह्मकैवर्ते:—

'निम्नगानां यथा गङ्गा देवानां भगवान् हरिः ।
वर्णानां ब्राह्मणः श्रेष्ठः आश्रमाणां यतिर्यथा ॥

श्रुतीनामादिभूतानां श्रुतिरेकायनी यथा ।
तस्यां निषद्यथा यस्यां निषण्णो भगवान् हरिः ॥

व्यूहानामादिभूतस्तु वासुदेवो यथा परः ।
त्रिमूर्तीनां यथा विष्णुः शिवानान्तु सदाशिवः ॥

धर्माणां वैष्णवो धर्मः स्मृतीनां मानवी स्मृतिः ।
विप्राणां वेदविदुषां यथा वैखानसो वरः ॥

यथा मुनीनां विखना आदिभूत उदाहृतः ।
सूत्राणां तत्प्रणीतन्तु यथा श्रेष्ठतमं स्मृतम् ॥

तथैव पुष्करो राजंस्तीर्थानामुत्तमोत्तमः ।' इति

कौर्मे:—

'मच्चित्ता मद्गतप्राणा मयि सक्तमानसाः ॥
अनन्यशरणा राजंस्तस्माद्वैखानसा वराः ।' इति

पुराणान्तरे:—

'यत्र वैखानसा विप्रा यत्र सन्ति गवां गणाः ॥
यत्र बिल्वाः पलाशाश्च तत्र सन्निहितो हरिः ।' इति

बृहन्नारदीये—

'जगत्पवित्रास्ते नित्यं विष्णुमभ्यर्चयन्ति ये ॥
दुर्वृत्ता वा सुवृत्ता वा पूजनीया विशेषतः ।' इति

हारीते:—

'तस्मात्ते शुद्धसत्त्वस्थाश्शुद्धा वैखानसाः स्मृताः ॥
यान् लोकान् प्राप्नुवन्त्येते तान् शृणुष्व समाहितः । इति

पाञ्चरात्रे पौष्करे:—

'विप्रा वैखानसाख्या ये ते भक्तास्तत्त्वमुच्यते ।
एकान्तिनस्सुसत्त्वस्था देहान्तं नान्ययाजिनः ॥

कर्तव्यमिति देवेशं संयजन्ते फलं विना ।
प्राप्नुवन्ति च देहान्ते वासुदेवत्वमब्जज ’ ॥ इति

गौतमीये: —

वैखानसविधानज्ञस्तत्त्वात्मार्थव्यवस्थितः ।
सूक्ष्मात्सूक्ष्ममवाप्नोति परं ब्रह्माणमव्ययम् ॥ ’ इति

आरण्यपर्वणि: — रमेशः ।

‘ ख्यातञ्च सैन्धवारण्यं मुनिबृन्दनिषेवितम् ।
पितामहसरः पुण्यं पुष्करं नाम भारत ।
वैखानसानां सिद्धानामृषीणामाश्रमं प्रियम् ॥ ’ इति

अन्यत्र: —

‘ सैन्धवारण्यमासाद्य कुल्यां तां लोकदर्शनाम् ।
पुष्करेषु महाराज सर्वेषु च जलं स्पृशन् ॥ इत्यारभ्य
एतच्चन्द्रसरः नित्यमर्पयन्त्यृषयस्तथा ।
वैखानसप्रभृतयो वालखिल्यास्तथैव च ॥ ’ इति

अन्यत्र: — गालवः ।

‘ सर्वान् लोकान् प्रपश्यामि प्रसादात्तव सुव्रत ।
वैखानसानां जपतामेष शब्दो महात्मनाम् ’ ॥ इति

गारुडे: —

‘ कौषीतकीनां होतॄणां ग्रामत्रयमकल्पयत् ।
अकल्पयच्च त्रीन् ग्रामान् वैखानसमहात्मनाम् ॥ इति

पारमेश्वरे त्रयोदशाध्याये पवित्रविनियोगावसरे: —

‘ पूजयेदात्तपूर्वांश्च यतिपूर्वांस्तपस्विनः ।
पञ्च वैखानसांश्चैव विप्रादींश्चतुरस्तथा ॥
पञ्च योगरताद्यांस्तु तथान्यान् वैष्णवान् द्विजान् ।
एकायनीयशाखोक्तिश्रोतॄणां प्रथमं ततः ॥ ’ इति

नारदीये :— ‘ सात्त्विके तु सदाऽऽधिक्यं पूजनं मम नारद ।
विद्धि वैखानसे दत्तं दानं ब्रह्मविदस्तथा ॥ ’ इति

वासिष्ठरामायणे: —

‘ कृताभिषेकस्सन्तुष्टस्सामात्यस्ससुहृज्जनः ।
पूजयामास धर्मात्मा रामो वैखानसान्मुनीन् ॥ ’ इति

### वैखानसानां पञ्चकालपरायणत्वम्

शाण्डिल्यस्मृतौ: -‘ ये पावयन्ति धरणीं चरणैः पाञ्चकालिकाः ।
दर्शनात् स्पर्शनाच्चेषां कृतार्थास्सर्वजन्तवः ॥

इज्यामध्ये तथा होमे योगे च जपकर्मणि ।
आगतं पञ्चकालज्ञं सम्पूज्यैवार्चयेत्परम् ॥ ’

‘ ये तोषयन्त्यविरतं पञ्चकालपरायणान् ।
सकामास्तत्फलं यान्ति निष्कामाः परमं पदम् ॥

सदाहिताग्नयो ये च शान्ताश्शूद्रान्नवर्जिताः ।
मामर्चयन्ति मद्भक्तास्तेभ्यो दत्तमिहाक्षयम् ॥

द्वादशाक्षरतत्त्वज्ञश्चतुर्व्यूहविभागवित् ।
अच्छिद्रपञ्चकालज्ञस्स विप्रस्तारयिष्यति ’ ॥ इति

यथा: —

**द्वादशाक्षरतत्त्वज्ञ** इति । द्वादशाक्षरतत्त्वानि ।

‘ चिज्जीवः प्रकृतिर्बुद्धिर्मनस्सत्त्वादयो गुणाः ॥

व्योमाग्निमरुतश्चापो वर्णानां तत्त्वमीरित ’ मित्युक्तानि ।

**चतुर्व्यूहविभागवित्** इति —

‘ पुरुषश्च ततस्सत्यमच्युतश्च युधिष्ठिर ।
अनिरुद्धश्च मां प्राहुर्वैखानसविदो जनाः ॥

अन्ये त्वेवं विजानन्ति मां राजन् पाञ्चरात्रिकाः ।
वासुदेवश्च राजेन्द्र सङ्कर्षणमथापि वा ॥

प्रद्युम्नश्चानिरुद्धश्च चतुर्मूर्तिं प्रचक्षते ।
एताश्चान्याश्च राजेन्द्र संज्ञाभेदेन मूर्तयः ॥
विद्धि मेऽर्चान्तराण्येव मामेवश्चार्चयेद्बुधः ॥

इत्याद्युक्तानां चतुर्णां व्यूहानां विभागावित् ।

एवं वैखानसे दैविकमानुषभेदेन वासुदेवो द्विविधः प्रतिपाद्यते । यथा—खिले:— 'अथोर्ध्वं वासुदेवस्य मानुषस्य विधिं परम् ।' इत्यारभ्य 'मानुष्यवपुषं देवं द्विभुजं शङ्खचक्रिणम् ।' इत्यादिना रुक्मिणीप्रद्युम्नानिरुद्धसाम्बब्रह्मगरुडादियुतं मानुषवासुदेवं निर्वर्ण्य पुनः —

'दैविकं वासुदेवं तं प्रवक्ष्याम्यानुपूर्व्यशः ।
सोमच्छन्दविमानं वा बृहद्वृत्तमथापि वा ॥
चतुर्भुजधरं देवं शङ्खचक्रधरं परम् ।
अभयं दक्षिणं हस्तं वामं कट्यवलम्बितम् ॥
किरीटादिसमस्तैश्च भूषणैरपि भूषितम् ।
रक्ताम्बरधरं देवं दशतालेन मानतः ॥
उभे देव्यावुभे पार्श्वे पूर्ववत्कारयेद्बुधः ।
बलभद्रादिपूर्वोक्तं सायुधं वा निरायुधम् ॥
तत्तद्देवीसमायुक्तं विना वा सम्यगाचरेत् ।
रेवती रोहिणीचैव रमाचेन्दुकरीति च ॥
रक्तं नीलं तथा श्यामं पीतवर्णं समाचरेत् ।
किरीटमकुटाद्युक्तास्सर्वाभरणभूषिताः ॥
एवं पुष्पधरं कुर्यादेकञ्चैव प्रसारितम् ।
देव्या युक्तं विनावापि द्विमार्गं सम्यगाचरेत् ॥

इत्यारभ्य—'एवं दैविकमार्गन्तु स्थापनारम्भमाचरे' दित्यादिना दैविकः वासुदेवः प्रदर्शितः ।

इत्थं वासुदेवादीनां दैविकमानुषभेदेन **द्वैविध्यस्य**, 'पुरुषं **परमपुरुषं** परमात्मानं परं ब्रह्माण' मित्यादिना प्रतिपादितानां चतुर्णां पुरुषादीनां मूर्तिविभागस्य च श्रीवैखानसशास्त्रे प्रतिपादनात्, **एतत्सर्वविभागज्ञ एव चतुर्व्यूहविभागवि**दित्यनेनोच्यते ।

अच्छिद्रपञ्चकालज्ञ इति

'प्रातःकालेऽभिगमनमुपादानं ततः परम् ।
मध्याह्न इज्यां कुर्वीत **स्वाध्यायश्चापराह्णके** ।
योगं सायाह्नकाले तु **पञ्चकाला उदाहृताः** ॥

इति वासाधिकारे प्रतिपादितपंचकालपरायणमधिकृत्यप्रवृत्तानि—

'ये पावयन्ति धरणीं' **'इज्यामध्ये तथाहोमे'** 'ये तोषयन्त्यविरतं' इति वचनानि, सामान्येन पञ्चकालपरायणस्य दर्शनस्पर्शनादिभिस्सर्वेषां पावनतां कृतार्थतां, इज्यायोगादिसमयेषु चागतस्य तस्य पूजानन्तरं शेषकर्माचरणञ्च प्रतिपादयन्ति । एतादृशः पञ्चकालपरायणः कीदृश इत्याकाङ्क्षायां 'द्वादशाक्षरतत्त्वज्ञ' इत्यादिना 'अच्छिद्रपञ्चकालज्ञ' इत्यन्तेन तल्लक्षणमुच्यते ।

ईदृशाच्छिद्रपञ्चकालपरायणा **वैखानसा** एव । वैखनसशास्त्र एव पञ्चकालविभागस्य प्रतिपादितत्वात् । **स्वस्वसूत्रेऽनुक्तत्वादापस्तम्बीयादयस्तु न** । पञ्चकालप्रतिपादनरहितसूत्रान्तरनिष्ठानां—

ब्राह्मे मुहूर्ते बुद्ध्येत धर्मार्थावनुचिन्तयन् इत्यारभ्य—
द्वितीये च तथा भागे वेदाभ्यासो विधीयते ॥

तृतीये च तथा भागे पोष्यवर्गार्थचिन्तनम् ।
भागे चतुर्थे कुर्वीत स्नानमम्भस्यकृत्रिमे ॥

पञ्चमे तु तथा भागे संविभागो यथार्हतः ।
इतिहासपुराणाभ्यां षष्ठं सप्तममभ्यसेत् ।
अष्टमे लोकयात्राश्च विचार्य च गृहीततः ॥

इत्यन्तेन दक्षादिस्मृत्यन्तरेषु ब्राह्मणजातेः सामान्येन तत्तत्कालेषु कर्तव्यत्वेन प्रतिपादितकर्माचरण एव यथायोग्यं योग्यतासम्भवात् ।

अन्यथा—

'विधर्मः परधर्मश्च आभास उप वा च्छलः ।
अधर्मशाखाः पञ्चेमा धर्मज्ञोऽधर्मवत्त्यजेत् ॥
धर्मबाधो विधर्मस्स्यात् परधर्मोऽन्यचोदितः ।
उपधर्मस्तु पाषण्डो दम्भोवाशंसुर्भिश्छलः (?) ॥
यस्त्विच्छया कृतं पुम्भिराभासोह्याश्रमाद्बहिः ।

इति भागवतवचनोक्तपरधर्माश्रयणदोषप्रसङ्गः ।

'श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात् ।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥'

इति भगवद्वचनविरोधश्च ।

किञ्च तत्सूत्रेषु द्वादशाक्षरतत्त्वादिप्रतिपादनमपि नास्ति । एवं 'सति कुड्ये चित्रकर्मे' ति न्यायेन यज्ञोपवीतधारण सन्ध्योपासन भगवदाराधनादिविधिप्रतिपादनरहितसूत्रान्तरनिष्ठानां, तथा श्रीमन्नारायणस्य समानत्वेन रुद्रादिदेवतान्तराराधनविधिप्रतिपादकसूत्रनिष्ठानाञ्च चतुर्व्यूहविभागज्ञानासम्भवात् भगवदाराधनस्वरूपज्ञानाभावेन पञ्चकालपरायणत्वादिगन्धलेशोऽपि न सम्भवति । सूत्रान्तरोक्तमार्गेण वा पञ्चरात्रोक्तमार्गेण वा भगवदाराधनं कुर्वतोऽनधिकारिणो देवलकत्वं प्रतिपाद्यते ।

तथा हि—पञ्चरात्रे विष्वक्सेनसंहितायाम् नारदं प्रति विष्वक्सेनोक्तिः—

'इदन्तु तव वक्ष्यामि गुह्याद्गुह्यतमं मुने ।
योऽसौ नारयणस्साक्षात्सहि विघ्नेश उच्यते ॥
यो वै विघ्नेश इत्युक्तस्स वै नारायणः स्मृतः ।
नैव भेदं विजानन्ति मुनयस्तत्त्वदर्शिनः' ॥ इत्यारभ्य—

कुर्यात्पाशाङ्कुशौ वापि शङ्खचक्रावथापि वा ।
आखुं वापि खगेन्द्रं वा तस्य वाहनमाचरेत् ॥
नारायणाशक्त्वाच्चाव्यावृत्तत्वान्महामुने ।
वीशस्तद्वाहनं प्रोक्त आखुं वापि समाचरेत् ॥ इति
तस्माच्छ्रियञ्च दुर्गाञ्च वाणीं विघ्नेशमेव च ।
स्वतन्त्रेणार्चयेद्धीमान् सर्वकार्यार्थसिद्धये' इत्यादि च दृश्यते ॥

देवनान्तराणां अङ्गभावेनार्चनं न निषिद्ध्यते । 'स्वतन्त्रबुद्ध्या कुर्वन्वै ब्राह्मणो नरकं व्रजेत्' इत्यादिवचनैः अङ्गत्वेन विना स्वातन्त्र्येणाङ्गिव्यतिरिक्त-देवतान्तराराधनं निषिद्ध्यते । तथाविधनिषिद्धदेवतान्तरार्चनप्रतिपादकशास्त्रनिष्ठस्य पञ्चकालपरायणत्वं न सम्भवति ।

'यैरिष्टः पञ्चकालज्ञैर्हरिरेकान्तिभिर्नरैः ।
नूनं तत्र मतो देवो यथा तैर्वागुदीरितः'॥ इत्युक्तरीत्या

परमैकान्तित्वासम्भवे तद(पञ्चकालपरायणत्वा)सम्भवात् । परमैकान्तित्वञ्च भगव देकपरत्वमेव । तत्र स्वातन्त्र्येणान्यदेवतायाजिनां वैखानसव्यति रिक्तानां हि न सम्भवति ।

अत्र 'यैरिष्टः पञ्चकालज्ञै' रित्यनेन पञ्चकालव्यतिरिक्तकालान्तरप्रति पादकशास्त्रनिष्ठानां व्यावृत्तिः । 'एकान्तिभिर्नरै' रित्यनेन—

'विप्रा वैखानसाख्या ये ते भक्तास्तत्त्वमुच्यते ।
एकान्तिनस्सुसत्त्वस्था देहान्तं नान्ययाजिनः ॥'

इत्यादिपौष्करसंहितावचनानुसारेण स्वातन्त्र्येण दुर्गादिदेवतान्तरार्चनप्रति-पादकपाञ्चरात्रशास्त्रनिष्ठानां व्यावृत्तिः । 'नूनमत्र मतो देव' इत्यनेन—

'यत्र वैखानसा विप्रा यत्र सन्ति गवां गणाः ।
यत्र बिल्वाः पलाशाश्च तत्र सन्निहितो हरिः' ।

इत्यस्यार्थो ज्ञाप्यते इति 'यैरिष्ट' इति कृत्स्नमपि वचनं वैखानसपर-मित्येवावगम्यते ।

ननु —

ब्रह्मा: — 'पञ्चकालविधिज्ञानप्राशस्त्यं भगवन्निह ।
कथितं पञ्च के काला विधयश्चापि पञ्च के ॥

मह्यं जिज्ञासमानाय कथयस्व यथातथम् ।
न चेद्रहस्यमत्यन्तं यदहं पृष्टवानिह ॥

श्रीभगवान्—

'आद्यं कर्माभिगमनमुपादानं ततः परम् ।
इज्या तपश्च स्वाध्यायस्तथा योगः प्रकीर्तितः ॥

पञ्चैते विधयस्तेषां कालाः पञ्चैव ते क्रमात् ।
कल्याणाचरणान्तं यत्कर्मजातं चतुर्मुख ॥

उत्थानादिक्रमादेतदभियानमुदीरितम् ।
ब्राह्मे मुहूर्ते बुध्येत ध्यायन्नारायणं परम् ॥

उत्थायासीत शयने कीर्तयन्नाम वैष्णवम् ।
क्रमेण सृष्ट्वा तत्त्वानि देहमुत्पाद्य तत्त्ववित् ॥

स्वस्य देहे षडङ्गानि मन्त्रमुच्चार्य मानसम् ।

इत्यादिना अभिगमनमुपक्रम्य

अञ्जनालेपनैस्स्रग्भिः वासोभिर्भूषणैस्तथा ।
अलक्तकरसाद्यैश्च ताम्बूलैर्मुखशोधनैः ॥

उपेतो मङ्गलैरन्यैर्नयेदभिगमक्रियाम् ।

इत्यभिगमनमुक्त्वा

उपादद्यात्ततः पूजासाधनानि यथातथम् ।
पुष्पाणि फलमूलानि विविधान्योषधीरपि ॥

दध्यादि च हविर्योग्यं तण्डुलादि गुडादि च ।
स्नानीयानि च वस्त्राणि स्वादूनि सलिलानि च ॥

दर्भान् पर्णानि समिधो यथाशक्ति यथावसु ।
आहृत्य याज्ञियान् दैवान् पूजास्थाने निवेशयेत् ॥
नीत्वोपादानसमयमित्थं तदनु पूजयेत् ।

इत्युपादानमुक्तम् ।

'प्राप्ते मध्याह्नसमये स्नानं कुर्याद्यथाविधि' ॥

इत्यारभ्य

'उत्तीर्यकर्म निखिलं मध्याह्नसमयोचितम् ।
कृत्वा यजेत देवेशं होमान्तं कमलासन ॥
इज्यायास्समयस्तस्याः कथितः कमलासन ।

इति भगवद्यजनमुक्त्वा

मन्दिरे वा हरेर्नद्यास्तीरे वाऽमरभूमिषु ।
विविक्ते विपिने वापि पर्वते वा गृहेऽपि वा ॥
ऋचो यजूंषि सामानि विद्यमानान्यनेकधा ।
शाखाभेदैर्मूलशाखामेकायनसमाह्वयाम् ॥
त्रयीमयीमधीयीत सुखासीनस्समाहितः ।

इति स्वाध्यायमुक्त्वा

ततः पश्चिमसन्ध्यायां प्राप्तायां तत्र चोदितम् ॥
जपहोमादिकं सर्वं कृत्वा परमपूरुषम् ।
अर्चयित्वा यथान्याय्यं यथापूर्वमशेषतः ॥
भुक्त्वान्नं विश्य शयने समुत्थाय महानिशि ।
आचम्य प्रयतो भूत्वा ध्यात्वा परमपूरुषम् ॥
योगासने समासीनो युञ्जीतात्मानमात्मना ।
यथोक्तेन प्रकारेण यथाशक्ति चतुर्मुख ॥
संहारक्रममाश्रित्य तत्त्वान्यात्मनि संहरेत् ।
आत्मानञ्चापि हृत्पद्मे परमात्मनि निष्ठिते ॥

संहरेदुत्थितो योगात् स्वापं क्लेशापहं व्रजेत्
इत्येषकथितो ब्रह्मन् योगः कालश्च पञ्चमः ॥

पञ्चैते समयाः पञ्चविधयस्तेषु दर्शिताः ।
इत्थमेतेषु कालेषु दर्शितैः कर्मभिर्नरः ॥

आराधनं भगवतः कुर्वन्नैवावसीदति ।
वर्षेषु द्वादशस्वेवमनुतिष्ठन् समाहितः ॥

क्रियाकलापमखिलं याति सायुज्यसम्पदम् ।
षट्सु वर्षेषु सारूप्यं सामीप्यं त्रिषु निश्चितम् ॥

सालोक्यं फलमेकस्मिन् वत्सरे नात्र संशयः ।

इति पाद्मे चर्यापादे त्रयोदशेऽध्याये अविच्छिन्नतया पञ्चकालानां प्रतिपादितत्वात् तेषामप्यच्छिद्रपञ्चकालपरायणत्वं सम्भवतीति चेत्—तदसत् ।

तत्रैव

पूत्यूषमर्धरात्रञ्च प्रातर्मध्यंदिनानि च ।
पञ्चकाला इमे प्रोक्तास्ततः कालचतुष्टये ॥

एतेषु हीनाः प्रत्यूषं (?) विज्ञेयाश्चतुरानन ।

इत्यभिगमनादीनामेकरूपेण विना न्यूनातिरिक्तकालत्वेनोक्तत्वात् 'कालं मध्यंदिनच्छिद्रं पञ्चकालपरायणै' रित्यागमसिद्धान्ते 'सान्तरालमनुष्ठानं पञ्चकालोदितं तथा' इति तन्त्रसिद्धान्ते च छिद्रपञ्चकालपरत्वस्योक्तत्वात्, कालचतुष्टयप्रतिपादनेन नियतपञ्चकालपरायणत्वाभावात्, द्वादशवर्षमारभ्य एकवर्षपर्यन्तं परिमितपञ्चकालपरत्वस्योक्तत्वात् द्वादशवर्षादूर्ध्वं पञ्चकालपरत्वाभावाच्च ।

तथा, मार्कण्डेये—

महानिशा तु विज्ञेया रात्रेर्मध्यं द्वितीययोः
तस्यां स्नानं न कुर्वीत सम्यगाचमनं तथा ॥

इत्याचमनस्य महानिशायां निषेधात् ।

'यामद्वयं शयानस्तु ब्रह्मभूयाय कल्पते' ।

इति धर्मशास्त्रोक्तनिद्राकाले योगस्यायुक्तत्वाच्च । योगकालस्यार्धरात्रिकत्वे स्वाध्याय-कालाद्यवहितत्वेन छिद्रपाञ्चकालिकत्वापाताच्च ।

कालचतुष्टयस्यैवोक्तत्वेन अभिगमनादिष्वेकस्य लोपसम्भवेन अनियत-पञ्चकालपरस्य पञ्चकालपरायणशब्दाभिलापासम्भवाच्च ।

तथा —

क्लिश्यन्तीह सुषुप्तानामिन्द्रियाणि द्रवन्ति च ।
अङ्गानि समतां यान्ति उत्तमान्यधमैस्सह' ॥

इति धर्मशास्त्रेषु प्रातरारभ्य सायंकालपर्यन्तमेव कर्माचरणकालत्वेन प्रतिपादनात् ।

तथा —

'अत्यन्तमलिनः कायो नवच्छिद्रसमन्वितः ।
स्रवत्येव दिवारात्रं प्रातस्स्नानं विशोधनम् ॥

अस्नात्वा नाचरेत्कर्म जपहोमादि किञ्चन ।
स्नात्वाऽधिकारी भवति दैवे पित्र्ये च कर्मणि' ॥

इति स्मृतेः स्नानात्पूर्वं तत्त्वसृष्टेरयुक्तत्वाच्च । प्रेतप्रायस्य संहततत्त्वस्य स्नापयो-ग्यताऽसम्भवाच्च । तस्मात् 'अब्भक्षो वायुभक्ष' इत्यादिशब्दवदवधारणगर्भस्य पाञ्चकालिकशब्दस्य अनियतपरिमितपाञ्चकालिकेषु पाञ्चरात्रिकेषु प्रयोगासंभवाद-नियतपरिमितछिद्रपाञ्चकालिकाः पाञ्चरात्रिणो न नियताछिद्रपञ्चकालपरायण-वैखानसतुल्या भवितुमर्हन्तीति सिद्धम् ।

ननु —

'यो देवं पूजयेद्विप्रो वित्तार्थी वत्सरत्रयम् ।
स वै देवलको नाम हव्यकव्यबहिष्कृतः ॥'

इति देवतापूजकस्य देवलकत्वं सम्भवतीति चेत् — तदसत् । सामान्यतः देवताराधनं ये कुर्वन्ति ते देवलका इति वा? उत श्रुतिस्मृतीतिहासपुराणादिषु मुख्याधिकारि-

त्वेन प्रतिपादिता अपीति वा ?। सामान्यतः देवताराधनं ये कुर्वन्ति ते इति चेत्—तर्हि गृहदेवतापूजकानामपि देवलकत्वप्रसङ्गः। किञ्च—

'ब्रह्मचारी गृहस्थश्च विप्रो वैखानसस्तथा।
कुर्वन्तो निजकर्माणि विष्णुमेव यजन्ति ते'॥

इति सन्ध्योपासनादीनां भगवदाराधनरूपत्वोक्त्या तेषाञ्च त्यागस्सम्भवति। अतस्सामान्यतः इति वक्तुमयुक्तम्। श्रुतिस्मृतिपुराणादिषु मुख्याधिकारित्वेन प्रतिपादिता देवलकाः इति चेत्—तदसत्। 'अग्निर्वै देवानामवमो विष्णुः परमस्तदन्तरेण सर्वा अन्या देवता इति ब्राह्मणम्। तस्माद् गृहे परमं विष्णुं प्रतिष्ठाप्य सायंप्रातर्होमान्तेऽर्चयति' इति वैखानससूत्रे, 'प्रवः पान्तमन्धसो धियायते महे शूराय विष्णवे चार्चत' इति ऋग्ब्राह्मणमनुसृत्य विष्णुप्रधानतया 'स वा एष पुरुषः पञ्चधा पञ्चात्मा' इत्यादिश्रुत्युक्तविष्ण्वादिपञ्चमूर्तीनामाराधनस्य प्रतिपादितत्वात्।

आश्वलेधिके 'कथं त्वमर्चनीयोऽसी' त्यादेः, वृद्धमनौ 'वेदान्तवेदिभि' रित्यादेश्चोक्तत्वात्।

एवमेव पाञ्चरात्रशैवशिल्पज्यौतिषादिषु उत्कृष्टमुख्याधिकारिप्रतिपादकानां वचनानां वैयर्थ्यप्रसङ्गात्तन्मूलभूतश्रुतिस्मृतिपुराणादीनामप्रामाण्यप्रसङ्गो दुष्परिहरः। एवंच प्रमाणभूतेषु श्रुतिस्मृतिपुराणादिषु प्रतिपादितानामाचारादीनां त्यागः प्रसज्येत, निष्फलत्वात्। ननु परद्रव्योणालयार्चनं कुर्वतां देवलकत्वमिति चेत् न। श्रुतिस्मृतिपुराणादिषु तत्तच्छास्त्रेषु च आलयार्चकानां मुख्याधिकारित्वेन तद्द्रव्योपभोगार्हत्वेन च प्रतिपादनात्।

यथा—मरीचिप्रोक्तायामानन्दसंहितायां विखनसोत्पत्त्यादिकं प्रतिपाद्य—

'तथा त्वदनुजीवित्वे त्वद्द्रव्यानुभवे सति।
यद्भवेद्दोष उत्पन्न इति चिन्ताकुलोऽस्म्यहम्'॥

इति भगवद्द्रव्योपजीवनदोषभीरोः विखनसः भगवन्तं प्रति प्रश्ने—

'अथोवाच हृषीकेशो भीरुं तं मुनिसत्तमम्।
वैखानसानां तद्दोषो नास्ति मत्कृतकर्मणाम्॥

मद्द्रव्यं हव्यकव्यार्थे दानाभ्यागतपूजने ।
मुख्यमेवास्तु भवतां सदा मत्कर्म कुर्वताम् ॥
किमेभिर्बहुभिर्वाक्यैरन्यत्ते कथयाम्यहम् ।
मद्द्रव्यक्षेत्रबिम्बानामालयानां तथाऽऽपदि ॥
विक्रीणनादिकार्येषु नास्ति दोषो मदाज्ञया ।
तस्माद्भवानभिमतस्सर्वं कर्म सदा कुरु ॥
मदीयधनभोगेन मत्क्रियालोपनस्तव ।
मच्छरीरतया सत्यमपचारो न विद्यते ॥'

इति भगवद्वचनोदाहरणेन भगवद्द्रव्योपभोगादिषु दोषाभावः प्रतिपादितः ।

अत्र 'अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विज' इत्यादिवचनानुसारेणार्चकपराधीनतां दर्शयितुं, भगवत्प्रीतिविषयीकृतानां वैखानसानां तद्द्रव्योपभोगादिषु दोषगन्धो नास्तीति प्रतिपादनावसरे 'मद्द्रव्यं क्षेत्रबिम्बा' दीत्यादिना कैमुतिकन्यायमभिप्रेत्य भगवद्विग्रहविक्रये कृतेऽपि दोषो नास्तीत्युच्यते । तावता न तदभिप्रेतम् ।

नन्वेवमपि देवद्रव्योपभोगदोषस्सामान्यतः मुख्यामुख्याधिकारिषु सर्वेष्वापद्यते एव इति चेत् न ।

'ये भक्षयन्ति मांसानि सत्त्वानां जीवितैषिणाम् ।
भक्ष्यन्ते तेऽपि तैस्सर्वैरिति ब्रह्माऽब्रवीत्स्वयम् ॥
मां स भक्षयिताऽमुत्र यस्य मांसमिहाद्म्यहम् ।
एतन्मांसस्य मांसत्वं प्रवदन्ति मनीषिणः ॥
न हि मांसं तृणात्काष्ठादुपलाद्वापि जायते ।
हत्वा जन्तुं भवेन्मांसं तस्मात्तत् परिवर्जयेत् ॥
हन्ता चैवानुमन्ता च विशस्ता क्रयविक्रयी ।
संस्कर्ता चोपकर्ता च खादकश्चाष्ट घातुकाः ॥

धनेन क्रायको हन्ति खादकश्चोपभोगतः ।
घातुको वधबन्धाभ्यामित्येष त्रिविधो वधः ॥
स्वमांसं परमांसेन यो वर्धयितुमिच्छति ।
नारदः प्राह धर्मात्मा नरके स विपच्यते ॥'

इत्यादिवचनैः मांसभक्षणेन नरकपतनस्मरणात् भगवत्प्रीत्यर्थं क्रियमाणेषु यज्ञेष्वपि मांसभक्षणसत्त्वात् याज्ञिकानामपि नरकपतनं सम्भवतीति यागस्यापि त्यागप्रसङ्गात् ।

'तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥'

इति भगवद्वचनात् शास्त्रोक्तानां कर्मणां दोषो नास्तीति चेत् । 'मद्द्रव्योपभोगादौ दोषो नास्तीति' भगवता प्रतिपादितत्वात् प्रकृतेऽपि दोषो नास्त्येव । 'वचनात् प्रवृत्तिर्वचनान्निवृत्ति' रिति खलु शिष्टोक्तिः । एवं कुत्रचिद्धर्मोऽधर्मः अधर्मश्च धर्मो भवति ।

यथा—

'उक्तेऽनृते भवेत्किञ्चित्प्राणिनां प्राणरक्षणम् ।
अनृतं तत्र सत्यं स्यात् सत्यमत्रानृतं भवेत्' ॥

'कामिनीषु विवाहेषु गवां पीडासु बाधने ।
ब्राह्मणाभ्यवपत्तौ च शपथे नास्ति पातकम् ॥ इति

'यद्ब्राह्मणश्चाब्राह्मणश्च प्रश्नमेयातां ब्राह्मणायाधिब्रूयात् यद्ब्राह्मणायाध्यात्मनेऽध्याह यद्ब्राह्मणं पराहाऽऽत्मानं पराह तस्माद्ब्राह्मणो न परोच्यः' इति श्रुतिश्च ।

श्रौतसूत्रे च—'सर्वं एवमभिवादयन्ति नाभिवादयति न जुहोत्यन्यत्र सोमाङ्गेभ्यः' इत्यादि प्रतिपाद्यते ।

'सर्वस्वहरणे भार्याविश्ययोः (?) प्राणसंशये ।
गोद्विजार्थे विवादे च शपथे नास्ति पातकम्' ॥

इत्यादिस्मृतिश्च ।

एवं च शास्त्रोक्तप्रकारेण भगवदर्चनं कुर्वतां तद्द्रव्योपभोगे न दोषः ।

किञ्च – किं देवलकत्वं जातिपरम्, उत कर्मपरम्? । जातिपरमिति वक्तुं न शक्यते । तथाऽनुक्तत्वात् । इच्छया कल्पितुमशक्यत्वाच्च ।

अथ कर्मपरमिति चेत् । विहितकर्मपरम, उत अविहितकर्मपरम्? विहितकर्मपरमिति वक्तुमशक्यम् – श्रुतिस्मृतीतिहाससूत्रपुराणादीनामप्रामाण्यप्रसङ्गात् । विहितधर्मपरत्वेनानुक्तत्वात् ।

'श्रुतिस्मृती ममैवाज्ञा यस्तामुल्लंघ्य वर्तते ।
आज्ञाच्छेदी मम द्रोही मद्भक्तोऽपि न वैष्णवः ॥'

इति भगवदाज्ञाभंगदोषाच्च । एवं च अविहितकर्मपरमिति हि परिशिष्यते ।

ननु – परद्रव्येण कृतं भगवदाराधनं क्रतुवत् परार्थमेव भवतीति चेत् मैवम् ।

'अन्यधर्मपरो विप्रो भ्रष्टो गच्छत्यधोगतिम् ।
मत्कर्मनिरतो विप्रो नाधः पतति कुत्रचित् ॥'

इति भगवद्वचनात् ।

पुराणान्तरे— 'स्वस्मिन्नर्पितमात्रेण येन केनापि कर्मणा ।
तुष्टो ददाति स्वपदमहो वत्सलता हरेः ॥' इति ।

किञ्च –

'एकविंशतिनिष्कन्तु दद्यादाचार्यदक्षिणाम् ।
ऋत्विजान्तु तदर्धं स्यात्तदर्धमितरस्य च ॥

इति दक्षिणादानं प्रतिपाद्यते ।

ननु – 'प्रतिग्रहेण विप्रस्य ब्राह्मं तेजो विनश्यति' इति मनुवचनात् 'प्रतिग्रहेण तेजो हि विप्राणां शाम्यते' इत्यानुशासनिकवचनाच्च प्रतिग्रहेण ब्रह्मतेजोनाशनं स्मर्यते । श्रूयते प्रतिग्रहे प्रायश्चित्तमपि । 'यो याजयति प्रति वा गृह्णाति याजयित्वा प्रतिगृह्य वाऽनश्नंस्त्रिस्स्वाध्यायमधीयीत त्रिरात्रं सावित्रीं गायत्रीमन्वतिरेचयति वरो दक्षिणा वरेणैव वरं स्पृणोत्यात्मा हि वरः' इति । अतः प्रतिग्रहे दोषोऽस्तीति चेत् – न ।

'त्रायन्ते खलु नात्यन्तमन्यधर्मास्त्वनुष्ठिताः ।
अपि मत्कर्म विगुणं त्रायते महतो भयात् ॥

मेरुमन्दरमात्रोऽपि राशिः पापस्य कर्मणः ।
केशवं वैद्यमासाद्य दुर्व्याधिरिव नश्यति ॥

निधिस्थानं खनन् द्वेषात् मृदर्थं वाऽप्नुयान्निधिम् ।
अज्ञः कामाच्च दोषाच्च स्मृत्वैवं मोक्षभाक्तथा ॥

द्वेषिणा वाऽप्रयत्नेन क्षिप्तोऽग्निः कक्षमादहेत् ।
कथमभ्यर्चितो विष्णुः न दहेत् सर्वकिल्बिषम् ॥

यथाऽज्ञो वज्रकायस्स्यात् स्पर्धन्नपि सुधां पिबन् ।
एवं विरुद्धभावोऽपि मुच्यत्येव हरिं स्मरन्' ॥ इति ।

नारदीये — 'कृताऽपि दम्भहास्याद्यैर्यत्सेवा तारयेज्जनान् ।
विफला नान्यकर्मेव कृपालुः कोऽन्वतः परम् ॥

हास्यानादरमायाभिरपि भक्तिः कृता त्वयि ।
नृणां ददातीन्द्रपदं सात्त्विकानां किमुच्यते ॥

वस्तुस्वभाव एवैष यन्मोक्षाय हरिस्मृतिः ।
पूषेव ध्वान्तनाशाय शीतशान्त्यै यथाऽनलः ॥

सैषा हरिस्मृतिर्दैत्यं क्रोधादपि कृता सती ।
आनयेत्सद्गतिं विप्र सानुगं किमु वर्ण्यते ॥

यथाऽमृतार्थं यततां सुराणामब्धिमन्थने ।
पारिजातादिकान्यासन् फलान्यप्रार्थितान्यपि ॥

एवं मोक्षैकचित्तानां यततामीशसंस्मृतौ ।
भवन्ति सिद्धयो दिव्याः पुण्यं पुण्यानुबन्धि यत्' ॥ इत्या

तत्रैव — 'सुरातिथ्यर्चनकृते गुरुभृत्यर्थमेव च ।
सर्वतः प्रतिगृह्णीयात् न तु दुष्येत्स्वयं ततः ॥'

इति च स्मरणात् । अतः शास्त्रोक्तमार्गेण भगवद्यजनविधौ प्रवृत्तानां तत्तत्कर्मसु दक्षिणाप्रतिग्रहे कृतेऽपि न दोषः ।

गृहार्चनाव्यतिरेकेणालयार्चना भारतादिषु प्रतिपादिता दृश्यते । यथा—

**महाभारते आश्वमेधिके**—'कथं त्वमर्चनीयोऽसी' त्यादि ।

**विष्णुधर्मोत्तरे षष्ठेऽध्याये** —

'यस्तु देवगृहस्यार्थं प्राकारं परिकल्पयेत् ।
स तु स्वर्गं समासाद्य विमानाधिपतिर्भवेत् ॥

यस्तु देवालयस्याग्रे शिलादारुभिरेव वा ।
करोति तोरणं रम्यं स तु स्वर्गाधिपो भवेत् ॥

यस्तु देवालयं विष्णोर्दारुशैलमृदा तथा ।
इष्टकाकल्पितं वापि कुर्यात्तस्य फलं बहु ॥

अहन्यहन्यश्वमेधसहस्राणि करोति यः ।
प्राप्नोति मण्डपं विष्णोः यः कारयति मानवः ॥

केशवस्य स तल्लोकमक्षय्यं प्रतिपद्यते ।
प्रतिमार्थं महाविष्णोस्साधयेदुत्तमां शिलाम् ॥

षष्टिर्वर्षसहस्राणि स्वर्गलोके महीयते ॥' इति ।

एतेषां च प्राकारतोरणमण्डपविग्रहशिलादीनां गृहदेवतास्वसंभवः श्रीवैखानससंहितासु प्रतिपादितः ।

प्रसङ्गादर्चकमहिमादीह कथ्यते ।

**बृहन्नारदीये**— 'स कदाचिन्महापापो जन्तूनामन्तकोपमः ।

इत्यारभ्य —

'तस्योपवनमध्यस्थं रम्यं केशवमन्दिरम् ।
छादितं हेमकवचैः दृष्ट्वा व्याधो मुदा ययौ ॥

हराम्यत्र सुवर्णानि बहूनीति स निश्चितः ।
जगाम विष्णुभवनं कीनाशश्चौर्यलोलुपः ॥

तत्रापश्यद्द्विजवरं शान्तं तत्त्वार्थकोविदम् ।
परिचर्यापरं विष्णोरुदङ्कं तपसां निधिम् ॥

एकान्तिनं दयालुञ्च निस्स्पृहं ध्यानलोलुपम् ।
दृष्ट्वा तं लुब्धको मेने स्वकार्यस्यान्तरायिनम् ॥

देवस्य द्रव्यजातन्तु समादातुमना निशि ' ।

इत्यादिना पृथगालयार्चकसद्भावादिकं उक्त्वा स्वकार्यान्तरायभूतार्चकहिंसायां प्रवृ
तस्य मरणमपि प्रतिपाद्य — .

'उदङ्कः पतितं प्रेक्ष्य लुब्धकन्तु दयापरः ।
विष्णुपादोदकेनैनमभ्यषिञ्चन्महामुनिः ॥

हरिपादोदकस्पर्शाल्लुब्धको वीतकल्मषः ।
दिव्यं विमानमारुह्य मुनिमेनमथाब्रवीत् ' ॥

इति भगवत्पादोदकमाहात्म्यं च प्रतिपादितम् ।

तत्रैव — यज्ञध्वजवीतिहोत्रसंवादे—

'स कदाचित्तु कामान्धो रन्तुकामः परस्त्रियम् ।
शून्यं पूजादिभिर्विष्णोर्मन्दिरं प्राप्तवान् निशि ॥

तत्र कामोपभोगार्थं शयितुं तेन कामिना ।
स्ववस्त्रप्रान्ततो ब्रह्मन्! कृतं तद्देशमार्जनम् ॥

यावन्तः पांसुकणिकाः तेन सम्मार्जितास्तदा ।
तावज्जन्मकृतं पापं तदैव क्षयमागतम् ॥

प्रदीपः स्थापितस्तत्र सुरतार्थं द्विजोत्तम! ।
तेनापि तस्य दुष्कर्म निश्शेषं क्षयमागतम् ॥

अवशेनापि यत्कर्म कृत्वेमां सिद्धिमागतः ।
भक्तिमद्भिः प्रशान्तैश्च किं पुनस्सम्यगर्चनात ॥

तस्माच्छृणुत विप्रेन्द्राः ! देवो नारायणोऽव्ययः ।
ज्ञानतोऽज्ञानतो वापि पूजकानां विमुक्तिदः ॥ इति ।

**तथा तत्रैव** — इन्द्रसुधर्मसंवादे ।

'अहमासं पुरा शक्र ! गृध्रः पापावशेषतः ।
स्थितश्च भूमिभागे वै अमेध्यामिषभोजनः ॥

एकदाऽहं विष्णुगृहे प्राकारे संस्थितः प्रभोः ।
पतितो व्याधशस्त्रेण सायं विष्णुगृहं गते ॥

मयि कण्ठगतप्राणे कश्चित् श्वा मांसलोलुपः ।
जग्राह मां स्ववक्त्रेण श्वभिरन्यैरभिद्रुतः ॥

गतः प्रदक्षिणाकारं विष्णोस्तन्मन्दिरं प्रभोः ।
तेनैव तुष्टिमापन्नः अन्तरात्मा जगन्मयः ॥

मम चापि शुनश्चापि दत्तवान् परमं पदम् ।
प्रदक्षिणाकारतया गतस्य सदृशं फलम् ॥

सम्प्राप्तं तु मया शक्र ! किं पुनस्सम्यगर्चनात् ।
येऽर्चयन्ति सदा भक्त्या नारायणमनामयम् ।

तानर्चयन्ति विबुधा ब्रह्माद्या देवतागणाः ॥' इति

**एवं आश्वमेधिके**— 'लोके त्रीण्यपवित्राणि पञ्चामेध्यानि भारत ।
श्वा च शूद्रश्श्वपाकश्च त्र्यपवित्राणि पाण्डव ॥

देवलः कुक्कुटो यूपः उदक्या वृषलीपतिः ।
पञ्चामेध्यानि' ॥ इति

**श्रीवैखानसे**— 'सूतादिप्रतिलोमाश्च पाषण्डाः पतितास्तथा ।
नास्तिका भिन्नमर्यादास्तथा वेदविदूषकाः ॥

पापरोगयुताश्चैव तथैव गुरुनिन्दकाः ।
अर्चनं देवदेवस्य हविर्दानञ्च वीक्षितुम् ॥

नार्हन्ति तस्मात्कुर्वीत द्वारं यवनिकावृतम् ।'

इति प्रतिपादनात् भगवदर्चनदर्शनादिषु योग्यतारहितानां निकृष्टानां (देवलकानां) औत्कृष्ट्यं न सम्भवति ।

श्रुतिस्मृतिपुराणादिषूक्तप्रकारेण कल्पसूत्रे येषामद्वारकभगवद्यजनाधिकारो विधीयते ते उत्कृष्टा ज्ञेयाः । यथा श्रुतिः–'यथा क्रतुरस्मिन् लोके भवति तथेतः प्रेत्य भवति.' इति ।

स्मृतिश्च — 'वेदोक्तेनैव मार्गेण सर्वभूतहृदि स्थितम् ।
मामर्चयन्ति ये भक्तास्सायुज्यं यान्ति ते मम ॥

तस्माद्यावज्जनो जीवेत् तावत्सम्पूजयेद्धरिम् ।
पापैर्न लिप्यते मर्त्यो हरिमन्दिरमाप्नुयात् ॥

जगत्पवित्रास्ते नित्यं विष्णुमभ्यर्चयन्ति ये ।
दुर्वृत्ता वा सुवृत्ता वा पूजनीया विशेषतः' ॥ इति

व्यासेनापि आनुशासनिके (९० अध्याये) पात्रकथनावसरे देवलकानामपात्रतां सत्कर्मनिष्ठानां पात्रताञ्च प्रतिपाद्य स्ववचनदृढीकरणार्थं 'वैखानसा वा ऋषय इन्द्रस्य प्रिया आसन्' इति भगवत्प्रीतिविषयाणां वैखानसानां वचनमपि श्रूयत इति प्रतिपादितम् । यथाः --

'ऋषीणां समयं नित्यं ये रक्षन्ति युधिष्ठिर ।
निश्चितास्सर्वधर्मज्ञास्तान् देवा ब्राह्मणान् विदुः ॥

स्वाध्यायनिष्ठा ऋषयो ज्ञाननिष्ठास्तथैव च ।
तपोनिष्ठाश्च बोद्धव्याः कर्मनिष्ठाश्च भारत ॥

कव्यानि ज्ञाननिष्ठेभ्यः प्रतिष्ठाप्यानि भारत ।
तत्र ये ब्राह्मणान् केचिन्न च निन्दन्ति ते वराः ॥

ये तु निन्दन्ति जल्पेषु न तान् श्राद्धेषु भोजयेत् ।
ब्राह्मणा निन्दिता राजन् हन्युस्त्रिपुरुषं कुलम् ॥

वैखानसानां वचनमृषीणां श्रूयते नृप ।
दूरादेव परीक्षेत ब्राह्मणान् वेदपारगान् ॥

प्रियो वा यदि वा द्वेष्यः तेषु तच्छ्राद्धमावपेत् ।
यस्सहस्रं सहस्राणां भोजयेदनृचां नरः ॥

एकस्तान्मन्त्रवित्पूतः सर्वमर्हति भारत' ॥ इति

एवं अष्टाक्षर द्वादशाक्षर पुरुषसूक्तादिमन्त्रजपनिष्ठानां दर्शनेन ब्रह्महाऽपि शुद्ध्यतीति पुराणेषूक्तम् । यथा

पद्मपुराणे:— 'साङ्गं समन्त्रं सन्यासं सर्षिच्छन्दोधिदैवतम् ।
सदीक्षाविधि सध्यानं सयन्त्रं द्वादशाक्षरम् ॥

साष्टाक्षरञ्च मन्त्रेशं ये जपन्ति नरोत्तमाः ।
तान् दृष्ट्वा ब्रह्महा शुद्ध्येत् किं पुनर्वैष्णवस्स्वयम्' ॥ इति

श्रूयतेपि । 'यो हवै नारायणस्याष्टाक्षरं पदमध्येति अनुपब्रुवस्सर्वमायुरेति विन्दते प्राजापत्यं रायस्पोषं गौपत्यं ततोऽमृतत्वमश्नुते ततोऽमृतत्वमश्नुत इति ।'

श्रीपाञ्चरात्रे — कपिञ्जलसंहितायाम्

'याजनाध्यापनयुतः शिष्यानुग्रहकारकः ।
आचार्य इति विज्ञेयो मन्त्रतन्त्रपरायणः ॥

आश्रमे वा वने वाऽपि स वैखानस उच्यते ।
ग्राम्यधर्माणि सर्वाणि वर्जयेद्वनवासकः' ॥ इति

यमस्मृतौ— 'योऽनुचानं द्विजं मर्त्यो हतवानर्थलोभतः ।
स वदेत्पौरुषं सूक्तं जलस्थश्चिन्तयेद्धरिम्' ॥

इति केवलाष्टाक्षरमन्त्रजपनिष्ठानामप्येवं विधाः प्रभावाः श्रूयन्त इति चेत् श्रुति-स्मृतिविहितैस्तैरेव मन्त्रैः अद्वारकभगवदर्चने मुख्याधिकारिणां वैखानसानां कैमुतिकन्यायसिद्धमौत्कृष्ट्यं केनापोदितुं शक्यम् ।

किञ्च – यथा वैखानसानामुत्पत्त्यादिकं श्रुतिस्मृतिपुराणादिषु विशेषेण प्रतिपादितं तथा इतरेषां विशेषेण प्रतिपादितञ्चेत् तदा वैखानससाम्यमितरेषां स्यात्। तथा न दृश्यते हि।

अथ वस्तुतो देवलका निरूप्यन्ते।

वैखानसे — ‘अवैखानसविप्रो यः पूजयेदालये हरिम्।
स वै देवलको नाम हव्यकव्यबहिष्कृतः॥

वैखानसकुले जातः पाञ्चरात्रेण दीक्षितः।
न दीक्षितो न सञ्जातो (?) लोभान्मोहान्मदर्चनम्॥

कुर्याच्चेत्तु विशेषेण भवेद्देवलकस्तु सः।

पाञ्चरात्रे संकर्षणसंहितायाम्- ‘कर्मदेवलकाः केचित् कल्पदेवलकाः परे।
शुद्धदेवलकाश्चान्ये त्रिधा देवलकाः स्मृताः॥

अर्थार्थी कालनिर्देशी यो देवं पूजयेत्स हि।
कर्मदेवलको नाम सर्वकर्मबहिष्कृतः॥

पाञ्चरात्रविधानज्ञो दीक्षाविरहितोऽर्चकः।
चतुर्वेदाधिकारोऽपि कल्पदेवलकः स्मृतः॥

आगमोक्तविधानज्ञो भद्रकाल्युपजीवकः।
शुद्धदेवलकः प्रोक्तः सर्वकर्मबहिष्कृतः॥

आर्षोक्तेन विधानेन देवलत्वं न विद्यते।
तस्मात् सर्वप्रयत्नेन वैदिकेनैव पूजयेत्’॥ इति

शिवशेखरतन्त्रे: – रुद्रः –

अथ देवलकान् वक्ष्ये शृणु देवि! समाहिता।
कर्मदेवलकाः केचित् कल्पदेवलकाः परे॥

शुद्धदेवलकास्त्वन्ये त्रिधा देवलकास्स्मृताः।
अन्यसूत्रोक्तमार्गेण यस्संवत्सरपूजकः॥

अदीक्षितः स्वयं तन्त्रे कर्मदेवलकस्तु सः ।
अनेनैव प्रकारेण वत्सरत्रयपूजकः ।
कल्पदेवलकः प्रोक्तः स वै शैलसुते! ध्रुवम् ॥

अननुज्ञातमाचार्यात् आगमं शुश्रुवे च यः ।
शीलतः तस्य शिष्यश्च शुद्धदेवलकावुभौ ॥

त्रिधा देवलकत्वं तु न विष्णुविषये क्वचित् ।
रुद्रकाल्यादिविषयमेतदागमसंमतम् ' ॥ इति

**स्मृत्यन्तरे:—** शर्वं सूर्यं तथा चन्द्रं दुर्गादी रुद्रदेवताः ।
योऽर्चयेत् पणपूर्वं सः सद्यः पतति मानवः ॥

दुर्गा च भद्रकाली च बुद्धश्च क्षेत्रपालकः ।
पञ्चपूजा च इत्येते पञ्च देवलकाः स्मृताः ॥

आदित्यमम्बिकां विष्णुं गणनाथं महेश्वरम् ।
गृहे पूजा च इत्येते पञ्चदेवलकाः स्मृताः (?) ॥ इति

**विष्णुधर्मोत्तरे—** ' चण्डिकायाश्च दुर्गाया ज्येष्ठाया भैरवस्य च ।
रुद्रस्य पूजका ये वै ते वै देवलकाः स्मृताः ॥ इति

**विष्णुः—** ' देवार्चनपरो योऽपि परार्थं वित्तकांक्षया ।
चतुर्वेदधरो विप्रः स चण्डालसमो भवे ' दिति ॥

एवमेभिर्वचनैः शास्त्राननुमतमार्गेण पूजकानां देवतान्तरपूजकानामेव च देवलकत्वं सिद्ध्यतीति स्फुटमवगम्यते ।

**किञ्च—** ' वृषो धर्मस्समाख्यतः तस्य यः कुरुते लयम् ।
वृषलं तं विदुर्देवा निकृष्टं श्वपचादपि ॥ '

इति वृषलशब्दो यथा वेदशास्त्रोक्तमार्गलयकारके व्युत्पादितः, तथा देवलकशब्दोऽपि ' दिव् क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगति ' ष्विति धात्वर्थानुसारेण गत्यपरपर्यायमार्गार्थकदिव्धातुघटितस्सन् वेदोक्तमार्गलय-

प्रापके व्युत्पादयितुं शक्यते इति तत्प्रतीपेषु वेदमार्गप्रतिष्ठापकेषु वैखानसेषु न सर्वात्मना प्रवर्तते । तथा च —

हारीतः — 'वैखानसास्तु ये विप्रा हरिपूजनतत्पराः ।
न ते देवलकाः प्रोक्ता विष्णुपादाब्जसंश्रयात् ॥' इति

स्मृत्यर्थसारे — अत्रिः - 'वैदिकेनैव विधिना दम्भलोभविवर्जितः ।
'पूजयेद्भक्तितो विष्णुं स हि देवलको न वै ॥' इति

अन्यथा श्रुत्युक्तमार्गेणालयार्चकानामपि देवलकत्वे तादृशालयार्चनप्रतिपादकानां श्रुतिस्मृतिपुराणादिवचनानां व्यर्थता स्यात् ।

ननु — अज्ञानतः कृतमपि भगवदाराधनमपवर्गप्रदञ्चेत्—विना शास्त्रं अनधिकारिणापि कृतं तत् अपवर्गप्रदं किं न स्यादिति चेत् — न । भगवदाज्ञाभङ्गापत्तेः ।

यथोक्तं भगवता— 'यश्शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ' ॥ इति

'श्रुतिस्मृती ममैवाज्ञा यस्तामुल्लंघ्य वर्तते ।
आज्ञाच्छेदी मम द्रोही मद्भक्तोऽपि न वैष्णवः ' ॥ इति

'मम चापि प्रियं विष्णोर्देवदेवस्य शार्ङ्गिणः ।
मानुषो वैदिकाचारं मनसाऽपि न लंघयेत् ' ॥ इति

अतः अनधिकारिणा कृतं शास्त्रासम्मतमिति तन्त्रोक्तप्रकारेण कृतमपि तत् नापवर्गप्रदम् ।

ननु — 'ब्राह्मणैः क्षत्रियैः वैश्यैः शूद्रैश्च कृतलक्षणैः ।
अर्चनीयश्च सेव्यश्च पूजनीयश्च माधवः ॥
सात्त्वतं विधिमास्थाय गीतः सङ्कर्षणेन यः ' ।

इति शूद्रादीनामपि पाञ्चरात्रोक्तमार्गेणार्चने अधिकारे सिद्धे कथं तान्त्रिकोक्तप्रकारेणार्चनं कुर्वतः ब्राह्मणादेः (अनधिकारिणः) तत् अपवर्गप्रदं न भवतीत्युच्यत इति चेदुच्यते ।

‘ प्रथमं मन्त्रसिद्धान्तं द्वितीयञ्चागमाह्वयम् ।
तृतीयं तन्त्रसिद्धान्तं तन्त्रान्तरमतः परम् ॥

इति चतुर्विधेषु सिद्धान्तेषु—

‘ एकत्र दीक्षितस्तन्त्रे सिद्धान्ते वा द्विजोत्तम ।
क्रियां न कुर्यादन्यत्र कर्षणादि चतुर्मुख ॥

आचार्यकमथार्त्विज्यं पूजाञ्च मधुविद्विषः ।
मन्त्रे देवे च सिद्धान्ते तदेवास्य हि युज्यते ॥ (?)

इति चतुर्विधतन्त्रेषु एकत्र दीक्षितस्य तन्त्रान्तरे प्रवेशयोग्यताभावस्य प्रतिपादनात् ।

‘ एकगोत्रसमुत्पन्नं पञ्चगोत्रं पृथक् पृथक् । इत्यारभ्य
‘ सूत्रं कात्यायनं शाखा याजुषं शुक्लमेव च ॥

औपगायनशाण्डिल्यौ भारद्वाजोऽथ गौतमः ।
मौञ्जायनिस्तु पञ्चैते पाञ्चरात्राधिकारिणः ॥

इत्यधिकारिभेदस्य विधीयमानत्वात् ।

‘ चतुर्णामपि वर्णानामितरेषाञ्च तद्भुवाम् ।
दीक्षा समैव सर्वेषामाचारस्तन्त्रवर्त्मना’ ॥

इत्यापस्तम्बादिसूत्रैः संस्कृतस्य पाञ्चरात्रोक्तमार्गेण निषेकादिसंस्कारयोग्यताभावकथनात् । तान्त्रिकोक्तप्रकारेण दीक्षितानामेव तन्त्रोक्तार्चनायामधिकारित्वसम्भवात् ।

‘ स्वसूत्रे वर्तमाने तु परसूत्रेण वर्तते ।
अप्रमाणमृषिं कृत्वा सोऽन्धे तमसि मज्जति’ ॥

‘ स्वकीयधर्ममुत्सृज्य परधर्मं य आश्रयेत् ।
पतितस्स भवेदाशु सद्य एव न संशयः’ ॥

‘ स्वसूत्रस्य परित्यागात् परसूत्रसमाश्रयात् ।
सद्यः पतति वै विप्रो न वेदस्य समाश्रये ॥ (?)

'शाखां शिखां तथा पुण्ड्रं समयाचारमेव च ।
पूर्वैराचरितं कुर्यादन्यथा पतितो भवेत्' ॥

'यस्स्वशाखां परित्यज्य परशाखासु वर्तते ।
शाखारण्डस्स विज्ञेयस्सर्वकर्मबहिष्कृतः' ॥

यस्स्वधर्मं परित्यज्य परधर्मं निषेवते ।
पाषण्डिनं तमाहुर्वै निकृष्टं श्वपचादपि' ॥ इति ।

भगवान् :— 'श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात् ।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः' ॥ इति

व्यासः — 'स्वधर्मं यस्समुत्सृज्य परधर्मं समाश्रयेत् ।
अनापदि स विद्वद्भिः पतितः परिकीर्तितः ॥

इत्यादिभिश्च वचनैः परधर्मानुष्ठातुः पतितत्वादिस्मरणाच्च अन्यसूत्रोक्तप्रकारेण तान्त्रिकोक्तेन मार्गेण वा ब्राह्मणादिभिरपि अनधिकारिभिः भगवदाराधनं कर्तुं न शक्यते । तर्हि 'ब्राह्मणैः क्षत्रियैर्वैश्यैः' इत्यादिभारतवचनस्य का गतिरिति चेत्—उच्यते । माधवाः—मुख्यत्वेन अद्वारकभगवद्यजनाधिकारित्वेन निरूपितैः ब्राह्मणैः पूजनीयः । इतरैः क्षत्रियैर्वैश्यैश्चार्चनीयः । शूद्रैः स्त्रीभिश्च यथार्हमिज्यस्सेव्यश्च इति तस्य वचनस्यार्थः ।

.... .... .... शूद्रैः स्त्रीभिस्तथेतरैः ।
यथार्हमिज्यस्सेव्यश्च नित्यं सर्वेश्वरो हरिः' ॥

इति भारद्वाजवचनात्, 'अर्घ्यान्तमर्चनं प्रोक्तं हविरन्तश्च पूजन' मित्यर्चनपूजनयोः भिन्नार्थकत्वप्रतिपादनात्, सर्वैरेकरीत्या पूजनेऽभिमते एकपदस्यैव पर्याप्तत्वात् इतरयोः पदयोर्वैयर्थ्यापाताच्च । अन्यथा शूद्रस्यापि पूजार्चनादिष्वधिकाराङ्गीकारे श्रुतिस्मृतिसूत्रपुराणादिविरोधो भवेत् ।

शूद्रस्यानधिकारप्रतिपादकानि वचनानि चैतानि । श्रुतिः । 'तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः । स हि देवता अन्वसृजत तस्माच्छूद्रो बहुपशुरयज्ञीयो दैव' इति ।

स्मृतिः — 'जपस्तपस्तीर्थसेवा प्रव्रज्या मन्त्रसाधनम् ।
देवताराधनञ्चैव स्त्रीशूद्रपतितानि षट् ॥' इति

श्रीभागवते — 'शुश्रूषणं द्विजगवां देवानाञ्चाप्यमायया ।
तत्र लब्धेन सन्तोषः शूद्रप्रकृतयस्त्विमाः' ॥ इति

मनौ — 'ब्राह्मणस्य तपो ज्ञानं तपः क्षत्रस्य रक्षणम् ।
वैश्यस्य तु तपो वार्ता तपश्शूद्रस्य सेवन' मिति ॥

अन्यत्र— 'यदि शूद्रस्तपः कुर्याद्विदृष्टेन वर्त्मना ।
इह चास्य परिक्लेशः प्रेत्य चास्याऽशुभा गतिः ॥' इति ।

किमर्थं शूद्रस्य द्विजशुश्रूषा सर्वदा अभिहितेति चेत्—उच्यते । जन्मान्तरीयकर्मवशात् जननकालेऽपि तमोगुणैरभिभूतस्य तस्य शूद्रस्य तमोनिरसनार्थं द्विजशुश्रूषणं ब्रह्मणा प्रयुक्तम् ।

आश्वमेधिके — 'उदिते सवितर्यस्य क्रियायुक्तस्य धीमतः ।
चतुर्वेदधरस्यापि देहे षड्वृषलाः स्थिताः ॥
क्षत्रिये सप्त विज्ञेया वैश्येत्वष्टौ प्रकीर्तिताः ।
नियताः पाण्डवश्रेष्ठ शूद्रेऽष्टाविंशतिः खलु' ॥ इत्यारभ्य—
'रागद्वेषौ च मोहश्च पारुष्यञ्च नृशंसता ।
शाठ्यञ्च दीर्घवैरञ्च अतिमानमनार्जवम् ॥
अनृतञ्चापवादश्च पैशुन्यमतिलोभता ।
हिंसा स्तेयं मृषावादो वञ्चना रोषलोभते ॥
अबुद्धता च नास्तिक्यं भयमालस्यमेव च ।
अशौचञ्चाकृतज्ञत्वं दम्भता स्तम्भ एव च ॥
निष्कृतेश्चाप्यविज्ञानं जनने शूद्रमाविशन् ।
दृष्ट्वा पितामहः शूद्रमभिभूतन्तु तामसैः ॥
द्विजशुश्रूषणं धर्मं शूद्राणान्तु प्रयुक्तवान् ।
नश्यन्ति तामसा भावाः शूद्रस्य द्विजभक्तितः ॥'

अतः तमोगुणाभिभूतस्य शूद्रस्य भगवद्यजनाधिकारो नास्त्येव ।

नन्वेषां शौनकाद्युक्तप्रकारेण भगवदाराधनेऽधिकारो भवेदिति चेत्–तदसत्। तत्र अधिकारिविशेषप्रतिपादनाभावात्; सामान्येनोक्तत्वेऽपि श्रुतिस्मृतिसूत्रपुराणमहाभारतवैखानसपाञ्चरात्रशैवशिल्पज्यौतिषादिषु अधिकारिणां विशिष्य प्रतिपादितत्वात् सर्वशाखाप्रत्ययन्यायेन सामान्यविशेषन्यायेन 'मत्प्रकरणाधीतं सर्वं मदर्थं' मिति न्यायेन प्रकरणसाम्येन, उपास्यदेवतैक्यात् गुणोपसंहारन्यायेन च शौनकादिभिरुक्तार्चनाविधेरपि अत्रैव पर्यवसानं युक्तम् ॥

* इतरसूत्रिणां कथमिति चेत्–स्वाश्रमधर्माचरणेनैव भगवदाराधनफलं सिद्ध्यति । यथोच्यते —

स्मृतिषु — 'बह्वल्पं वा स्वगृह्योक्तं यस्य कर्म प्रचोदितम् ।
तस्य तावति शास्त्रार्थे कृते सर्वं कृतं भवेत् ॥ इति

श्रीविष्णुपुराणे – 'वर्णाश्रमाचारवता पुरुषेण परः पुमान् ।
विष्णुराराध्यते पन्था नान्यस्तत्तोषकारकः' ॥ इति

तथाऽन्यत्र– वर्णाश्रमेषु ये धर्माः शास्त्रोक्ता मुनिसत्तम ।
तेषु तिष्ठन्नरो विष्णुमाराधयति नान्यथा ॥

ये यजन्ति पितॄन् देवान् ब्राह्मणांश्च हुताशनम् ।
सर्वभूतान्तरात्मानं विष्णुमेव यजन्ति ते ॥ इति

पुराणान्तरे– 'अग्निकार्यं जपं स्नानं तपस्स्वाध्यायमेव च ।
तमेवोद्दिश्य देवेशं कुरु नित्यमतन्द्रितः ॥

प्रातरुत्थाय विधिवत् स्नात्वा नित्यं समाहितः ।
यजेत कर्मभिस्तैस्तैः विष्णुं देवादिसंज्ञितम् ॥' इति

---

* मास्तु शूद्राणामधिकारः, वैखानसेतरब्राह्मणानां क्षत्रियाणां वैश्यानां च केन मार्गेण भगवदाराधनमिति पृच्छति इतरसूत्रिणामित्यादिना । प्रश्नस्यास्य पूर्वमेव समाधानमुक्तम् । अधुना प्रकारान्तरेण समाधानमाह–स्वाश्रमेत्यादिना ।

शाण्डिल्यः— ‘प्रवृत्तैश्च निवृत्तैश्च स्वर्गदैर्मोक्षदैरपि ।
आराध्यो भगवानेव वेदधर्मैस्सनातनैः ॥
स एव सर्वथोपास्यो नान्यस्संसारतारकः ।
उभाभ्यां ज्ञानकर्मभ्यामाराध्यो भगवान् हरिः ॥’ इति

शान्तिपर्वणि— ‘स्वयम्भूविहितो धर्मो यो यस्य हि नरेश्वर ।
स तेन क्षपयेत्पापं सम्यगाचरितेन हि ॥’ इति ।

पाद्मे— ‘धर्मान् निजांश्च शास्त्रोक्तान् वर्णधर्मानशेषतः ।
पालयन्तीह ये वैश्या न ते यान्ति यमालयम् ॥’ इति ।

स्मृत्यन्तरे— ‘श्रुतिस्मृतिसदाचारविहितं कर्म यस्सदा ।
स्वस्वधर्मं प्रयत्नेन श्रेयोऽर्थीह समाश्रयेत् ॥’ इति ।

‘नान्यः पन्था विद्यतेऽयनाये’ति ‘ब्राह्मणा विविदषन्ति यज्ञेन दानेन तपसाऽनाशकेन’ इति च श्रुतिरिममर्थं द्रढयति ।

अतः अद्वारकभगवद्यजनाधिकारिभिः श्रीमद्वैखानससूत्रिभिस्साम्यं केषांचिदपि नोपपद्यते इति कृतं पल्लवितेन । एतावता ‘अखिलजगत्कारणभूतेन विखनसा प्रणीतत्वात्’ इति प्रथमो हेतुः निरूपितः ॥

इति प्रथमहेतुनिरूपणम् ।



## अथ द्वितीयहेतुनिरूपणम्



अथास्य वैखानससूत्रस्य सर्वसूत्राणामादित्वं निरूप्यते । तथा हि—

ब्रह्मवैवर्ते— ‘यथा मुनीनां विखना आदिभूत उदाहृतः ।
सूत्राणां तत्प्रणीतन्तु तथा श्रेष्ठतमं स्मृतम्’ ॥ इति ।

पुरातन्त्रे भृगुः— ‘वेदानां व्यासनादर्वाक् प्राग्रूपं मिलितन्तु यत् ।
तान्तु वैखानसीं शाखामिति वेदविदो विदुः’ ॥ इत्यारभ्य
‘वैष्णवं सूत्रमेतद्धि सर्वसिद्धिकरं परम् ।
आद्यत्वात्सर्वसूत्राणां वैष्णवत्वाच्च तत्तु वै ॥
मयाऽनुवर्तितं तद्वत्काश्यपात्रिमरीचिभिः’ ॥ इति ।

स्कान्दे च — ‘वैखानसीं महाशाखां स्वसूत्रे विनियुक्तवान् ।
पद्मभूः परमो धाता तस्मिन्नाराधनत्रयम् ॥
उक्तवान् निगमार्थानामाचारं प्रविभागशः’ ॥ इति ।

सूत्रार्थपर्यालोचनयाऽपि सर्वसूत्रादित्वमस्यावगम्यते। यथा—‘मुखादिन्द्रश्चाग्निश्च’ति भगवन्मुखादग्निसृष्टिः श्रूयते, तथा —

आश्वमेधिके — भगवद्वचनम् ।
‘प्रथमं मन्मुखात्सृष्टो लोकार्थे पचनः प्रभुः ।
सृष्टमात्रो जगत्सर्वमत्तुमैच्छत्पुरा खलु ॥
ततः प्रशमितस्सोऽयमुपासीनो मया पुरा ।
सततोपासनात्सोऽयमौपासन इति स्मृतः’ ॥ इति

एवं परमपुरुषमुखाज्जातस्यौपासनाग्नेः कुण्डविधानादिकमत्रैव सूत्रे प्रतिपादितम् ।

किञ्च नवग्रहमखे सवितृमण्डलस्य चतुरश्रत्वमुच्यते ‘चतुरश्रं वृत्त’ मित्यादिना (सूत्रे)। आदौ चतुरश्रस्य सतो रविमण्डलस्य कालान्तरे वृत्तत्वकल्पनं प्रमाणैरवगम्यते यथा—

विष्णुपुराणे :— 'तेजसश्शमनञ्चास्य विश्वकर्मा चकार ह ।
भ्रमिमारोप्य सूर्यन्तु तस्य तेजोऽवशातनम् ॥
कृतवानष्टमं भागं स व्यशातयदव्ययम् ।
यत्सूर्याद्वैष्णवं तेजश्शातितं विश्वकर्मणा ॥
जाज्वल्यमानमपतत् तद्भूमौ मुनिसत्तम' । इति ।

एवं च सूर्यसावर्णिकमन्वन्तरमारभ्य रविमण्डलस्य वृत्ताकारप्रतीतिः । तदनुसारेण बोधायनादिभिः वृत्ताकारत्वं रविममण्डलस्योक्तम् । ततः पूर्वं चतुरश्रत्वमेव । तदेवास्मिन् सूत्रे प्रतिपादितम् ।

एवं 'वानप्रस्थो वैखानसशास्त्रसमुदाचारो वैखानस' इति वैखानससूत्रमनुस्मृत्य तृतीयाश्रमधर्मान् बोधायनः प्रतिपादयति ।

तथा आग्निवेश्यसूत्रे 'अथातस्सूत्रगणनां व्याख्यास्यामः । बोधायनमापस्तम्बं सत्याषाठं द्राह्यायणमागस्त्यं शाकल्यमाश्वलायनं शाम्भवीयं कात्यायनमिति नवानि पूर्वसूत्राणि । वैखानसं शौनकीयं भारद्वाजमाग्निवेश्यं जैमिनीयं *वाधूलं माध्यंदिनं हिरण्यकेशीयं कौषीतकमिति नवान्यपरसूत्राणि । एवमष्टादशसूत्राण्यष्टादशसूत्रकाराश्च । एतानि चतुर्वेदमूलानि । पूर्वसूत्राणि शारीराणि सामान्यानिभवन्ति । उत्तरसूत्राणि वैखानसादीनि विष्णुसम्बन्धीनि दैविकानी' ति वैखानससूत्रस्यादित्वं वैष्णवत्वञ्चोच्यते ।

अस्य सूत्रस्याधिक्यं च 'ये वैखानससूत्रेण संस्कृतास्तु द्विजातय' इत्यादिना पूर्वमेव प्रतिपादितम् ।

अतः सर्वसूत्राणामादिरिदं सूत्रमिति सिद्धम् । ततः सर्वसूत्रोत्तमत्वञ्चास्योपपद्यते इति निरूपितो द्वितीयो हेतुः ।

**इति द्वितीयहेतुनिरूपणम् ।**

---

*अत्र वाधूलस्थाने माधुर्यमिति हिरण्यकेशीयस्थाने कौण्डिन्यमिति च पाठान्तरमुपलभ्यते ।

# अथ तृतीयहेतुनिरूपणम्

—✱०✱—

अथास्य श्रीवैखानससूत्रस्य सूत्रान्तरापेक्षया वैलक्षण्यापादकं प्रत्यक्ष-श्रुतिमूलकत्वमस्तीति ज्ञापयितुं 'सर्वकर्मसु श्रुतिमार्गानुसारित्वा' दिति तृतीयो हेतुर्निरूप्यते । तथाहि —

शुद्धाचमनविधौ 'यत्त्रिराचामति तेन ऋचः प्रीणाति' इत्यादिश्रुत्यनुसारेण सूत्रे 'ऋग्वेदः प्रीणा' त्वित्यादिना शुद्धाचमनमुक्तम् । ननु - बोधायनेनापि शुद्धाचमनविधिरुक्त इति चेत् सत्यम् । 'आचमनविधिं व्याख्यास्यामः' इत्यारभ्य 'गोकर्णबद्धहस्तेन त्रिराचामेत्, प्रथमं यत्पिबति तेन ऋग्वेदं प्रीणाति यद्द्वितीयं तेन यजुर्वेदं यत्तृतीयं तेन सामवेदं प्रीणाती' त्याचमनेन ऋग्वेदादीनां प्रीतिर्भवतीत्युक्तम् । न तु मन्त्रः ।

श्रुतिस्मृतिसूत्रविहितस्य सन्ध्योपासनस्य प्रधानभूतमर्घ्यप्रदानादिकमत्रैव प्रतिपादितम् । 'प्रातस्सूर्यश्चेत्यादिनाऽऽचम्य आपो हिष्ठादिभिस्तिसृभिः प्रोक्ष्य गायत्र्याऽपोऽभिमन्त्र्य आदित्याभिमुखं विक्षिप्य प्रदक्षिणं करोति' इत्यादि ।

बोधायनेनापि सन्ध्यावन्दनविधिरुक्तः इति चेत् नैवम् । 'अथातस्सन्ध्योपासनविधिं व्याख्यास्यामः तीर्थं गत्वा प्रयतोऽभिषिक्तः प्रयतो वाऽनाभिषिक्तः प्रक्षालितपादपाणिरप आचम्य सुरभिमत्या अब्लिंगाभिर्वारुणीभिः हिरण्यवर्णाभिः पावमानीभिः व्याहृतिभिरन्यैश्च पवित्रैरात्मानं प्रोक्ष्य प्रयतो भवति । अथाप्युदाहरन्ति ।

'आपोऽवगाहनं स्नानं विहितं सार्ववर्णिकम् ।
मन्त्रवत्प्रोक्षणञ्चैव द्विजानामवशिष्यते' ॥ इति

सर्वकर्मणाञ्चैवारम्भेषु प्राक् सन्ध्योपासनाकालञ्चैतेनैव पवित्रसमूहेनात्मानं प्रोक्ष्य प्रयतो भवति । अथाप्युदाहरन्ति । 'दर्भेष्वासीनो दर्भान् धारयमाणः सोदकपाणिना प्रत्यङ्मुखः सावित्रीं सहस्रकृत्वः आवर्तयेत् । प्राणायामशो

वा शतकृत्वः त्रिभिश्च प्राणायामैः ततो (तान्तो) ब्रह्महृदयेन वारुणीभ्यां रात्रिमुपतिष्ठते ' इत्यादिना मार्जनादिकमुक्तम् । प्रधानभूतमर्घ्यप्रदानादिकमनुक्तम् ।

ब्रह्मयज्ञः - तलवकारोपनिषदि 'तस्या वा एष प्रथमः पादः ओं भूस्तत्सवितुर्वरेण्यं ओं भुवः भर्गो देवस्य धीमहि ओं सुवः धियो यो नः प्रचोदयात् इति पच्छः, ओं भूर्भुवस्तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि ओं सुवः धियो यो नः प्रचोदयात् इत्यर्धर्चशः, ओं भूर्भुवस्सुवस्तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् इति समस्तांश्च सावित्रीं जप्त्वेति यथोपदिष्टः, तथाऽत्र सूत्रेऽपि उक्तोऽस्ति ॥

आघारादिषु सर्वमपि श्रौतवत् । अत्र ब्रह्मवरणानन्तरं सोमवरणमप्युक्तमस्ति । 'सोमोऽस्माकं ब्राह्मणानां राजा – सोमराजानो ब्राह्मणा' इति । 'विष्णुश्च ह वै सोमश्च ब्रह्मवाद्यमवदेतां अहं ब्राह्मणानां प्रतिष्ठेति विष्णुरब्रवीत् अहं प्रतिष्ठेति सोमः तौ प्रजापतिं प्रश्नमैतां सोऽब्रवीत् प्रजापतिः छन्दांसि विष्णुमधिगच्छन्ति नक्षत्राणि सोमं तावुभौ ब्रह्मण्याविति सोऽब्रवीत् पूजितौ पूजयन्तौ स्तुतौ स्तुन्वन्तौ प्रियौ प्रियवन्तौ ब्रह्मण्यौ ब्रह्मवित्तौ ब्राह्मणानां प्रतिष्ठातारौ भवत इति यन्मां ब्रह्मणा वक्ष्यन्ति यज्ञेषु सोऽहमिति विष्णुरब्रवीत् तस्माद्विष्णुर्यज्ञो यज्ञो ब्राह्मणानां प्रतिष्ठा इति । विज्ञायते च । 'ब्राह्मणो वै छन्दांसी' त्येतस्मात् ब्राह्मणात् यन्मां ब्राह्मणा वक्ष्यन्ति नक्षत्रेषु तत्राहमिति सोऽब्रवीत्, तस्मात् ब्राह्मणानां सोमो राजेति तस्माद्विज्ञायते च ब्राह्मणो वा अष्टाविंशो नक्षत्राणां तस्य वचः पुष्यमिति तावुभौ ब्रह्मण्यौ ब्रह्मवित्तौ ब्राह्मणानां प्रतिष्ठातारौ ब्राह्मणेषु प्रतिष्ठितौ य एवं ब्राह्मणपुरस्कृतानि कर्माणि करोति यज्ञस्य समृद्ध्या' इति च श्रुतिप्रसिद्धत्वात् ।

एवमत्र शान्तिकपौष्टिकादिषु प्रधानकर्मत्वे १ नवग्रहमखस्य पञ्चाग्निकुण्डविधानमुक्तम् । 'अथ ग्रहशान्तिं व्याख्यास्यामः ग्रहायत्ता लोकयात्रा तस्मादात्मविरुद्धे प्राप्ते ग्रहान् सम्यक् पूजयती' ति ॥

ग्रहशान्तेः कथं प्राधान्यमिति चेदुच्यते । 'उद्यन्तमस्तंयन्तमादित्यमभिध्यायन् कुर्वन् ब्राह्मणो विद्वान् सकलं भद्रमश्नुतेऽसावादित्यो ब्रह्मेति ब्रह्मैव सन् ब्रह्माप्येति य एवं वेद' इति 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' इति 'योऽसौ तपन्नुदेति' इत्यादि 'विष्णुशक्तेरवस्थानं सदाऽऽदित्ये करोति च' इति 'ध्येयस्सदा सवितृमण्डलमध्यवर्ती' त्यादिभिश्च वचनैः यत्प्रतिपादितं सवितृमण्डलमध्यवर्तिनो भगवतो नारायणस्य यजनं तदेवेदमित्यभिप्रायेण सूत्रकारैरस्य ग्रहयज्ञस्य प्राधान्यमुक्तम् । तथान्ते 'अन्यथा महत्तरो दोषो भवतीत्यप्युक्तम् ।

बोधायनश्च — 'अथातो ग्रहातिथ्यबलिकर्मोपहारान् व्याख्यास्यामः —

अश्रद्दधानमशुचिमजपं त्यक्तमङ्गलम् ।
ग्रहा नयन्ति सुव्यक्तं पुरुषं यमसादनम् ॥

ग्रहाणामुग्रचेष्टानां नक्षत्रपथचारिणाम् ।
उपहारान् प्रवक्ष्यामि शान्त्यर्थन्तु यथाविधि ॥

मासि मास्यृतावृतौ चन्द्रग्रहे सूर्यग्रहे विषुवेऽयने शुभाशुभे जन्मनक्षत्रे तद्ग्रहाणामातिथ्यं संवत्सरादपि प्रयुञ्जानः सर्वान् कामानवाप्नोति' इति ग्रहशान्तिकालं निरूप्य

'ग्रहा गावो नरेन्द्राश्च ब्राह्मणाश्च विशेषतः ।
पूजिताः पूजयन्त्येनं निर्दहन्त्यवमानिताः' ॥

इत्यकरणे प्रत्यवायमपि दर्शितवान् ।

तस्मादेव सूत्रकारैः सूर्यचन्द्रौ विना लोकप्रवृत्त्यसम्भवात् सूर्यप्रधानत्वाच्च ग्रहाणां सर्वकर्मणामादौ ग्रहपुरस्कारमुक्त्वा तत्र पञ्चाग्निकुण्डविधानमुपदिश्य प्रधाने सभ्ये विष्णुरूपस्य सवितुः होमः 'सभ्ये सवितु' रिति प्रतिपादितः ।

एवम् — 'नारायण परं ब्रह्म — 'ब्रह्मैव भूतानां ज्येष्ठं तेन कोऽर्हति स्पर्धितुम् — 'अग्निर्वै देवानामवमो विष्णुः परमः तदन्तरेण सर्वा अन्या देवताः'

इत्यादिश्रुत्यनुसारेण 'तस्माद्गृहे परमं विष्णुं प्रतिष्ठाप्य सायं प्रातर्होमान्तेऽर्चयति' इति नारायणपरत्वेन सूत्रान्तरेष्वनुक्तमाराधनविधिमुक्त्वा तत्र 'स वा एष पुरुषः पञ्चधा पञ्चात्मा इत्यादिश्रुत्यनुसारेण पञ्चमूर्तिविधानमप्युक्तम् ॥

आघारादिषु श्रौतवदेवेति प्रत्यक्षसिद्धमिति पूर्वमेवोक्तम् । एवमन्यत्रापि द्रष्टव्यम् ॥

श्रुतिमार्गानुसारित्वे को विशेष इति चेत् – उच्यते । श्रुतिमूलत्वे हि प्रामाण्यातिशयसम्भवः । यथाह —

मनुः — 'वेदस्स्मृतिस्सदाऽऽचारः स्वस्य च प्रियमात्मनः ।
एतच्चतुष्टयं प्राहुः साक्षाद्धर्मस्य लक्षणम् ॥

सर्वन्तु समवेक्ष्यैतदखिलं ज्ञानचक्षुषा ।
श्रुतिप्रामाण्यतो विद्वान् स्वधर्मे निविशेत वै' ॥ इति

श्रीभारते— 'वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः ।
वेदो नारायणस्साक्षात्स्वयम्भूरिति शुश्रुमः' ॥ इति

प्रचेताः — 'अमीमांस्या बहिश्शास्त्रा ये चान्ये वेदवर्जिताः ।
यत्तद्ब्रूयुर्न तत्कुर्याद्वेदाद्धर्मो विधीयते' ॥ इति

स्मृत्यन्तरे— 'धर्मं जिज्ञासमानानां प्रमाणं प्रथमं श्रुतिः ।
द्वितीयं धर्मशास्त्रन्तु तृतीयं लोकसङ्ग्रहः' ॥ इति

एतावता सर्वकर्मसु श्रुतिमार्गानुसारित्व रूपः तृतीयो हेतुर्निरूपितो भवति । तथाच श्रुतिमार्गानुसारित्वादस्य सूत्रस्य सर्वसूत्रोत्तमत्वं सिद्ध्यति इति निरूपितस्तृतीयो हेतुः ।

## इति तृतीयहेतुनिरूपणम् ।

---

# अथ चतुर्थहेतुनिरूपणम्

इदानीं तावत् वैखानससूत्रोक्तधर्मानुष्ठानेन अनन्तस्थिरफलप्राप्तिः सत्कुलीनत्वं फलभूयस्त्वमपि भवतीति ज्ञापयितुं 'समन्त्रकसर्वक्रियाप्रतिपादकत्वा' दिति चतुर्थो हेतुनिरूप्यते । तद्यथा :—

अत्र सूत्र नित्यानुष्ठानविधौ 'इन्द्रोऽहमुभाभ्यामि' त्यारभ्य करप्रक्षालनादीनि समन्त्रकत्वेनोक्तानि । ब्रह्मयज्ञे 'ऋतञ्च सत्यञ्चे' त्यादि विशेषः । पुण्याहे समन्त्रकत्वं स्पष्टम् । सूत्रान्तरेष्वनुक्तमौपासनाग्निकुण्डविधानं प्रतिपादितम् । आघारविधौ समन्त्रकत्वं सिद्धम् । अन्तहोमे तथैव । नान्दीमुखपूर्वकोपनयनादिषु शारीरेषु संस्कारेषु समन्त्रकत्वं प्रत्यक्षम् । स्थालीपाकादिषु 'पूर्वव' दित्यनेन पूर्वं विस्तरेण प्रतिपादितस्याघारविधेः प्रयोगसौकर्यार्थं संक्षेपेण प्रतिपादनम् ।

अपरक्रियायामप्यस्ति समन्त्रकत्वम् । तत्र क्वचित् 'तूष्णी' मित्युक्तत्वात् समन्त्रकत्वं नास्तीति स्वयमेवाशंक्य प्रकारान्तरेण समन्त्रकत्वं प्रत्यपादयत् । तत्र तत्र क्वचित् मन्त्रयोग्यताभावेपि विहितविषये सर्वत्र समन्त्रकत्वमस्तीत्यवगम्यते । सूत्रान्तरेषु विहितविषयेष्वपि समन्त्रकत्वानुक्तेः तेषां समन्त्रकसर्वक्रियात्वं नास्ति । तत्र अपरक्रियायामपि सूत्रान्तरानपेक्षा दृश्यते । **बोधायनेन** अग्निमुखादिषु परिधिपरिस्तरणादिक्षेपणं तूष्णीमेवोक्तम् ।

समन्त्रकत्वेन कर्मणामुक्तौ को विशेष इति चेत् — उच्यते । कर्मणां मन्त्रवत्त्वेहि वीर्यवत्तरत्वं कर्माराध्यभगवत्प्रीणनद्वारा अनन्तस्थिरफलप्राप्तिः सत्कुलीनत्वञ्च भवन्तीति स्मृतिपुराणादिष्ववगम्यते । यथा —

**छान्दोग्ये** — 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवती' ति । तत्रैवं व्याख्यातम् । 'मन्त्रप्रकाशितानि कर्माणि क्रियन्ते नामन्त्रकमस्ति कर्मे' ति ।

**आथर्वणे** — 'ऋग्यजुस्सामाख्या (?) मन्त्रेषु कर्माणि कवयो यान्यपश्यन्निति ।

**आरण्यपर्वणि**:— 'व्रतोपनयनाभ्यां वा उपवासेन वा द्विजः ।
क्रियामन्त्रैश्च संयुक्तो ब्राह्मणस्स्यान्न संशयः' ॥ इति

**तत्रैव** — 'गुणाभावे फलं न्यूनं भवत्यफलमेव वा ।
अनारम्भे तु न फलं न गुणो दृश्यते ह्युत' ॥ इति

**बृहन्नारदीये**— 'अमन्त्रतो हविर्यत्तु हूयते जातवेदसे ।
अपात्रे दीयते यच्च तद्धोरं भोगसाधनम् ॥

हुतं हविश्चाशुचिना दत्तं यत्कर्म यत्कृतम् ।
तत्सर्वं तव भागार्हमधःपातफलप्रद' ॥

इति बलिचक्रवर्तिनं प्रति भगवता वामनेनोक्तम् ।

**बोधायनः** — 'गोभिरश्वैश्च यानैश्च कृष्या राजोपसेवया ।
कुलान्यकुलतां यान्ति यानि हीनानि मन्त्रतः ॥

मन्त्रतस्सुसमृद्धानि कुलान्यल्पधनान्यपि ।
कुलसंख्याञ्च गच्छन्ति कर्षन्ति च महद्यशः' ॥ इति

**मनुरपि**— 'कुविवाहैः क्रियालोपैः वेदानध्ययनेन च ।
कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च ॥

शिल्पेन व्यवहारेण शुद्रापत्यैश्च केवलैः ।
गोभिरश्वैश्च यानैश्च कृष्या राजोपसेवया ॥

अयाज्ययजनाच्चैव नास्तिक्येन च कर्मणा ।
कुलान्यकुलतां यान्ति यानि हीनानि मन्त्रतः ॥

मन्त्रतस्तु समृद्धानि कुलान्यल्पधनानि च ।
कुलसंख्याञ्च गच्छन्ति कर्षन्ति च महद्यशः' ॥ इति

'मन्त्रपूतन्तु यच्छ्राद्ध' मिति सोमोत्पत्तौ स्मर्यते ।

श्रीगीतायाञ्च— 'विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् ।
श्रद्धाविरहितं यज्ञं तामसं परिचक्षते' ॥ इत्युक्तम् ।

यथोपासनं फलमिति च श्रुतिसिद्धं 'यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भव' तीति ।

अतः शारीरेषु संस्कारेषु समन्त्रकसर्वक्रियाप्रतिपादनात् पूर्णत्वं, पूर्णत्वादेव सर्वसूत्रोतमत्वं चास्य सूत्रस्य सिद्धमिति निरूपितः चतुर्थो हेतुः ।

इति चतुर्थहेतुनिरूपणम् ।



## अथ पञ्चमहेतुनिरूपणम्

अथास्य श्रीवैखानसमूत्रस्य सर्वोत्तमत्वे तत्सूत्रोक्तधर्मानुष्ठातॄणामपि सर्वोत्कृष्टत्वे च इतरसूत्रेषु मुख्यत्वेनानुपपन्नं निषेकादिसंस्कारादिमत्त्वमस्य सूत्रस्य मुख्यत एवोपपद्यत इति ज्ञापयितुं निषेकादिसंस्कारादिमत्वादिति पञ्चमो हेतुर्निरूप्यते । यथा —

'अथ निषेकादिसंस्कारान् व्याख्यास्यामः, ऋतुसङ्गमने' त्युपक्रम्य 'पाणिग्रहणा' नीत्यन्तेन शारीरसंस्कारा निषेकसंस्कारपूर्वकत्वेन प्रतिपादिताः ।

ननु — जातकोपनयनविवाहानान्तरभाविनो निषेकस्य कथमादित्वं प्रतिपाद्यते ? । तथा 'ब्राह्मणोऽस्य मुखमासीत्' 'मनसा त्वेव भूतानि पूर्वं दक्षोऽसृजत्तदा' इत्यादिश्रुतिस्मृतिषु निषेकेन विना उत्पत्तिदर्शनाच्च निषेकस्य किमर्थमादित्वं प्रतिपाद्यते ? । जातकस्यादित्वं श्रीभारते चावगम्यते ।

'जातकर्मादिभिर्यैस्तु संस्कारैः संस्कृतश्शुचिः ।
वेदाध्ययनसम्पन्नष्षट्सु कर्मस्ववस्थितः ॥

शौचाचाररतस्सम्यक् भिक्षार्थी च गुरुप्रियः ।
नित्यव्रतस्सत्यपरः स वै ब्राह्मण उच्यते' ॥ इति

एवं हरिवंशे — 'क्व दाराः क्व च संसर्गः क्व च भावविपर्ययः ।
यदियं ब्रह्मणा सृष्टा मनसा मानसी प्रजा ॥

यद्यस्ति तपसो वीर्यं युष्माकं विदितात्मनाम् ।
सृजध्वं मानसान् पुत्रान् प्राजापत्येन कर्मणा ॥

इति निषेकं विनापि उत्पत्तिः श्रूयते इति निषेकस्यादित्वं न सम्भवति इति चेत् — तदसत् । निषेकविरहेऽपि उत्पत्तिस्सम्भवतीत्येतन्नोपपद्यते । तपोबलाद्योगबलाच्च भगवतो नारायणस्य ब्रह्मणो महर्षीणां वा मानसप्रजासृष्टौ शक्तिस्सम्भवति । नन्येषाम् । यथा —

श्रीविष्णुपुराणे— 'सङ्कल्पाद्दर्शनात् स्पर्शात् पूर्वेषाममभवन् प्रजाः ।
तपोविशेषैरिद्धानां तदाऽत्यन्ततपस्विनाम्' ॥

'युगे युगे भवन्त्येते दक्षाद्या मुनिसत्तमाः ।
पुनश्चैव निरुद्ध्यन्ते विद्वांस्तत्र न मुह्यति ॥

कानिष्ठ्यं श्रैष्ठ्यमप्येषां पूर्वं नास्ति द्विजोत्तम ।
तप एव गरीयोऽभूत् प्रभावश्चैव कारणम्' ॥ इति

रुद्रोत्पत्तिरपि निषेकेनेति श्रूयते । शतपथे—'अभूद्वा इदं सर्वं प्रतिष्ठा' इत्यारभ्य 'भूतानाञ्च प्रजापतिस्संवत्सरायादिक्षत भूतानां ग्रहपतिरासीदुषा पत्नी' इत्यादिकमुक्त्वा 'भूतानां पतिः संवत्सर उषसि रेतोऽसिञ्चत् संवत्सरे कुमारोऽजायत तस्य रुद्रस्य नाम करोती'त्यादि ।

निषेकक्रियाप्रकारोपि श्रूयते हि । 'नग्नं कृत्वोरुमुपप्रवर्तयति यदा हि नग्न ऊरुर्भवत्यथ मिथुनीभवतोऽथ रेतस्सिच्यतेऽथ प्रजाः प्रजायन्ते' इति, 'रेतस एव सिक्तस्य बहुशो रूपाणि विकरोति स वै प्रजायते श्वः श्वो भूयान् भवती'ति, 'रेतो मूत्रं विजहाति योनिं प्रविशदिन्द्रियं गर्भो जरायुणा वृतः उल्बं जहाति जन्मना' इति । मुण्डोपनिषदि—पुमान् रेतस्सिञ्चति योषितायां बह्व्यः प्रजास्सृजमानास्सरूपाः' इति । छान्दोग्ये—योषा वा व गौतमाग्नि' रित्यारभ्य 'तस्या उपस्थ एव समिद्यदन्तः करोति तेऽर्चिषा अभिनन्दा विस्फुलिङ्गास्तस्मिन्नग्नौ देवा रेतो जुह्वति तस्या आहुतेर्गर्भस्सम्भवती' ति च ।

श्रीविष्णुपुराणेः– 'प्रजास्सृजेति व्यादिष्टः पूर्वं दक्षस्स्वयम्भुवा ।
यथा ससर्ज भूतानि तथा श्रृणु महामते ॥

मनसा त्वेव भूतानि पूर्वं दक्षोऽसृजत्तदा ।
देवान् ऋषींस्तु गन्धर्वानसुरान् पन्नगांस्तथा ॥

यदाऽस्य सृजमानस्य न व्यवर्धन्त ताः प्रजाः ।
ततस्सञ्चिन्त्य बहुशः सृष्टिहेतोः प्रजापतिः ॥

मैथुनेनैव धर्मेण सिसृक्षुर्विविधाः प्रजाः ।
ततः प्रभृति मैत्रेय प्रजा मैथुनसम्भवाः ॥

भारते :- 'न चैषां मैथुनो धर्मो बभूव भरतर्षभ ! ।
सङ्कल्पादेव चैतेषां गर्भस्समुपपद्यते ॥

तत्र त्रेतायुगे काले संस्पर्शाज्जायते प्रजा ।
न ह्यभून्मैथुनो धर्मस्तेषामपि नराधिप ॥

द्वापरे मैथुनो धर्मः प्रजानामभवन्नृप ।
तथा कलियुगे काले द्वन्द्वमापेदिरे जनाः' ॥ इति

एवं श्रुतिस्मृतिषु सृष्टिकालादारभ्य निषेकादेवोत्पत्तिरिति श्रवणात् निषेकेन विना उत्पादनसामर्थ्याभावाच्च निषेकादिमत्वादित्युक्तम् ।

अत्रापस्तम्बीया एवमाहुः । निषेको नाम गर्भाधानमेव, निषेकगर्भाधानयोः पर्यायत्वात् गर्भाधानातिरेकेण निषेकशब्दस्यार्थान्तरासम्भवाच्च । गर्भाधान-शब्दस्यार्थे विचार्यमाणे 'गर्भोऽस्मिन्नाधीयत' इति व्युत्पत्त्या 'इन्द्रियं वै गर्भ' इति श्रुत्यनुसारेण रेतस्सेचनमेव गर्भाधानमित्यवगतेः निषेकादित्वमस्माक-मप्यस्तीति ।

अत्र बौधायनीयाः प्रत्यवतिष्ठन्ते । 'यदुक्तं निषेको नाम गर्भाधानम् निषेकगर्भाधानयोः पर्यायत्वा' दिति – तदसत् । निषेकगर्भाधानयोः पृथक्त्वेन प्रतिपादनात् पर्यायत्वं न घटते । यथा – 'चतुर्थ्यां स्नातायां निशायामलङ्कृत्य शयनेऽभिमन्त्रयते 'विष्णुर्योनि' मित्युपक्रम्य 'अथैनामुपैति – त्वां पूषन्नि' ति । एवं निषेक उक्तः । अथ – गर्भाधानविधिं व्याख्यास्यामः पूर्वपक्षे पुण्ये नक्षत्रे ब्राह्मणानन्नेन परिविष्य पुण्याहं वाचयित्वा अथ देवयजनप्रभृत्याग्निमुखात्कृत्वा पक्वाज्जुहोति – प्रवेधसे कवये मेध्याये' ति । इति गर्भाधानमुक्तम् । एवं निषेकगर्भाधानयोः पृथक्त्वेन कीर्तनात् निषेक एव गर्भाधानमिति वक्तुमयुक्तम् । किञ्च आपस्तम्बसूत्रे निषेकपूर्वकत्वेनानुक्तत्वात् चत्वारिंशत्संस्कारपरिगणने. अगृहीतत्वाच्च तेषां निषेकाद्यास्संस्कारा न भवन्तीति ।

अत्र आपस्तम्बीया ऊचुः। यद्यस्माकं निषेकाद्याः संस्कारा न भवन्तीत्युच्यते तर्हि युष्माकमपि तथैव, भवत्सूत्रेऽपि 'यतो एतद्धुतः प्रहुत आहुतः शूलगवो बलिहरणं प्रत्यवरोहणमष्टका पार्वणहोम' इतीत्यारभ्य विवाहाद्येवोक्तम् — नतु निषेकादित्वेन। किञ्च सूत्रोपक्रमे संस्कारगणनायामपि निषेकस्तु संस्कारत्वेन वा शब्दमात्रेण वा न प्रतिपादितः। किञ्च 'चतुर्थ्यां स्नातायोमित्यदिना पृथक्त्वेन विधीयमानस्य गर्भाधानस्य लक्षणप्रतिपादनाभावात् विशिष्य कालनिरूपणाभावाच्च (वैखानसे सूत्रे एव निषेकादित्वेन उक्तत्वाच्च वैखानसानामेव निषेकादित्वम्,) आवयेः उभयोरपि निषेकाद्यास्संस्कारा न भवन्ति इति। अयमेव सिद्धान्तः।

तथा च — 'निषेकाद्याः श्मशानान्तास्तेषां वै मन्त्रतः क्रियाः।
गर्भाधानमृतौ पुंसस्सवनं स्पन्दानात्पुरा' ॥

इति याज्ञवल्क्योक्तौ तेषामितिशब्देन 'मुख्ये सम्भवत्यमुख्यकल्पनायोगा' दिति न्यायेन मुख्यत्वेन श्रीवैखानससूत्रे एव निषेकादित्वस्य विद्यमानत्वात् वैखानसा एव परामृश्यन्ते इति — तेषामेव निषेकादित्वम्, इतरेषां निषेकादित्वं न सम्भवति। अपि तु गर्भाधानादित्वमेव। अयमेव याज्ञवल्क्याभिप्रायः।

अथोच्येते। गर्भाधानलक्षणमनुक्तं विशिष्य कालश्चानुक्त इति यदुक्तम् तत्रोच्यते — सर्वेषां कारणभूतेन परमाचार्येण विखनसा प्रणीते श्रीवैखानससूत्रे 'अथ गृहीतगर्भालिङ्गानि शरीराटोपः सक्थिसीदनं द्वेषो भर्तुररुचिराहारे लालाप्रकोपः खरता वाचः स्फुरणं योनेरिति गर्भस्य दैवानुबन्धं ज्ञात्वा आपूर्यमाणपक्षे पुण्ये पुन्नाम्नि शुभे नक्षत्रे' इत्यादिना गर्भाधानलक्षणकालयोरपि वैखानससूत्रे प्रतिपादित्वात्:

'वेदे वैखानसे सूत्रे यो धर्मः परिकीर्तितः।
सर्वैः स धर्मोऽनुष्ठेयो नात्र कार्या विचारणा' ॥

इति भृगुणोक्तत्वात् 'अनुक्तमन्यतो ग्राह्य' मिति न्यायात् विखनसः आचार्यत्वेन भारतादिषु प्रतिपादितत्वाच्च अनुक्तांशेषु वैखानसोक्तप्रकारेण अस्माभिरपि कर्तुं युक्तमिति। एतदेव युक्ततरम्। तथाहि —

आपस्तम्बादीनामाचार्येण बोधायनेन स्वशिष्यान् प्रति 'अथात्र पाकयज्ञानां प्रायश्चित्ति' रित्यारभ्य 'व्याहृतीनां प्रयोगे अयथाकृतं यथाकृतं भवतीत्याचार्या ब्रुवते। तत्राप्युदाहरन्ति' इति, 'चतुर्थीप्रभृत्याषोडशीमुत्तरा-मुत्तरामुपैति प्रजानिःश्रेयसमृतुगमनमित्याचार्याः, सर्वाण्युपगमनानि मन्त्रवन्ति भवन्तीति बोधायनः यच्चादौ यच्चर्ताविति शालीकि' रिति—'अथास्यातिथयो भवन्ति गुरोस्समानवृत्तिर्वैखानसः स्नातको राजा वा धर्मयुक्तः तेषामभ्युत्थायाऽसनं पाद्यमर्हणमर्घ्यं वा प्रयुञ्जीत' इति—'एतमग्निहोत्रं सायमुपक्रमं प्रातरपवर्गमाचार्या ब्रुवते तत्रोदाहरन्ति' इति, 'वैखानसानां न द्रुह्येत्' इत्यादिसूत्रेषु 'आचार्या ब्रुवते' इति निर्दिष्टः आचार्यः वैखानस एवेति वक्तुं युक्तम्—मन्वादीनां शारीर-संस्कारवक्तृत्वाभावात्, बोधायनेन प्रतिपादितस्य वैखानससूत्रे विद्यमानत्वात्, 'गुरोः समानवृत्तिर्वैखानसः' इति बोधायनेनैवोक्तत्वात्, 'विखनसाचार्ये' ति भारतेप्रतिपादितत्वाच्च। तथा च सर्वेषां कारणभूतेन विखनसा प्रणीतत्वात् तत्सूत्रोक्त प्रकारेण सर्वैः कर्तुं युक्तमेव। किञ्च अरण्यादिपात्रलक्षणमपि तत्रैव प्रतिपादितम्।

अन्येऽप्याहुः। 'अस्माकमपि निषेकादित्वं समानमिति। तदप्यसत्। गर्भाधानशब्दस्यार्थे विचार्यमाणे 'योनिं प्रविशदिन्द्रियं गर्भो जरायुणा वृत' इति प्रमाणेन गर्भगोले प्रविष्टस्य रेतस एव गर्भशब्दवाच्यत्वमवगम्यते। नत्वितरस्य केवलरेतसः। तथा—'आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु' इति निषेक-क्रियानन्तरभावित्वात् गर्भाधानस्य, निषेकस्य तु प्रत्यार्तवं कर्तुं व्योम्यतासम्भवात् अधृतरेतसः स्रावदोषप्रसङ्गात् श्रुतिस्मृतिविरोधात् प्रत्यक्षविरोधाच्च निषेक एव गर्भाधानमिति वक्तुमयुक्तम्।

अथ निषेकादित्वे को विशेष इति चेत्—उच्यते। निषेकादिक्रियावतामेव श्रोत्रियत्वं धर्मशास्त्राधिकारित्वं ब्रह्मशरीरित्वञ्च बोधायनादिभिरुक्तम्। यथा—

'निषेके गर्भसंस्कारे जातकर्मक्रियासु च।
विधिवत्संस्कृता मन्त्रैः चीर्णा व्रतसमापनात्॥
श्रोत्रिया इति विज्ञेयाः शाखापाराश्च ये द्विजाः।
विधिवत् गृह्यते पाणिमृतौ चीर्णव्रतास्तुते॥

मन्त्रवत्सम्प्रयोगेन ब्राह्मण्यां गर्भमादधुः ।
निषेकाद्याः श्मशानान्ताः सत्क्रिया ब्राह्मणाश्रिताः ' ॥ इति

याज्ञवल्क्यः — ' निषेकाद्याः श्मशानान्ताः तेषां वै मन्त्रतः क्रियाः ।
गर्भाधानमृतौ पुंसस्सवनं स्पन्दनात्पुरा ' ॥ इति

मनुः — ' निषेकादिश्मशानान्ताः मन्त्रैर्यस्योदिताः क्रियाः ।
तस्य शास्त्रेऽधिकारोऽस्मिन् ज्ञेयो नान्यस्य कस्यचित् ' ॥ इति

अत्र मनुवाक्ये ' यस्य - तस्य - कस्यचित् ' इत्यादिशब्दानां वैयर्थ्यप्रसङ्गात् ' सर्वेषां निषेकादित्वं समानमिति वक्तुमयुक्तम् ।

आश्वमेधिके भगवान्-' वैदिकैः कर्मभिः पुण्यैः निषेकादिर्द्विजन्मनाम् ।
कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च ॥
गार्भैर्होमैर्जातकर्मनामचौलोपनायनैः ।
स्वाध्यायैश्च तपोभिश्च विवाहस्नातकव्रतैः ॥
महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः ' ॥ इति

एवमन्यत्रापि द्रष्टव्यम् ॥

**बोधायनेन**—' यतो एतद्भुत ' मित्यादिना सूत्रादौ विवाहपूर्वकत्वेनोक्तम् । **आपस्तम्बेन** ' अथ कर्माण्याचाराद्यानि गृह्यन्ते ' इत्यारभ्य ' उपनयनं व्याख्यास्याम ' इति । **भारद्वाजसत्याषाढाभ्यामाश्वलायनेन च** ' उक्तानि वैतानिका ' नीत्यारभ्य वैश्वदेवपूर्वकत्वेन । **द्राह्यायणेन** ' अथातो गृह्यकर्माणि, उदगयन-पूर्वपक्ष ' इत्यारभ्य आचारादित्वेन । **कात्यायनश्च** ' अथातो गृह्यस्थालीपाकानां कर्मे ' त्यारभ्य प्रतिपादितवान् । ' अथ निषेकादिसंस्कारान् व्याख्यास्याम ' इत्यारभ्य निषेकपूर्वकत्वेन भगवता विखनसैव प्रतिपादितम् ।

एवं च निषेकपूर्वकत्वेनोक्तत्वादस्य सूत्रस्य सर्वसूत्रोत्तमत्वं एतत्सूत्रोक्त-धर्मानुष्ठानेनैव तत्सूत्रिणां सर्वोत्कृष्टत्वञ्चोपपद्यते इति श्रुतिस्मृतिपुराणादिमुखेन प्रतिपादितमिति निरूपितः पञ्चमो हेतुः ।

**इति पञ्चमहेतुनिरूपणम्**

## अथ षष्ठहेतुनिरूपणम्

अथेदानीं श्रीवैखानससूत्रोक्तधर्मानुष्ठातॄणामेव सर्वेभ्यः श्रेष्ठतमत्वं सूत्रान्तरेष्वनुक्तं श्रुतिसिद्धाष्टादशसंस्कारवत्त्वं क्रियाबाहुल्यञ्च सम्भवतीति ज्ञापयितुं 'अष्टादशसंस्कारप्रतिपादकत्वा' दिति षष्ठो हेतुर्निरूप्यते। तथा हि —

'अथ निषेकादिसंस्कारान् व्याख्यास्यामः ऋतुसङ्गमन-गर्भाधान-पुंसवन-सीमन्त-विष्णुबलि जातकर्मो त्थान-नामकरणा-न्नप्राशन-प्रवासागमन-पिण्डवर्धन-चौलो-पनयन-पारायण-व्रतबन्धविसर्गो-पाकर्म-समावर्तन-पाणिग्रहणानीत्यष्टादश-संस्काराश्शारीराः' इति अष्टादशसंस्काराः सूत्रे प्रतिपादिताः। एते च श्रुतिसिद्धाः। यथा मुण्डोपनिषदि — 'प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म। एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापियन्ति' इति।

अत्र केचिदेवमूचुः 'यज्ञस्यर्त्विजष्षोडश सदस्यस्सप्तदशः यजमानोऽष्टादशः' इति श्रुत्यनुसारेण 'अष्टादशोक्तमवरं येषु कर्म' त्यत्र यजमानादय एव विवक्षिता इति। तदसत् — 'अष्टादशोक्तमवरं कर्मयेषु' इत्युक्तत्वात्। ऋत्विग्यजमानादयो हि यागकर्तारः न तु कर्म। 'येषु' इत्यस्य पदस्य येषु सूत्रेष्वित्यर्थः। अवरं कर्म जातकादयः, स्मार्तकर्मत्वात्। आत्मगुणरहिता यागदयः जात-कर्मादयश्च। अदृढाः प्लवाः संसारोत्तारका न भवन्ति। तथा च अत्र अदृढप्लवत्वेन निन्दिताः संस्काराः यागादयश्च आत्मगुणरहिता एव विवक्षिताः। तत्सहितानां तेषां मोक्षसाधकत्वात्। यथा —

**गौतमधर्मः** — 'यस्य तु खलु चत्वारिंशत्संस्कारा न चाष्टावात्मगुणाः न स ब्रह्मणस्सायुज्यं सालोक्यञ्च गच्छति। यस्य खलु चत्वारिंशत्संस्काराणामेक-देशोप्यष्टावात्मगुणाः अथ स ब्रह्मणस्सायुज्यं सालोक्यञ्च गच्छति गच्छती' ति।

**अष्टावात्मगुणाः** — 'दया समस्तभूतेषु क्षान्तिरनसूया शौचमनायासो मङ्गल्य-मकार्पण्यमस्पृहे' ति। तल्लक्षणानि तु —

'अबन्धौ बन्धुवर्गे वा मित्रे द्वेष्टरि वा तथा।
आपन्ने रक्षणं यत्तु दयैषा परिकीर्तिता॥

बाह्ये वाऽभ्यन्तरे वापि दुःख उत्पादिते परैः ।
न प्रकुप्यति नो हन्ति सा क्षमा परिकीर्तिता ॥

सगुणान् गुणिनो हन्ति (?) स्तौति मन्दगुणानपि ।
नान्यदोषेषु रमते साऽनसूया प्रकीर्तिता ॥

अभक्ष्यपरिहारश्च संसर्गश्चाप्यनिन्दितैः ।
स्वधर्मे च व्यवस्थानं शौचमेतदुदाहृतम् ॥

शरीरं पीड्यते येन सुशुभेनापि कर्मणा ।
अत्यन्तं तन्नकर्तव्यमनायासस्स उच्यते ॥

प्रशस्ताचरणं नित्यमप्रशस्तविसर्जनम् ।
एतद्धि मङ्गलं प्रोक्तमृषिभिस्तत्त्वदर्शिभिः ॥

स्तोकादपि प्रदातव्यमदीनेनान्तरात्मना ।
अहन्यहनि यत्किञ्चिदकार्पण्यं तदुच्यते ॥

यथोत्पन्नेषु सन्तोषः कर्तव्यस्स्वागतैर्धनैः ।
परार्थान् नाभिभाषेत साऽस्पृहा परिकीर्तिता ' ॥ इति

प्रसङ्गादिदमुक्तम् । प्रकृतमनुसरामः ।

अथ अष्टादशस्मृत्युक्तानि अष्टादशपुराणेषूक्तानीति वा मुण्डक श्रुत्यर्थोऽस्तु इति चेत्—तदप्यसत्—स्मृतिपुराणादिषु अष्टादशकर्मेति विशिष्यानुक्तत्वात् । अत्र *'अष्टादशोक्तमवरं कर्म येष्वि' ति सामान्येनोक्तत्वात् तत्रोक्तानां योगादीनामप्यपवर्गप्रापकत्वाभावात् पुनरपि जरामृत्युप्रापकत्वाच्च न स्मृतिपुराणेषूक्तानीति वक्तुं युक्तम् । किञ्च –

पाद्मपुराणे — ' वैष्णवं नारदीयञ्च तथा भागवतं शुभम् ।
गारुडञ्च तथा पाद्मं वाराहं शुभदर्शने! ॥

---

* अत्र अष्टादशपुराणेषु स्मृतिषु चोक्तानां श्रौतस्मार्तकर्मणामेव अवरमिति पर्युदासो न पर्याप्तः । तत्रोक्तयोगादीनामपि केषांचित् जीर्णप्लवत्वस्य सिद्धत्वादिति भावः ।

सात्त्विकानि पुराणानि विज्ञेयानि च षट् पृथक् ।
ब्रह्माण्डं ब्रह्मकैवर्तं मार्कण्डेयं तथैव च ॥

भविष्यद्वामनं ब्राह्मं राजसानि च षड्विधाः ।
मात्स्यं कौर्मं तथा लैङ्गं शैवं स्कान्दं तथैव च ॥

आग्नेयञ्च षडेतानि तामसानि निबोध मे ' ॥ इति

मात्स्ये — सङ्कीर्णास्तामसाश्चैव राजसास्सात्त्विकास्तथा ।
कल्पाश्चतुर्विधाः प्रोक्ताः ब्रह्मणो दिवसाश्च ते ।
यस्मिन् कल्पे तु यत्प्रोक्तं पुराणं ब्रह्मणा पुरा ॥

तस्य तस्य तु माहात्म्यं तेन रूपेण वर्तते ।
सङ्कीर्णेषु सरस्वत्याः पितॄणाञ्च निगद्यते ॥

अग्नेश्शिवस्य माहात्म्यं तामसेषु प्रकीर्त्यते ।
राजसेषु तु माहात्म्यमधिकं ब्रह्मणो विदुः ॥

सात्त्विकेष्वथ कल्पेषु माहात्म्यमधिकं हरेः ।
तेष्वेव योगसंसिद्धा गमिष्यन्ति परां गतिम् ' ॥ इति

पाद्मे — ' वासिष्ठञ्चैव हारीतं व्यासं पाराशरं तथा ।
भारद्वाजं काश्यपीयं स्मृतिषट्कन्तु सात्त्विकम् ॥

मानवं याज्ञवल्क्यञ्च आत्रेयं दाक्ष्यमेव च ।
कात्यायनं वैष्णवञ्च स्मृतिषट्कन्तु राजसम् ॥

गौतमं बार्हस्पत्यञ्च सांवर्तञ्च यमस्मृतिः ।
शाम्भमौशनसञ्चैव स्मृतिषट्कन्तु तामसम् ' ॥ इति

तथा — ' सात्त्विका मोक्षदा ज्ञेया राजसाः स्वर्गदाः स्मृताः ।
तथैव तामसा देवि निरयप्राप्तिहेतवः ' ॥

इत्यादिवचनसिद्धसात्विकपुराणेषु प्रतिपादितानां भगवदाराधनादीनां मोक्षहेतुत्वस्मरणात्, सामान्येन अष्टादशपुराणोक्तकर्मणां जीर्णप्लवसादृश्यं वक्तुं न शक्यम् ।

अन्यथा स्वर्गमोक्षनिरयाणामेकरूपत्वाङ्गीकारापातात् । अतः श्रीमद्वैखानस-सूत्रोक्ताष्टादशसंस्कारा एवेत्यवगन्तव्यम् । बोधायनसूत्रे संस्कारसङ्ख्या न कृता । आपस्तम्बादिनापि पञ्चमहायज्ञानां नित्यहोमस्य च पाकयज्ञत्वेनांगीकारात् एते षोडसंस्कारा इति विविच्यानुक्तत्वात् अपरसंस्कारप्रतिपादनाभावाच्च न तत्रोक्ताः गृहीतुं शक्याः ।

श्रीवैखानसे तु क्रियाबाहुल्यमप्यस्ति । तथा हि । अष्टादशसंस्काराः पाकयज्ञाश्च पृथक्त्वेनोपपदिताः । वर्षवर्धनाद्यास्तु विशेषाः । पञ्चमहायज्ञसहिता द्वाविंशद्यज्ञाः – पञ्चमहायज्ञानामेकत्वम् । अपरश्चाष्टादशव्यतिरिक्त इति ।

क्रियाबाहुल्येन किमाधिक्यमिति चेत् – उच्यते । मुण्डोपनिषदि – 'क्रियावानेष ब्रह्मविदां वरिष्ठः' इति 'क्रियावन्तः श्रोत्रिया ब्रह्मनिष्ठाः स्वयं जुह्वत एकर्षिं श्रद्धयन्तः । तेषामेवैतां ब्रह्मविद्यां वदेत' इति च श्रूयते ।

**बोधायनः** – 'तस्माद्यः कश्चन क्रियावान् सतामनुमताचारस्स श्रोत्रियस्स एव विज्ञेयस्स एव विज्ञेयः' इति। किंच–कर्मभूयस्त्वात् फलभूयस्त्वञ्च 'यथोपासनं फल'मिति न्यायात् सिद्ध्यति। अतः – अष्टादशसंस्कारप्रतिपादकत्वादस्य सूत्रस्य श्रेष्ठत्वं एतत्सूत्रिणां सर्वोत्कृष्टत्वञ्चोपपद्यत इति निरूपितः षष्ठो हेतुः ।

## इति षष्ठहेतुनिरूपणम् ।



# अथ सप्तमहेतुनिरूपणम्

अथ श्रीवैखानससूत्रस्य इतरसूत्रापेक्षाभावात् स्वातन्त्र्यमस्तीति ज्ञापयितुं साङ्गक्रियाकलापवत्त्वादिति सप्तमो हेतुर्निरूप्यते। तथाहि — अत्रसूत्रे अष्टादश-संस्काराः शारीराः प्रसिद्धास्साङ्गाः एव प्रतिपादिताः।

ननु — अङ्कुरार्पणशताभिषेकाग्निद्वयसंसर्गपुत्रपरिग्रहब्रह्ममेधवृषोत्सर्जनादि-प्रतिपादनाभावात् साङ्गक्रियाकलापवत्त्वं नास्तीति चेत् - तदसत्। इयं शङ्का श्रीवैखानससूत्रस्वरूपानभिज्ञत्वकृता। इदं सूत्रमेकादशप्रश्नात्मकम्। अत्र न प्रति-पादितानीति उक्तिः, अतिरिक्तत्वेन गृह्यपरिशिष्टसद्भावाज्ञानात्। गृह्यपरिशिष्ट-सद्भावः कथमवगम्यते इति चेत् - उच्यते।

'अथाङ्कुरार्पणविधिं व्याख्यास्यामः' इत्यारभ्य खण्डद्वयेनाङ्कुरार्पणमुक्तम्।

'सायं स्थण्डिले सहस्रं पिष्टेन सोमरूपाणि करो' तीत्यत्र विशेषेण स्थण्डिलादिप्रतिपादनम्

'शताभिषेकं पूर्वाह्णे पुण्याहं द्विजभोजन' मित्यारभ्य —

सायं गोमयसंलिप्ते स्थण्डिले प्रागनुन्नते।
प्राचीरेखा द्विपञ्चाशत्संख्यया तत्र संलिखेत्॥

उदीचीश्च तथा रेखा द्वात्रिंशत्संख्यया लिखेत्।

इत्यादिना शताभिषेकप्रयोगश्च उक्तः।

तथा 'धौतवस्त्रधारिणौ स्नाता' मित्यारभ्य

'दीपाद्यलङ्कृते गेहे व्रीहीनास्तीर्य तत्र वै।
चर्माभावे कटं वापि तदूर्ध्वे व समास्तरे' दिति॥

'शेषहोमेऽन्तहोमान्ते आसीनौ तत्र चर्मणि।
विसृजामि व्रतञ्चेति तद्व्रतं चर्म सन्त्यजेत्'॥

इत्यादिना अग्निद्वयसंसर्गप्रकारश्च प्रतिपादितः॥

पुत्रपरिग्रहप्रकारश्च —

'त्यागविक्रयदानेषु प्रोक्तेष्वपि ततस्स्मृतौ ।
एकं न दद्यान्नो गृह्यात् न स्त्री भर्त्रननुज्ञया' ॥ इत्यादिना

ब्रह्ममेधविधिस्तु —

'संस्कारो ब्रह्मनिष्ठानां सदाचारवतामपि ।
ब्रह्ममेधोऽतिफलदो न सर्वेषां द्विजन्मनाम्' ॥ इत्यादिना

वृषोत्सर्गविधिस्तु

'वृषोत्सर्गविधिं वक्ष्ये येन प्रेतत्वमोचनम् ।
स्नात्वाऽथ वास्तुहोमान्ते प्रेतत्वस्य विमुक्तये ॥ इत्यादिभिः

एवं अत्रानुक्तानि सर्वाणि गृह्यपरिशिष्टे प्रोक्तानि इति वेदितव्यम् ॥

बोधायनादिभिरप्येते साङ्गा एव प्रतिपादिता इति चेत्—न । 'सति कुड्ये चित्रकर्मे' ति न्यायेन प्रधानकर्माणि प्रतिपादितानि चेत् अङ्गविचारः कर्तव्यः । सन्ध्योपासने अर्घ्यप्रदानादिकमनुक्तम् । वानप्रस्थाश्रमस्वीकरणादिकमपि न प्रतिपादितम् । वानप्रस्थाश्रमस्वीकरणास्वीकरणारण्याहरणपाललक्षणादिषु वैखानससूत्रापेक्षा अस्त्येव । देवताप्रतिष्ठादिकमुक्तं लक्षणमनुक्तम् ।

आपस्तम्बादिभिः सन्ध्योपासनाङ्कुरप्रतिसरदेवताराधनयज्ञोपवीतधारणादिकमप्यनुक्तम् । आपस्तम्बादीनामन्योन्यापेक्षा प्रसिद्धा । अन्योन्यापेक्षा नाम अस्वातन्त्र्यमङ्गहीनवत् ।

मनुः — 'यद्यत्परवशं कर्म तत्तद्यत्नेन वर्जयेत् ।
सर्वं परवशं दुःखं सर्वमात्मवशं सुखम् ।
एतद्विद्यात्समासेन लक्षणं सुखदुःखयोः' ॥ इति

अनेन अनन्तस्थिरफलप्राप्तिर्दर्शिता । अतः सूत्रान्तरनैरपेक्ष्यात् सर्वसूत्रोत्तमत्वं स्वातन्त्र्यञ्च घटत इति निरूपितस्सप्तमो हेतुः ।

## इति सप्तमहेतुनिरूपणम् ।

# अथ अष्टमहेतुनिरूपणम्



इदानीं तावत् श्रुतिस्मृतिपुराणादिभिः सर्वोत्तरत्वेनावगतस्य श्रीवैखानससूत्रस्य अखिलशिष्टपरिगृहीतत्वमस्तीति दर्शयितुं मन्वाद्यैः स्वीकृतत्वादिति अष्टमो हेतुः निरूप्यते । तथाहि —

**मनुः** — 'अतः परं प्रवक्ष्यामि धर्मं वैखानसाश्रयम् । इत्यारभ्य
पुष्पमूलफलैर्वापि केवलैर्वर्तयेत्सदा ।
कालपक्वैः स्वयं शीर्णैर्वैखानसमते स्थितः ॥ इति

**व्यासः** — 'मूलैरेके फलैरेके पुष्पैरेके दृढव्रताः ।
वर्तयन्ति यथान्यायं वैखानसमते स्थिताः' ॥ इति ।

**गौतमः** — 'श्रामणकेनाग्निमाधायाऽग्राम्यभोजी । इति ।

**यमः** — 'श्रामणकेन विधानेन सायं प्रातरुपस्पृशेत्' ॥ इति ।

**शङ्खलिखितौ** — 'श्रामणकेनाग्निमाधाय काले कुरुविन्द - वेणु - श्यामाकनीवारादिभिर्वर्तयेत्' इति ।

**हारीतः** — 'वानप्रस्थो ग्राम्या ओषधीः परिवर्जयेत् । त्रेताग्नीनां स्थाने श्रामणकं वाऽग्निमाधाय वल्कलशाणचर्मकुशमुञ्जविदलकं वा वसानो वैखानसप्रोक्तेन विधिना वानप्रस्थो विखना भवति । अनुज्ञायिकोऽनुप्रस्थायिक' श्चेति ।

**वसिष्ठः** — 'श्रामणकेनाग्निमाधायाऽहिताग्निर्वृक्षमूलिकः' । इति ।

**बोधायनः** — 'वानप्रस्थो वैखानसशास्त्रसमुदाचार' इति ।

**आपस्तम्बः** — 'एकाग्निरनिकेतः स्या' दिति । अस्य **धर्मकपर्दी**—'गार्हपत्यादीनां त्रेताग्नीनां स्थाने यस्यैकोऽग्निः औपासन एव—वैखानससूत्रे दृष्टत्वात् । पाणिग्रहणनिमित्तत्वाद्वौपासनस्य ।

जैमिनीयसूत्रे सौमिकचातुर्मास्यप्रकरणे । 'भारद्वाजपूर्वं यथा वैखानसपूर्वं पञ्च' मेति (?)

अत्रोभयत्र अत्रिव्याख्यानम् — ‘षोडशर्त्विजां मध्ये भारद्वाजसूत्रिणं प्रस्तोतारं वैखानससूत्रिणं प्रतिहर्तारं वरयेत्’ इति ।

**कपिञ्जलसंहितायम् :—**

‘याजनाध्यापनयुतः शिष्यानुग्रहकारकः ।
आचार्य इति विज्ञेयो मन्त्रतन्त्रपरायणः ॥

आश्रमे वा वने वापि पुत्रदारसमाहितः ।
अष्टाक्षरपरो नित्यं स वैखानस उच्यते ॥

ग्राम्यधर्माणि सर्वाणि वर्जयेद्वनवासकः ।
वल्कलाजिनसंवीतः स मौनीत्यभिधीयते’ ॥ इति

**पाद्मे द्वादशाक्षरप्रकरणे :—**

.... .... .... .... पुत्रदारसमन्वितः ।
वने वा पत्तने वापि जपेद्वैखानसः शुचिः ॥
वियुक्तः पुत्रदाराद्यैः स्वयमेव वने स्थितः’ ॥ इति

अन्यैरप्येवमेवोक्तम् ।

अखिलशिष्टपरिग्रहे को विशेष इति चेत् — अखिलशिष्टपरिग्रहात् प्रामाण्यातिशयोऽस्तीत्यवगम्यते ।

**आश्वमेधिके —** ‘धर्मं जिज्ञासमानानां प्रमाणं प्रथमं श्रुतिः ।
द्वितीयं धर्मशास्त्रं हि तृतीयं लोकसङ्ग्रहः’ ॥ इति

**मनुः —** ‘विद्वद्भिस्सेवितं सम्यक् नित्यमद्वेषरागिभिः ।
हृदयेनाऽभ्यनुज्ञातो यो धर्मस्तं निबोधत’ ॥ इति

**याज्ञवल्क्यः —** ‘चत्वारो वेदधर्मज्ञाः पर्षत् त्रैविद्यमेव वा ।
सा ब्रूते यं स धर्मः स्यादेको वाऽध्यात्मवित्तमः’ ॥ इति

‘वेदाः प्रमाणं स्मृतयः प्रमाणं धर्मार्थयुक्तं वचनं प्रमाणम् ।
यस्य प्रमाणं न भवेत्प्रमाणं कस्तस्य कुर्याद्वचनं प्रमाणम् ॥

न यस्य वेदा न च धर्मशास्त्रं
न वृद्धवाक्यं च भवेत्प्रमाणम् ।
सोऽधर्मकृद्दुष्टहतो दुरात्मा
स्वात्माऽपि तस्यैव भवेत्प्रमाणम् (?) ॥

स्मृतेरपि वेदमूलत्वे त्रेधा निर्वाहः कृतः । नित्यानुमेयश्रुतिमूलत्वं प्राभाकराः । 'तेषामुत्सन्नाः पाठाः प्रयोगादनुमीयन्त' इत्युत्सन्नशाखामूलत्वमापस्तम्बाद्याः । तत्प्राभाकरादिभिः दूषितं भाष्यकारानभिमतञ्च । प्राभाकरपक्षेपि नित्यानुमेयश्रुतिमूलत्वे अक्षरशो वा आनुपूर्वीविशेषविशिष्टत्वेन वा । अक्षरश इति यद्युच्यते तर्हि कटतपयादीनामपि नित्यानुमेयश्रुतिमूलत्वात् स्मृतित्वं स्यात् । आनुपूर्वीविशेषविशिष्टत्वेनेति चेत् नित्यानुमेयत्वं भज्येतेति । उत्सन्नशाखामूलत्वमिति पक्षे शाखासु तत्रतत्रोत्सन्ना वा उतैका शाखा उत्सन्ना वा । तत्रतत्रेति चेत् न – पदक्रमादिरूपेणाधीयमानत्वादुत्सन्नशाखामूलत्वं न घटते एकैवोत्सन्नेति चेत् - न - विष्णोरंशावतारस्य तपोयोगबलोपेतस्य सर्ववेदसाक्षात्कारवतो व्यासस्य अज्ञाताशासंभवेन एकस्यापि शिष्यस्य तदध्यापनसामर्थ्यसम्भवात् तथा वक्तुमयुक्तत्वादिति । अतो विप्रकीर्णशाखामूलत्वं वक्तव्यम् । तथोक्तम् —

'दुर्बोधा वैदिकाश्शब्दाः प्रकीर्णत्वाच्च ये खिलाः ।
तदज्ञैस्त एव स्पष्टार्थाः स्मृतितन्त्रे प्रतिष्ठिताः' ॥ इति

अतः श्रुतिस्मृतिपुराणादिभिः प्रामाणत्वेनावगतस्य श्रीवैखानससूत्रस्य अखिलशिष्टपरिग्रहात् प्रामाण्यातिशयोऽस्तीति 'मन्वाद्यैस्स्वीकृतत्वा' दिति निरूपितोऽष्टमो हेतुः ।

इत्यष्टमहेतुनिरूपणम् ।

# अथ नवमहेतुनिरूपणम्



अथेदानीमापस्तम्बादिसूत्रान्तरनिष्ठानां सूत्रकारादारभ्य अविच्छिन्नत्वेन परम्परया एकान्तित्वं नास्तीति ज्ञापयितुं वैखानससूत्रिणामेव तत् सम्भवतीति दर्शयितुं

'प्रत्यक्षमनुमानञ्च शास्त्रञ्च विविधागमम् ।
त्रयं सुविदितं ज्ञेयं धर्मसिद्धिमभीप्सता' ॥

इति मनुस्मरणानुसारेण प्रत्यक्षादिभिरवगमयितुञ्च अखिलजगदेककारणभूत-श्रीमन्नारायणैकपरत्वादिति नवमो हेतुर्निरूप्यते ।

अस्य सूत्रस्य नारायणैकपरत्वे --

'उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिंगं तात्पर्यनिर्णये ॥

इत्युक्तानि षड्विधानि तात्पर्यलिंगानि सन्ति । तथा हि ---

आद्यप्रश्ने प्रथमखण्डे 'नारायणपरायण' इत्युक्तम् । एवं 'सदाऽऽध्यात्मरतो ध्यानयोगी नारायणपरं ब्रह्म पश्यन् धारणां धारयेदक्षरं परं ब्रह्माप्नोति--'नारायणपरं ब्रह्मेति श्रुतिः' इत्युपसंहारे सन्न्यासविधौ प्रतिपादितम् । सन्ध्योपासनादि--पुण्याहाघारान्तहोम--नान्दीमुखोपनयन--पाणिग्रहणपर्यन्तेषु अन्तकर्मणि च अतोदेवादिवैष्णवा मन्त्राः विनियुक्ताः । एवं आघारप्रकरणे 'शरोऽङ्गारेऽग्नौ जुहुया' दिति सूत्रेण इध्माधानं तैत्तिरीयब्राह्मणवाक्यानुसारेण परब्रह्माग्नौ विहितम् । परब्रह्मशब्दाभिधेयश्च भगवान् नारायण एवेति वेदान्तेषु निर्णीतम् । तथाहि:---

'सदेव सोम्येदमग्र आसीत्, एकमेवाद्वितीयम्' इत्यादिभिः प्रतिपन्नस्य अभिन्ननिमित्तोपादानकारणस्य 'यतो वा इमानि भूतानि जायन्ते--तद्ब्रह्मे' त्यादिनाजगत्कारणत्वं ब्रह्मशब्दवाच्यत्वञ्च प्रतिपाद्यते । तस्य 'सत्यं ज्ञानमनन्तं ब्रह्मे' त्यादिना शोधकवाक्येन स्वरूपं निरूप्यते । सत्यत्वादिविशिष्टस्य तस्य

'आनन्दो ब्रह्म' इति निरतिशयानन्दरूपत्वं प्रतिपाद्यते। एतादृशब्रह्मरूपं वस्तु 'नारायणपरं ब्रह्म' 'तत्त्वं नारायणः परः' 'एको ह वै नारायण आसीत्' 'अपहतपाप्मा दिव्यो देव एको नारायणः' इत्यादिवाक्यैः श्रीमन्नारायण एवेति नियम्यते। एवञ्च 'अध्यूहन्ते' इति तैत्तिरीयवाक्यशेषस्थब्रह्मशब्दोऽपि नारायणपर एवेति प्रकृतसूत्रोक्ताधानमपि नारायणपरमेव।

एवमाधाने—'ध्यायन्नारायणमुपोष्य' इति, अग्निहोत्रे—भूमानं विष्णुं ध्यायेत्' इति, दर्शपूर्णमासे—'उदित आदित्ये ध्यायन्नारायणं 'विष्णोर्नुक' मिति जपित्वा' इति, सोमे च—'नारायणपरायणस्तूष्णीमास्ते' इति च सर्वत्रापि अभ्यासेन नारायणपरत्वेनोक्तत्वात् इदं सूत्रं नारायणपरमेव।

ननु—अत्र सूत्रे प्रवासागमने आश्वयुज्यां च 'प्रदक्षिणमर्चनं प्रणामो गृहस्य'—'भवं देवमावाह्य' इत्युक्तत्वात् सर्वत्र नारायपरत्वमस्येति कथं वक्तुं शक्यते इति चेत्—उच्यते। 'अङ्गान्यन्या देवता' इति अङ्गभूतानां ब्रह्म-रुद्रादीनामपि यज्ञांशभाक्त्वं भगवत्प्रसादलब्धमिति भारतादिनाऽवगम्यते—तथाहि :—

'ततस्ते च सुरास्सर्वे ब्रह्मा ते च महर्षयः।
वेददृष्टेन विधिना वैष्णवं क्रतुमारभन्॥

तस्मिन् सत्रे तथा ब्रह्मा स्वयं भागमकल्पयत्।
देवा महार्षयश्चैव सर्वे भागानकल्पयन्॥

ते कार्तयुगधर्माणो भागाः परमसंस्कृताः।
प्रापुरादित्यवर्णं तं पुरुषं तमसः परम्॥

श्रीभगवान्— 'येन यः कल्पितो भागः स तथा समुपागतः।
प्रीतोऽहं प्रदिशाम्यद्य फलमावृत्तिलक्षणम्॥

यज्ञीये चापि यक्ष्यन्ति सर्वलोकेषु वै सुराः।
कल्पयिष्यन्ति वो भागांस्ते नरा वेदकल्पितान्॥

योो मे यथा कल्पितवान् भागमस्मिन् महाक्रतौ ।
स महायज्ञभागार्हो वेदसूत्रे मया कृतः' ॥ इति

श्रीभागवते — 'अहं भवो दक्षभृगुप्रधानाः प्रजेशभूतेशसुरेशमुख्याः ।
सर्वे वयं यन्नियमं प्रपन्ना मूर्ध्नाऽर्पितं लोकधुरं वहामः' ॥ इति

एवं च भवादीनामपि नारायणाङ्गत्वेन पूजार्हत्वावगमात्

'अङ्गभावेन देवानामर्चनं न निषिद्ध्यते ।
स्वतन्त्रबुद्ध्या कुर्वन् हि ब्राह्मणो नरकं व्रजेत् ॥

ब्रह्माणमिन्द्रमग्निं वा हरेरावरणं विना ।
यस्तु सम्पूजयेद्विप्रः स पाषण्डी भवेद्ध्रुवम्' ॥

इत्यादिना अङ्गभावेन तेषामर्चनं कुर्वतो दोषाभावस्मरणाच्च सूत्रे तथोक्तिः ।

तथा — 'अन्यत्र त्वां समारोप्य यद्युपासा विधीयते ।
सा वृत्तिः प्रच्युता प्रोक्ता तव तत्त्वं तथैव च ॥

त्वयि सर्वं समारोप्य यद्युपासा विधीयते ।
सा वृत्तिः सकला ज्ञेया तव तत्त्वं तवैव हि' ॥

इति ज्ञानकाण्डे कश्यपेनोपासनस्वरूपभेदप्रदर्शनात् 'विष्णोर्नित्यार्चा सर्वदेवार्चा भवती'ति मुख्यत्वेन सूत्रे प्रतिपादितत्वात् प्रच्युतिफलप्रदत्वाभावाच्च तेषामङ्गभावेन पूजनं युज्यते । आपस्तम्बादिसूत्रेषु सर्वसंस्काराणां सद्वारकत्वेन प्रतिपादनात् नारायणैकपरत्वेन सकृदपि स्मरणाभावात् तेषां न नारायणैकपरत्वम् ।

ननु — बोधायनेनापि 'अथातो विष्णुप्रतिष्ठाकल्पं व्याख्यास्यामो द्वादश्यामेकादश्यां श्रोणायां वा यानि चान्यानि शुभनक्षत्राणि' इत्यारभ्य 'द्वादशनामभिः अमुष्मै स्वाहा अमुष्मै स्वाहा' इत्यादिना होमादिकमुक्त्वा

'त्वामेकमाद्यं पुरुषं पुरातनं
नारायणं विश्वसृजं यजामहे ।
त्वमेव यज्ञो विहितो विधेयः
त्वमात्मनाऽत्मन् प्रतिगृह्णीष्व हव्यम्' ॥

इति नारायणैकपरत्वेन प्रतिपादनात् कथं तेषां नारायणैकपरत्वं नास्तीत्युच्यत इति चेत्- सत्यम् । आपस्तम्बादीनामाचार्येणानेन बोधायनेन नारायणैकपरत्वेन प्रतिष्ठादिकमनुक्तम् । किन्तु । 'अथ रुद्रप्रतिष्ठाविधिं व्याख्यास्यामः चतुर्थ्या-मष्टम्यामार्द्रायामपभरण्यां वा यानि चान्यानि शुभनक्षत्राणि' इति प्रकृत्य 'भवाय देवाय स्वाहे'त्यादिभिः 'भवस्य देवस्य पत्न्यै स्वा' हेत्यादिभिश्च होमादिकमुक्त्वा

'त्वामेकमाद्यं पुरुषं पुरातनं
रुद्रं शिवं विश्वसृजं यजामहे।
त्वमेव यज्ञो विहितो विधेयस्त्वमा-
त्मनाऽऽत्मन् प्रतिगृह्णीष्व हव्य' ॥

इति शिवप्रतिष्ठा, एवं 'अथातो महादेवस्याहरहः परिचर्याविधिं व्याख्यास्यामः' इत्यारभ्य 'महादेवमावाहयेत्—आयातु भगवान् महादेव' इति पृथक्त्वेन रुद्रपूजा च प्रतिपादिता। तथा—अन्यत्र 'अथातोऽर्धमासेऽर्धमासेऽष्टम्यां ब्राह्मणाः स्त्रियश्चाहुः' इत्यारभ्य 'अथ प्रदोषे रुद्रं विरूपाक्षं रूपनीकं समुतं सपार्षद' मित्यादिभिः रुद्रावाहनमुक्तम् । एवं 'आदित्यमम्बिकां विष्णुं गणनाथं महेश्वर' मिति पञ्चपूजा च । अतः बोधायनसूत्रं नारायणैकपरं न भवति ।

अथ आपस्तम्बादयः किं नारायणैकपराः — उत रुद्रपराः आहोस्वित् नानादेवतापराः ? । नारायणैकपरा इति चेन्न । जातिकुलाचारादिष्वागोत्र-प्रथमादारभ्य -

श्वश्रूरस्य दिगम्बरव्रतवती सम्बन्धिनस्सौगताः
माता चास्य पिता च पाशुपतिनौ वैशेषिको देशिकः ।
भ्राता तिष्ठति साङ्ख्ययोगसमये चार्वाकशिष्यस्सखा
मिथ्याचारसमाह्वयस्स्वयमसौ विप्लाविको वैदिकः ॥

इत्युक्तरीत्या एतेषां शैवपाशुपतवैष्णवाद्याकारेण विद्यमानत्वात् आपस्तम्बादि सूत्राण्यपि नारायणैकपराणि न भवन्ति । भगवतो नारायणस्य समाराधनविधिप्रति-पादनाभावाच्च । नारायणैकपरश्चेदापस्तम्बादिसूत्रं तर्हि तत्सूत्रोक्तधर्मानुष्ठातारः

सर्वेऽपि नारायणैकपरा एव स्युः । न च तथा दृश्यते । पांचरात्राद्युक्तमार्गेण वैष्णवत्वसम्पादने ‘स्वसूत्रे विद्यमाने तु’ – ‘स्वसूत्रस्य परित्यागात्’ – ‘यस्स्वधर्मं परित्यज्य’ – ‘विधर्मः परधर्मश्च’ – ‘श्रेयान् स्वधर्मो विगुणः’ इत्यादि-वचनप्रतिपादितस्वसूत्रपरित्यागपरधर्मस्वीकारशाखारण्डत्वादिदोषाः प्रसज्येरन् । ‘स्वशास्त्रनिर्णये सत्ये सत्याः स्युर्लोकनिर्णयाः’ इति स्वसूत्रस्य प्रामाण्यबुद्धिश्च तेषामवर्जनीया ।

वैखानसानां सूत्रकारादारभ्य अविच्छिन्नत्वेन श्रीमन्नारायणैकपरत्वे-नाराधनादिकं प्रत्यक्षसिद्धम् । तथा च सूत्रम् – ‘गृहे देवायतने वा भक्त्या भगवन्तं नारायणमर्चयेत्तद्विष्णोः परमं पदं गच्छतीति विज्ञायते’ इति । इतरेष्वापस्तम्बादिषु पितृ पितामह मातुल मातामह पुत्र पौत्र भ्रातृ सम्बन्धिषु केचिच्छैवाः केचित् पाशुपताः केचिच्छाक्ताः नानादेवतापराश्चेत्येवमाकारेण दृश्यन्ते ॥

‘जन्मान्तरसहस्रेषु तपोज्ञानसमाधिभिः ।
नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते ॥

इति केषाञ्चित् स्वकृतपूर्वपुण्यविशेषान्नारायणपरत्वसम्भवेऽपि स्वसूत्रकारमारभ्य स्वपर्यन्तमविच्छिन्नत्वेन तदस्तीति वक्तुं न शक्यते । अतः —

‘नानाकामहतज्ञाना नानादैवतयाजिनः ।
नरा भगवदैकान्त्ये न स्थास्यन्ति कलौ युगे ॥

आगमादनुमानाच्च प्रत्यक्षादुपपत्तितः ।
परीक्ष्य निपुणं बुद्ध्या श्रद्धातव्यं विपश्चिता’ ॥

इति वायुपुराणादिवचनादागमादिभिर्निपुणं परीक्ष्य निर्णीत एवार्थः विपश्चिद्भि अनुष्ठेयः ।

ननु-किमर्थं नारायणैकपरत्वेन सूत्रं प्रणीतमिति चेत् - उच्यते । नारायण अखिलजगदेककारणत्वात् परंब्रह्म परमात्मादिशब्दवाच्यत्वात् अपवर्गादिफलप्र त्वात् समाभ्यधिकरहितत्वाच्च नारायणैकपरत्वेन प्रणीतम् । अत्र–‘नारायणाद्ब्र

जायते । नारायणादिन्द्रो जायते । नारायणाद्द्वादशादित्याः रुद्रावसवस्सर्वाणि-च भूतानि । नारायणादेव समुत्पद्यन्ते । नारायणात्प्रलीयन्ते ' इत्याद्याः ' नारायणपरं ब्र ' ह्मेत्यारभ्य ' अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ' इत्याद्याः, ' तमेवं विद्वानमृत इह भवति । नान्यः पन्था अयनाय विद्यते ' ' उताऽमृतत्वस्येशानः ' इत्याद्याः, ' न तस्य कार्यं करणञ्च विद्यते ' न तत्समश्चाभ्यधिकश्च दृश्यते ' ' पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबल क्रिया च ' इत्याद्याः, ' एष सर्वभूतान्तरात्मा दिव्यो देव एको नारायणः ' इत्याद्याः, ' एको ह वै नारायण आसीत् ' इत्याद्याः, ' यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्मे ' ति ' पतिं विश्वस्यात्मेश्वर ' मित्याद्याश्च श्रुतयः प्रमाणम् ।

ननु - श्वेताश्वतरे – ' एको हि रुद्रो न द्वितीयाय तस्थे – य इमान् लोकानीशत ईशनीभिः – विश्वाधिको रुद्रो महर्षिः – हिरण्यगर्भं जनयामास पूर्वं स नो बुद्ध्या शुभया संयुनक्तु – ' उमासहायं परमं महेश्वरं त्रियम्बकं नीलकण्ठं प्रशान्तम् । ज्ञात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात् ' इत्यादिभिः रुद्रस्यापि जगत्कारणत्वादि प्रतिपाद्यत इति चेत् – उच्यते । आपाततो रुद्रपरत्वेनावगम्यमानेऽपि विचार्यमाणे नारायणपरत्वमेव । एक एव रुद्र इत्यनु-पपन्नम् । ' सहस्राणि सहस्रशो ये रुद्रा ' इत्यादिश्रुतिभिः ' एकादशरुद्रा ' इत्यादिभिश्च अनेकरुद्राणां विद्यमानत्वावगमात् क्रूरस्य रुद्रशब्दवाच्यस्य ' बृहत्त्वात् बृंहणत्वाच्च तद्ब्रह्मेति प्रकीर्तित'मिति ब्रह्मशब्दवाच्यत्वासम्भवात्, 'तेषामसुराणां तिस्रः पुर आस' न्नित्यारभ्य ' इदमसिप्यतीति रुद्रमब्रुवन् रुद्रो वै क्रूरस्सोऽस्यत्विति, सोऽब्रवीद्वरं वृणै अहमेव पशूनामधिपतिरसानीति तस्माद्रुद्रः पशूनामधिपतिरिति ' ' रुद्रो वा अकामयत पशुमान् स्यामिति–'माता रुद्राणां दुहिता वसूना ' मिति । पशुपतित्वया-चकत्वात् । ' नैव देवो न मर्त्यः । न राजा वरुणो विभुः । नाग्निर्नेन्द्रो न पवमानः । मातृकच्च न विद्यते – इत्यारभ्य ' एतद्रुद्रस्य धनुः । रुद्रस्यत्वेव धनुरार्त्निः । शिर उत्पिपेष । स प्रवर्ग्योऽभवत् । तस्माद्यस्सप्रवर्ग्येण यज्ञेन यजते । रुद्रस्य स शिरः प्रतिदधाति । नैनं रुद्र आरुको भवति ' इत्युक्तत्वाच्च रुद्रस्य ब्रह्मशब्दवाच्यत्वं न

सम्भवति। रुद्र हर पशुपति नीलग्रीव शितिकण्ठ भव शर्व कपर्दीत्यादीनामेकत्वेन श्रूयमाणानामेकत्वं न सम्भवति। ईश्वरमहेश्वरपरममहेश्वर इति परममहेश्वरशब्द-श्रवणात्। 'शिवएको ध्येयः शिवश्शङ्करः सर्वमन्यत्परित्यज्ये' त्यादिना शिवशब्द-वाच्यादधिकत्वेन शिव तरशिवतमशब्दवाच्यस्य विद्यमानत्वात्। शम्भुशब्दस्य विश्वशम्भुत्वश्रवणात् ईशानस्य जगदीशानत्वश्रवणात् महादेवस्य 'तमीश्वराणां परमं महेश्वरं तं देवतानां परमञ्च दैवतम्' इति श्रवणाच्च रुद्रादीनां परंब्रह्मशब्द-वाच्यत्वं न सम्भवति।

ननु – श्वेताश्वतरे – उमासहयविशेषित परममहेश्वरशब्दवाच्यस्य रुद्रत्व-सम्भवात् परंब्रह्म शब्दवाच्यत्वं तस्य सम्भवतीति चेत् – न। परममहेश्वरशब्दस्य उमासहायमित्यत्र रुद्रादिष्वनुपपन्नत्वात्। उकारस्त्ववधारणार्थः। उ - मा सहायं लक्ष्मीसहायं परमं महेश्वरमेव त्रिलोचनत्वादिविशेषणविशिष्टं लक्ष्मीनरसिंहं ध्यात्वेत्यर्थः। यद्वा। देवमनुष्याद्यपेक्षया परममहेश्वरत्वात्,

'सृष्टिस्थित्यन्तकरणीं ब्रह्मविष्णुशिवात्मिकाम्।<br>
स संज्ञां याति भगवान् एक एव जनार्दनः'॥

इति भगवच्छरीरभूतत्वाच्च रुद्रस्य परममहेश्वरत्वम्। एवं भूतं रुद्रं ध्यात्वा मुनिर्मननशीलस्सन् भूतयोनिं सर्वकारणकारणं समस्तरक्षकं तमसः परस्तात् गच्छति। 'आदित्यवर्णं तमसः परस्ता'दित्यादिभिः तमसः पारवर्तिनं प्रकृतेः परं परमात्मानं नारायणं गच्छति – प्राप्नोति इत्यर्थः।

किञ्च–अत्र 'सनो देवः शुभया स्मृत्या संयुनक्तु। इत्यनेन

'आरोग्यं भास्करादिच्छेत् श्रियमिच्छेद्धुताशनात्।<br>
शङ्करात् ज्ञानमन्विच्छेत् मोक्षमिच्छेज्जनार्दनात्॥

इति ज्ञानप्रदत्वात् शङ्करोपासनमुच्यते। अतो भगवता नारायणेन साम्यं ब्रह्मरुद्रादीनां नोपपद्यते।

भारते: — 'ये तु सामान्यभावेन मन्यन्ते पुरुषोत्तमम्।<br>
ते वै पाषण्डिनो ज्ञेयास्सर्वकर्मबहिष्कृताः॥

यस्तु नारायणं देवं सामान्येनाभिमन्यते ।
स याति नरकं घोरं यावच्चन्द्रादिवाकरम् ॥
यो महाद्विष्णुमन्येन हीनदेवेन दुर्मतिः ।
साधारणं सकृद् ब्रूते सोऽन्त्यजो नान्त्यजोऽत्यजः ॥ इति

वाराहे: — ‘अन्यदेवसमं ये तु मन्यन्ते मां नराधमाः ।
चण्डालतां व्रजन्त्याशु जन्मानि नव पञ्च च’ ॥ इति

श्रीभागवते — ‘यस्तु नारायणं देवं समत्वेनावमन्यन्ते ।
सकृत्तेनावमानेन नरकान्नातिवर्तते ॥
अस्मादन्यं परत्वेन चिन्तयानो ह्यचेतनः ।
स पाषाण्डीति विज्ञेयस्सर्वकर्मबहिष्कृतः ॥ इति ।

कौर्मः — ‘येऽन्यं देवं परत्वेन वदन्त्यज्ञानमोहिताः ।
नारायणाज्जगन्नाथात् ते वै पाषण्डिनः स्मृताः ॥
यस्तु नारायणं देवं ब्रह्मरुद्रादिदैवतैः ।
समत्वेनैव वीक्षेत स पाषण्डी भवेद्द्विजः’ ॥ इति ।

भारद्वाजः — ‘अशुद्धा ब्रह्मरुद्राद्या जीवा विष्णोर्विभूतयः ।
तान्वै कुदृष्टयस्सम्यक् परत्वेनाप्युपासते’ ॥ इति ।

वाराहे: — अगस्त्यं प्रति रुद्रः —
‘यो यज्ञैरिज्यते देवो यस्मात्सर्वमिदं जगत् ।
उत्पन्नं सर्वदा यस्मिन् लीयते सचराचरम् ॥
नारायणः परो देवः सत्त्वरूपी जनार्दनः ।
त्रिधाऽऽत्मानं स भगवान् ससर्ज परमेश्वरः ॥
शुद्धसत्त्वस्स्वयं जज्ञे रजस्सत्त्वादिकं विभुः ।
ससर्ज नाभिकमले ब्रह्माणं कमलासनम् ॥
रजसा, तमसा युक्तं सोऽपि मां ससृजे प्रभु’ रिति ॥

ननु :– 'सर्वपापहरञ्चेह पश्चात्संसारनाशनम् ।
सुवर्णरौप्यताम्राद्यैः लोहेनापि तथैव च ॥

तथा रथाङ्गमष्टाङ्गं सुनाभञ्च सुवृत्तकम् ।
ज्वालाचतुष्कसंयुक्तं कृत्वा चैव विधानतः ॥

अग्नौ प्रताप्य विधिवत् धारयेद्भक्तिसंयुतः' ॥ इति

'यज्ञोदानं तपो होमो भोजनं पितृतर्पणम् ।
चक्रलाञ्छनहीनस्य विप्रस्य विफलं भवेत् ॥

श्राद्धे दाने व्रते यज्ञे विवाहे चोपनायने ।
चक्राङ्कितं विप्रमेव पूजयेदपरं न तु' ॥

इत्यादिवचनैः चक्रादिनाऽनङ्कितस्य वैष्णवत्वाभावात् वैखानसानां कथं वा वैष्णवत्वमिति चेत् – उच्यते ॥

'यस्य मे श्रियममितां दातुं गर्भ एव करे चक्रं धारयामि स चक्रवर्ती भवति' इति श्रुतेः —

'वैखानसानां सर्वेषां गर्भवैष्णवजन्मनाम् ।
नारायणः स्वयं गर्भे मुद्रां धारयते निजाम्' ॥ इति

'सुदर्शनमभी'त्युक्त्वा दक्षिणे तु सुदर्शनम् ।
'रविपा'मिति वामे तु शङ्खञ्च बिभृयात्करे ॥

इति भृगुणोक्तत्वाच्च श्रीविष्णुबलिकर्मणा वैखानसानां गर्भवैष्णवत्वादिकं प्रतिपन्नम् ।

तथा – 'इन्द्रियेभ्यः परा ह्यर्था ह्यर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः ॥

महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः' ॥

इति श्रुतेः परमैकान्तित्वं परमपुरुषवशीकरणद्वारा गर्भगतस्य प्रपत्तिरपि सम्भवति। गर्भगतस्य प्रपत्तिरपि गर्भोपनिषदि श्रूयते। 'ज्ञानाद्ध्यनादक्षरमोङ्कारं चिन्तयति,

इत्युक्त्वा 'अथ नवमे मासि सर्वलक्षणसम्पूर्णो भवति। पूर्वजातिं स्मरति। कृताकृतञ्च कर्म भवति। शुभाशुभञ्च कर्म विन्दति।

नानायोनिसहस्राणि दृष्ट्वा चैव ततो मया।
आहारा विविधा भुक्ताः पीताश्च विविधाः स्तनाः॥
जातस्यैव मृतस्यैव जन्म चैव पुनः पुनः।
अहो दुःखोदधौ मग्नो न पश्यामि प्रतिक्रियाम्'॥ इत्युक्त्वा
'यदि योन्याः प्रमुच्येऽहं तं प्रपद्ये नारायणाम्।
अशुभक्षयकर्तारं फलमुक्तिप्रदायक'मिति॥

पुरुषसूक्तभाष्ये — मुद्गलोपनिषदि — 'वामदेवोऽप्याङ्गिरसस्सन् पूर्वपूजां समारालिंपल्यनसूयागर्भ एव शयानो ब्रह्मैव वेदयाञ्चक्रे स गर्भं पुरो भित्वा ब्रह्मलोकमुपचक्रामतमुत्क्रामान्तमाह मध्येऽध्वानमिन्द्रः उपनिषद उवाच, भगवन् गर्भपञ्जरे एवाभिनिवेशमान अनभिज्ञातोपायोऽस्मात्कश्चिद्धादित्या स गर्भस्सर्वोमन्यमानोऽध्वनः पारमुपगच्छसी'त्यादि। तथा च गर्भगतस्य प्रपदनविचारश्रवणाद्युपपद्यत एव।

वैदिकतान्त्रिकभेदेन प्रपत्तिर्द्विविधा — प्रणवपूर्वकत्वेन पुरुषाद्यावाहनादिकं वैदिकम्।

श्रुत्यन्तरे — 'अकारेणोच्यते विष्णुरसर्वलोकेश्वरो हरिः।
उद्धृता विष्णुना लक्ष्मीरुकारेण तथोच्यते॥
मकारस्तु तयोर्दास इति प्रणवलक्षणम्'॥ इति

किञ्च। प्रणवोच्चारणमात्रेण शङ्खचक्रादिधारणमपि सम्भवतीति श्रूयते कैवल्योपनिषदि — 'धृतोर्ध्वपुण्ड्रः कृतचक्रधारी विष्णुं परं ध्यायति यो महात्मा। स्वरेण मन्त्रेण सदा हृदिस्थं परात्परं यन्महतो महान्त'मिति। सर्वकारणभूताय सर्वरक्षकाय सर्वशेषिणे श्रियः पतये एव स्वाभाविकशेषभूत इति सर्वदाऽनुसन्धानमेव वैदिकी प्रपत्तिः।

'स्वोज्जीवनेच्छा यदि ते स्वसत्तायां स्पृहा यदि ।
आत्मदास्यं हरेः स्वाम्यं स्वभावञ्च सदा स्मर' ॥

इत्येव सूत्रे प्रतिपादितम् ।

पाञ्चरात्रे तु —

'त्यक्त्वा त्रयीं तन्त्रमेव प्रपद्य शरणं स्थिताः' ॥ इति

'अनन्यसाध्ये स्वाभीष्टे महाविश्वासपूर्वकम् ।
तदेकोपायतायाच्ञा प्रपत्तिः शरणागतिः' ॥

इति च उपदिश्यते । तस्याः प्रपत्तेः सकृत्करणात् समन्त्रकत्वाभावात् तच्छेषगत्यनुस्मरणाभावाच्च तां तान्त्रिकप्रपत्तिं विहाय 'यदेव विद्यया करोति तदेव वीर्यवत्तरं भवती'ति श्रुत्या वैदिकप्रपत्तिमेवोक्तवान् सूत्रकारः ।

**स्कान्दे**: — विष्ण्वागमादितन्त्रेषु दीक्षितानां विधीयते ।
शङ्खचक्रगदापूर्वैरङ्कनं नान्यदेहिनाम् ॥

शिवागमादिदीक्षाणां धार्यं तिर्यक् त्रिपुण्ड्रकम्' ॥ इति

**विष्णुः** — 'शङ्खचक्राद्यङ्कनञ्च गीतनृत्तादिकं तथा ।
एकजातेरयं धर्मः न जातु स्याद्द्विजन्मनाम्' ॥ इति

**श्रीभागवते दशमस्कन्धे**: —

'त्रिवक्रायामुपश्लोकः पुत्रः कृष्णमनुव्रतः ।
शिष्यस्साक्षान्नारदस्य ददौ चित्तमखण्डितम् ॥

तेनोक्तं सात्वतं तन्त्रं यत् ज्ञात्वा मोक्षभाग्भवेत् ।
यत्र स्त्रीशूद्रदासानां संस्कारो वैष्णवः स्मृतः' ॥ इति

**पद्मपुराणे** — 'वेदज्ञे ब्राह्मणे नित्यं सर्वास्तिष्ठन्ति देवताः ।
इति तित्तिरिशाखायां श्रूयते नृपसत्तम ॥

दक्षिणेंऽसे ब्राह्मणस्य शङ्खचक्रगदाधरः ।
हरिस्तिष्ठति वामे तु देवकीसूनुरादरात् ॥

ततो ब्राह्मणदेहोऽयं देवतागार उच्यते ।
तद्दाहे देवतास्सर्वे पलायन्ते दिशो दश ॥
अगारदाही स भवेत् तद्दाही ब्राह्मणाधमः ।
शङ्खं चक्रं मृदा यस्तु कुर्यात्तप्तायसेन वा ॥
स शूद्रवत् बहिष्कार्यः सर्वस्माद्द्विजकर्मणः ।
यथा श्मशानजं काष्ठमनर्हं सर्वकर्मसु ॥
तथा चक्राङ्कितो विप्रस्सर्वकर्मसु गर्हितः ' ॥ इति

तत्रैव — 'मोहाद्वा लोभतोवापि विप्रश्चक्राङ्कितो यदि ।
अनर्हस्सहि विज्ञेयः श्रौतस्मार्तेषु कर्मसु ॥
क्रियास्वनर्हतामेति यथा काष्ठं श्मशानगम् ।
तथा चक्रादिना दग्धाः सर्वकर्मस्वनर्हताम् ॥
दग्धार्धकायो यत्रास्ति ग्रामे जनपदेऽपि वा ।
श्मशानं तद्धि विज्ञेयं वासानर्हं द्विजन्मनाम् ॥

इत्यादिना दूषणमुक्तम् । एतानि तप्तचक्रांकनविधायकानि वचनानि 'विष्ण्वागमादितन्त्रेषु दीक्षिताना' मित्युक्तत्वात् एकजातिविषयत्वेनोक्तत्वात् 'नान्यदेहिना' मित्युक्तत्वाच्च तान्त्रिकागमोक्तप्रकारेण दीक्षितविषयाणीत्यवगम्यते । यद्वा विधिनिषेधवचनानां वैयर्थ्यपरिहाराय 'वपाश्रपणीभ्यामन्वारभते तन्नैवान्वारब्धं नैवानन्वारब्धं' 'अवघ्रेयमेव तत् नैव प्राशितं नैवाप्राशितम्' इत्यादिश्रुतिन्यायेन समन्त्रकत्वेन भावनारूपेण श्रीवैखानसशास्त्रे प्रतिपादितम्*। यथा —

'सुदर्शनमभीत्युक्त्वा दक्षिणे तु सुदर्शनम् ।
रविपामिति वामे च शङ्खञ्च बिभृयात्करे' ॥ इति

महोपनिषदि — ब्रह्मसूक्ते —

'दक्षिणे तु भुजे विप्रो बिभृयाद्वै सुदर्शनम् ।
सव्ये तु शङ्खं बिभृयादिति वेदविदो विदुः' ॥ इति

* प्रतिपादितमिति । — विधिवचनानां भावनारूपेणानुष्ठानं, निषेधवचनानां तापरूपेणाननुष्ठानं च तात्पर्यार्थः इति उभयं संगच्छत इति भावः ।

मोहशास्त्रत्वात् शप्तविषयत्वाच्च पञ्चरात्रे तापविधानं उक्तमिति केचिद्वदन्ति ॥

पद्मपुराणे गौतमः—'यन्मयि ब्राह्मणाभासाः! ऋजौ कैतवमीदृशम् ।
अनुष्ठितं ततो वेदमार्गभ्रष्टाश्च पापिनः ॥

कालामुखे पाञ्चरात्रे कापाले शाम्भवेऽपि च ।
शाक्ते च दीक्षिता यूयं भवत ब्राह्मणाधमाः' ॥ इति

ब्रह्मा — 'बौद्धे भागवते तन्त्रे तृतीये पाञ्चरात्रके ।
दीक्षिताश्च द्विजा नित्यं भवेयुर्निर्भया हरे! ॥

श्रौतस्मार्तसमाचारे सद्योमुक्तिकरे शुभे ।
त्वद्भक्तिविमुखा नित्यं भवेयुः परिमोहिताः ॥

शङ्खचक्रगदापूर्ववज्रपाशाङ्कुशादिभिः ।
अङ्किताः श्रद्धया यूयं भवत ब्राह्मणाधमाः' ॥ इति

स्कान्दे — सूतसंहितायाम् सरस्वतीं प्रति रुद्रः —
'श्रुतिर्बलीयसीत्युक्ता प्रमाणानां सुलोचने ॥ इत्यारभ्य
पाञ्चरात्रादिमार्गाणां वेदमूलत्वमास्तिके! ।
न हि स्वतन्त्रतस्तेन भ्रान्तिमूलानि रूपिणि! ॥

तथापि योऽंशो मार्गेण वैदिकेनाविरुद्ध्यते ।
सोऽंशः प्रमाणमित्युक्तं केषाञ्चिदधिकारिणाम् ॥

अत्यन्तस्खलितानान्तु प्राणिनां वेदमार्गतः ।
पाञ्चरात्रादयो मार्गाः कालेनैवोपकारकाः ।
तान्त्रिकाणां महादेवि न लभ्योऽव्यवधानतः' ॥ इति प्रतिपादितम्

कौर्मे — 'पुरा दारुवने पुण्ये मुनयो गृहमेधिनः' ।
इत्यारभ्य मायया गोकल्पनादि शापप्राप्तिपर्यन्तमुक्त्वा —
'का नो वृत्तिर्महादेव शापान्नः त्रातुमर्हसि ।
तथा पार्श्वस्थितं विष्णुं सम्प्रेक्ष्य वृषभध्वजः ॥

किमेतेषां भवेत्कार्यं प्राह पुण्यैषिणामिति ।
ततस्स भगवान् विष्णुः शरण्यो भक्तवत्सलः ॥
गोपतिं प्राह विपेन्द्रान् आलोक्य प्रणतान् हरिः ।
न वेदबाह्ये शास्त्रे च पुण्यलेशोऽपि शङ्कर ॥
सङ्गच्छते यतो धर्मो वेदादेव हि निर्बभौ ।
तथापि भक्तवात्सल्यात् रक्षणीया महेश्वर ॥
आवाभ्यां सर्व एवैते विप्रा वै नात्रसंशयः ।
तस्माद्वै वेदबाह्यानां रक्षणार्थञ्च पापिनाम् ॥
विमोहनाय शास्त्राणि करिष्यामि वृषध्वज ।
एवं सञ्चोदितो रुद्रो माधवेनासुरारिणा ॥
चकार मोहशास्त्राणि केशवोऽपि शिवेरितः ।
कापालं यामलं वामं भैरवं पूर्वपश्चिमम् ॥
पाञ्चरात्रं पाशुपतं तथाऽन्यानि सहस्रशः ।
कृत्वा चार्च्य च *तद्देवान् कुर्वाणास्तत्र चोदितम् ।
पतन्ति नरके घोरे बहून् कल्पान् पुनः पुनः' ॥ इत्यादिचोक्तम्

स्कान्दे शङ्करसंहितायाम् —

'नेक्षेत पूजावेलायां नरं वत्स! बहिष्कृतम् ।
दधीचिना गौतमेन ये शप्ता ब्राह्मणाधमाः ॥
कलाववतरिष्यन्ति निन्दितास्ते बहिष्कृताः' ॥ इति

साम्बपुराणेः — 'श्रुतिभ्रष्टः स्मृतिप्रोक्तप्रायश्चित्ते भयं गतः ।
क्रमेण श्रुतिसिद्ध्यर्थं मनुष्यस्तन्त्रमाश्रयेत् ॥
धर्मशास्त्रे पुराणे च प्रोक्तं हि मरणान्तिकम् ।
प्रायश्चित्तं मनुष्याणां पापिष्ठानां सुदारुणम् ॥

---

* **तद्देवान्** — तेषु शास्त्रेषु परत्वेनोक्तान् देवानित्यर्थः ।

भयं दुर्बलचित्तानां मरणे जायते भृशम् ।
तेषामेवाभिरक्षार्थं तदहं तन्त्रमुक्तवान् ॥

पाञ्चरात्र भागवतं तन्त्रं सात्त्वतनामकम् ।
वेदभ्रष्टान् समुद्दिश्य कमलापतिरब्रवीत्' ॥ इति

अन्यत्र — 'अथांशोः सात्त्वतो नाम विष्णुभक्तः प्रतापवान् ।
महात्मा दाननिरतो धनुर्वेदविदां वरः ॥

स नारदस्य वचनाद्वासुदेवार्चने रतः ।
शास्त्रं प्रवर्तयामास कुण्डगोलादिभिः श्रितम् ॥

तस्य नाम्ना तु विख्यातं सात्त्वतं नाम शोभनम् ।
प्रवर्तते महच्छास्त्रं कुण्डादीनां हितावहम्' ॥ इति

वासिष्ठे — 'वृद्धश्रावक निर्गन्धाः पाञ्चरात्रविदो जनाः ।
कापालिकाः पाशुपताः पाषण्डा ये च तद्विधाः ॥

यस्याश्नन्ति हवींष्येते दुरात्मानस्तु तामसाः ।
न तस्य तद्भवेच्छास्त्रं प्रेत्येह च न तत्फलम्' ॥ इति

लैङ्गे — नवमाध्याये युगधर्मे —

'अङ्किताश्च भविष्यन्ति देवतायुधलाञ्छनैः ।
नारायणमशृण्वन्ति युगान्ते समुपस्थिते ॥

अन्यानि यानि कर्माणि श्रौतानि मुनिसत्तम ।
स्मार्तानि नाचरिष्यन्ति कलौ ब्रह्मन् नरास्सदा ॥

आम्नायं धर्मशास्त्रञ्च पुराणं भारतं मुने ।
अल्पमात्रमिति ब्रह्मन् वदिष्यन्ति कलौ युगे ॥

न कुर्युः श्रौतकर्माणि श्रद्धया मुनिसत्तम ।
स्वधर्मे रुचिता नास्ति ब्राह्मणानां कलौ युगे ॥

पाञ्चरात्रं प्रशंसन्ति केचिद्भागवतं मुने ।
केचित्कापालमिच्छन्ति केचित्पाशुपतं मुने ॥

केचिद्बौद्धं प्रशंसन्ति केचिद्दैगम्बरं तथा ।
केचिल्लोकायतं ब्रह्मन् केचित्सौमं महामुने ॥

लाकुलं केचिदिच्छन्ति तथा केचित्तु भैरवम् ।
केचिद्वामं प्रशंसन्ति केचिच्छाक्तं तथैव च ॥

शाम्भवं केचिदिच्छन्ति यामलं भुवि केचन ।
अन्यानि यानि शास्त्राणि विरुद्धानि महामुने ॥

तीर्थविक्रयिणः केचिद्देवविक्रयिणः परे ।
क्षीरविक्रयिणः केचिदाज्यविक्रयिणः परे ॥

मांसविक्रयिणः केचित्सुराविक्रयिणः परे ।
पुत्रविक्रयिणः केचिद्दारविक्रयिणः परे ॥

भर्तृविक्रयिणः केचिद्भविष्यन्ति कलौ नराः ' ॥ इति

अतः पाञ्चरात्रोक्तं तप्तचक्रधारणं सर्वसाधारणं न भवतीति सिद्धम् ।

अथ यदुक्तं सर्वसाधारणं न भवतीति तन्नोपपद्यते - आथर्वणे 'चक्रं बिभर्ति वपुषाऽभितप्तं बलं देवानाममितस्य विष्णोः । स एति नाकं दुरिता विधूय प्रयान्ति यद्यतयो वीतरागाः ॥ 'चरणं पवित्रं विततं पुराणं' इत्यादि श्रुतिभिः सर्वसाधारणत्वेन श्रूयमाणत्वात् इति चेत् — न । तप्तचक्रधारणे प्रायश्चित्तविधानात् । अतः यथोक्तमार्गेण भावनारूपेणैव चक्राङ्कनं न तु तप्तरूपेण । सर्वसाधारणश्रुतिस्तु वैखानसेतरविषया । 'यस्य मे श्रिय' मित्यादिश्रुत्यविरोधेन अर्थव्यवस्थायाः कार्यत्वात् । अतः तप्तचक्राङ्कनं सर्वसाधारणं न भवति ।

किञ्च — 'यत्र शास्त्रगतिर्भिन्ना सर्वकर्मसु भारत ।
उदितेऽनुदिते चैव होमभेदे यथा भवेत् ।
स गरीयान् महाबाहो सर्वशास्त्रोदितादपि ॥
इति सुमन्तुस्मरणाच्च व्यवस्थितविकल्पोत्र वक्तव्यः ॥

*किञ्च ब्रह्मरुद्रादीनामपि संहारकर्ता हरिरेवेति श्रूयते। यजुषि—हरिँ हरन्तमनुयन्ति देवाः विश्वस्येशानं वृषभं मतीना' मिति।

ब्रह्मपुराणे:— ब्रह्माणमिन्द्रं रुद्रञ्च यमं वरुणमेव च।
निगृह्याहरते यस्मात्तस्माद्धरिरिहोच्यते॥

ब्रह्मा शम्भुस्तथैवार्कश्चन्द्रमाश्च शतक्रतुः।
एवमाद्यास्तथैवान्ये युक्ता वैष्णवतेजसा॥

जगत्कार्यावसाने तु वियुज्यन्ते च तेजसा।
तेजसश्चैव ते सर्वे पञ्चत्वमुपयान्ति च'॥ इति

ननु—हरिं हरन्तमिति पूर्वोपात्तयजुषि ईशानशब्दश्रवणात् रुद्र एव संहारकर्तेति श्रूयत इति चेत्—तदसत्। तत्र 'विश्वस्येशान' मिति जगन्नियामकत्वमुच्यते। तथा च 'पतिं विश्वस्यात्मेश्वर' मितिवत् नारायण एव अत्र प्रतिपाद्यः। 'अस्येशाना जगतो विष्णुपत्नी' स हरिः सुवित्तमः, 'पेरुरिन्द्राय पिन्वत', 'विराडसि,' 'बृहती श्रवसीन्द्रपत्नी धर्मपत्नी', 'स ब्रह्मा स शिवस्सेन्द्रः', इत्यादि श्रुतयोत्र विभावनीयाः।

ननु—कौर्मे अष्टमाध्याये—रामायणसंक्षेपे—
'स कृत्वा वानरशतैः लङ्काद्वारं महोदधौ।
सेतुं परमधर्मात्मा रावणं हतवान् प्रभुः'॥

इति रावणवधादिकं प्रतिपाद्य
'सेतुमध्ये महादेवमीशानं कृत्तिवाससम्।
स्थापयामास लिङ्गस्थं पूजयामास राघवः॥

तस्य देवो महादेवः पार्वत्या सह शङ्करः।
प्रत्यक्षमेव भगवान् दत्तवान् वरमुत्तमम्'॥

---

*एवं प्रसङ्गादापतितं समाप्य पूर्वप्रस्तुतं नारायणपारम्यं सिंहावलोकनन्यायेन समर्थयति—किञ्चेत्यादिना।

इति भगवतो रुद्रोपासनमुच्यते इति चेत्—सत्यम् । रुद्रस्य तदपि भगवद्वर-प्रसादलब्धम् । एवं हि वाराहे प्रागितिहासे रुद्रगीतासु उच्यते । यथा—अगस्त्यं प्रति रुद्रः—

'ब्रह्मणाऽहं पुरा सृष्टः प्रोक्तः सृज इति प्रजाः ।
अविज्ञाताऽसमर्थोऽहं निमग्नस्सलिले द्विज' ॥ इत्यारभ्य

जलमध्ये कालमेघसङ्काशः अतिशोभनः पुण्डरीकाक्षः कश्चित् पुरुषो रुद्रेण दृष्टः कस्त्वमिति रुद्रेण पृष्टस्य तस्य प्रतिवचनम्—

'अहं नारायणो देवो जलशायी सनातनः ।
दिव्यं चक्षुर्भवतु ते तेन मां पश्य यत्नतः ॥ इति प्रतिपाद्य

एवमुक्तस्तदा तेन यावत्पश्याम्महं तनुम् ।
तावदङ्गुष्ठमात्रन्तु ज्वलद्भास्करतेजसम् ॥

तमेवाहं प्रपश्यामि तस्य नाभौ तु पङ्कजम् ।
ब्रह्माणं तत्र पश्यामि ह्यात्मानञ्च तदङ्कतः ॥

एवं दृष्ट्वा महात्मानं ततो हर्षमुपागतः ।
तं स्तोतुं द्विजशार्दूल मतिर्मे समजायत' ॥

इत्युपक्रम्य महत्स्तोत्रमुक्त्वा अन्ते रुद्रेण भगवन्तं प्रत्यभीष्टनिवेदनं प्रतिपादितम् । यथा—

'इति स्तुतो मे भगवन्ननादे जुषस्व भक्तस्य विशेषतश्च ।
सृष्टिं सृजस्वेति तु चोदितस्य सर्वज्ञतां देहि नमोऽस्तु विष्णो ॥ इति ।

एवं स्तोत्रे परिसमापिते—

'वरं वरय भद्रं ते देवदेव उमापते' !

इति भगवता नियुक्तः रुद्रः—

'ब्रह्मणा चाहमुक्तस्तु प्रजास्सृज इति प्रभो ।
तत्र ज्ञानं प्रयच्छस्व त्रिविधं भूतभावन ॥ इति प्रार्थयामास ।

तदा श्रीभगवान् —

‘सर्वज्ञस्त्वं न सन्देहो ज्ञानराशिः सनातनः ।
देवानाञ्च सदा पूज्यः सर्वदा त्वं भविष्यसि ’ ।। इति वरं ददौ

तदनु — एवमुक्ते पुनर्वाक्यमुवाचोमापतिर्मुदा ।
अन्यं देहि वरं देव प्रसिद्धं सर्वजन्तुषु ।।

मर्त्यो भूत्वा भवानेव मामाराधय केशव ।
मां वहस्व च देवेश वरं मत्तो गृहाण च ।।

येनाहं सर्वदेवानां पूज्यात्पूज्यतरोऽभवम् ।। इति पुनः तेन प्रार्थितः-

श्रीभगवान् :— देवकार्यावतारेषु मानुष्यत्वमुपागतः ।
त्वामेवाराधयिष्यामि त्वञ्च मे वरदो भव ।।

यत्त्वयोक्तं वहस्वेति देवदेव उमापते ।
स त्वां वहामि देव त्वां मेघो भूत्वा शतं समाः ।। इति वरमपि ददौ

एवमेव हरिर्देवः सर्वेशस्सर्वभावनः ।
वरदोऽभूत्पुरा मह्यं तेनाहं दैवतैर्वृतः ।।

नारायणात्परो देवो न भूतो न भविष्यति ।
एतद्रहस्यं देवानां पुराणानाञ्च सत्तम ’ ।। इति

किञ्च,

श्रीविष्णुपुराणे — ‘देवतिर्यङ्मनुष्येषु शरीरग्रहणात्मिका ।
लीलेयं सर्वभूतस्य तव चेष्टोपलक्षणा ’ ।।

देवतिर्यङ्मनुष्याख्याचेष्टावन्ति स्वलीलया ।
जगतामुपकाराय न सा कर्मनिमित्तजा ’ ।। इति

एवं नृसिंहरूपिणा भगवता शरभरूपेणागतानां ब्रह्मरुद्रादीनामपि संहारादिकं नारसिंहपुराणादिष्ववगम्यते ।। यथा —

तत्र सप्तत्रिंशाध्याये :—

'हिरण्यकशिपोस्त्रस्तान् सेन्द्रान् देवान् बृहस्पतिः ।
क्षीरोदस्योत्तरं गत्वा स्तूयतां तत्र केशवः ॥
युष्माभिस्संस्तुतो विष्णुः प्रसन्नो भवति क्षणात् ॥ इत्यारभ्य
'युष्मदागमनं सर्वं जानाम्यसुरमर्दनाः ! ।
हिरण्यकविनाशार्थं स्तुतोऽहं शङ्करेण च ॥ इत्युक्त्वा

हिरण्यकवधानन्तरं—

तस्य कोपाभिभूतस्य नृसिंहस्य जगत्पतेः ।
दृष्ट्वा भयानकं रूपं वित्रेसुर्देवदानवाः' ॥

इत्यारभ्योक्तस्तोत्रानन्तरं ब्रह्मसमीपगमनादिकं प्रतिपाद्य—

तस्मिन् भगवति क्रुद्धे नृसिंहे परमात्मनि ।
प्रवेपितं जगदिदं देवेशे कुपिते भृशम् ॥
त्वत्तो हि नान्यश्शरणं देवानामिह विद्यते ।
नरसिंहसमुद्भूतं भयं नाशय मे हरे' ॥

इत्यादिना रुद्रप्रार्थनादिकमुक्त्वा

हतो हिरण्यकशिपुः येन दैत्यो महाबलः ।
को नश्शमयिता तस्य कोपस्य हरिमेधसः ॥
त्वं मे जनयिता देव स ते जनयिता हरिः ।
तस्य देवस्य कश्शक्तो विष्णोर्वै निग्रहे भवेत् ॥
यद्भयात्पवते वायुः सूर्यस्तपति यद्भयात् ।
यद्भयाद्धरणी धत्ते निग्रहे तस्य कः प्रभुः ।
तथाऽप्युपायो दृश्यो मे परमेण समाधिना ॥
कृते तस्मिन् भवेच्छ्रेयः तूष्णींभावो न रोचते ।
अश्वानां महिषः शत्रुः वारणानां मृगाधिपः ॥

वानराणां तथा मेषः फणीनां गरुडः स्मृतः ।
मूषकानान्तु मार्जारो मृगाणां श्वा प्रकीर्तितः ॥

वायसानां दिवाभीतः सिंहानां शरभस्तथा ।
ततो निर्मापयिष्यामः शरभं भयशान्तये ॥

शरभोऽधिष्ठितोऽस्माभिः नृसिंहं शमयिष्यति ।
इत्येवमुक्त्वा भगवान् ससर्ज शरभं तथा ॥

यस्य सन्दर्शनादेव त्रस्तमासीज्जगत्त्रयम् ।
ततस्तस्य भवानीशः तुण्डस्थानमरोचत ॥

पृष्ठभागे चतुर्वक्त्रं तस्य रुद्रो न्यवेशयत् ।
सोमसूर्यौ नयनयोः मारुतं पक्षयोर्द्वयोः ॥

पादेषु भूधरान् सर्वान् शिवस्तस्य न्यवेशयत् ।
एवं निर्माय शरभं भवः प्रमथनायकः ॥

जगर्ज नरसिंहं तं समुद्दिश्य भयानकम्' ॥

इति शरभनिर्माणादिकं प्रतिपाद्य

ततःक्षणेन शरभो नादपूरितदिङ्मुखः ।
अभ्याशमगमद्विष्णोः निनदन् भैरवं स्वनम् ॥

तमभ्याशगतं दृष्ट्वा नृसिंहः शरभं रुषा ।
जघान निशितैरुग्रैः नखैर्नखवरायुधः ॥

निहते शरभे तस्मिन् रौद्रे मधुविघातिना ।
तुष्टुवुः पुण्डरीकाक्षं देवा देवर्षयस्तथा' ॥

इति भगवता ब्रह्मरुद्राद्यधिष्ठितशरभहननं प्रतिपादितम् ।

गारुडे अष्टनवतितमाध्याये :—

'हन्तुमभ्यागतं रौद्रं शरभं नरकेसरी ।
नखैर्विदारयामास हिरण्यकशिपुं यथा ॥

निकृत्तबाहूरुशिराः वज्रकल्पमुखैर्नखैः ।
मेरुपृष्ठे नृसिंहेन शरभस्सहसाऽपतत्' ॥ इति

पाद्मे :— तौ युध्यमानौ तु चिरं वेगेन बलवत्तरौ ।
विनाशं जग्मतुर्देवौ नृसिंहशरभाविति ॥

ततः क्रुद्धो महाबाहुः नृसिंहो भीमनिस्स्वनः ।
सहस्रकरपन्नेत्रः तस्य गात्राण्यकर्तयत् ॥

पतितं भीममत्युग्रं गतासुं द्रष्टुमागताः ।
ऋषयो देवगन्धर्वा यत्र शेते भवो हरः ॥

तं दृष्ट्वा परमं जग्मुः विस्मयन्तु दिवौकसः ।
प्रशशंसुस्तथा कर्म नृसिंहस्य महाद्भुतम्' ॥ इति

श्रीभागवते :— 'ततस्त्वरितमादाय रुद्रं शरभरूपिणम् ।
विददार नखैस्तीक्ष्णैः हिरण्यकशिपुं यथा' ॥ इति

किञ्च आनुशासनिके उमामहेश्वरसंवादे भगवतोऽङ्गभावेन विना रुद्रोपासनं कुर्वतां शूद्रतुल्यत्वमुक्तं । यथा दक्षाध्वरे —

रुद्राणी— 'अहं ज्येष्ठा विशिष्टा च तस्मात्त्वं मां सुपूजय ।
दक्षः — न तु ज्येष्ठा विशिष्टा त्वं मम पूज्या इमास्सुताः ॥

इत्यादिना रुद्राणीदूषणमध्वरभङ्गादिकं च प्रतिपाद्य रुद्रं प्रति शापोत्सर्गः क्रियते ।

'एतद्वंशसमुद्भूतैरस्पृश्यस्त्वं भविष्यसि ।
नैतद्वंशेषु यः कश्चित् त्वद्भक्तो हि जनिष्यति ॥

अज्ञानात्त्वां हि यः कश्चित् मुनिर्वा ब्राह्मणोऽपि वा ।
अनुजीवति चेत्तस्मात्तुल्यश्शूद्रेण गर्हितः ॥

भवेद्देवलकश्चैव रुद्रकाल्युपजीवकः' ॥ इति

अतो नारायणस्य रुद्रेण समानतया बोधायनेन प्रतिपादितत्वात् बोधायनापस्तम्बादिसूत्रेषु षड्विधतात्पर्यलिङ्गाभावात् तेषां सृष्टिकालादारभ्य नारायणैकपरत्वा-

भावात् नानादेवतोपासकत्वदर्शनाच्च परमैकान्तित्वं न सम्भवति। एवं कात्यायनसूत्रिणामपि ––

'ब्राह्मवैष्णवरौद्रैस्तु सावित्रैर्मैत्रवारुणैः ।
तल्लिङ्गैरेव मन्त्रैस्तु अर्चयेत्तु समाहितः' ॥

इति प्रतिपादनात् न परमैकान्तित्वम् ।

द्राह्यायणसूत्रे तु रुद्रविषयत्वेन कर्मारम्भे प्रपदनमुक्तम् ।

अतः श्रीमन्नारायणैकपरत्वात् परमैकान्तित्वं श्रीमद्वैखानसानामेवेति प्रतिज्ञा कर्तुमुचिता । एवं 'अखिलजगदेककारणश्रीमन्नारायणैकपरत्वात्' इति नवमहेतुर्निरूपितः ।

## इति नवमहेतुनिरूपणम्



# अथ दशमहेतुनिरूपणम्

—*०*—

अथास्य श्रीवैखानससूत्रस्य श्रीमन्नारायणैकपरत्वाद् तत्सूत्रानुष्ठानवतामेव भगवत्प्रियतमत्वमुपपद्यत इति प्रतिपादनाय 'भगवत्प्रियतमत्वोपपत्ते' रिति दशमहेतुर्निरूप्यते —

**छन्दोगब्राह्मणे** – 'वैखानसा वा ऋषय इन्द्रस्य प्रिया आसन्' इति । अत्र इन्द्रशब्दः परमात्मपर इति पूर्वमेवोक्तम् ।

**वाराहे** — 'अश्वत्थः कपिला गावः तुलसी विखनास्तथा ।
चत्वारो मत्प्रिया राजन्! तेषां वैखानसो वरः' ॥ इति

'यत्र वैखानसा विप्रा यत्र सन्ति गवां गणाः ।
यत्र बिल्वाः पलाशाश्च तत्र सन्निहितो हरिः' ॥ इति

**कौर्मे** — 'मच्चित्ता मद्गतप्राणा मयि सङ्गतमानसाः ।
अनन्यशरणा राजन् तस्माद्वैखानसा वराः' ॥ इति

**पाञ्चरात्रे पौष्करे**-'विप्रा वैखानसाख्या ये ते भक्तास्तत्त्वमुच्यते ।
एकन्तिनः सुसत्वस्था देहान्तं नान्ययाजिनः ॥

कर्तव्यमिति देवेशं संयजन्ते फलं विना ।
प्राप्नुवन्ति च देहान्ते वासुदेवत्वमब्जज' ॥ इति

**बृहन्नारदीये** — 'देवार्चनपरा ये च ये च तत्साधका नराः ।
पूजां दृष्ट्वानुमोदन्ते ते वै भागवतोत्तमाः ॥

यस्तु भोगतया विष्णोः सत्कृत्यं कुरुते सदा ।
स भवेत्परमैकान्ती महाभागवतोत्तमः ॥

य ऐकान्त्यगता विष्णौ भगवत्यात्मभावने ।
ते वैष्णवा भागवतास्सन्त इत्यपि कीर्तिताः ॥

मन्मानसाश्च मद्भक्ता मम पूजासु लोलुपाः ।
मत्कथाश्रवणे सक्तास्ते वै भागवताः स्मृताः' ॥ इति

'येऽर्चयन्ति नरा भक्त्या नारायणमनामयम् ।
तानर्चयन्ति विबुधा ब्रह्माद्या देवतागणाः ॥

मयि भक्तिपरो यस्तु मद्याजी मत्परायणः ।
मद्ध्यानी स्वकुलं सर्वं नयत्यच्युतरूपताम् ॥

येऽर्चयन्ति सदा विष्णुं न ते प्राकृतमानुषाः ।
विष्णुलोकात्समुत्पन्नास्ते देवा नात्र संशयः ॥

नाविष्णुर्जायते विष्णुर्ना विष्णुर्विष्णुमर्चयेत् ।
रूपद्वयं हरेः प्रोक्तं बिम्बमर्चक एव च ॥

बिम्बेत्वावाहनादूर्ध्वं सदा सन्निहितोऽर्चके ।
अर्चकस्तु प्रसन्नात्मा हरिरेव न संशयः ॥

कलिः कृतयुगस्तेषां क्लेशाश्चैव सुखावहाः ।
येषां शरीरमनिशं हरिशुश्रूषणे रतम्' ॥ इति

भागवते — 'सा वागनन्तरस्य गुणान् गृणीते करौ च तत्कर्मकरौ मनश्च ।
स्मरेद्वसन्तं स्थिरजङ्गमेषु शृणोति तत्पुण्यकथास्स कर्णः ॥

शिरश्च तस्यांघ्रिषु नम्रमाणं तमेव यः पश्यति तद्धि चक्षुः ।
अङ्गानि विष्णोरथ तज्जनानां पादोदकं यानि वहन्ति नित्यम्' ॥

'हृदि रूपं मुखे नाम नैवेद्यमुदरे हरेः ।
पादोदकञ्च निर्माल्यं यस्य मूर्ध्नि स वैष्णवः' ॥ इति

श्रुतिरपि — तदस्य प्रियमभिपाथो अश्याम् नरो यत्र देवयवो मदन्ति उरुक्रमस्य स हि बन्धुरित्था विष्णोः पदे परमे मध्व उत्सः' इति । अस्यार्थः—विष्णोः **प्रियं** तत्पाथः निवेदितमन्नादिकम् **अभ्यश्याम्** । **देवयवो नराः** देवाराधकाः **यत्र मदन्ति** यस्मिन् निवेदिततीर्थप्रसादादिके स्वीकृते **मदन्ति** हृष्टा भवन्ति । यद्वा—

ब्रह्मादीनपि न गणयन्ति । **इत्था** इत्थं प्रतिदिनं वर्तमानः **उरुक्रमस्य विष्णोर्बन्धुः** जात्येकवचनम् । स एवातीवाभिमतः **परमे** सर्वोत्कृष्टे **मध्वे** मधुवत् भोग्यतमे विष्णोः पदे **उत्स** उत्सुकः । यद्वा उत्कृष्टः ॥

श्रुत्यन्तरे: — 'विष्णुनाशितमश्नन्ति विष्णुना पीतं पिबन्ति विष्णुना घ्रातं जिघ्रन्ति विष्णुना रसितं रसयन्ति तस्माद्विद्वाँसो विष्णूपहृतं भक्षयेयुः' इति ।

भागवते — 'त्वयोपभुक्तस्रगन्धवासोऽलङ्कारचर्चिताः ।
उच्छिष्टभोजिनो दासास्तव मायां तरेमहि' ॥ इति

हारीतः — 'कृपादत्तं हस्तगतं विष्णुभुक्तोज्झितन्तु यत् ।
उपवासछलान्नात्ति तेन भुक्तं सुरोपमम्' ॥ इति

भृगुः — 'हविः कृत्वा चतुर्भागमूर्ध्वभागौ निवेदयेत् ।
अधस्तादेकभागेन होमं बलिमथाचरेत् ॥
यदंशं पात्रसंशिष्टं पूजकायैव निर्मितम् ।
अग्निकार्यावशिष्टञ्च बलिशिष्टञ्च यद्धविः ।
सर्वं तत्पूजकायैव प्रोक्तमेवं मनीषिभिः' ॥ इति

यज्ञाधिकरे भृगुः — 'आत्मनश्च चतुर्थांशं वैश्वदेवार्थमर्चकः ।
आदाय वैश्वदेवान्ते शिष्टान्नं भोजयेत्पुनः ॥
बलिशेषं होमशेषं वैश्वदेवे विशेषतः ।
गृह्णीयाद्वैश्वदेवार्थं भोजनार्थञ्च ऋत्विजः' ॥ इति

काश्यपः — 'सर्वहविःपात्रेषु शिष्टमन्नं सर्वं भगवन्निवेदितमपूपादिकञ्च पूजका गृह्णीयुः । यथा गुरोरुच्छिष्टं पुत्रशिष्यभृत्यानां भोज्यं, तथा सर्वस्य रक्षितुः सौम्यमूर्तेः सर्वव्यापिनो विष्णोः जगद्गुरोर्निवेदितमन्नाद्यं विश्वं चतुर्वर्णानां भक्तिमतां सर्वेषां भोज्यम्, अभक्तिमतामभोज्यम्' । इति

श्रीपाञ्चरात्रे ईश्वरसंहितायाम् — समाराधनाध्याये —

स्कन्दः — 'त्वया निषेध आख्यातो मन्त्रदत्तस्य वस्तुनः ।
सर्वस्य पत्रपुष्पान्नपूर्वस्य परमेश्वर ॥

तस्येदानीं प्रदानञ्च प्राशनञ्च प्रशंससि ।
किमेतदत्र मे जातस्संशयः परमेश्वर ॥

ईश्वरः — प्रदानं प्राशनं पुत्र उपभोग्यत्वमेव च ।
शैवे पाशुपते दृष्टमचिरादेव पापकृत् ॥

तत्पुनर्वैष्णवे मार्गे वर्तते व्यत्ययेन तु ।
अनन्तफलदं दानात् प्राशनात् कोष्ठशुद्धिकृत्' ॥ इति

तत्रैव-देवतार्चने — 'कर्षं नयति पापानि पुण्यवृद्धिं करोति च ।
दानैर्धर्मैः तथा पुण्यैस्तपोभिश्च न तत्फलम् ॥

भगवद्भक्तिपूतानां यत्फलं प्राषणादनात्' ॥ इति

अन्यत्र — 'सत्सङ्गदेवार्चनसत्कथासु परोपदेशे च रतो मनुष्यः ।
स याति विष्णोः परमं पदं यद्देहावसानेऽच्युततुल्यतेजाः ॥ इति

अन्यत्र — 'नारायणैकनिष्ठा ये सात्त्विकास्तान् निबोधत ।
पुरुषा राजसाश्चैव नानादैवतयाजिनः ॥

बाह्या निर्देवताश्चैव तामसाः परिकीर्तिताः ।
रजस्तमोऽभिभूतानां न तु मोक्षः कथञ्चन ॥ इति

पुराणान्तरे — 'यत्रैव पूज्यते विष्णुर्विधिना प्रयतैर्नरैः ।
न तत्र ह्यविदौर्गत्यव्याधिचौरादिकं भयम्' ॥ इति

किञ्च — 'नित्यमुक्तोपभोग्यत्वात्परव्यूहात्मनो हरेः ।
तत्कालसन्निकृष्टैकलक्ष्यत्वाद्विभवात्मनः ॥

विशुद्धैर्योगसंसिद्धैश्चिन्त्यत्वादन्तरात्मनः ।
अर्चात्मन्येव सर्वेषामधिकारो निरङ्कुशः ॥

अर्चावतारविषये ममाप्युद्देशतस्तथा ।
उक्ता गुणा न शक्यन्ते वक्तुं वर्षशतैरपि ॥

एवं पञ्चप्रकारोऽहमात्मनां पततामधः
पूर्वस्मादपि पूर्वस्मात् ज्यायांश्चैवोत्तरोत्तरः ॥
सौलभ्यतं जगत्स्वामी सुलभोह्युत्तरोत्तरः ॥

इति प्रतिपादितरित्या भगवतः परत्वादिषु सौलभ्याभावात् अखिललोकसमुज्जीवनार्थमर्चावतारः । तदेकपरत्वाद्वैखानसाः तत्प्रियतमाः । एतद्दशनारायणैकपरत्वाभावाद्बोधायनस्य आपस्तम्बादीनाञ्च न कथञ्चदपि परमैकान्तित्वं भगवत्प्रियतमत्वञ्च सम्भवति ।

एवं च वैखानसानामेव परमैकान्तित्वं भगवत्प्रियतमत्वञ्चोपपद्यते इति सर्वं समञ्जसमिति दशमो हेतुर्निरूपितः ।

इति दशमहेतुनिरूपणम् ।

इति श्रीरमणवेङ्कटाचलेश्वरपादारविन्दसपर्यानिरतस्य सर्वतन्त्रस्वतन्त्रस्य
श्रीनिवासमखिवेदान्तदेशिकस्य कृतिषु श्रीवैखानससूत्र-
तात्पर्यचिन्तामणौ दशविधहेतुनिरूपणम्
उपोद्घातभागः समाप्तः ।



श्री श्रीनिवासाय परस्मै ब्रह्मणे नमः

श्रीमते विखनसे नमः

# श्री श्रीनिवासमखिकृत—तात्पर्यचिन्तामणिसहितम्

# ॥ श्रीवैखानसगृह्यसूत्रम् ॥

श्रियः कान्ताय कल्याणनिधये निधयेऽर्थिनाम् ।
श्रीवेङ्कटनिवासाय श्रीनिवासाय मङ्गलम् ॥
येन वेदार्थविज्ञेन लोकानुग्रहकाम्यया ।
प्रणीतं सूत्रमौखेयं तस्मै विखनसे नमः ॥

## प्रथमप्रश्ने — प्रथमः खण्डः

**अथ निषेकादिसंस्कारान् व्याख्यास्यामः ॥** (१)

अथैवं 'अखिलजगत्कारणभूतेन विखनसा प्रणीतत्वा' दित्यादिभिर्हेतुभिः सर्वसूत्रोत्तमत्वेन सम्प्रतिपन्नं श्रीवैखानसं कल्पसूत्रमनुजग्राह भगवान् विखनाः । अत्राथशब्दो मङ्गलार्थः । ननु 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ' इति सूत्रादौ प्रयुक्तस्याथशब्दस्यानन्तर्यमर्थः । 'पात्रस्रुवादयो यज्ञीये प्रोक्ताः' इति वचनेन श्रौतसूत्रस्य पूर्वमेव प्रणीतत्वप्रतीतेः अथशब्दस्यानन्तर्ये प्राचुर्याच्च श्रौतसूत्रप्रणयनानन्तर्यमेव वक्तुमुचितमिति चेत् न । 'अथ निषेकादिसंस्कारान् व्याख्यास्याम' इत्यारभ्य, 'अष्टादशसंस्काराः शारीराः' इति स्मार्तसंस्कारानुक्त्वा 'यज्ञाश्च द्वाविंश' दित्यारभ्य 'अप्तोर्याम इति सप्त सोमयज्ञा' इत्यन्तेन यज्ञानां स्मार्तसंस्कारानन्तरमुपदेक्ष्यमाणत्वात् । तथा 'यज्ञप्रायश्चित्ते वक्ष्याम' इत्यत्रैवोत्तरत्र, 'पूर्ववद्दैविकं पैतृकञ्च हुत्वा' इति श्रौतसूत्रे वक्ष्यमाणत्वाच्च आनन्तर्यार्थं वक्तुं न युक्तम् । 'यज्ञीये प्रोक्ता' इत्यस्य वाक्यस्य 'वक्ष्याम' इत्येवार्थः । 'सुप्तिङुपग्रहे' त्याद्युक्तेः । तथा अन्येषामर्थानामप्यत्र न प्रसक्तिः । तथा च श्रुतिस्मृतिसिद्धस्य मङ्गलस्यात्र पूर्वभावित्वावश्यम्भावात् मङ्गलार्थत्वमेव वक्तुं युक्तम् । तथा चोक्तम् ।

'मङ्गलाचारयुक्तानां नित्यञ्च प्रयतात्मनाम् ।
जपतां जुह्वताञ्चापि विनिपातो न विद्यते'॥ इति

'ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।
कण्ठं भित्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ' ॥ इति च

अथवा अकारोपक्रमान्माङ्गल्यं सिद्ध्यति । 'अक्षराणामकारोऽस्मी'ति भगवद्वाचकत्वादकारस्य 'पवित्राणां पवित्रं यो मङ्गलानाञ्च मङ्गलम्' 'मङ्गलं भगवान् विष्णुः' इति दिव्यमङ्गलविग्रहस्य भगवतो नाम प्रयुञ्जानेन किं नाम मङ्गलं न कृतं भवति ।

अथवा 'अकारेणोच्यते विष्णुः' इत्यकारेण परमात्मा विष्णुः 'थकार-स्सर्वरोधश्च रसात्मा सुप्रतिष्ठित' इति थकारेण चन्द्रोपलक्षितो जीवात्मा च उक्तः। तथा एकाक्षरनिघण्टौ 'थः पुमानिन्दुकल्लोलविरामेषु महीधरे । स्यादास्फालनशब्दे चे'त्यादि । छान्दोग्ये च 'धूमाद्रात्रि'मित्यारभ्य 'एष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति तस्मिन् यावत्संपातमुषित्वा अथैतमेवमध्वानं पुनर्निवर्तन्त'इति जीवात्मनः चन्द्रादुत्पत्तिः श्रूयते । 'सौम्यो वै देवतया पुरुषः' 'सोमोऽस्माकं ब्राह्मणानां राजा 'शुक्रं सोमात्मकं विद्धि आर्तवं पावकात्मक'मिति वचनाच्च 'थ' कारेण आत्मा उक्तः। 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते, तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्य अभिचाकशीति' 'अन्तः प्रविष्टश्शास्ता जनानां सर्वात्मा' 'ऋतं पिबन्तौ सुकृतस्य मध्ये गुहां प्रविष्टौ परमे परार्ध्ये । च्छायातपौ ब्रह्मविदो वदन्ति' इति देहे प्रयोज्यप्रयोजकभावेन स्थितयोः निषेकादिसंस्कारा इति वक्तुमथशब्दः। 'ईश्वरवशात्तेन सह' इत्युत्तरत्र वक्ष्यते ।

अथवा 'वह्निमाद्याक्षरन्तु वा' इति अकारेणाग्निः 'थ'कारेण प्रत्यगात्मा।

'लोकेऽस्मिन् मङ्गलान्यष्टौ ब्राह्मणो गौर्हुताशनः ।
हिरण्यं सर्पिरारादित्य आपो राजा तथाऽष्टमः'॥

इति 'अग्रं नयतीत्यग्नि'रिति व्युत्पत्या च ऐहिकामुष्मिकफलप्रदानां संस्काराणा-मग्निना साधयितुं शक्यत्वात् ।

बोधायनः — 'होतव्या ब्रह्मभूयाय नाक्रियो ब्राह्मणो भवेत् ।
अनग्निरक्रियश्शूद्रः तस्माज्जातोऽग्निना द्विजः' ॥

इति मङ्गलप्रदोऽग्निः जीवात्मा च ।

एवं चिदचिदीश्वरभेदप्रदर्शनार्थं प्रकृतिसंयुक्तस्य प्रत्यगात्मनः निषेकादिसंस्कारा इति ज्ञापयितुञ्च सूत्रादावथ शब्दः प्रयुक्तः ।

**निषेकादिसंस्कारानिति** । अत्र बहुव्रीहिः । स च द्विविधः । तद्गुणसंविज्ञानः अतद्गुणसंविज्ञानश्चेति । निषेक आदिः येषां ते निषेकादयः तान् । संस्कारो हि नाम कार्यान्तरयोग्यताकरणम् । यद्वा सत उत्कर्षाधानं संस्कारः स च द्विविधः । भूतोपयोगी भाव्युपयोगी चेति ।

ननु — 'दुःखाज्ञानमला धर्माः प्रकृतेस्ते न चात्मनः ।
निर्वाणमय एवायमात्मा ज्ञानमयोऽमलः' ॥

इति निर्मलस्य प्रत्यगात्मनः गर्भाधानादय एते संस्काराः किमर्थमिति चेदुच्यते ।

यथा शौनकः— 'यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः ।
दोषप्रहाणान्न ज्ञानमात्मनः क्रियते तथा ॥
यथोदपानकरणात् क्रियते न जलाम्बरम् ।
सदेव नीयते वृद्धिमसतस्सम्भवः कुतः ॥
तथा हेयगुणध्वंसादवबोधादयो गुणाः ।
प्रकाश्यन्ते न जन्यन्ते नित्या एवात्मनो हि ते' ॥ इति ।

**व्याख्यास्याम इति** । आङ्व्याभ्यामुपसर्गाभ्यामपेक्षितविस्तरसङ्कोचौ द्योतितौ । आदौ सङ्क्षेपेणान्यत्र विस्तरेणेति भावः । तदेवोपपादयति – ऋतुसङ्गमनेत्यारभ्य पाणिग्रहणानीत्यन्तेन ।

**'ऋतुसङ्गमनगर्भाधानपुंसवनसीमन्तविष्णुबलिजातकर्मोत्थाननामकरणान्नप्राशनप्रवासागमनपिण्डवर्धनचौलोपनयनपारायणव्रतबन्धविसर्गोपाकर्मसमावर्तनपाणिग्रहणानीत्यष्टादशसंस्काराः शारीराः ॥ (२)**

ऋतुसङ्गमनादीनां लक्षणं तत्तदवसरे निपुणतरमुपपादयिष्यते ।

**अष्टादश संस्काराः शारीराः ।** स्मार्तत्वेऽपि श्रुतिसिद्धाः वैदिकै-रित्युक्तेः । मुण्डकोपनिषदि –

'प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं कर्म येषु' इति लोकान्तर-जयाभावात् बीजक्षेत्रवृद्धिकरा इत्यभिप्रायेण शारीरा इत्युक्तम् ।

**यज्ञाश्च द्वात्रिंशत् ॥** (३)

यज्ञाः केवलं शारीरा न भवन्ति । अनेन संस्काराणां द्वैविध्यं दर्शितम् । उक्तञ्च ।

'संस्कारा द्विविधा ज्ञेयाः ब्राह्मा दैवाः प्रकीर्तिताः । इति ।

शङ्खः — 'संस्कारैस्संस्कृतः पूर्वैरुत्तरैरपि संस्कृतः' । इति च

तत्र निषेकादिपाणिग्रहणान्ताः ब्राह्मसंस्काराः । यज्ञाः दैवसंस्काराः । ब्राह्मसंस्काराश्चतुर्विधाः बीजक्षेत्रशुद्धिकराः ब्राह्मणत्वापादकाः उत्कृष्टत्वापादकाः क्रियमाणाघशान्त्युपकारकाश्चेति । निषेकादिजातकर्मपर्यन्ताः बीजक्षेत्रशुद्धिकराः । नामकरणाद्युपनयनान्ताः पापनिर्बर्हणद्वारा ब्राह्मणत्वापादकाः । उपाकर्मादिपाणि-ग्रहणान्ता उत्कृष्टत्वापादकाः । इतरे क्रियमाणाघशान्तिद्वारा उपकारकराः ।

मनुः — 'गार्भैर्होमैर्जातकर्मचौलमौञ्जीनिबन्धनैः ।
बैजिकं गार्भिकञ्चैनो द्विजानामपमृज्यते' ॥ इति ।

'वैदिकैः कर्मभिः पुण्यैः निषेकाद्यैर्द्विजन्मनाम् ।
कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च' ॥ इति च ।

याज्ञवल्क्यः — 'षष्ठेऽन्नप्राशनं मासि चूडा कार्या यथाकुलम् ।
एवमेनश्शमं याति बीजगर्भसमुद्भवमिति' ॥

'स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेज्यया हुतैः ।
महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः' ॥ इति च ।

श्रीविष्णुपुराणे :— 'अहन्यहन्यनुष्ठानं यज्ञानां द्विजसत्तम ।
उपकारकरं पुंसां क्रियमाणाघनाशनम्' ॥ इति ।

निषेकादाजातकादित्यादिभिः सूत्रकारेणोत्तरत्र वक्ष्यमाणा वर्षवर्धनादयः उक्तसंस्कारावान्तरभेदा इत्यवगन्तव्यम्।

**यज्ञाः** इति। देवतामुद्दिश्य द्रव्यत्यागो यागः। यद्वा वषट्कारादियुतः। यद्वा 'अयज्ञो वा एष योऽसामा' इति स्तोत्रशस्त्रसहितो वा। चकारस्समुच्चयपरः। निषेकादयः हविर्यज्ञादयश्च संस्काराः अनभिसंहितफलाश्चेत् भगवत्प्रीतिद्वारा अपवर्गप्रदाः। 'अपाम सोममृता अभूम' इति श्रुतेः। 'ब्राह्मीयं क्रियते तनुरि' ति मनुस्मरणाच्च।

इतरसूत्रिभिः पाकयज्ञत्वेन गृहीतानां पञ्चमहायज्ञानां महायज्ञत्वमेवेति ज्ञापयितुं चकारः। तत्त्वं तेषां 'महायज्ञा' इति भगवताऽप्याश्वमेधिके उक्तम्।

'केचित्पञ्चमहायज्ञान् पाकयज्ञान् प्रचक्षते।
यज्ञादीनपरे त्वाहुः(?) महायज्ञविदो विदुः॥
सर्वे एते महायज्ञाः सर्वथा परिकीर्तिताः॥' इति।

**ब्रह्मयज्ञो देवयज्ञः पितृयज्ञो भूतयज्ञो मनुष्ययज्ञ इति पञ्चानामहरहरनुष्ठानम्॥** (४)

पञ्चमहायज्ञान् विविच्योपपादयति 'ब्रह्मयज्ञ' इत्यादिना। अत्र पञ्चानामहरहरनुष्ठानम्।

'भक्षणी पेषणी चुल्ली तापनी दाहनीति च।
पञ्च सूना गृहस्थस्य वर्तन्तेऽहरहस्सदा॥'

इति सूनादोषापनोदार्थमहरहरित्युक्तम्।

**'स्थालीपाकमाग्रयणमष्टका पिण्डपितृयज्ञो मासिश्राद्धं चैत्र्याश्वयुजीति सप्त पाकयज्ञाः॥** (५)

इतरसूत्रिभिः यज्ञत्वेन गृहीतानामौपासनादीनां निवृत्त्यर्थं पाकयज्ञानुपपादयति स्थालीपाकमित्यादिना। सप्तपाकयज्ञानां रूढ्या पाकयज्ञत्वम् चरुशब्दप्रयोगात् हविश्शब्दप्रयोगाभावाच्च। यज्ञशालायामेव कर्तव्यत्वनियमाभावाद्वा।

अत्र बोधायनः । 'यच्च किञ्चिच्चान्यत्र विहाराद्धूयते सर्वास्ताः पाकयज्ञसंस्था' इति ।

**अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासावाग्रयणेष्टिश्चातुर्मास्यो निरूढपशुबन्धस्सौत्रामणीति सप्त हविर्यज्ञाः ॥ (६)**

हविर्यज्ञानुपपादयति अग्न्याधेयमित्यादिना । हविश्शब्दप्राधान्याद्धविर्यज्ञाः । सप्त हविर्यज्ञा इत्यधिकसंख्यानिषेधार्थम् ।

**अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यष्षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्त सोमयज्ञाः ॥ (७)**

**इत्येते चत्वारिंशद्भवन्ति ॥ (८)**

सोमग्रहाधिक्यात् स्तोत्रशस्त्राधिक्याच्च क्रतुभेदान् दर्शयन् सोमयज्ञानुपपादयति अग्निष्टोम इत्यादिना । अग्निष्टोमप्रभृत्यप्तोर्यामपर्यन्तानामेव नित्यत्वमितरेषां सत्राहीनादीनां नित्यत्वं नास्तीति दर्शयति सप्त सोमयज्ञा इति । एवमुक्तप्रकाराः निषेकाद्यप्तोर्यामान्ताश्चत्वारिंशत्संस्कारा भवन्ति । वर्षवर्धनादयश्च संस्कारविशेषाः सङ्ख्यातेषु यथायोगं समुच्चीयन्ते ।

**निषेकादाजातकात् संस्कृतायां ब्राह्मण्यां ब्राह्मणात् जातमात्रो मात्रः ॥ (९)**

ब्राह्मणानां संस्कारविशेषादवस्थान्तरावाप्तिं दर्शयति निषेकादाजातकादित्यादिना । जातमात्र इत्युक्तौ ब्राह्मणेन शूद्रादिक्षेत्रे जातानामपि ब्राह्मण्यं सम्भवतीति ब्राह्मण्यां ब्राह्मणादित्युक्तम् । निषेकादित्याद्यनुक्तौ—

'अमृते जारजः कुण्डो मृते भर्तरि गोलकः ।
ते न जाताः परक्षेत्रे देहिनां प्रेत्य चेह च ॥
दत्तानि हव्यकव्यानि नाशयन्ति प्रदातृणाम् ।
पितुर्हि नरकायैव गोलकस्तु विशेषतः ॥' इति ।

नारदः— 'परदारेषु जायन्ते द्वौ पुत्रौ कुण्डगोलकौ ।
जीवत्यथ भवेत् कुण्डो मृते भर्तरि गोलकः ॥' इति ।

कुण्डगोलकयोरपि सम्भवतीति तद्व्यावृत्त्यर्थं निषेकादाजातकादित्याद्युक्तम्।

युधिष्ठिरः — 'आत्मा पुत्रस्तु विज्ञेयः प्रथमो बहुधा परे ।
स्वे क्षेत्रे संस्कृते यं तु पुत्रमुत्पादयेत्स्वयम् ॥
तमौरसं विजानीयात्पुत्रं प्रथमकल्पितम् ।
क्षेत्रजं केचिदेवाहुः सुतं केचित्तु शुक्रजम् ।
तुल्यावेतौ सुतौ कस्य तन्मे ब्रूहि पितामह ' ॥

भीष्मः — 'रेतजो वा भवेत्पुत्रः पुत्रो वा क्षेत्रजोऽपि वा ।
अव्यूढमेव समयं हित्वैवैतन्निबोध मे ॥
आत्मनं पुत्रमुत्पाद्य यस्त्यजेत्कारणान्तरे ।
न तत्र कारणं रेतः स क्षेत्रस्वामिनो भवेत् ॥
परक्षेत्रेषु यो बीजं नरो दर्पात्समुत्सृजेत् ।
क्षेत्रिकस्यैव तद्राजन्! न बीजी लभते फलम् ॥' इति ।

**उपनीतस्सावित्र्यध्ययनाद्ब्राह्मणः ॥ (१०)**

उपनीतः सावित्र्यध्ययनार्हसंस्कारविशेषं प्राप्तः सावित्र्यध्ययनाद्ब्राह्मणः ।

बोधायनः — 'नास्य कर्म नियच्छन्ति किञ्चिदामौञ्जिबन्धनात्' ।
वृत्त्या शूद्रसमो ह्येष यावद्वेदेन जायते' ॥ इति ।

**वेदमधीत्य शारीरैरापाणिग्रहणात्संस्कृतः पाकयज्ञैरपि यजन् श्रोत्रियः ॥ (११)**

बोधायनः— 'निषेके गर्भसंस्कारे जातकर्मक्रियासु च ।
विधिवत्संस्कृता मन्त्रैः चीर्णव्रतसमापनात् ।
श्रोत्रिया इति विज्ञेयाः शाखापाराश्च ये द्विजाः' ॥ इति ।

देवलः— 'जन्मना ब्राह्मणो ज्ञेयस्संस्काराद्द्विज उच्यते ।
विद्यया याति विप्रत्वं त्रिभिः श्रोत्रिय एव च ॥' इति ।

'श्रोत्रियस्याकामहतस्येति श्रुतवेदान्तः श्रोत्रियः । एकां शाखामधीत्य श्रोत्रिय इति वा । अपिना श्रोत्रिया एत इत्यवगमयति । वेदमधीत्येत्यनेन प्राजापत्यव्रतबन्धात् पूर्वमेव आषाढोपाकर्मणः कर्तव्यता सूच्यते । 'अन्तराप्येव-मध्यापयितुकाम' इति सूत्रात् आषाढोपाकर्मणा व्रतबन्धस्यापि चरितार्थत्वात् ॥

श्रीविष्णुपुराणे — 'ब्रह्मचारी गृहस्थश्च भिक्षुर्वैखानसस्तथा ।
ते चत्वार आश्रमिणः पञ्चमो नोपपद्यते ॥
यस्तु सन्त्यज्य गार्हस्थ्यं वानप्रस्थो न जायते ।
परिव्राड्वापि मैत्रेय स नग्नः पापकृन्नरः' ॥

इति समावृत्तस्याश्रमित्वाभावात् व्रतबन्धविसर्गयोरङ्गभूतयोः प्रधानत्वाभावाच्च व्रतबन्धविसर्गसमावर्तनकर्मणां शारीरत्वं नास्तीति शङ्कायां तद्व्यावृत्त्यर्थम् ।

'स्वाध्यायेन ऋषीन् पूज्य स्नानेन च पुरन्दरम् ।
प्रजया च पितॄन् पूर्वाननृणो दिवि मोदते' ॥ इति ।

'व्रतेन वै मेध्यः' 'ईश्वरं वै व्रतमविसृष्टं प्रदहोऽग्ने व्रतपते व्रतमचारिष-मित्याह व्रतमेव विसृजते शान्त्या अप्रदाहाय' इति श्रुतेः प्रधानत्वं मङ्गलत्वं ऋणापकरणद्वारा प्राधान्यञ्चास्तीति ज्ञापयितुमत्रापि शारीरैरित्युक्तम् ।

**स्वाध्यायपरश्चाहिताग्निः हविर्यज्ञैरप्यनूचानः ॥** (१२)

श्रुतिः । 'यं यं क्रतुमधीते तेन तेनास्येष्टं भवतीति ।'

स्मृतिः । 'अनग्निकस्य वेदोऽग्निः वेदहीनोऽप्यनग्निकः ।
साग्निको वेदहीनश्चेदनग्निक इति स्मृतः ॥' इति ।

श्रीभगवान् — 'द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथा परे ।
स्वाध्यायज्ञानयज्ञाश्च यतयस्संशितव्रताः ॥' इति ।

किञ्च — केवलाग्निहोत्रात्स्वाध्यायस्याधिक्यं श्रूयते यथा — 'अग्निं वै जातं पाप्मा जग्राह' इत्यारभ्य 'अपहतपाप्मा स्वाध्यायो देवपवित्रं वा' इति तस्य स्वत एवापहतपाप्मत्वं श्रूयत इत्यभिप्रायेण '**स्वाध्यायपरश्चाहिताग्नि**रित्युक्तम् ।

किञ्च – 'तस्य वा एतस्य महतो भूतस्य निश्श्वसितमेतद्यदृग्वेद' इत्यादि च श्रूयते ।

श्रीभागवते च— 'पुरुषेष्वपि राजेन्द्र सुपात्रं ब्राह्मणं विदुः ।
तपसा विद्यया तुष्ट्या धत्ते वेदं हरेस्तनु' ॥ मिति प्रोक्तम्

हविर्यज्ञैः अग्न्याधेयादिभिः अपिना पूर्वोक्तैस्संस्कारैरनूचानः श्रेष्ठतरः । अङ्गाध्याय्यनूचान इत्यङ्गाध्यायी च । अत एव वेदानामाधिक्यम् ।

**सोमयज्ञैरपि भ्रूणः ।** (१३)

**सोमयज्ञैः** अपिना पूर्वोक्तैस्संस्कारैः भ्रूणः श्रेष्ठतमः । 'यज्ञो हि श्रेष्ठतमं कर्मे'ति श्रुतेः ।

**संस्कारैरेतैरुपेतो नियमयमाभ्यामृषिकल्पः ।** (१४)

**नियमयमौ** 'शौचमिज्या तपस्सत्यं स्वाध्यायोपस्थनिग्रहौ ।
व्रतोपवासौ मौनञ्च स्नानञ्च नियमा दश' ॥ इत्युक्ताः नियमाः

'आनृशंस्यं क्षमा सत्यं अहिंसा दम आर्जवम् ।
दानं प्रसादो माधुर्यं मार्दवञ्च यमा दश' ॥ इत्युक्ता यमाः

**साङ्गचतुर्वेदतपोयोगादृषिः ।** (१५)

**अङ्गानि** 'छन्दः पादौ शब्दशास्त्रञ्च वक्त्रं
कल्पः पाणिः ज्यौतिषं चक्षुषी च ।
शिक्षा घ्राणो ब्रह्मणः श्रोत्रमुक्तं
वेदस्याङ्गान्याहुरेतानि षट् च' ॥ इति ।

**वेदाः** प्रसिद्धाः । **तपोयोगः** तपस्वित्वम् । यद्वा 'तपो नानशनात्पर' मित्यनशनम् । यद्वा 'ऋतं तप' इत्याद्युक्तम् ।

**यद्वा**— 'वैराग्यमनहङ्कारः शौचमिन्द्रियनिग्रहः ।
आम्नायाभ्यसनं दानं तथा कायविशोषणम् ॥
आहारनियमो मौनमिति सन्तस्तपो विदु' रित्युक्तम् ।

यद्वा योगशब्देन ध्यानापरपर्यायः अष्टाङ्गयोग उच्यते । 'योगस्सन्नहनोपायध्यान सङ्गतियुक्तिषु' इति प्रमाणात् ।

**नारायणपरायणो निर्द्वन्द्वो मुनिः ।**　(१६)

'आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः' ॥ इति ।

अखिलजगदेककारणत्वात् नारायणः परं अयनं यस्य सः नारायणपरायणः । 'नारायणं महाज्ञेयं विश्वात्मानं परायण'मित्यादिश्रुतिः । निर्द्वन्द्वः शीतोष्णसुखदुःखमानावमानलाभालाभजयापजयादिषु दुःखसन्तोषहेतुषु सुखदुःख रहितः मुनिः । गीयते च

'दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।
वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते' ॥ इति ।

यद्वा मननशीलो मुनिरिति । विषयविशेषसंशीलनं मननम् । तच्चात्र शुभाश्रयसंशीलनम् ।

अत्रोदाहृतानां मात्रादीनां लक्षणं देवलेनाप्युक्तम् —

'मात्रश्च ब्राह्मणश्चैव श्रोत्रियश्च ततः परम् ।
अनूचानस्तथा भ्रूणः ऋषिकल्प ऋषिर्मुनिः ॥

इत्येतेऽष्टौ समुद्दिष्टाः ब्राह्मणाः प्रथमं श्रुतौ ।
तेषां परः परः श्रेष्ठः विद्यावृत्तविशेषतः ॥

ब्राह्मणानां कुले जातः निभृतः सत्यवाक् घृणी ।
अनुपेतः क्रियाहीनः मात्र इत्यभिधीयते ॥

एकदेशमतिक्रम्य वेदस्याचारवान् ऋजुः ।
स ब्राह्मण इति ख्यातः निभृतस्सत्यवाक् घृणी ॥

एकां शाखां सकल्पां वा षड्भिरङ्गैरधीत्य वा ।
षट्कर्मनिरतो विप्रः श्रोत्रियो नाम धर्मवित् ॥

वेदवेदाङ्गतत्त्वज्ञः शुद्धात्मा पापवर्जितः ।
शेषं श्रोत्रियवत्प्राप्तस्सोऽनूचान इति स्मृतः ॥

अन्तर्व्रतगुणोपेतः यज्ञस्वाध्याययन्त्रितः ।
भ्रूण इत्युच्यते शिष्टैः शेषभोजी जितेन्द्रियः ॥

लौकिकं वैदिकञ्चैव सर्वं ज्ञानमवाप्य च ।
आश्रमस्थो वशी नित्यमृषिकल्प इति स्मृतः ॥

ऊर्ध्वरेतास्तपस्युग्रो नियताशी न संशयः ।
शापानुग्रहयोश्शक्तस्सत्यसन्धो भवेदृषिः ॥

निवृत्तः सर्वतत्त्वज्ञः कामक्रोधविवर्जितः ।
ध्यानस्थो निष्क्रियो दान्तस्तुल्यमृत्काञ्चनो मुनि' रिति ॥

**इति संस्कारविशेषात्पूर्वात्पूर्वात्परो वरीयानिति विज्ञायते । (१७)**

**संस्कारविशेषात्** उत्तरोत्तरसंस्कारगौरवात् **पूर्वात्पूर्वात्** पूर्वपूर्वसंस्कारापेक्षया **परः** उत्तरोत्तरः **वरीयान्** श्रेष्ठः । जातमात्रात् ब्राह्मणः श्रेष्ठः तस्मात् श्रोत्रियः तस्मादाहिताग्निः तथा अनूचानः भ्रूणः ऋषिकल्पः ऋषिर्मुनिरिति ।

शातातपः—'चित्रकर्म यथाऽनेकैरङ्गैरुन्मील्यते नरैः ।
ब्राह्मण्यमपि तद्वत्स्यात् संस्कारैर्मन्त्रपूर्वकै' रिति ॥

निषेकादिसंस्कारैः बीजक्षेत्रशुद्धिद्वारा कर्मान्तरयोग्यतासिद्धिमात्रमित्याशङ्क्य भूरादिलोकान्तरजयार्थं यज्ञसंस्कारा उक्ताः । श्रूयते यजुषि 'इममेव लोकमभिजयत्यग्निष्टोमेन अन्तरिक्षमुक्थ्येन सुवर्गं लोकं षोडशिनः स्तोत्रेण देवयानानेव पथ आरोहत्यतिरात्रेण नाकं रोहति बृहतः स्तोत्रेण' इत्यादि ।

ब्रह्मार्पणत्वेन विना कृतानामपि यागानां संसारोत्तारकत्वं नास्तीत्याशङ्क्य ऋषिकल्पादिपर्वत्रयमुक्तम् ।

अत्र श्रुतिः 'प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं कर्म येषु ।
एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापियन्ति' इति ।

ऋषिकल्पस्य ऋषेश्च परमात्मोपासनरूपसंस्कारविशेषाभावात

'तपो विद्या च विप्रस्य निश्श्रेयसकरावुभौ ।
तपसा किल्बिषं हन्ति विद्ययाऽमृतमश्नुते' ॥

इति मनुस्मरणात्

'परात्परतरं याति नारायणपरायणः' ॥

इति नारायणपरायणस्य अपवर्गान्तफलश्रवणाच्च नारायणपरायण इत्युक्तम् ।

ननु बाल्यादारभ्य नारायणपरायणश्चेत् किमर्थमेते संस्कारा इति चेत् सत्यम् । 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इति, 'तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत् बाल्यञ्च पाण्डित्यञ्च निर्विद्याथ मुनि'रिति श्रुतेः, 'एतमेव विदित्वा मुनिर्भवती'ति (बोधायनः ।)

'जपहोमेष्टियज्ञाद्यैः शोधयित्वा स्वविग्रहम् ।
साधयेत्सर्वकर्माणि नान्यथा सिद्धिमश्नुते' ॥ इति

'व्रतैर्जपैश्च होमैश्च वेदाध्ययनकर्मणा ।
अन्यैश्च विविधैर्धर्मैः चिरं सम्यगनुष्ठितैः ।
साध्यते भक्तिमहिमा सर्वात्मनि हरौ नृणाम्' ॥

इति स्मरणाच्च । उपासननिष्पत्त्यर्थमुपासनांगत्वेन तेषां कर्तव्यत्वावगमात् शुकवत् सर्वेषां (आजन्मतः) ब्रह्मज्ञानाभावाच्च निषेकादिसंस्काराः कर्तव्याः ।

ननु सूत्रे तावत् 'निषेकादिसंस्कारान् व्याख्यास्यामः' इत्युक्तम् । निषेक-संस्कारस्तु मध्ये (विवाहप्रकरणे) पठित इति कथं निषेकादित्वमुच्यत इति चेत उच्यते । निषेकादिसंस्कारान् व्याख्यास्याम इत्युक्त्वा पुनरपि ऋतुसङ्गमनेत्यादिना प्रधानभूतसङ्गमनस्यादावेव प्रतिपादनात् अत एव 'निषेकादिश्मशानान्ता' इति मनूक्त-प्रकारेण निषेकाद्यपरसंस्कारान्तं सङ्क्षेपेणोक्तत्वात् इतरसूत्रेष्वनुक्तत्वात् 'वैखानसेन सूत्रेण निषेकादिक्रियाऽन्वितः' इति भृगुणा प्रतिपादितनिषेकादित्वमुपपद्यत एव । निषेकसंस्कारमादितस्सङ्ग्रहेणोक्त्वा अनन्तरं विस्तरेण प्रतिपादितवतः द्वितीयखण्डादारभ्य आचारादिपूर्वकत्वेनोक्तवतश्च सूत्रकारस्यायमभिप्रायः । निषेकः प्रथमः संस्कारः । स च पाणिग्रहणभावे न सम्भवतीति पाणिग्रहणमुक्तम् ।

'यथा चर्ममयो हस्ती यथा दारुमयो मृगः ।
ब्राह्मणस्त्वनधीयानः त्रयस्ते नामधारकाः' ॥ इति
'यथा षण्डोऽफलः स्त्रीषु यथा गौर्गवि चाफला ।
यथा चाज्ञेऽफलं दानं तथा विप्रोऽनृचोऽफलः' ॥

इति च मनुस्मरणात् अनधीतवेदस्य प्रतिग्रहादिष्वधिकारो नास्तीति व्रतबन्धादिकमुक्तम्। अध्ययनयोग्यतासिद्ध्यर्थमापाद्यं कर्म। अकृतोपनयनस्य वेदाध्ययनादिष्वधिकारो नास्तीति ततः पूर्वमुपनयनमुक्तम्। उपनयनात्पूर्वं कर्तव्याः चौलादिसंस्काराः चौलान्तत्वेनान्ते उक्ताः ।

हरिवंशे-- 'योऽनिष्ट्वा च पितॄन् श्राद्धे क्रियां काञ्चित्करिष्यति ।
राक्षसाश्च पिशाचाश्च फलं प्राप्स्यन्ति तस्य तत्' ॥

इति स्मरणात् तत्पूर्वं नान्दीमुखमुक्तम् । तत्पूर्वं सामान्यमन्त्राः प्रतिपादिताः । तत्पूर्वमाघारान्तहोमौ प्रतिपादितौ । अग्न्यायतनकल्पनाभावे होमादिकं न सिद्ध्यतीति तत्पूर्वं अग्न्यायतनकल्पनम् । शुद्ध्यर्थं तत्पूर्वं पुण्याहविधिरुक्तः ।

'आचारहीनं न पुनन्ति वेदाः यद्यप्यधीताःसहषड्भिरङ्गैः ।
छन्दांस्येनं मृत्युकाले त्यजन्ति नीडं शकुन्ता इव जातपक्षाः' ॥
'सर्वागमानामाचारः प्रथमं परिकल्पते ।
आचारप्रभवो धर्मो धर्मस्य प्रभुरच्युतः' ॥

इति कर्माचरणयोग्यतासिद्ध्यर्थं शुद्धा(द्ध्या)चमनादीनि नित्यकर्माणि तत्पूर्वं प्रतिपादितानि । एवं च निषेकादारभ्य पाणिग्रहणान्तत्वेन गणयितुं शक्यत्वात् 'पाठक्रमादर्थक्रमो बलीया' निति न्यायादन्येषां मध्ये प्रतिपादनेऽपि निषेकादित्वमस्तीति बोद्धव्यम् ।

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ प्रथमप्रश्नप्रथमखण्डार्थ-
विवरणं समाप्तम् ।

## अथ द्वितीयः खण्डः

अथ चातुराश्रमिणां स्नानविधिः । (१)

अथ स्वकृतपूर्वपुण्यविशेषात् श्रीमन्नारायणैकशेषत्वेनाभिहिते श्रीवैखानस-कुले जातानां इतरसूत्रिणाञ्च चतुर्विधपुरुषार्थसिद्ध्यर्थं भगवदाराधनरूपत्वेनाभि-हितानां निषेकादिसंस्काराणां

'सन्ध्याहीनोऽशुचिर्नित्यमनर्हस्सर्वकर्मसु'

इति संध्योपासनपूर्वकत्वस्मरणात् कर्माचरणयोग्यतासम्पादकस्य तस्य

'अस्नात्वा नाचरेत्कर्म जपहोमादि किञ्चन'

इति स्नानपूर्वकत्वावगमात् सन्ध्योपासनयोग्यतासम्पादकं स्नानविधिं वक्तुमारभते अथेति । चातुराश्रमिणां ब्रह्मचारिप्रभृतीनाम् । यद्वा चातुराश्रमिणो ब्राह्मणाः, तेषाम्

गौतमीये— 'ब्रह्मक्षत्रविशाञ्चैव मन्त्रवत्स्नानमिष्यते ।
तूष्णीमेव हि शूद्रस्य स्त्रीणाञ्चैव तथा भवेत्' ॥

इति समन्त्रकत्वेन स्नानविधेरुक्तत्वात् स्त्रीशूद्रयोर्निषेधः । इदं च वारुणमेव । यद्वा उत्थानानन्तरं कर्तव्यानां अभिगमनादीनामङ्गत्वेन स्नानविधिभेदान् वक्तुमारभते अथेति । अत्र अभिगमनादिकर्तव्येषु प्रमाणवचनान्युदाह्रियन्ते -

मनुः— 'ब्राह्मे मुहूर्ते बुद्ध्येत धर्मार्थावनुचिन्तयन् ।
कायक्लेशांश्च तन्मूलान् वेदतत्त्वार्थमेव च' ॥ इति ।

वेदतत्त्वार्थशब्देन परं ब्रह्माभिधीयते 'नारायण परं ब्रह्म' 'सर्वे वेदा यत्पदमामनन्ति' 'वेदैश्च सर्वैरहमेव वेद्यः' इत्यादि श्रुतिस्मृतिभ्यः ।

'ब्राह्मे मुहूर्ते देवानां पितॄणाञ्च समागमः ।
जागरस्तत्र कर्तव्यो देवसम्माननं हि तत् ॥
य इच्छेच्छाश्वतीं सिद्धिं यमस्यादर्शनं तथा ।
सततं तेन कर्तव्यो ब्राह्मे काले प्रजागरः' ॥ इति ।

पितामहः 'नक्षत्रज्योतिरारभ्य त्वासूर्योदयदर्शनात् ।
प्रातस्सन्ध्येति तां प्राहुः श्रुतयो मुनिसत्तमाः' ॥ इति ।

दक्षः— 'रात्र्यन्त्यामनाडी द्वे सन्ध्यादेः काल उच्यते ।
दर्शनाद्रविरेखायाः तदन्तो मुनिभिः स्मृतः ॥

अभ्यर्धयामादासायं सन्ध्या माध्याह्निकीष्यते' ॥ इति ।

स्मृत्यन्तरे 'उदयात्प्राक्तनी सन्ध्या घटिकात्रयमीरिता ।
सायंसन्ध्या त्रिघटिका अस्तादुपरि भास्वतः ॥

ततः पूर्वं समुत्थाय प्राचीमेवोपनिष्क्रमेत् ।
उदीचीं प्रागुदीचीं वा शौचाचारक्षमां दिशम्' ॥ इति ।

'धर्म्यं सदाचार' मिति धर्मोक्तमप्यत्रानुसन्धेयम् ।

स्पर्शनद्रव्याण्याह पराशरः —

'काल्य उत्थाय यो मर्त्यो स्पृशेद्द्रव्यं घृतं मधु ।
सर्षपांश्च प्रियङ्गूंश्च किल्बिषेण स मुच्यते ॥

विष्णुक्रान्तां शमीं दूर्वां चन्दनं शङ्खपुष्पिकाम् ।
शतपत्रश्चैकपत्रं श्रीलतां कुसुमान्यपि ॥

दूर्वाश्च(?) जातिकुसुमं तिलान् सर्पिश्च तण्डुलान् ।
शिरसा धारयेन्नित्यं श्रियमिच्छन्ननाकुलः' ॥ इति ।

बोधायनः— 'अरणिं कृष्णमार्जारं चन्दनं सुमणिं घृतम् ।
तिलान् कृष्णाजिनं छागं गृहेष्वेतानि धारयेत् ॥

गृहे पारावता धार्याः शारिका वै शुकास्तथा ।
घ्नन्ति वै धारिता ह्येता भूतबाधां गृहे ध्रुवम्' ॥ इति ।

शौचविधिः —

माधवीये — 'नैर्ऋत्यामिषुविक्षेपमतीत्याभ्यधिकं भुवः ।
कुर्यान्मूत्रपुरीषे तु नान्यथा शुद्धिमाप्नुयात् ॥

अन्तर्धाय तृणैर्भूमिं शिरः प्रावृत्य वाससा ।
घ्राणास्ये वाससाऽऽवेष्ट्य मलं मूत्रं त्यजेद्बुधः ' ॥ इति ।

हारीतः — 'अप्रावृतशिरा यस्तु विण्मूत्रं विसृजेद्द्विजः ।
तच्छिरः शतधा भूयादिति देवाश्शापन्ति तम् ' ॥ इति ।

मनुः — 'तिरस्कृत्योच्चरेत्पूर्वं काष्ठं पत्रं तृणादिकम् ।
नियम्य प्रयतो वाचं संवीताङ्गोऽवकुण्ठितः ' ॥ इति ।

याज्ञवल्क्यः — 'दिवा सन्ध्यासु कर्णस्थब्रह्मसूत्र उदङ्मुखः ।
कुर्यान्मूत्रपुरीषे तु रात्रौ चेद्दक्षिणामुखः ' ॥ इति ।

'न तु मेहेन्नदीछायावर्त्मगोष्ठाम्बुभस्मसु ।
न प्रत्यगन्यर्कगोसोमसन्ध्यांबुस्त्रीद्विजन्मनाम् ' ॥ इति ।

बोधायनः — 'पवित्रं दक्षिणे कर्णे कृत्वा विण्मूत्रमुत्सृजेत् ' । इति ।

यमः — 'छायायामन्धकारे वा रात्रावहनि वा द्विजः ।
यथासुखमुखः कुर्यात्प्राणबाधाभयेषु च ' ॥ इति ।

मनुः — 'प्रत्यग्निं प्रतिसूर्यञ्च प्रतिसोमोदकद्विजम् ।
प्रतिगां प्रतिसन्ध्यञ्च प्रज्ञा नश्यति मेहतः ' ॥ इति ।

योगीश्वरः — 'वापीकूपतटाकादिसमीपे च सुरालये ।
गर्ते पथि नदीतीरे चाऽयुर्नश्यति मेहतः ' ॥ इति ।

यमः — 'प्रत्यादित्यं न मेहेत न पश्येदात्मनः शकृत् ।
दृष्ट्वाऽऽदित्यं निरीक्षेत गामग्निं ब्राह्मणं तथा ' ॥ इति ।

श्लोकापस्तम्बः — 'गृहीतोदकपाणिस्तु कुर्यान्मूत्रपुरीषकम् ।
तत्तोयं मूत्रतुल्यं स्यात् पीत्वा चान्द्रायणं चरेत् ' ॥ इति ।

'भूमौ निक्षिप्य तद्द्रव्यं शौचं कृत्वा यथाविधि ।
उत्सङ्गोपात्तपक्वान्न उपस्पृश्य ततः शुचिः' ॥ इति (एतदापद्विषयम्)

मार्कण्डेयः — 'पक्वान्नेन गृहीतेन मूत्रोच्चारं करोति यः ।
अनिधायैव तद्द्रव्यमङ्के कृत्वा समाश्रितम् ॥

शौचं कृत्वा यथान्यायमुपस्पृश्य यथाविधि ।
अन्नमभ्युक्षयेच्चैवमुद्धृत्यार्कस्य दर्शयेत् ॥
त्यक्त्वाग्रमात्रं वा तस्मात् शेषं प्रोक्ष्य विशुद्ध्यति' । इति ।

भरद्वाजः — 'मलमूत्रं त्यजेद्यस्तु विस्मृत्यैवोपवीतधृक् ।
तत्सूत्रन्तु परित्यज्य धरेदन्यत्पुनर्नवम् ॥
कृत्वा मूत्रं पुरीषं वा यदा नैवोदकं भवेत् ।
स्नात्वा लब्धोदकः पश्चात् सचेलन्तु विशुद्ध्यति ॥
गृहीतशिश्नश्चोत्थाय मृद्भिरभ्युद्धृतैर्जलैः ।
गन्धलेपक्षयकरं शौचं कुर्यादतन्द्रितः ॥
तिष्ठन् सृजति मूत्रन्तु यावदार्द्राश्च रेणवः ।
तावन्त्यब्दानि नरके तिष्ठेत् स पितृभिस्सह ॥
मूत्रं कृत्वा विनाशौचं कच्छं बद्ध्वा द्विजाधमः ।
कच्छान्वितो मूत्रयित्वा स मूढो नरकं व्रजेत् ॥
विट्छौचं प्रथमं कुर्यान्मूत्रशौचमनन्तरम्' । इति ।

दक्षः — 'अर्धप्रसृतिमात्रा तु प्रथमा मृत्तिका मता ।
द्वितीया च तृतीया च तदर्धेन प्रकीर्तिता ।
चतुर्थी पञ्चमी चापि द्वितीयामृत्तिकासमा' ॥ इति ।

वसिष्ठः — 'द्वे लिङ्गे मृत्तिके देये पञ्चापाने करे दश ।
उभयोस्सप्त दातव्या मृदः शुद्धिमभीप्सता' ॥ इति ।

मनुदक्षौ — 'एका लिङ्गे गुदे तिस्रः तथैकस्मिन् करे दश ।
उभयोस्सप्त दातव्या मृदः शुद्धिमभीप्सता ॥ इति ।

दक्षः — 'एकां लिङ्गे मृदं दद्याद्वामहस्ते तु मृत्त्रयम् ।
उभयोर्हस्तयोर्द्वे तु मूत्रशौचं प्रचक्षते ॥
आर्द्रामलकमात्रा तु मूत्रशौचे तु मृत्तिका ।
मूत्रात्तु द्विगुणं शुक्रे मैथुने त्रिगुणं स्मृतम्' ॥ इति ।

मनुः — 'एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम् ।
त्रिगुणन्तु वनस्थानां यतीनान्तु चतुर्गुणम्' ॥ इति ।

आपस्तम्बः — 'अह्नि शौचन्तु यत्प्रोक्तं निश्यर्धं तत उच्यते ।
पथि पादन्तु विज्ञेयमार्तः कुर्याद्यथाबलम्' ॥

'न यावदुपनीयन्ते द्विजाश्शूद्रास्तथाङ्गनाः ।
गन्धलेपक्षयकरं शौचमेषां विधीयते' ॥ इति ।

शातातपः — 'आहरेन्मृत्तिका विप्रः कूलात्ससिकता अपि ।
शुचौ देशे तु सङ्ग्राह्याः शर्कराश्मविवर्जिताः ॥

यमः — 'नाखुकृष्टान्न वल्मीकात् पांसुलान्न च कर्दमात् ।
न मार्गान्नोषराच्चैव शौचशिष्टात्परस्य च ॥
एतास्तु वर्जयेन्नित्यं वृथा शौचं हि तत्स्मृतम्' ॥ इति ।

चतुर्ऋषिमते च– 'वापीकूपतटाकेषु नान्यतो मृदमाहरेत् ।
अरत्निमात्रात् गृह्णीयाज्जले ह्यामणिबन्धतः' ॥ इति ।

मरीचिः — 'तिसृभिश्च तथा पादावागुल्फान्तं तथैव च ।
हस्तावामणिबन्धात्तु गन्धलेपापकर्षणम् ॥ इति ।

देवलः — 'मानुषास्थि वसां विष्ठामार्तवं मूत्ररेतसी ।
मज्जाञ्च शोणितं स्पृष्ट्वा परस्य स्नानमाचरेत् ॥
तान्येव स्वानि संस्पृश्य प्रक्षाल्याचम्य शुद्ध्यति' ॥

उपविष्टस्तु विण्मूत्रं कर्तुं यस्तु न विन्दति ।
तथापि कुर्याच्छौचार्धं स्वस्य शौचस्य सर्वदा ॥

ऋश्यशृङ्गः — 'यस्मिन् देशे कृतं शौचं वारिणा तन्तु शोधयेत् ।
अशुद्धस्तु भवेत्तावत् मृत्तिकां यो न शोधयेत् ॥

आचमनविधिः

यज्ञवल्क्यः — 'अन्तर्जानु शुचौ देशे उपविष्ट उदङ्मुखः ।
प्राग्वा ब्राह्मेण तीर्थेन द्विजो नित्यमुपस्पृशेत्' ॥

भरद्वाजः— 'जङ्घान्तं जानुपर्यन्तमथवा चरणद्वयम् ।
कूर्परान्तं करौ सम्यक् क्षालयेत्प्रथमं बुधः ॥
उपविश्य शुचौ देशे प्राङ्मुखो ब्रह्मसूत्रधृक् ।
बद्धचूडः कुशकरो द्विजश्शुचिरुपस्पृशेत् ॥
सपवित्रस्सदर्भो वा कर्माङ्गाचमनं चरेत् ।
नोच्छिष्टं तत् स दर्भश्च भुक्तोच्छिष्टन्तु वर्जयेत् ॥
ग्रन्थियुक्तपवित्रेण कुर्यादाचमनं यदि ।
तत्पवित्रं परित्यज्य पुनराचम्य शुद्ध्यति' ॥

याज्ञवल्क्यः— 'कनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्रं करस्य तु ।
प्रजापतिपितृब्रह्मदैवतीर्थान्यनुक्रमात् ॥

भरद्वाजः— 'तर्पणं देवतादिभ्यः स्वस्वतीर्थेन कारयेत् ।
पिबेदाचमने वारि वीक्षितं ब्रह्मतीर्थतः ॥
रात्रावनीक्षितेनैव शुद्धिरुक्ता मनीषिभिः ॥

यमः— 'तावन्नोपस्पृशेद्विद्वान् यावद्वामेन न स्पृशेत् ।
वामे हि द्वादशादित्या वरुणश्च जलेश्वरः ॥

व्याघ्रपादः— 'गात्रस्थानानि सर्वाणि स्पृष्ट्वा स्पृष्ट्वा जलं स्पृशेत् ।
आचामन् ब्राह्मणो नित्यमित्याह भगवान् भृगुः ॥

व्यासः— 'गोकर्णाकृतिहस्तेन माषमग्नजलं पिबेत् ।
तन्न्यूनमधिकं पीत्वा सुरापानसमं भवेत् ॥

स एव— 'संहताङ्गुलिना तोयं गृहीत्वा पाणिना द्विजः ।
मुक्ताऽङ्गुष्ठकनिष्ठौ तु शिष्टेनाचमनं भवेत् ॥

याज्ञवल्क्यः— 'हृत्कण्ठतालुगाभिस्तु यथासङ्ख्यं द्विजातयः ।
शुद्ध्येरंस्त्री च शूद्रश्च सकृत् स्पृष्टाद्भिरन्ततः' ॥

सर्वत्र— 'शिरः प्रावृत्य कर्णे वा तिष्ठन् मुक्तशिखोऽपि वा ।
अकृत्वा पादयोश्शौचमाचान्तोऽप्यशुचिर्भवेत् ॥

आर्द्रवासा जले कुर्यात्तर्पणाचमनं जपम् ।
शुष्कवासाः स्थले कुर्यात् तर्पणाचमनं जपम् ॥

हारीतः — 'जान्वोरूर्ध्वमथाचामन् जले तिष्ठन् शुचिर्भवेत् ।
अधस्ताच्छतकृत्वोऽपि समाचान्तो न शुद्ध्यति ॥

भारद्वाजः— 'उदके तूदकस्थस्तु स्थलस्थः स्थलके शुचिः ।
पादौकृत्वोभयत्रापि ह्याचम्योभयतश्शुचिः ॥

हारीतः — 'आर्द्रवासाः स्थलस्थस्तु यद्वाऽऽचामेन्नराधमः ।
वस्त्रनिश्च्योतनं प्रेता अपवार्य पिबन्ति ते' ॥

तद्वागिनं निवार्येत्यर्थः ॥

स एव — 'शुष्केणान्तर्जलेनैव बहिरप्यार्द्रवाससा ।
स्नानं दानं जपो होमः सर्वं भवति निष्फलम् ॥

भारद्वाजः— 'ताम्रचर्माश्मवालैश्च नालिकेराश्मपत्रकैः ।
उपस्पृशेत्स्वहस्तस्थैरेतैरपि विचक्षणः ॥

कर्मावसाने कर्मादावेवमाचमनं पुनः ।
कुर्यात्स्वकर्मसिद्ध्यर्थं सर्वदा सर्वकर्मसु ॥

स्मृतिरत्ने — 'एलालवङ्गकर्पूरगन्धाद्यैर्वासितैर्जलैः ।
नाचामेदद्भिरुष्णाभिस्तथा शौचावशेषितैः ॥

शस्तमाचमनं तोयैरुष्णैरेवोष्णसेविनाम् ।
न चाङ्गुलिभिराचामेन्नातीर्थेन न शब्दवत् ॥

नान्वीक्षितं नास्वन्तं? नोष्णं जलमकारणात् ।
करपात्रे च यत्तोयं यत्तोयं ताम्रभाजने ॥

सौवर्णे राजते चैव नैवाशुद्धन्तु तत् स्मृतम् ।

आपस्तम्बः — 'न वर्षधारास्वाचामेत् तथा च प्रदरोदकैः' ॥

वसिष्ठः — 'प्रदरे वापि गोतृप्तिराचामश्चैव चोदितः ॥

ङ्ग्रहे — 'पात्रोच्छिष्टन्तु यच्छौचे पाने पादावनेजने ।
भूमौ तदम्बु निस्स्राव्य शेषेणाचमनं चरेत् ॥
न चाम्युदकशेषेणकुर्यादाचमनं(?) द्विजः ।
यदि कुर्याद्विजो भूमौ स्रावयित्वा समाचरेत् ॥

वर्तः — 'शूद्राशुच्येकहस्तैश्च दत्ताद्भिर्न कदाचन ।
आरूढपादुको वापि न शुद्ध्येत द्विजोत्तमः' ॥

रद्वाजः— 'पङ्कं सफेनं कलुषं सदुर्गन्धं सबुद्बुदम् ॥
उष्णं समृत्तिकं क्षारं त्यजेदाचमने जलम् ।
तिष्ठन् नमन् हसन् जल्पन् शृण्वन्नन्त्यजभाषणम् ॥
अन्यं स्पृशन् दिशः पश्यन् न कदाचिदुपस्पृशेत् ॥

ार्कण्डेयः — 'महानिशा तु विज्ञेया रात्रौ मध्यमयामयोः ।
तस्यां स्नानं न कुर्वीत सम्यगाचमनं तथा ॥

रद्वाजः— 'काकश्वखरविट्क्रोडताम्रचूडरजस्वलाः ।
व्रात्यान्त्यजातिपतितान् पश्यन्नोपस्पृशेद्विजः' ॥

द्विराचमनविधिः

रद्वाजः — 'स्नानपानक्षुतस्वापहोमभोजनकर्मसु ।
रथ्योपसर्पणे चैव विड्डुत्सृष्टौ द्विराचमेत् ॥
जपे श्मशानाक्रमणे परिधाने च वाससः ।
चत्वराक्रमणे चैव द्विजातिर्द्विरुपस्पृशेत् ॥

मृतिरत्ने — 'दाने प्रतिग्रहे होमे जपे सन्ध्यात्रये तथा ।
बलिकर्मणि चाचामेदादौ द्विस्सकृदन्ततः' ॥

रद्वाजः — 'चण्डालैरन्त्यजैरुक्तौ मलमूत्रविमोचने ।
दक्षिणश्रवणे विप्रो ब्रह्मसूत्रं विनिक्षिपेत् ॥

यासः — 'भोक्ष्यन् भुक्त्वा च होमे च सन्ध्ययोरुभयोरपि ।
आचान्तः पुनराचामेत् जपदानार्चनेषु च ॥

मार्कण्डेयः — 'देवार्चनादिकार्याणि तथा गुर्वभिवन्दनम् ।
कुर्वीत सम्यगाचम्य तद्वदेव भुजिक्रियाम् ॥

शातातपः — 'आचामेच्चर्वणे नित्यं मुक्त्वा ताम्बूलचर्वणम् ।
उपक्रमेऽवशिष्टस्य कर्मणः प्रयतोऽपि सन् ॥

मनुः — 'सुप्त्वा क्षुत्वा च भुक्त्वा च ष्ठीवित्वोक्त्वाऽनृतं वचः ।
रथ्यां श्मशानञ्चाक्रम्य आचामेत्प्रयतोऽपि सन् ॥

बृहस्पतिः — 'अधोवायुसमुत्सर्गे आक्रन्दे क्रोधसम्भवे ।
मार्जारमूषिकस्पर्शे प्रहासेऽनृतभाषणे ॥
निमित्तेष्वेषु सर्वेषु कर्म कुर्वन्नुपस्पृशेत् ।
श्वशूद्रपतितांश्चैव रासभञ्च रजस्वलाम् ॥
दृष्ट्वा तोयमुपस्पृश्य भाष्य स्नात्वा पुनर्जपेत् ।

स्मृत्यन्तरे — 'सत्यामाचमनाशक्तावभावे सलिलस्य वा ॥
पूर्वोक्तेषु निमित्तेषु दक्षिणं श्रवणं स्पृशेत् ।

स्मृत्यन्तरे — 'अशक्तौ वा जलाभावे पूर्वोद्दिष्टनिमित्तके ॥
ओषधीर्गोशकृद् भूमिं स्पृशेत्प्रयतमानसः ।

### आचमनापवादः

याज्ञवल्क्यः — 'मुखजा विप्रुषो मेध्यास्तथाऽऽचमनबिन्दवः ॥
श्मश्रु चास्यगतं दन्तसक्तं त्यक्त्वाऽऽत्मनः शुचिः ।

शातातपः — 'दन्तलग्ने फले मूले भुक्तस्नेहानुलेपने ॥
ताम्बूले चेक्षुखण्डे च नोच्छिष्टो भवति द्विजः ।

देवलः — 'सोपानत्को जलस्थो वा मुक्तकेशोऽथवा पुनः ॥
उष्णीषी वापि नाचामेद्वस्त्रेणावेष्ट्य वा शिरः ।
अन्तरीयैकदेशस्य कृत्वा चैवोत्तरीयताम् ॥
केशान्नीवीमधःकायं न स्पृशेद्धरणीमपि ।
यदि स्पृशति चैतानि भूयस्त्वाचमनं भवेत् ॥

मार्कण्डेयः— 'आम्रेक्षुखण्डताम्बूलचर्वणे सोमपानके ।
विष्ण्वङ्घ्रितोयपाने च नाद्यन्ताचमनं स्मृतम् ॥

अङ्गाचमनादि—'स्वाध्याये भोजनारम्भे स्नाने श्राद्धे कृते सति ।
सपिण्डपितृयज्ञे च तदङ्गार्थतयेष्यते ॥

नैमित्तिकाचमनम्— 'क्षुते रथ्यागमे स्वप्नेऽभक्ष्यसंस्पर्शने तथा ।
यन्नीवीपरिधानादौ तन्नैमित्तिकमुच्यते ॥

दाने प्रतिग्रहे होमे सन्ध्यात्रितयवन्दने ।
बलिकर्मणि चाचामेद्वादौ द्विर्नान्ततो द्विजः ॥

वासोत्तरपरीधाने स्वापे रथ्याप्रसर्पणे ।
चण्डालोपग्रहाऽक्रामे स्वानुष्ठानान्तरे क्षुते ॥

अलोमकोष्ठसंस्पर्शे श्मशानाक्रमणेऽपि च ।
हविश्शेषप्राशने च द्विराचमनमन्ततः ॥

विष्णुपादोद्भवं तीर्थं पीत्वा न क्षालयेत्करम् ।

### अथ दन्तधावनम्

वृद्धशातातपः— 'मुखे पर्युषिते नित्यं भवत्यप्रयतो नरः ।
तस्माच्छुष्कमथार्द्रं वा भक्षयेद्दन्तधावनम् ? ॥

व्यासः— 'प्रक्षाल्य पादौ हस्तौ च मुखं चाद्भिस्समाहितः ।
दक्षिणं बाहुमुद्धृत्य कृत्वा जान्वन्तरा ततः ॥

आचम्य प्राङ्मुखः पश्चाद्दन्तधावनमाचरेत् ।

याज्ञवल्क्यः— 'कण्टकिक्षीरवृक्षोत्थं द्वादशाङ्गुलमव्रणम् ॥

कनिष्ठिकाग्रवत् स्थूलं पूर्वाग्रकृतकूर्चकम् ।
दन्तधावनमुद्दिश्य जिह्वालेखनकं तथा ॥

व्यासः— 'सुसूक्ष्मं सूक्ष्मदन्तस्य समदन्तस्य मध्यमम् ।
स्थूलं विषमदन्तस्य त्रिविधं दन्तधावनम् ॥

गार्ग्यः— 'प्राङ्मुखस्य धृतिस्सौख्यं शरीरारोग्यमेव च ।
दक्षिणेन तथा क्लेशं पश्चिमेन पराजयः ॥

उत्तरेण गवां नाशः स्त्रीणां परिजनस्य च ।
पूर्वोत्तरे तु दिग्भागे सर्वान् कामानवाप्नुयात् ॥

सर्जे धैर्यं वटे दीप्तिः करञ्जे विजयो रणे ।
प्लक्षे चैवार्थसम्पत्तिः बदर्यां मधुरस्वरः ॥

खदिरे चैव सौभाग्यं बिल्वे तु विपुलं धनम् ।
औदुम्बरे तु वाक्सिद्धिः बन्धूके च सदा शुचिः ॥

कदम्बे सकला लक्ष्मीराम्रे चारोग्यमेव च ।
अपामार्गे धृतिर्मेधा प्रज्ञा शक्तिर्वपुश्शुचिः ॥

अर्केण दन्तरोगास्तु बीजपूरेण तु व्यथा ।
ककुभेन तथाऽऽयुष्यं भवेत्पलितवर्जितम् ॥

दाडिमं सिन्दुवारञ्च कुञ्जरं कुटकं तथा ।
जाती च करमर्दा च दुस्स्वप्नश्चैव नाशयेत् ॥

गोभिलः— 'गुवाकुन्तलहिन्तालाः केतकी च महावटः ।
खर्जूरो नारिकेलश्च सप्तैते तृणराजकाः ॥

तृणराजसमुत्पन्नैर्यः कुर्याद्दन्तधावनम् ।
नरश्चण्डालयोनिस्स्याद्यावद्गङ्गां न पश्यति ॥

मार्कण्डेयः— 'शाल्मल्यश्वत्थहव्यानां धवकिंशुकयोरपि ।
कोविदारशमीपीलुश्लेष्मातकविभीतकान् ॥

वर्जयेद्दन्तकाष्ठेषु गुग्गुलुं क्रमुकं तथा ।
त्याज्यं सपत्रमज्ञातमूर्ध्वं शुष्कञ्च पाटितम् ॥

त्वग्घीनं ग्रन्थिसंयुक्तं तथा पालाशकिंशुकौ ।

उशनाः— 'तिन्दुकेङ्गुदबन्धूकमोचामलकबल्वजम् ॥

कार्पासं दन्तकाष्ठञ्च शक्रस्यापि श्रियं हरेत् ।

गर्गः— ‘कुशं काशं पलाशञ्च शिंशुपां २ स्तु भक्षयेत् ।
तावद्भवति चण्डालो यावद्गां नैव पश्यति ॥

वृद्धयाज्ञवल्क्यः— ‘इष्टकालोष्टपाषाणैरितराङ्गुलिभिस्तथा ।
मुक्त्वा चानामिकाङ्गुष्ठौ वर्जयेद्दन्तधावनम् ॥

पैठीनसिः — ‘तृणपर्णोदकेनाङ्गुल्या वा दन्तांश्च धावयेत् प्रदेशिनीवर्जम्

दन्तधावनमन्त्रः— ‘आयुर्बलं यशोवर्चः प्रजाः पशुवसूनि च ।
ब्रह्म प्रज्ञाञ्च मेधाञ्च त्वन्नो देहि वनस्पते ॥

अथ वर्ज्यदिनानि— अष्टम्याञ्च चतुर्दश्यां पञ्चदश्यां त्रिजन्मसु ।
तैलं मांसं व्यवायञ्च दन्तकाष्ठञ्च वर्जयेत् ॥

व्यवायो मैथुनम् ।

‘प्रतिपद्दर्शषष्ठीषु नवम्याञ्चैव [illegible] ।
दन्तानां काष्ठसंयोगाद्दहत्यासप्तमं कुलम् ॥
तृणपर्णैस्सदा कुर्यादमामेकादशीं विना ।
तयोरपि च कुर्वीत जम्बूप्लक्षरसालकैः ॥

अन्यत्र— ‘प्रतिपत्पर्वषष्ठीषु नवम्यां दन्तधावनम् ।
पर्णैरन्यत्र काष्ठैस्तु जिह्वोल्लेखस्सदैव तु ॥

भरद्वाजः — ‘नद्यां देवालये गोष्ठे श्मशाने जलमध्यमे ।
यागस्थाने शुचौ देशे नाचरेद्दन्तधावनम् ॥

दन्तकाष्ठे त्वमावास्या मैथुने च चतुर्दशी ।
अष्टमी ग्राम्यधर्मे च ज्वलन्तमपि पातयेत् ॥

स्त्रीसङ्गं खादनं पानं स्वाध्यायं क्षुरकर्म च ।
न कुर्याद्दन्तकाष्ठञ्च तैले तु शिरसि स्थिते ॥

शाण्डिल्यः — ‘बाहू जान्वन्तरा कृत्वा कुक्कुटासनमास्थितः ।
तर्पणाचमनोल्लेखान् दन्तशुद्धिं समाचरेत् ॥

मनुः — अभावे दन्तकाष्ठानां प्रतिषिद्धदिनेष्वपि ।
अपां द्वादशगण्डूषैः मुखशुद्धिर्भविष्यति ॥

वामभाग समारभ्य प्रादक्षिण्यक्रमेण तु ।
शाखां विदार्य तस्यैव भागेनैकेन मार्जयेत् ॥

जिह्वां ततो द्वितीयेन गृहस्थश्च यतिस्तथा ।
प्रक्षाल्य दन्तकाष्ठन्तु शुचौ देशे ततस्त्यजेत् ॥

विधवाकन्यकाब्रह्मचारिणां नाऽस्यशोधनम् ।

भारद्वाजः – 'यावन्तो नियमाः प्रोक्ता द्विजश्रेष्ठस्य भुञ्जतः ॥
प्रेक्ष्याप्रेक्ष्येषु कर्तव्या दन्तधावनकर्मणि ।
मुखशुद्धिं प्रयत्नेन कृत्वैवाहरहर्द्विजः ॥

ततः सन्ध्यामुपासीत तां विना न शुचिर्भवेत् ।

**स्नानविधिः**

याज्ञवल्क्यः – 'अगम्यागमनात् स्तेयात् पापेभ्यश्च प्रतिग्रहात् ।
रहस्याचरितात् पापात् मुच्यते स्नानमाचरन्' ॥

यमः – 'मनः प्रसादजननं रूपसौभाग्यवर्धनम् ।
शोकदुःस्वप्नहं स्नानं मोक्षदं ह्लादनं तथा ॥

स्नानमूलाः क्रियास्सर्वाः श्रुतिस्मृत्युदिता नृणाम् ।
तस्मात् स्नानं निषेवेत श्रीपुष्ट्यारोग्यवर्धनम् ॥'

चन्द्रिकायाम्: – 'याम्यं हि यातनादुःखं प्रातस्स्नायी न पश्यति ।
प्रातस्स्नानेन पूयन्ते ये हि पापकृतो जनाः ॥

अस्नात्वा नाचरेत्कर्म जपहोमादि किञ्चन ।
लालास्वेदसमाकीर्णः शयनादुत्थितः पुमान् ॥

दक्षः – 'गुणा दश स्नानपरस्य पुंसः रूपञ्च तेजश्च यशश्च शौचम् ।
आयुष्यमारोग्यमलोलुपत्वं दुस्स्वप्ननाशश्च तपश्च मेधा ॥

चतुर्विंशतिमते – 'उषस्युषसि यत्स्नानं सन्ध्यायामुदितेऽपि वा ।
प्राजापत्येन तत्तुल्यं महापातकनाशनम् ॥

मनुः – 'क्लिद्यन्तीह सुषुप्तानामिन्द्रियाणि द्रवन्ति च ।
अङ्गानि समतां यान्ति उत्तमान्यधमैस्सह ॥

अत्यन्तमलिनः कायो नवच्छिद्रसमन्वितः ।
स्रवत्येव दिवारात्रं प्रातस्स्नानं विशोधनम् ॥

**अभिषेको दिव्यो वायव्य आग्नेयो गुर्वनुज्ञेति पञ्चधा भवति ॥ २**

देशकालापेक्षया स्नानभेदाः संग्रहेण उच्यन्ते **अभिषेक** इत्यादिना —

शङ्खः – 'स्नानन्तु द्विविधं प्रोक्तं गौणमुख्यप्रभेदतः ।
तयोस्तु वारुणं मुख्यं तत् पुनष्षड्विधं भवेत् ॥

नित्यं नैमित्तिकं काम्यं क्रियाङ्गं मलकर्षणम् ।
क्रियास्नानं तथा षष्ठं षोढा स्नानं प्रकीर्तितम् ॥

अस्नातस्तु पुमान्नार्हो जप्याग्निहवनादिषु ।
प्रातस्स्नानं तदर्थन्तु नित्यस्नानं प्रकीर्तितम् ॥

चण्डालशवयूपादीन् स्पृष्ट्वाऽस्नातां रजस्वलाम् ।
स्नानार्हस्तु यदा स्नाति स्नानं नैमित्तिकं हि तत् ॥

पुष्ट्यां स्नानादिकं यत्तु दैवज्ञविधिचोदितम् ।
तद्धि काम्यं समुद्दिष्टं नाकामस्तत्प्रयोजयेत् ॥

जप्तुकामः पवित्राणि चार्चिष्यन् देवताः पितॄन् ।
स्नानं समाचरेद्यत्तु क्रियाङ्गं तद्विदुर्बुधाः ॥

मलापकर्षणं स्नानं स्नानमभ्यङ्गपूर्वकम् ।
मलापकर्षणार्था तु प्रवृत्तिस्तस्य नान्यथा ॥

सरित्सु देवखातेषु तीर्थेषु च नदीषु च ।
स्नानं यत्तत् क्रियास्नानं स्नानं तत्र क्रिया मता ॥

## गौणस्नानम्

गार्ग्यः– दिव्यं वायव्यमाग्नेयं ब्राह्मं सारस्वतं तथा ।
मानसञ्चेति विज्ञेयं गौणस्नानन्तु षड्विधम् ॥

योगयाज्ञवल्क्यः–'मान्त्रं भौमं तथाऽऽग्नेयं वायव्यं दिव्यमेव च ।
वारुणं मानसञ्चेति सप्त स्नानान्यनुक्रमात् ॥

आपोहिष्ठादिभिर्मान्त्रं मृदालम्बन्तु पार्थिवम् ।
आग्नेयं भस्मना स्नानं वायव्यं गोरजस्स्मृतम् ॥

यत्तु सातपवर्षेण दिव्यं तत्स्नानमुच्यते ।
वारुणञ्चावगाहन्तु मानसं विष्णुचिन्तनम् ॥

मानसं प्रवरं स्नानं सर्वे शंसन्ति सूरयः ।
आत्मतीर्थप्रशंसायां व्यासेन पठितं यतः' ॥

तथा स एवः– 'शन्न आपस्तु द्रुपदा आपोहिष्ठाघमर्षणम् ।
एतैश्च पञ्चभिर्मन्त्रैः मन्त्रस्नानमुदाहृतम् ॥

विद्वत्सरस्वतीप्राप्तं स्नानं सारस्वतं स्मृतम् ।
प्राप्य सारस्वतं तीर्थं भवेन्मुदितमानसः ॥

सर्वतीर्थाभिषेकात्तु पवित्रं विदुषां हि वाक् ।
भुवि मूर्ध्नि तथाऽऽकाशे मूर्ध्न्याकाशे तथा भुवि ॥

आकाशे भुवि मूर्ध्नि स्यात् मन्त्रस्नानं विधीयते ।
पादादि प्रणवं कुर्यादर्धर्चान्ते तथैव च ॥

ऋगादौ प्रणवं कुर्यान्मन्त्रस्नाने विशेषतः ।
शुचिदेशान्मृदानीय कुर्याद्गात्रोपलम्भनम् ॥

मान्त्रं पार्थिवसंयुक्तं भौमस्नानं तदुच्यते ।
गोखुराद्रज आदाय गोसावित्रीं जपेद्बुधः ॥

गात्रेष्वथ तदालिप्य स्नानं वायव्यमुच्यते ।
उत्तरायणमध्ये तु यदा वर्षति वासवः ॥

आतपेन सह स्नानं दिव्यमेव तदुच्यते ।
स्नानमब्दैवतैर्लिङ्गैर्जले मज्जनगाहनैः ॥

तर्पणं पितृदेवानां स्नानं वारुणमुच्यते ।
यौगिकं स्नानमाख्यातं योगो वै विष्णुचिन्तनम् ॥

आत्मतीर्थप्रशंसायां व्यासेन परिकीर्तितम् ।
शक्तश्चेद्वारुणस्नानमप्रायत्ये तदेव हि ॥

हृत्स्थितं सर्वभूतानां रविमण्डलसंस्थितम् ।
नीलजीमूतसङ्काशं वासुदेवं चतुर्भुजम् ॥

शङ्खचक्रगदापद्मधारिणं वनमालिनम् ।
चिन्तयेत् ब्रह्मरन्ध्रेण प्रविशन्तं स्वमूर्धनि ॥

तत्पादोदकजां धारां निपतन्तीं स्वमूर्धनि ।
तया प्रक्षालितं सर्वं स्वदेहं परिचिन्तयेत् ॥

इदं स्नानं परं मान्त्रात् सहस्रादधिकं मतम् ।
एवं स्नात्वा विशेषेण सर्वपापैः प्रमुच्यते ॥

'अप्रायत्ये समुत्पन्ने स्नानमेव समाचरेत् ।
ब्राह्मादीन्यन्यथाऽशक्तौ स्नानान्याहुर्मनीषिणः ॥

वारुणस्नानासम्भवे कूपादुद्धृत्य सेचनमभिषेकः ।

'कूपेषूद्धृततोयेन स्नानं कुर्वीत वा भुवि ।
स्नायीतोद्धृततोयेन अथवा (?)भुव्यसम्भवे ॥

दर्शः— 'शूर्पवातं नखाग्राम्बु स्नानवस्त्रं घटोदकम् ।
मार्जनीरेणुकेशाम्बु हन्ति पुण्यं पुरातनम् ॥

दिव्यादीनां लक्षणमुत्तरत्र विस्तरेण वक्ष्यते । गुर्वनुज्ञा मातापितृभ्या-
ण वा त्वया स्नानं कर्तव्यमिति वाक्येनानुज्ञा । ततश्च तदेव स्नानम् ।
देवो भव, पितृदेवो भवेति श्रुतेः ।

मनुः –  'आचार्यश्च पिता चैव माता भ्राता च पूर्वजः ।
नार्तेनाप्यवमन्तव्या ब्राह्मणेन विशेषतः ।
आचार्यो ब्रह्मणो मूर्तिः पिता मूर्तिः प्रजापतेः ॥
माता पृथिव्या मूर्तिस्तु भ्राता स्वा मूर्तिरात्मनः ।
यन्माता वा पिता क्लेशं सहेते सम्भवे नृणाम् ॥
न तस्य निष्कृतिः शक्या कर्तुं वर्षशतैरपि ।
तयोर्नित्यं प्रियं कुर्यादाचार्यस्य च सर्वधा ॥
तेषु हि त्रिषु तृप्तेषु तपस्सर्वं समाप्यते ।
तेषां त्रयाणां शुश्रूषा परमं तप उच्यते ॥
न तैरभ्यननुज्ञातो धर्ममन्यं समाचरेत् ।
त एव हि त्रयो लोकास्त एव त्रय आश्रमाः ॥
त एव च त्रयो वेदास्त एवोक्तास्त्रयोऽग्नयः ।
पिता च गार्हपत्याग्निर्माता वै दक्षिणः स्मृतः ॥
गुरुराहवनीयस्तु साग्निलेता(?) गरीयसी ।
त्रिष्वप्रमाद्यन्नेतेषु त्रीन् लोकान् हि जयेद्गृही ॥
सर्वे तस्याऽदृता धर्मा यस्यैते त्रय आदृताः ।
अनादृतास्तु यस्यैते सर्वास्तस्याफलाः क्रियाः ॥
गुरुस्तीर्थं जलं ज्ञानमिति विज्ञायते सदा ।
तस्मात्तीर्थवदाचार्याज्जलवत् ज्ञानमभ्यसेत् ॥

**आचार्यादीनां लक्षणमाहुः –**

'निषेकादीनि कर्माणि यः करोति यथाविधि ।
अध्यापयति यश्चैनं स विप्रो गुरुरुच्यते ॥
उपनीय तु यश्शिष्यं वेदमध्यापयेद्द्विजः ।
सकल्पं सरहस्यञ्च तमाचार्यं प्रचक्षते ॥'

'अल्पं वा बहु वा यस्य श्रुतस्योपकरोति यः ।
तमपीह गुरुं विद्यात् कृतोपक्रियया तया ॥
ब्राह्मस्य जन्मनः कर्ता स्वधर्मस्य च शासिता ।
बालोऽपि विप्रो वृद्धस्य पिता भवति मन्त्रदः ॥
एकदेशन्तु वेदस्य वेदाङ्गस्याथवा पुनः ।
योऽध्यापयति वृत्त्यर्थमुपाध्यायस्स उच्यते ॥

इदं (गुर्वनुज्ञा) स्नानमातुरादिविषयम् । एतानि कादाचित्कानि अनुकल्पानि वेत्यभिप्रायेण पञ्चधा भवन्तीत्युक्तम् । नदीतटाककूपानामलभे पूर्वस्योत्तरमुपतिष्ठेत ।

मनुः— 'नदीषु देवखातेषु तटाकेषु सरस्सु च ।
स्नानं समाचरेन्नित्यं गर्तप्रस्रवणेषु च ॥

नदीलक्षणम् सङ्ग्रहे—

'धनुस्सहस्राण्यष्टौ तु गतिर्यासां न विद्यते ।
न ता नदीशब्दवहा गर्तास्ताः परिकीर्तिताः ॥'

'यत्र पुंसः सचेलस्य स्नानं तत्र सुवासिनी ।
कुर्वीतैव शिरस्स्नानं शिरोरोगी जटी तथा ॥
अशक्तौ शोभनगृहे शोभनार्हेषु सर्वदा ।
न शीतलजलस्नानं कार्यञ्चैवोष्णसेवितम् ॥

पाद्मे:— 'जलं शुद्धमशुद्धं वा विष्णुवास्तुसमीपतः ।
विष्णुगङ्गासमं तोयं महापातकनाशनम् ॥'

व्यासः— 'न मेहत जलद्रोण्यां स्नातुञ्च न नदीं तरेत् ।'

सिन्धुः नदी ।

मनुः— 'परकीयनिपानेषु न स्नायात्तु कदाचन ।
निपानकर्तुः स्नात्वा तु दुष्कृतांशेन लिप्यते ॥'

एतत्पतितादिजलविषयम् । महात्मनां न दोषः ।

मार्कण्डेयः – ‘पुराणानां नरेन्द्राणामृषीणाञ्च महात्मनाम् ।
स्नानं कूपतटाकेषु देवतानां समाचरेत् ॥’

वृद्धमनुः – ‘अन्यायोपात्तवित्तस्य पतितस्य च वार्धुषेः ।
न स्नायादुदपानेषु स्नात्वा कृच्छ्रं समाचरेत् ॥

मनुः – ‘अलाभे देवखातानां सरसां सरितामपि ।
उद्धृत्य चतुरः पिण्डान् पारक्ये स्नानमाचरेत् ॥
त्रीन् पिण्डानथवोद्धृत्य स्नायुरापत्सु नो सदा ।
अन्त्यैरपि कृते कूपे नरो वाप्यादिके तथा ॥
तत्र स्नात्वा च पीत्वा च प्रायश्चित्तं न विद्यते ।’

इदमत्यन्तापद्विषयम् ।

विज्ञानेश्वरः – ‘अन्त्यजैः खानिताः कूपाः तटाका वाप्य एव च ।
तेषु स्नात्वा च पीत्वा च प्राजापत्येन शुद्ध्यति ॥
अकामाद्ब्राह्मणः शुद्ध्येत् ब्रह्मकूर्चोपवासतः ।’

अत्र विशेषः—

‘अनुत्सृष्टेषु न स्नायात्तथैवासंस्कृतेषु च’ ॥

याज्ञवल्क्यः – ‘वृथा तूष्णोदकैस्स्नानं वृथा जप्यमवैदिकम् ।
वृथा त्वश्रोत्रिये दानं वृथा भुक्तमसाक्षिकम् ॥’

मनुः – ‘न स्नायादुत्सवेऽतीते माङ्गल्यं विनिवर्त्य च ।
अनुव्रज्य सुहृद्बन्धून् अर्चयित्वेष्टदेवताः ॥

यत्तु षट्त्रिंशन्मते —

‘आपः स्वभावतो मेध्याः किं पुनर्वह्निसंयुताः ।
तेन सन्तः प्रशंसन्ति स्नानमुष्णं न वारिणा ॥’ इति,

तदातुरविषयम् ।

तथा यमः – ‘मृतौ जन्मनि सङ्क्रान्त्यां श्राद्धे जन्मदिने तथा ।
अस्पृश्यस्पर्शने चैव न स्नायादुष्णवारिणा ॥

.... .... .... .... .... ।
स गोहत्याकृतं पापं प्राप्नोत्येव न संशयः ॥'

व्यासः – 'शीतास्वप्सु निषिच्योष्णाः मन्त्रसम्भारसम्भृताः ।
गेहेऽपि शस्यते स्नानं तत्तु स्यात् विफलं बहिः ॥

सम्भारः – मृदादयः । बहिः तटाकादौ ।

'विवस्वन् मन्त्रसंयुक्तमुपस्पर्शनमुच्यते ।
स्नानेऽवगाहने चैव प्लावनं विधिवर्जितम् ॥

मत्स्यकच्छपमण्डूकास्तोयमग्ना दिवानिशम् ।
न तेषां हि स्नानफलं तथैव विधिवर्जितम् ॥

नद्यान्तु विद्यमानायां नदीश्चोत्सृज्य कृत्रिमे ।
न स्नायादल्पतोये तु विद्यमाने बहूदके ॥

भूमिष्ठमुद्धृतात्पुण्यं ततः प्रस्रवणोदकम् ।
ततोऽपि सारसं पुण्यं तस्मान्नादेयमुच्यते ॥

तीर्थतोयं ततः पुण्यं गोदावर्यान्तु सर्वशः ।

किञ्च – 'अधोवर्णोदके स्नानं वर्ज्यं नद्यां द्विजातिभिः ॥

तस्यां रजकतीर्थेषु दशहस्तेन वर्जयेत् ।
शाल्मली तिन्त्रिणी निम्बं करञ्जश्च हरीतकी ॥

कोविदारकपित्थार्कबदर्यश्च विभीतकः ।
शेलुश्च खादिरश्चैषां स्नानं छायासु वर्जयेत् ॥

अश्वत्थस्य जले यत्र छाया भवति कुत्रचित् ।
तत्प्रयागसमं तीर्थं तत्र सन्निहितो हरिः ॥

**प्राङ्मुख उदङ्मुखो वाऽऽक्रम्य जलस्थलेष्वासीनः, पाणिपादावामणिबन्धजानुतो दक्षिणादि प्रत्येकं प्रक्षाल्य, अफेनावस्रावमविच्छिन्नमद्रुतमशब्दमबहिर्जानु हृदयङ्गममुदकं गोकर्णवत्पाणिं कृत्वा ब्राह्मेण तीर्थेन त्रिराचम्य, द्विरङ्गुष्ठमूलेनाऽस्यं परिमार्ष्टि ॥ ४ ॥**

'प्राङ्मुखः उदङ्मुखो वे'ति विष्णुः ।

'पश्चिमे पुनराचम्य याम्यां स्नानेन शुद्ध्यति' इति वचनात् प्राङ्मुख उदङ्मुखो वेत्युक्तम् ।

जलस्थलेष्विति ।

आपस्तम्बः – 'उदके तूदकस्थस्तु स्थलस्थः स्थलके शुचिः ।
पादौ कृत्वोभयत्रापि ह्याचम्योभयतश्शुचिः ॥

पाणिपादाविति ।

आनुशासनिके: – सुप्रक्षालितपाणिस्तु पादावामणिबन्धनात् ।
अधस्तादुपरिष्टाच्च ततः पाणिमुपस्पृशेत् ॥

'तस्माद्दक्षिणोर्ध आत्मनो वीर्यवत्तर' इति श्रुतेः दक्षिणादीत्युक्तम् ।

कात्यायनः – 'यत्रोपदिश्यते कर्म कर्तुरङ्गं न चोच्यते ।
दक्षिणस्तत्र विज्ञेयः कर्मणां पारगः करः ॥

मनुः – 'कुत्सिते वामहस्तः स्यात् दक्षिणः स्यादकुत्सिते ।
यज्ञोपवीतिना कार्यं सर्वकर्म प्रदक्षिणम् ॥

अधिकारिभेदेनाचमनं द्विविधम्, अमन्त्रकं समन्त्रकञ्च । तत्र जलगत-निषेधपूर्वकं कर्तुर्निषेधनियमानाह अफेनेत्यादिना ।

शान्तिपर्वणि — 'वृत्रस्य रुधिराच्चैव बुद्बुदाः पार्थ जज्ञिरे ।
द्विजातिभिरभक्ष्यास्ते दीक्षितैस्तु विशेषतः ॥

श्रीभागवते — 'तासु बुद्बुदफेनाभ्यां तद्दृष्टं तच्च किल्बिषम्' ॥

अवस्रावं अवाक् स्रावम् । अविच्छिन्नं विच्छेदरहितं । अद्रुतं हृत्कण्ठतालुकाभिरित्युक्तवात् नातिशीघ्रम् । अबहिर्जान्विति ।

सुमन्तुः — 'होमं प्रतिग्रहो दानं भोजनाचमने जपः ।
न बहिर्जानु कार्याणि साङ्गुष्ठानि सदाऽऽचरेत् ॥

गोकर्णवत्पाणिं कृत्वेति ।

'गोकर्णवत्तलं प्रोक्तं जलमादाय पाणिना ।
मुक्ताङ्गुष्ठकनिष्ठाभ्यां शेषेणाचमनं चरेत् ॥

ब्राह्मेण तीर्थेनेत्यादि । पूर्वमेवोक्तमाचमनम् । द्विरङ्गुष्ठमूलेत्यादि । अमन्त्रकसमन्त्रकाचमनयोः समानो मार्जनादिः ।

अङ्गुष्ठस्याग्निः, प्रदेशिन्या वायुः, मध्यमस्य प्रजापतिः, अनामिकायाः सूर्यः, कनिष्ठिकस्येन्द्रः, इत्यधिदेवता भवन्ति ॥ ५ ॥

अङ्गुष्ठमध्यमाभ्यां सर्वतीर्थैर्वा मुखं मार्ष्टि ॥ ६ ॥

अङ्गुष्ठानामिकाभ्यां चक्षुषी, अङ्गुष्ठप्रदेशिनीभ्यां नासिके, अङ्गुष्ठकनिष्ठिकाभ्यां श्रोत्रे, भुजौ ताभ्यामङ्गुष्ठेन वा, हृदयमङ्गुलीभिः, नाभिञ्चाङ्गुष्ठेन प्रत्यङ्गमपश्च स्पृष्ट्वा जङ्घयोर्वामे पाणावप्यभ्युक्ष्य सर्वाभिर्मूर्धानं स्पृशति ॥ ७ ॥

अङ्गुलिभेदेनाधिदेवता उच्यन्ते अङ्गुष्ठस्याग्निरित्यादिना । तत्तदङ्गाधिष्ठितदेवताप्रीतिद्वारा शुद्धिरित्यभिप्रायेण तत्तदङ्गुल्या तत्तदङ्गस्पर्शनमाह अङ्गुष्ठमध्यमाभ्यामित्यारभ्य मूर्धानं स्पृशतीत्यन्तेन ।

'इन्द्रोऽहमुभभ्या' मिति करौ 'आपः पादावास्मिन् कुले' इति पादौ च तथा प्रक्षाल्य 'आपः पुनन्त्वि' ति पुनस्तथाऽऽचामति ॥ ८ ॥

ऋग्वेदे—आपः पादावित्यारभ्य 'दक्षिणं पादमवनेजत्यास्मिन् राष्ट्र इन्द्रियं दधाति सव्यं पादमवनेजति, आस्मिन् राष्ट्र इन्द्रियं वर्धयती'ति श्रुतम् ।

आश्वमेधिके — 'आपः पुनन्तु इत्युक्त्वा पुनराचमनं चरेत् ।
सोङ्कारां व्याहृतिञ्चापि सदसस्पतिमित्यृचम् ॥' इति

ऋग्वेदः प्रीणातु यजुर्वेदः प्रीणातु सामवेदः प्रीणातु इति त्रिरपः पीत्वा, अथर्ववेदः प्रीणातु इतिहासवेदः प्रीणातु चन्द्रमाः प्रीणातु इति त्रिधा मुखं मार्ष्टि ॥ ९ ॥

महेश्वरः प्रीणातु इति मूर्धानम्, आदित्यः प्रीणातु सोमः प्रीणातु इति चक्षुषी, दिशः प्रीणन्तु इति श्रोत्रे, वायुः प्रीणातु इति नासिकाम्, इन्द्रः प्रीणातु इति भुजौ, विष्णुः प्रीणातु इति हृदयम्, अग्निः प्रीणातु इति नाभिं स्पृशतीत्येके ॥ १० ॥

ऋग्वेदः प्रीणात्वित्यादिना समन्त्रकमाचमनमुच्यते ।

ननु तत्तदङ्गुलिमात्रेण विना अङ्गुष्ठेन सह स्पर्शनं किमर्थमिति चेत् उच्यते । 'अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठञ्च समाश्रितः' इति श्रुतेः । 'योऽयं दक्षिणो हस्तस्स यज्ञ' इति – यजत्ययं शब्दो देवपूजासङ्गतकरणदानेषु । यस्मादेतानि कुर्वते तस्माद्यज्ञः, वाग्यज्ञः तस्याधिदैवतं स चात्र तस्माद्यज्ञो यश्चायमङ्गुष्ठस्सविष्णुः स यस्याधिदैवत (?) 'मिति बोधायनवचनाच्च, 'सर्वास्वङ्गुष्ठ-मुपनिगृह्णाती' ति श्रुतेश्च साङ्गुष्ठानि स्पर्शनानि प्रतिपादितानि । 'साङ्गुष्ठानि सदाचरे' दिति मनुस्मरणाच्च ।

शङ्खः — त्रिः प्राश्नीयाद्यदम्भस्तु प्रीतास्तेनास्य देवताः ।
ब्रह्मा विष्णुश्च रुद्रश्च भवन्तीत्यनुशुश्रुम ॥
गङ्गा च यमुना चैव प्रीयेते परिमार्जनात् ।
नासत्यदस्रौ प्रीयेते स्पृष्टे नासापुटद्वये ॥
स्पृष्टे लोचनयुग्मे तु प्रीयेते शशिभास्करौ ।
स्पृष्टेन कर्णयुग्मेन प्रीयेते ह्यनिलानलौ ॥
स्कन्धयोः स्पर्शनादेव प्रीयन्ते सर्वदेवताः ।
नाभिसंस्पर्शनान्नागाः प्रीयन्ते चास्य नित्यशः ॥
संस्पृष्टे हृदये चास्य प्रीयन्ते सर्वदेवताः ।
भूम्यम्बूत्सर्गतो नागाः पृषद्भिश्च चराचरम् ॥' इति

आनुशासनिके — 'सुप्रक्षालितपाणिस्तु पादावामणिबन्धनात् ।
अधस्तादुपरिष्टाच्च ततः पाणिमुपस्पृशेत् ॥

मनोगतास्तु निश्शब्दा निश्शब्दं त्रिरपः पिबेत् ।
द्विर्मुखं परिमृज्याच्च खानि चोपस्पृशेद्बुधः ॥

ऋग्वेदस्तेन प्रीणाति प्रथमं यत्पिबेदपः ।
द्वितीयश्च यजुर्वेदः तृतीयं साम एव च ॥

मृज्यते प्रथमं तेन अथर्वा प्रीतिमाप्नुयात् ।
द्वितीयेनेतिहासश्च पुराणस्मृतिदेवताः ॥

यच्चक्षुषी समाधत्ते तेनादित्यन्तु प्रीणयेत् ।
प्रीणीतो वायुप्राणौ च दिशः प्राप्याथ श्रोत्रयोः ॥

ब्रह्माणं तेन प्रीणाति यन्मूर्धनि समापयेत् ।
यदुत्क्षिपति चापोर्ध्वं आकाशं तेन प्रीणयेत् ॥

प्रीणाति विष्णुं पञ्चान्तु सलिलं वै समादधत्' । इति

नन्वग्न्यादीनां वागाद्यङ्गदेवतात्वं कथं? वागाद्यङ्गेषु स्पृष्टेषु कथं वा प्रीतिः? किं फलमिति चेत् ।

ऋग्ब्राह्मणे श्रूयते – 'आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किञ्चन मिषत् स ईक्षत लोकान्नु सृजा इति स इमान् लोकानसृजत अम्भो मरीचीर्मरमापोऽदोऽम्भः परेण दिवं द्यौः प्रतिष्ठाऽन्तरिक्षं मरीचयः पृथिवी मरो या अधस्तात्ता आपः । स ईक्षत इमे लोकाः, लोकपालान्नु सृजा इति । सोऽद्भ्य एव पुरुषं समुद्धृत्यामूर्च्छयत् तमभ्यतपत् तस्याभितप्तस्य मुखं निरभिद्यत (यथाऽण्डं), मुखाद्वाक् वाचोऽग्निः । नासिके निरभिद्येतां नासिकाभ्यां प्राणः प्रणाद्वायुः । अक्षिणी निरभिद्येतां अक्षिभ्यां चक्षुश्चक्षुष आदित्यः । कर्णौ निरभिद्येतां कर्णाभ्यां श्रोत्रं श्रोत्राद्दिशः । त्वङ्निरभिद्यत त्वचो लोमानि, लोमभ्यः ओषधिवनस्पतयः । हृदयं निरभिद्यत हृदयान्मनो मनसश्चन्द्रमाः । नाभिर्निरभिद्यत नाभ्या अपानः, अपानान्मृत्युः । शिश्नं निरभिद्यत शिश्नाद्रेतो रेतस आपः । ता एता देवतास्सृष्टा अस्मिन् महार्णवे प्रापतंस्तमशनायापिपासाभ्यामन्ववार्जत्ता एनमब्रुवन् आयतनं नः प्रजानीहि यस्मिन् प्रतिष्ठिता अन्नमदामेति । ताभ्यो गामानयत्ता

अब्रुवन् न वै नोऽयमलमिति । ताभ्योऽश्वमानयत्ता अब्रुवन् न वै नोऽयमलमिति । ताभ्यः पुरुषमानयत्, ता अब्रुवन् सुकृतं ब्रुवेति(?) । पुरुषो वा व सुकृतम् । ता अब्रवीत् यथाऽऽयतनं प्रविशतेति । अग्निर्वाग्भूत्वा मुखं प्राविशत्, वायुः प्राणो भूत्वा नासिके प्राविशत्, आदित्यश्चक्षुर्भूत्वा अक्षिणी प्राविशत्, दिशः श्रोत्रे भूत्वा कर्णौ प्राविशत्, ओषधिवनस्पतयो लोमानि भूत्वा त्वचं प्राविशन्, चन्द्रमा मनो भूत्वा हृदयं प्राविशत्, मृत्युरपानो भूत्वा नाभिं प्राविशत्, आपो तो भूत्वा शिश्नं प्राविशन्, तमशनायापिपासे अब्रूताम् आभ्यामभिजानीहीति । ते अब्रवीदेतास्वेव वां देवतास्वाभजाम्येतासु भागिन्यौ करोमीति । तस्माद्यस्यै कस्यैव च देवतायै हविर्गृह्यते भागिन्यावेवास्यामशनायापिपासे भवत' इति । एवं अग्न्यादीनां वागादिषूत्पत्त्यादिकं प्रतिपाद्य तत्रैवोत्तरत्र वागादीनां विभूत्यादिकं प्रतिपाद्यते । यथा: –

अथातो विभूतयोऽस्य पुरुषस्य वाचा सृष्टौ पृथिवी चाग्निश्च, अस्यामोषधयो जायन्ते अग्निरेतास्स्वदयति 'इदमाहरत' इति एवमेतौ वाचं पितरं परिचरतः पृथिवी चाग्निश्च । यावदनुपृथिवी यावदन्वग्निः तावानस्य लोको भवति, नास्य तावल्लोको जीर्यते यावदेतयो र्न जीर्यते पृथिव्याश्चाग्नेश्च, य एवमेतां वाचो विभूतिं वेद । प्राणेन सृष्टावन्तरिक्षञ्च वायुश्च, अन्तरिक्षं वा अनुचरन्त्यन्तरिक्षमनुशृण्वन्ति वायुरस्मै पुण्यं गन्धमावहति, एवमेतौ प्राणं पितरं परिचरतोऽन्तरिक्षञ्च वायुश्च, यावदन्वन्तरिक्षं यावदनुवायुस्तावानस्य लोको भवति नास्य तावल्लोको जीर्यते, यावदेतयो र्न जीर्यतेऽन्तरिक्षस्य च वायोश्च य एवमेतां प्राणस्य विभूतिं वेद । चक्षुषा सृष्टौ द्यौश्चादित्यश्च, द्यौर्हास्मै पुष्टिमन्नाद्यं सम्प्रयच्छत्यादित्योऽस्य ज्योतिं प्रकाशं करोति, एवमेतौ चक्षुः पितरं परिचरतः द्यौश्चादित्यश्च, यावदनुद्यौर्यावदन्वादित्यस्तावानस्य लोको भवति नास्य तावल्लोको जीर्यते यावदेतयो र्न जीर्यते दिवश्चादित्यस्य च य एवमेतां चक्षुषो विभूतिं वेद । श्रोत्रेण सृष्टा दिशश्चन्द्रमाश्च दिग्भ्यो हैनमायन्ति दिग्भ्यो विशृणोति, चन्द्रमा अस्मै पूर्वपक्षापरपक्षान्विचिनोति पुण्याय कर्मणे, एवमेते श्रोत्रं पितरं परिचरन्ति दिशश्च चन्द्रमाश्च, यावदनुदिशो यावदनुचन्द्रमास्ता

वानस्य लोको भवति नास्य तावल्लोको जीर्यते यावदेतेषां न जीर्यते दिशाञ्च चन्द्रमसश्च, य एवमेतां श्रोतस्य विभूतिं वेद । मनसा सृष्टा आपश्च वरुणश्च, आपोहास्मै श्रद्धां सन्नमन्ते पुण्याय कर्मणे, वरुणोऽस्य प्रजां धर्मेण दाधार, एवमेते मनः पितरं परिचरन्ति आपश्च वरुणश्च, यावदन्वापो यावदनुवरुणस्तावानस्य लोको भवति नास्य तावल्लोको जीर्यते यावदेतेषां न जीर्यते अपाञ्च वरुणस्य च, य एवमेतां मनसो विभूतिं वेद ' इति । वागादीनामेवंरूपेण विभूतेः श्रूयमाणत्वात् 'आपो वा इदं सर्वं' मित्यादि श्रुतेश्च प्रत्यङ्गमपश्च स्पृष्ट्वेत्युक्तम् ।

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्तचार्यवर्येण श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने तात्पर्यचिन्तामणौ द्वितीयखण्डार्थविवरणं समाप्तम् ।



## अथ तृतीयः खण्डः

**अथाऽपो नमस्कृत्यावगाह्य यावदमनश्शङ्कमद्भिर्मृदा च गात्रशुद्धिं कृत्वा वस्त्रमादशात्सुदितमिति नेनेक्ति ॥ १ ॥**

**अथ** करप्रक्षालनादिशुद्धाचमनानन्तरम् । **अपो नमस्कृत्य** । अपां सर्वकारणत्वात्तन्नमस्कारः । **अवगाह्य यावदमनश्शङ्कमद्भिर्मृदा च गात्रशुद्धिं कृत्वा** — मृज्जलाभ्यां यावन्मनश्शुद्धि तावत्पर्यन्तमित्यर्थः ।

स्मृतिः — ' शौचन्तु द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा ।
मृज्जलाभ्यां बहिश्शुद्धिर्मनश्शुद्धिस्तथान्तरम् ॥ ' इति

बोधायनः — ' अद्भिश्शुद्ध्यन्ति गात्राणि बुद्धिर्ज्ञानेन शुद्ध्यति ।
अहिंसया च भूतात्मा मनस्सत्त्वेन शुद्ध्यति ॥

आश्वमेधिके — ' मनश्शौचं कर्मशौचं कुलशौचञ्च भारत ।
शरीरशौचं वाक्छौचं शौचं पञ्चविधं स्मृतम् ॥

मनुः — ' सत्यपूतां वदेद्वाचं वस्त्रपूतं जलं पिबेत् ।
दृष्टिपूतं न्यसेत्पादं मनःपूतं समाचरेत् ॥

बोधायनः — ' कालो हि मनसश्शुद्धिरुदकाद्युपलेपनम् ।
अविज्ञातञ्च भूतानां षड्विधं शौचमुच्यते ॥ ' (?) इति

' मानसं वै प्राजापत्यं पवित्रम् ' इति श्रुतिः ।

' मन एव मनुष्याणां कारणं बन्धमोक्षयोः ' इति मनस एव शुद्धौ प्राधान्यमम्, अशुद्धचित्तस्यावसानपर्यन्तं शौचं कुर्वतः शुद्धिर्नास्तीत्यवगम्यते ।

व्यासः — ' गङ्गातोयेन कृत्स्नेन मृद्भारैश्च नगोपमैः ।
आमृत्योराचरञ्छौचं भावहीनो न शुद्ध्यति ॥

वल्मीकस्थो यथा व्यालो बहिर्दण्डविघट्टनात् ।
न बिभेति तथा पाप्मा बहिस्स्नानशतादपि ॥ ' इति

शान्तिपर्वणि — 'अग्निहोत्रं वने वासः स्वाध्यायो दाररक्षणम् ।
सर्वाण्येतानि वै मिथ्या यदि भावो न निर्मलः ॥

अतो यावदमनश्शङ्क' मित्युक्तम् ।

**वस्त्रं .... नेनेक्ति ।**

आनुशासनिके— 'क्षारोषराभ्यां वस्त्रस्य कुर्याच्छौचं मृदा सह ।
लेपगन्धापनयनं तस्माच्छौचं विधीयते ॥

**गायत्र्या प्रागग्रिकमुदगग्रिकं वाऽऽस्तृणाति, शुष्के तथैव गृह्णीयात् ॥ २ ॥**

'आर्द्रवासास्तु यः कुर्याज्जपहोमप्रतिग्रहान् ।
सर्वं तद्राक्षसं विद्याद्बहिर्जानु च यत्कृतम् ॥'

इति सुमन्तुस्मरणात् शुष्केति ।

**इदमापः प्रवहतेत्यभिगम्य, हिरण्यशृङ्गमिति जलं प्रणम्य, समृदोदकेन "आपः पुनन्तु" इत्यभ्युक्ष्य, "इदमापश्शिवा" इत्यपो विगाह्य सुस्नाति ॥ ३ ॥**

सङ्कल्पपूर्वकमिति योज्यम् ।

मनुः — 'असङ्कल्प्य तु यः कुर्यात् स्नानदानव्रतानि च ।
अन्यानि पुण्यकर्माणि विफलानि भवन्ति हि ॥' इति

सङ्कल्पस्सूक्तपठनं मार्जनञ्चाघमर्षणम् ।
तर्पणं पितृदेवानां स्नानं पञ्चाङ्गमुच्यते ॥
तिथिवारादिकं स्मृत्वा सुसङ्कल्प्य यथाविधि ॥' इति च स्मरणात् ।

'हिरण्यशृङ्गमित्युक्त्वा जलं समवगाहयेत् ।
सुमित्रा न ऋचाऽऽहृत्य मृत्स्नाने जलमुत्सृजेत् ॥
योऽस्मान् द्वेष्टीत्यृचाऽऽहृत्य तथा तत्र जलं क्षिपेत् ।
पूर्वमुखश्चेन्नैर्ऋत्यामन्यथा पश्चाद्भागे ।

'यश्च वयं द्विष्म' इति पुनस्तत्र जलं क्षिपेत् ।
एवं त्रिर्मृत्तिकास्नाने जलमञ्जलिनोत्सृजेत् ॥

जलं प्रणम्येति ।

'नमोऽग्नय' इति तीर्थं नमस्कुर्यात्ततो बुधः ।
'यदपा' मित्यमेध्यांशं निरस्येद्दक्षिणे जले ॥

'अत्याशना' दिति द्वाभ्यां त्रिरालोड्य तु पाणिना ।
चतुरश्रं तीर्थपीठं पाणिनोल्लिख्य वारिषु ॥

'आवाहयामि त्वां देवी' त्यावाह्यात्रैव जाह्नवीम् ।
'इमम्मे गङ्ग' इत्युक्त्वा पुण्यतीर्थानि च स्मरेत् ॥ इति ।

समृदोदकेन मृज्जलाभ्याम् । आपः पुनन्त्वित्यभ्युक्ष्य — शिरसि । 'इदमापः शिवा' इति विगाह्य सुस्नाति । इदं मलापकर्षणस्नानम् । मार्जयेदित्युत्तरत्र वक्ष्यमाणत्वात् ।

**'इदं ब्रह्म पुनीमह' इति पवित्रं गृहीत्वा 'ब्रह्मा पुना' त्वित्यङ्गुल्यां निक्षिप्य 'शतधार' मिति जलं गृहीत्वा 'पयस्वतीरोषधय' इत्याचम्य 'भूरग्नय' इत्युपस्थानमादित्यस्य ॥ ४ ॥**

करशुद्ध्यर्थं कर्मसाद्गुण्यार्थञ्च पवित्रधारणमाह इदमिति ।

पवित्रलक्षणम् । चतुरङ्गुलं भवेदग्रं ग्रन्थिरेकाङ्गुलं भवेत् ।
द्व्यङ्गुलं वलयञ्चैवमेवं हस्तपवित्रकम् ॥

शातातपः — 'जपे होमे च दाने च स्वाध्याये पितृतर्पणे ।
अन्यूनं तु करं कुर्यात्सुवर्णरजतैः कुशैः ॥

सुमन्तुः— 'अपवित्रकरो नग्नः शिरसि प्रावृतोऽपि वा ।
प्रलपन्वा जपेद्यावत्तावन्निष्फलमुच्यते ॥

अत्रिः — 'उभाभ्यामपि हस्ताभ्यां विप्रैर्दर्भपवित्रके ।
धारणीये प्रयत्नेन ब्रह्मग्रन्थिसमन्विते ॥

ब्रह्मग्रन्थिसमायुक्ते पवित्रे मध्यपर्वणि ।
पाणिभ्यां सर्वदा धार्ये कर्मकाले विशेषतः ॥

पर्वभेदे वर्णभेदे च विशेषमाह अत्रिः —

' अग्रपर्वस्थितो दर्भः तपोवृद्धिकरोऽपि सः ।
मध्ये चैव प्रजाकामो मूले सर्वार्थसाधकः ॥

अंगुलीमूलदेशे तु पवित्रं धारयेत् द्विजः ।
राज्ञां द्विपर्वके चैव विशामग्रैकरस्य तु ॥

स्मृत्यन्तरे — ' पित्र्यं मूलेन मध्येन स्नानं दानं प्रयत्नतः ।
दैवं कर्म कुशाग्रेण कर्तव्यं भूतिमिच्छता ॥

यथाक्रमं मूलमध्याग्रसहितैरित्यर्थः ।

दशदर्भाः —

स्मृतिसारे — ' कुशाः काशा यवा दूर्वा गोधूमाश्चार्थकुन्दराः ।
उशीरा व्रीहयो मौञ्जा दशदर्भाश्च बल्बजाः ॥

[illegible]: — ' काशहस्तस्तु नाचामेत् कदाचिद्विधिशंकया ।
प्रायश्चितेन युज्येत दूर्वाहस्तस्तथैव च ॥

प्रायश्चित्तमष्टोत्तरशतगायत्रीजपः ।

वृद्धवसिष्ठः — ' काशस्तु रौद्रो विज्ञेयः कौशं ब्राह्मं तथा स्मृतम् ।
आर्षं तु दौर्वमाख्यातं वैश्वामित्रं तु वैष्णवम् ॥

संग्रहे — ' अप्रसूताः स्मृताः दर्भाः प्रसूतास्तु कुशास्तथा ।
समूलाः कुतपाः प्रोक्ताः छिन्नाग्रास्तृणसंज्ञिताः ॥

कौशिकः — ' गवां वालपवित्रेण वह्न्युपास्तिं करोति यः ।
पञ्चाग्नयो हुतास्तेन यावज्जीवं न संशयः ॥ ' इति

**ब्रह्मा पुनात्वित्यङ्गुल्यां निक्षिप्य ।** अङ्गुल्यामिति सामान्योनोक्तत्वात् अनामिकाव्यतिरिक्ताङ्गुलीनां दोषाभावात् अनामिकाव्यतिरिक्ताङ्गुलिष्वपि किं न स्यादिति चेन्न ।

'अङ्गुष्ठानामिकाभ्यान्तु च्छिन्नं पैतामहं शिरः ।
रुद्रेण जातिस्मरणात् ततः कालत्र करोऽशुचिः ॥
तस्मात्पवित्रहस्तार्थं कुशकाञ्चनधारणम् ।'

इति व्यासस्मरणाद्दोषनिर्हरणार्थमनामिकायां धारयेत् ॥

किञ्च । 'यथा चक्रं महाविष्णोर्यथा शूलं पिनाकिनः ।
यथा वज्रं महेन्द्रस्य तथा विप्रकरे कुशः ॥' इति

**शतधारमिति जलं गृहीत्वा पयस्वतीरोषधय इत्याचम्य ।** 'अपोऽश्नाति अन्तरत एव मेध्यो भवती' ति श्रुतिः । **भूरग्नय इत्युपस्थानमादित्यस्य ।** 'उद्यन्तमस्तंयन्तमादित्यमभिध्याय' न्निति श्रुतिः ।

**'चित्पतिरिति' त्रिभिरनामिकोपान्ताभ्यां समृदोदकेन त्रिः प्रदक्षिणमावर्त्य शिरो मार्ष्टि ॥ ५ ॥**

**चित्पतिरिति । त्रिभिरनामिकोपान्ताभ्याम् । उपान्तः** — अङ्गुष्ठः 'सर्वास्वङ्गुष्ठमुपनिगृह्णाती' ति श्रुतेः । अङ्गुष्ठव्यतिरिक्तानामन्योन्यसापेक्षाया अभावादङ्गुष्ठापेक्षाया विद्यमानत्वाच्च । **समृदोदकेन** शिरस उपरि । **त्रिः प्रदक्षिणमावर्त्य शिरो मार्ष्टि ।**

स्मृतिप्रदीपिकायाम् 'आयुष्कामः शिरोलेपं मृदा कुर्याद्द्विजः पुरा ।
श्रीकामः पादशौचञ्च मृदा पूर्वं समाचरेत् ॥

**'आपो' 'हिरण्य' 'पवमानैः' प्रोक्षयति ॥ ६ ॥**

अत्र प्रोक्षणं स्नानाङ्गत्वेन ।

बोधायनः — 'अपि वानाद्याऽऽपेय(?)प्रतिषिद्धभोजनेषु दोषवच्च कर्म कृत्वाऽभिसन्धिपूर्वकमनभिसन्धिपूर्वकं वा शूद्रायाञ्च रेतस्सिक्त्वा अयोनौ वा अब्लिङ्गाभिर्वारुणीभिश्चोपस्पृश्य प्रयतो भवति ।

अपोऽवगाहनं स्नानं विहितं सार्ववर्णिकम् ।
मन्त्रवत्प्रोक्षणञ्चैव द्विजातीनां विशिष्यते' ॥ इति

**'उद्वयमि' त्यादिनाऽऽदित्यमुपस्थाय, महाव्याहृत्या जलमभिमन्त्र्य, कर्णावपिधायाभिमुखमादित्यस्यार्धं निमज्ज्य, 'ऋतश्च सत्यश्च, या सुगन्धा' इति त्रिरावर्तयन्नघमर्षणं करोति ॥ ७ ॥**

'मन्त्राक्षरेषु सर्वेषु मूर्तिभेदाः परात्मनः ।
शक्तयश्चानुभावाश्च सदा तिष्ठन्ति सत्तम ॥'

इति विष्णुधर्मोत्तरवचनात् भगवत्सान्निध्यार्थं महाव्याहृत्याऽभिमन्त्रणमुक्तम् ।

**कर्णौ अपिधायेति ।**

**सङ्ग्रहे** — 'पिधाय नासिकाकर्णौ स्नानं कुर्याद्यथाविधि' इति । यद्व जलप्रवेशनिवारणार्थम् ।

**अभिमुखमादित्यस्य ।**

**स्मृतिः** — 'स्थिरोदकेषु सर्वेषु सूर्यस्याभिमुखो द्विजः ।
प्रवाहाभिमुखो मज्जेद्गङ्गाद्यादिसरित्सु च ॥

**व्यासः** — 'स्रवन्तीषु सदा स्नायात् प्रतिस्रोतस्स्थितो द्विजः ।
तटाकादिषु तोयेषु प्रत्यर्कं स्नानमाचरेत् ॥

**सङ्ग्रहे** — 'स्रोतसोऽभिमुखस्स्नायात् मार्जने चाघमर्षणे ।
अन्यत्रार्कमुखो रात्रौ प्राङ्मुखोऽग्निमुखोऽपि वा ॥
सन्ध्यामुखस्तु सन्ध्यायां स्नानं कुर्वीत यत्नतः ।

**निमज्ज्य .... .... त्रिरावर्तयन्नघमर्षणमिति ।**

**विष्णुः** — 'अन्तर्जले जपेन्मग्नः त्रिष्कृत्वस्त्वघमर्षणम् ।
द्रुपदां वा त्रिरावर्तेदायं गौरिति वा त्यृचम् ॥
सव्याहृतीकां सप्रणवां गायत्रीं त्रिर्जपेत्तु वा ।
आवर्तयेद्वा प्रणवं स्मरेद्वा विष्णुमव्ययम् ॥

**योगयाज्ञवल्क्यः** — 'जलमध्ये स्थितो विप्रः शुद्धभावो हरिं स्मरेत् ।
'तद्विष्णो'रिति मन्त्रेण जपेदप्सु पुनःपुनः ॥

**बोधायनः** — ‘ प्रायश्चित्तानि वक्ष्यामो विख्यातानि विशेषतः ।
समाहितानां युक्तानां प्रमादेषु कथं भवेत् ॥

ऋतञ्च सत्यञ्चेत्येतदघमर्षणं त्रिरन्तर्जले पठन् सर्वस्मात्पापात्प्रमुच्यते । ‘ आयं गौः पृश्निरक्रमी’दित्येतामृचं त्रिरन्तर्जले पठन् सर्वस्मात्पापात्प्रमुच्यते । ‘ द्रुपदादिवेन्मुमुचान ’ इत्येतामृचं त्रिरन्तर्जले पठन् सर्वस्मात्पापात्प्रमुच्यते । ‘ हंसश्शुचि’ षदित्येतामृचं त्रिरन्तर्जले पठन् सर्वस्मात्पापात्प्रमुच्यते । अपिवा सावित्रीं, गायत्रीं पच्छोऽर्धर्चशस्समस्ताञ्चेति एतामृचं त्रिरन्तर्जले पठन् सर्वस्मात्पापात्प्रमुच्यते । अपिवा व्याहृतीर्व्यस्तास्समस्ताश्च त्रिरन्तर्जले पठन् सर्वस्मात्पापात्प्रमुच्यते इति । तदेतद्धर्मशास्त्रं नापुत्राय नाशिष्याय नासंवत्सरोषिताय दद्यात् । सहस्रं दक्षिणा ऋषभैकादशं च गुरुप्रसादो वा गुरुप्रसादो वे’ति ।

**विष्णुः** — ‘ ततोऽप्सु निमग्नस्त्रिरघमर्षणं जपेत् । तद्विष्णोः परमं पदमिति, द्रुपदां वा, सावित्रीं, युञ्जते मन इत्यनुवाकं, पुरुषसूक्तं वा तज्जुम्बकमन्त्रेण वा जपेदप्सु यथाबलमिति ।

**मनुः** — ‘ यथाऽश्वमेधः क्रतुराट् सर्वं पापं व्यपोहति ।
तथाऽघमर्षणं सूक्तं सर्वपापप्रणाशनम् ॥

अघमर्षणसूक्तस्य माधुच्छन्दसोऽघमर्षणः ऋषिः अनुष्टुप् छन्दः भाववृत्तः परमात्मा देवता । भावस्य सत्तामात्रस्य ब्रह्मणो वृत्तं जगत्सृष्टिः । सूक्तस्य प्रतिपाद्यो वरुणो वा । त्रिरावर्तयन्नित्युक्तःत्वान्मानसिकमेव ।

**पराशरः** — ‘ मन्त्रपूतैर्जलैर्यत्तत्प्राहुः स्नानं फलप्रदम् ।
न वृथा वारिमग्नानां यादसामिव निष्फलम् ॥

ब्रह्मक्षत्रविशाञ्चैव मन्त्रवत्स्नानमिष्यते ।
तूष्णीमेव हि शूद्रस्य स्त्रीणाञ्चैव भवेदिति ॥

अतस्समन्त्रकत्वेनाघमर्षणमुक्तम् ।

**ततो मन्दं निःश्वस्य, धौतं परिधाय, अनुपमृज्यवासः, प्रातः 'सूर्यश्चे' त्यादिनाऽऽचम्य, 'आपोहिष्ठादिभिः ऋग्भिस्तिसृभिः प्रोक्ष्य, गायत्र्याऽपोऽभिमन्त्र्य आदित्याभिमुखं निक्षिप्य, प्रदक्षिणं करोति ॥ ८**

**मन्दमिति** । मन्दनिश्श्वसनं शूलादिरोगनिवारणार्थम् ।

**विष्णुः** — 'स्नातश्चार्द्रवाससा देवर्षिपितृतर्पणमप्स्वेव कुर्यादिति ।

**कार्ष्णाजिनिः** — 'देवतानां पितृणाञ्च जले दद्याज्जलाञ्जलिम् ।
असंस्कृतप्रमीतानां स्थले दद्याज्जलाञ्जलिम् ॥

**व्यासः** — 'स्नाने चैव तु सर्वत्र तर्पयेत्पितृदेवताः ।
काम्ये नित्ये विशेषेण तत्प्रकुर्यात्प्रयत्नतः ॥

देवान् ब्रह्मऋषींश्चैव तर्पयेदक्षतोदकैः ।
तर्पयेत्तु पितृन् भक्त्या सतिलोदकचन्दनैः ॥

**कौशिकः** – 'प्रातःकाले (स्नाने)विशेषोऽयं विद्धि नैव तिलैर्युतम् ।
नैमित्तिकञ्च काम्यञ्च तिलैरेव विधीयते ॥

**आपस्तम्बः** — 'अस्पृश्यस्पर्शने वान्ते त्वश्रुपाते क्षुरे भगे ।
स्नानं नैमित्तिकं ज्ञेयं देवर्षिपितृवर्जितम् ॥

**स्मृत्यर्थसारे** — 'तूष्णीं स्नायादशुद्धस्तु मन्त्रसम्भारवर्जितम् ।
अस्पृश्यस्पर्शने स्नाने नाघमर्षणतर्पणे ॥

**भारद्वाजः** — 'अस्पृश्यस्पर्शने चैव त्रयोदश निमज्ज्य च ।
आचम्य प्रयतः पश्चात् स्नानं विधिवदाचरेत् ॥

शुचिवस्त्रधरः स्नातः परिधायाम्बरं शुचि ।
तेषामेव हि तीर्थेन कुर्यादुदकतर्पणम् ॥'

एवं स्नानाङ्गतर्पणं कृत्वा यक्ष्मणे तर्पणं कुर्यात् ।

**शौनकः** :— 'स्नानाङ्गतर्पणं कृत्वा यक्ष्मणे जलमाहरेत् ।
अन्यथा कुरुते यस्तु स्नानं तस्याफलं भवेत् ॥

यन्मया दुष्कृतं तोये शारीरमलसञ्चितम् ।
तस्य पापविशुद्ध्यर्थं यक्ष्माणं तर्पयाम्यहम् ॥

गृहे विशेषः

उशनाः — 'यथाऽहनि तथा प्रातर्नित्यं स्नायादतन्द्रितः ।
दन्तान् प्रक्षाल्य नद्यादौ गृहे चेत्तदमन्त्रवदिति ॥

स्नानतर्पणं भूर्देवानित्यादि गृह्यपरिशिष्टोक्तप्रकारेण कर्तव्यम् ।

'द्विजः पूर्वमुखो देवानुत्तराभिमुखो मुनीन् ।
पितॄंश्च दक्षिणमुखो जलमध्ये तु तर्पयेत् ॥

स्नात्वा न धावयेद्दन्तान् न मृज्याद्वाससा मुखम् ।
पिबन्ति शिरसो देवाः पिबन्ति पितरो मुखात् ॥

सुराबिन्दुसमाः प्रोक्ताः पृष्ठतः केशबिन्दवः ।
त एव पुरतः प्रोक्ताः सर्वतीर्थोपमा बुधैः ॥

अवधूनोति यः केशान् स्नात्वा प्रस्रवतो द्विजः ।
आचामेद्वा जलस्थोऽपि स बाह्यः पितृदैवतैः ॥

तर्पयित्वा जलात्तीर्णस्तद्वस्त्रं पीडयेद्द्विजः ।
पितॄणां प्रीणनार्थाय पुत्राणां तु विशेषतः ॥

मनुः — 'मनुष्यतर्पणे चैव स्नानवस्त्रनिपीडने ।
निवीती तु भवेद्विप्रस्तथा मूत्रपुरीषयोः ॥

वस्त्रं चतुर्गुणीकृत्य पीडयित्वा जलाद्बहिः ।
वामप्रकोष्ठे निक्षिप्य द्विराचम्य विशुद्ध्यति ॥

वृद्धमनुः — 'वस्त्रं त्रिगुणितं यस्तु निपीडयति मूढधीः ।
वृथा स्नानं भवेत्तस्य यश्चैवादशमम्बुनि ॥

वृद्धवसिष्ठः — 'स्नानार्थन्तु प्रवृत्तन्तु देवाः पितृगणैस्सह ।
वायुभूतानुगच्छन्ति तृषार्तास्सलिलार्थिनः ॥

निराशास्ते निवर्तन्ते वस्त्रनिष्पीडनेऽकृते ।
तस्मान्निष्पीडयेद्वस्त्रमकृत्वा पितृतर्पणम् ॥

हारीतः — ' वस्त्रनिष्पीडनं तोयं श्राद्धे तूच्छिष्टभोजनम् ।
भागधेयं श्रुतिः प्राह तस्मान्निष्पीडयेत् स्थले ॥

तत्र मन्त्रः — ' ये के चास्मत्कुले जाताः अपुत्रा गोत्रजा मृताः ।
ते गृह्णन्तु मया दत्तं वस्त्रनिष्पीडनोदकम् ॥

तृप्यन्तु तस्तां याता मम सम्बन्धिनो मृताः ।
तिर्यग्योनिगता ये च वस्त्रनीष्पीडनाम्बुना ॥

पराशरः — ' स्नातो नाङ्गानि मृजेत् स्नानशाट्या न पाणिना ।

स्मृत्यन्तरे — ' आर्द्रेण वाससा यस्तु शरीरं परिमार्जयेत् ।
शुनोच्छिष्टं भवेद्गात्रं पुनस्स्नानेन शुद्ध्यति ॥ '

' पुण्यतीर्थेषु सर्वेषु स्नानवस्त्रमधस्त्यजेत् । ' इति केचित्

चन्द्रिकायाम् — ' नोत्तरीयमधः कुर्यान्नोपर्यधस्त्यमम्बरम् ।
नान्तर्वासो विना जातु निवसेद्वसनं बुधः ॥

भृगुः — ' ब्राह्मणस्य सितं वस्त्रं नृपते रक्तमुल्बणम् ।
पीतं वैश्यस्य शूद्रस्य नीलं मलवदिष्यते ॥

प्रजापतिः — ' क्षौमं वासः प्रशंसन्ति तर्पणे सदशं तथा ।
काषायं धातुरक्तं वा नोल्बणं तत्र कर्हिचित् ॥

काषायवासाः कुरुते जपहोमप्रतिग्रहम् ।
सर्वं तद्राक्षसं विद्याद्बहिर्जानु च यत्कृतम् ॥

धौतमिति ।

प्रकारान्तरेण धौतलक्षणमाह —

सप्तवातहतं वस्त्रं धौतमित्यभिधीयते ।
चतुर्दशकृतं वस्त्रं शुष्कमित्यभिधीयते ॥

उशनाः – ‘स्नात्वाऽनुपहतं वस्त्रं परिदध्याद्यथाविधि ।
अभावे पूर्ववस्त्रं वा सम्प्रोक्ष्य प्रणवेन तु’ ॥

बोधायनः – ‘देशं कालं तथाऽऽत्मानं द्रव्यं द्रव्यप्रयोजनम् ।
उपपत्तिमवस्थाञ्च ज्ञात्वा शौचं प्रकल्पयेत्’ ॥

याज्ञवल्क्यः – ‘जपे होमे तथा दाने दैवे पित्र्ये च कर्मणि ।
बध्नीयान्नासुरीं कक्ष्यां शेषकाले यथेच्छया ॥

परिधानाद्बहिः कक्ष्या निबद्धा चासुरी मता ।
धर्मे कर्मणि विद्वद्भिर्वर्जनीया प्रयत्नतः ॥

एकवस्त्रो विवस्त्रश्च खण्डवस्त्रस्तथैव च ।
बहिःकच्छो विकच्छश्च नग्नः पञ्चविधः स्मृतः ॥

विकच्छः कच्छशेषश्च मुक्तनीवीशिखस्तथा ।
तथाऽकौपीनवासाश्च नग्नः पञ्चविधः स्मृतः ॥

युग्मैर्विवर्तितं रौद्रमयुग्मं ब्राह्ममुच्यते ।
युग्मायुग्मैर्व्यतिस्यूतं वैष्णवं कटिसूत्रकम्’ ॥

आश्वमेधिके – ‘शुद्धं चाच्छादयेत्कक्ष्ये न कुर्यात्परपाशके ।
पाशानिबद्धकक्ष्यो यः कुरुते कर्म वैदिकम् ॥

राक्षसा दानवा दैत्यास्तद्विलुपन्ति हर्षिताः’ ।

योगयाज्ञवल्क्यः – ‘स्नात्वैवं वाससी धौते अच्छिन्ने परिधाय वै ।
प्रक्षाल्योरू मृदाद्भिश्च हस्तौ प्रक्षालयेत्ततः’ ॥

सङ्ग्रहे – ‘प्रातस्सन्ध्यामुपासीत वस्त्रशोधनपूर्वकम् ।
उपास्य मध्यमां सन्ध्यां वस्त्रसंशोधनं परम् ॥

अनिष्पीड्य स्नानवस्त्रं सन्ध्याकर्म न चाचरेत् ।
अन्यथाकुरुते मोहात् कृतमप्यकृतं भवेत्’ ॥

अथोर्ध्वपुण्ड्रः

नारदीये — 'ऊर्ध्वं नयति यत्पुण्ड्रः प्राणिनः पापकारिणः ।
तस्योर्ध्वपुण्ड्र इत्याख्या तस्मात्तद्धारयेद्द्विजः ॥
ऊर्ध्वगत्यान्तु यस्येच्छा तस्योर्ध्वं पुण्ड्रमुच्यते ।
ऊर्ध्वं गत्वा तु देवत्वं सम्प्राप्नोति न संशयः' ॥

महोपनिषदि — 'धृतोर्ध्वपुण्ड्रः परमेशितारं नारायणं सांख्ययोगाधिगम्यम् ।
ज्ञात्वा विमुच्यते नरस्सर्वपापैः संसारपाशैरिह चैति विष्णुम् ॥'

श्रीवैखानसे मरीचिः – 'अथातोनुष्ठानकल्पं व्याख्यास्यामः । सर्वे वैदिकाचारास्तपोयज्ञाश्च विष्णुपूजाविधेर्भेदत्वाद्वैखानससूत्रोक्तानुष्ठानं सर्वं समाचरन्नित्यनैमित्तिककाम्यानि कर्माणि सर्वाणि कुर्यादूर्ध्वपुण्ड्रं धृत्वा, ऊर्ध्वपुण्ड्रं विना जपहुतार्चनादीन् न कुर्यात्, कुर्याच्चेत्तत्सर्वं निष्फलं भवेत् । तस्मादूर्ध्वपुण्ड्रं धारयेत् । पर्वताग्रे नदीतीरे तीर्थस्थानेषु विष्ण्वालये गृहीता मृदुत्तमा, तुलसीमूले वल्मीके च गृहीतं मध्यमं, अन्यस्मिन् शुचौ देशे गृहीतमधमम् । चन्दनादिसर्वगन्धद्रव्यैरुत्तमं । श्रीफलं तुलसीबिल्वपत्रञ्च मध्यमम् । पञ्चगव्यतोयभस्मानाऽधमम् । एतैर्द्रव्यैर्धारयेत् । श्वेतं सर्वसिद्धिदं, श्यामं शान्तिकरं, पीतं श्रीकरं, रक्तं वश्यकरमिति । हृदये महानग्निर्ज्वालति, तस्य शिखा ज्वालारूपवदूर्ध्वपुण्ड्रस्स्यात् । अथवा दीपाकृतिर्वेणुपत्राकृतिः पद्मोत्पलकुमुदानां मुकुलाकृतिः मत्स्यकूर्मशूर्पशङ्खदण्डाकृतिर्वा । ऋजुं सुपार्श्वमूर्ध्वपुण्डं कुर्यात् । अङ्गुष्ठतर्जनीमध्यमानामका इत्यङ्गुल्यस्तेषां क्रमेण तुष्टिर्मुक्तिरायुर्वश्यमिति फलानि भवन्ति । ललाट–कुक्षि–हृदय–कण्ठोदरदक्षिणपार्श्व–दक्षिणबाहुमध्य–कण्ठो–दरवामपार्श्व–वामबाहुमध्य–कण्ठ–पृष्ठो–र्ध्वककुत्सु केशवादिद्वादशनामभिः प्रणवादिनमोन्तमुच्चार्य होमभस्मना रक्षार्थं मूर्ध्वं पुण्ड्रं कृत्वा पश्चाद्द्वादशक्षरमुच्चार्य मूर्ध्नि विन्यसेत् । वामहस्तेन दक्षिणपार्श्वगतान्, अन्यान् दक्षिणहस्तेन कारयेत् । ऊर्ध्वपुण्ड्रं विना मुहूर्तमपि न चरेत् । ऊर्ध्वपुण्डाङ्कितं दृष्ट्वा मृत्युरपि दूरतो गच्छेत् । सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छती'ति ।

तथा – 'चतुरङ्गुलमूर्ध्वाग्रं द्व्यङ्गुलं विस्तृतं तथा ।
द्विजः पुण्ड्रमृजु सौम्यं सान्तरालन्तु धारयेत् ॥' इति

चन्द्रिकायाम् – ब्रह्माण्डे ब्रह्माणं प्रति भगवान् —
'पर्वताग्रे नदीतीरे पुण्यक्षेत्रे विशेषतः ।
सिन्धुतीरे च वल्मीके तुलसीमूलमाश्रिते ॥
मृद एतास्तु सङ्ग्राह्या वर्जयेदन्यमृत्तिकाः ।
श्यामं शान्तिकरं प्रोक्तं रक्तं वश्यकरं भवेत् ॥
श्रीकरं पीतमित्याहुर्वैष्णवं श्वेतमुच्यते ।
अङ्गुष्ठः पुष्टिदः प्रोक्तो मध्यमाऽयुष्कृती भवेत् ॥
अनामिकाऽऽन्नदा नित्यं मुक्तिदा च प्रदेशिनी ।
एतैरङ्गुलिभेदैस्तु कारयेन्न नखैः स्पृशेत् ॥
दशाङ्गुलप्रमाणन्तु उत्तमोत्तममुच्यते ।
नवाङ्गुलं मध्यमं स्यादष्टाङ्गुलमतः परम् ॥
सप्तषट्पञ्चभिः पुण्ड्रं मध्यमं त्रिविधं भवेत् ।
ललाटे केशवं विद्यान्नारायणमथोदरे ॥
माधवं हृदि सन्न्यस्य गोविन्दं कण्ठकूबरे ।
उदरे दक्षिणे पार्श्वे विष्णुरित्यभिधीयते ॥
तत्पार्श्वे बाहुमध्ये च मधुसूदनमेव च ।
त्रिविक्रमं कण्ठदेशे वामकुक्षौ तु वामनम् ॥
श्रीधरं बाहुके वामे हृषीकेशन्तु कण्ठके ।
पृष्ठे तु पद्मनाभन्तु ककुदि दामोदरं स्मरेत् ॥
द्वादशैतानि नामानि वासुदेवेति मूर्धनि' ।

**श्रीचूर्णविधिः**

विष्णुधर्मोत्तरे — 'अभिषिक्तन्तु यच्चूर्णं विष्णुबेरे तु यो नरः ।
हारिद्रं धारयेन्नित्यं सोऽश्वमेधफलं लभेत्' ॥

पाद्मे — [illegible]देवाङ्गसंस्पृष्टैः निशाचूर्णैस्तु पद्मज! ।
यः करोत्यूर्ध्वपुण्ड्रं स विष्णुलोके महीयते ॥
[illegible]पुण्ड्रं द्विजस्योक्तं क्षत्रियस्यार्धचन्द्रकम् ।
[illegible] वर्तुलाकारं शूद्रस्यैव त्रिपुण्ड्रकम्' ॥

[illegible] — '[illegible]न्यूर्ध्वपुण्ड्राणि सान्तरालानि यो नरः ।
करोति विपुलं तत्र मन्दिरं मे करोति सः' ॥

अन्यत्र — 'आदाय वैष्णवक्षेत्रात् मृत्तिकां विमलां सिताम् ।
मूलमन्त्रेणाभिमन्त्र्य ऊर्ध्वपुण्ड्राणि कारयेत् ॥
ललाटादिषु चाङ्गेषु केशवादीन्यथाक्रमम् ।
त्र्यङ्गुलं द्व्यङ्गुलं वापि सान्तरालं प्रकल्पयेत् ॥
पार्श्वे चाङ्गुलमात्रन्तु ऊर्ध्वपुण्ड्रस्य लक्षणम् ।
हरेः पादाकृतिं रम्यं सुपार्श्वं सुमनोहरम् ॥
नासिकामूलमारभ्य ललाटान्तन्तु विन्यसेत् ।
वर्तुलं तिर्यगच्छिद्रं ह्रस्वं दीर्घं ततं तनुम् ॥
अशुभ्रं रूक्षमासिक्तं तथानङ्गुलिकल्पितम् ।
वक्रं विरूपं बद्धाग्रं छिन्नमूलं पदच्युतम् ।
विगन्धमपसङ्ख्यञ्च पुण्ड्रमाहुरनर्थकम्' ॥

शातातपः — 'त्रिपुण्ड्रं ब्राह्मणो विद्वान् लीलयापि न धारयेत् ।
त्रिपुण्ड्रधारणाद्विप्रः पतत्येव न संशयः ॥
विधिर्हर! द्विजातीनां नेतरेषां कदाचन ।
शिवार्चनं त्रिपुण्ड्रञ्च शूद्राणान्तु विधीयते ॥
ऊर्ध्वपुण्ड्रं ललाटे तु कुर्वीत चतुरङ्गुलम् ।
उदरे हृदि कण्ठे च दशाष्टचतुरङ्गुलान् ॥
दक्षिणोदरबाह्वंसे वामभागे तथैव च ।
आद्यवत्पृष्ठदेशे चमूर्ध्नि चैव त्रयोदश' ॥

एवमूर्ध्वपुण्ड्रं कृत्वा ।

**प्रातरित्यादि ।**

**स्मृतिः —** ‘ उत्तमा तु सनक्षत्रा मध्यमा लुप्ततारका ।
अधमा सूर्यसहिता प्रातस्सन्ध्या त्रिधा मता ’ ।।

**प्रातरित्यनेन** उदयात्परं षण्णाडिकापर्यन्तं प्रातःकालः गृह्यते । सन्निहित-कालत्वात् । किमर्थं प्रातरिति चेत् । उच्यते ।

**बोधायनः** — ‘ अथातस्सन्ध्योपासनविधिं व्याख्यास्यामः ’ इत्यारभ्य, ‘ रत्रिमुपतिष्ठते इमं मे वरुण ’ ‘तत्त्वायामी ’ ति द्वाभ्याम् । एवं प्रातः प्राङ्मुखस्तिष्ठन् मैत्राभ्यामहरुपतिष्ठते ‘ मित्रस्य चर्षणीधृतो ’ ‘ मित्रो जनान्यातयति प्रजानन्निति ’ द्वाभ्याम् । सुपूर्वामपि पूर्वामुपक्रम्योदित आदित्ये समाप्नुयात् । अनस्तमिते उपक्रम्य सुपश्चादपि पश्चिमाम् । सन्ध्ययोश्च सम्पत्तावहोरात्रयोश्च सन्तत्यै । ’ अपि चात्र प्रजापतिगीतौ श्लोकौ भवतः ।

‘ अनागतान्तु ये पूर्वामनतीतान्तु पश्चिमाम् ।
सन्ध्यां नोपासते विप्राः कथं ते ब्राह्मणाः स्मृताः ।।
सायं प्रातस्समां सन्ध्यां ये न विप्रा उपासते ।
कामं तान् धार्मिको राजा शूद्रकर्मसु योजयेत ।। ’ इति ।

तत्र सायमतिक्रमे रात्र्युपवासः प्रातरतिक्रमे अहरुपवासः । स्थानासन-फलमवाप्नोति (?) । अथाऽप्युदाहरन्ति —

‘ यदुपस्थकृतं पापं पद्भ्यां वा यत्कृतं भवेत् ।
बाहुभ्यां मनसावापि वाचा वा यत्कृतं भवेत् ।।
सायं सन्ध्यामुपस्थाय तस्मात्पापात्प्रमुच्यते ।

रात्र्या अपि च सन्धीयते वरुणश्चैनमनुगृह्णति । एवमेव प्रातरुपस्थाय रात्रिकृतात्पापात्प्रमुच्यते । मित्रश्चैनं गोपायति । आदित्यश्चैनं स्वर्गं लोकमुन्नयति य एवमेव अहरहरहोरात्रयोस्सन्धिषूपतिष्ठमानो ब्रह्मभूतो ब्रह्मविराजो ब्रह्मण-श्शास्त्रमनुवर्तमानो ब्रह्मलोकमभिजयति ब्रह्मलोकमभिजयती ’ ति स्मरणात् ।

**यजुषि:**— 'रक्षांसि ह वा पुरोऽनुवाके तपोऽग्रमतिष्ठन्त तान् प्रजापतिर्वरेणोपामन्त्रयत' इत्यारभ्य 'असावादित्यो ब्रह्मेति ब्रह्मैव सन् ब्रह्माप्येति य एवं वेद' इत्यन्तं श्रूयते ।

**षड्विंशब्राह्मणे च**:— 'ब्रह्मवादिनो वदन्ति कस्मात्सत्याद्ब्राह्मणस्सायमासीनस्सन्ध्यामुपास्ते कस्मात्प्रातस्तिष्ठन् का च सन्ध्या कश्च सन्ध्यायाः कालः किञ्च सन्ध्यायास्सन्ध्यात्वं। देवाश्च असुराश्चैषु लोकेष्वस्पर्धन्त, तेऽसुरा आदित्यमभिद्रवन्, स आदित्योऽबिभेत्, तस्य हृदयं कूर्मरूपेणातिष्ठत्, स प्रजापतिमुपाधावत्, स तस्य प्रजापतिरेतद्भेषजमपश्यत् ऋतञ्च सत्यञ्चोङ्कारञ्च त्रिपदाञ्च गायत्रीं,........ब्राह्मणो मुखमपश्यत् तस्मात् ब्राह्मणोऽहोरात्रयोस्संयोगे सन्ध्यामुपास्ते सज्योति राज्योतिषो दर्शनात्, सोऽस्य कालस्स्यात्सन्ध्यायाः तत्सन्ध्याया स्सन्ध्यात्वम्। यत्सायमासीनस्सन्ध्यामुपास्ते तया वितस्थानं जयति, अथ यदपः प्रयुङ्क्ते तानि विप्रुषो वज्री भवन्ति, ता विप्रुषो वज्रीभूत्वाऽसुरानपाघ्नन्ति, ततो देवा अभवन्, परासुराभवत्यात्मना परास्य भ्रातृव्यो भवति य एवं वेदे' ति ।

**स्मृत्यन्तरे**— 'त्रिंशत्कोट्यस्तु विख्याता मन्देहा नाम राक्षसाः ।
प्रहरन्ति सहस्रांशुमुदयन्तं दिने दिने ॥' इति

**श्रीविष्णुपुराणे**— 'उषा रात्रिस्समाख्यता उष्टिश्चाप्युदिते दिनम् ।
प्रोच्यते च? ततस्सन्ध्या उषाराञ्योर्यदन्तरम् ॥

सन्ध्याकाले तु सम्प्राप्ते रौद्रे परमदारुणे ।
मन्देहराक्षसास्सर्वे सूर्यमिच्छन्ति घातितुम् ॥

प्रजापतिकृतश्शापस्तेषां मैत्रेय! रक्षसाम् ।
अक्षरत्वं शरीराणां मरणञ्च दिनेदिने ॥

ततस्सूर्यस्य तैर्युद्धं भवत्यत्यन्तदारुणम् ।
ततो द्विजोत्तमास्तोयमुत्क्षिपन्ति महामुने ॥

ओङ्कारब्रह्मसम्पृक्तं गायत्र्या चाभिमन्त्रितम् ।
तेन दह्यन्ति ते पापान् वज्रीभूतेन वारिणा ॥

अग्निहोत्रेषु हूयन्ते या मन्त्रैः प्रथमाहुतिः ।
सूर्यो ज्योतिस्सहस्रांशुस्तया दीप्यति भास्करः ॥

ओङ्कारो भगवान्विष्णुस्त्रिधामा वचसां पतिः ।
तदुच्चारणतस्ते तु विनाशं यान्ति राक्षसाः ॥

वैष्णवोंऽशः परस्सूर्यो योऽन्तर्ज्योतिर्निसंशयः ।
अनिधाय तमोङ्कारं तस्य तत्प्रेरकं परम् ॥

तेन तत्प्रेरितं ज्योतिरोङ्कारेणाथ दीप्तिमत् ।
दहत्यशेषरक्षांसि मन्देहाख्यानि यानि वै ॥

तस्मान्नोल्लङ्घनं कार्यं सन्ध्योपासनकर्मणः ।
स हन्ति सूर्यं सन्ध्याया नोपास्तिं कुरुते हि यः ॥

ततः प्रयाति भगवान् ब्राह्मणैरभिरक्षितः ।
वालखिल्यादिभिश्चैव प्रभुर्वैखानसैरपि ॥' इति

अशक्यत्वात्सूर्यहिंसायाः सूर्यहिंसा नाम ऐहिकामुष्मिकहानिर्भवतीत्यभिप्रायेण सन्ध्योपासनादिकं प्रतिपादितम् तत्फलञ्च दर्शितम् । अत एव सूत्रे सूर्यश्चेत्याचमनमापोहिष्ठादिभिः प्रोक्षणं गायत्र्या अर्घ्यप्रदानं प्रदक्षिणं च साकल्येन प्रतिपादितम् । सन्ध्यालक्षणं प्रकारान्तरेणोक्तं सङ्ग्रहे —

'त्रयाणाञ्चैव देवानां ब्रह्मादीनाञ्च सङ्गमः ।
सन्धिस्सर्वसुराणान्तु सन्ध्या तेन ह्युदाहृते'ति ॥

नन्वाप ऊर्ध्वं विक्षिपन्तीति श्रूयमाणत्वात् गायत्र्या अपोऽभिसन्ध्यादित्याभिमुखं विक्षिप्येति सूत्रे उक्तत्वाच्च सकृदेवार्घ्यप्रदानस्य कर्तव्यत्वं प्रतीयत इति चेत् — सत्यम् । त्रिस्सन्ध्ययोः क्षिपेदिति पितामहस्मरणात् ।

'एकं शस्त्रास्त्रनाशाय एकं वाहननाशने ।
असुराणां वधायैकं दद्यादर्घ्यत्रयं शुचिः ॥

सम्यग्ब्रह्मास्त्रवद्ध्यात्वा गायत्रीमुच्चरेत् द्विजः ।
अस्त्रनाशे ब्रह्मदण्डं वाह्ननाशे (?) ब्रह्मशीर्षकम् ॥
असुरनाशे ब्रह्मास्त्रं ज्ञात्वा कुर्यात् समाहितः ।
कोटिसूर्यप्रतीकाशं कालानलसमप्रभम् ॥
जृम्भणञ्चाष्टवक्त्राङ्गं ब्रह्मदण्डमुदीरितम् ।
दंष्ट्राकरालमत्युग्रं कोटिसूर्यसमप्रभम् ॥
ग्रन्थिलं पिङ्गकेशाग्रमेतद्ब्रह्मशिरो मतम् ।
सहस्रार्कसमायुक्तं विद्युत्पिञ्जोपमाकृतिम् ॥
दुत्तूरकुसुमाकारं कोटिसूर्यसमप्रभम् ।
सहस्रधारमत्युग्रं सर्वमन्त्रास्त्रनाशनम् ॥
प्रस्तारप्रतिमं मुष्टिग्राहं ब्रह्मास्त्रमीरितम् ॥' इति च स्मरणात्

अर्घ्यत्रयमपि कर्तव्यम् ।

**भारद्वाजः**— 'आपो हिष्ठादिभिर्मन्त्रैस्त्रिभिस्सम्मार्जयेच्छिरः ।
सिन्धुद्वीपऋषिः छन्दो गायत्र्यापो हि देवता ॥
मार्जने विनियोगः स्यात् सूर्यश्चेति जलं पिबेत् ।
अस्यानुवाकस्याग्निऋषिः छन्दो गायत्रमंशुमान् ॥
देवता विनियोगोऽपां पानेऽथ समुपस्पृशेत् ।

**अत्र क्रमः**— आपोहिष्ठादिभिः पादं शिरस्यष्टौ च विप्रुषः ।
यस्य क्षयायेत्यधस्तात् क्षिप्त्वाऽद्भिः परिषेचयेत् ॥

आपोहिष्ठेति मन्त्रस्य सिन्धुद्वीप ऋषिः, गायत्री छन्दः, आपो देवता, मार्जने विनियोगः। एवं मार्जयित्वा सूर्यश्चेत्यनुवाकस्य अग्निः ऋषिः, गायत्री छन्दः, सूर्यो देवता, अभ्यन्तरशुद्ध्यर्थमुदकप्राशने विनियोगः । अग्निश्चेतिमन्त्रस्य सूर्य ऋषि अनुष्टुप्छन्दः अग्निर्देवता इति ।

**पितामहः**— 'अनेन चानुवाकेन अपः पीत्वा समाहितः ।
आत्मानं प्रोक्षयेत् पश्चात् सपवित्रकरो द्विजः ॥

भारद्वाजः — सायमग्निश्च मेत्युक्त्वा प्रातस्सूर्येत्यपः पिबेत् ।
आपः पुनन्तु मध्याह्ने ततश्चाचमनं चरेत् ॥

इत्येवमाचमनं कृत्वा दधिक्राव्णो अकारिषमिति मार्जनं कुर्यात् ।

ब्रह्मकैवर्ते: — 'ऋगन्ते मार्जनं कुर्यात्पादान्ते वा समाहितः ।
तृचस्यान्तेऽथवा कुर्याच्छिष्टानां व्रतमीदृशम् ॥

श्रुतिः — 'आपोहिष्ठामयो भुव इत्यद्भिर्मार्जयन्ते । आपो वै सर्वा देवताः, देवताभिरेवात्मानं पवयन्ते' इति । आपोहिष्ठादिभिः इत्यत्र आदिशब्देन सुरभिमत्या ग्रहणम् । श्रुतिः—'ये यज्ञेऽपूतं वदन्ति । दधिक्राव्णो अकारिषमिति सुरभिमतीमृचं वदन्ति । प्राणा वै सुरभयः, प्राणानेवात्मन् दधते । नैभ्यः प्राणा अपक्रामन्ति' इति । सुरभिमत्याः वामदेवः ऋषिः, अनुष्टुप् छन्दः, सुरभिमती देवता, यद्वा दधिक्रावा । मार्जने विनियोगः । एवं मार्जयित्वाऽर्घ्यप्रदानं कुर्यात् ।

पितामहः — 'प्रदक्षिणं परिषिच्याऽथ तवारभेच्छ्रुतिचोदितम् ।
उभाभ्यां तोयमादाय हस्ताभ्यां सुसमाहितः ॥

गायत्र्या मन्त्रिताश्चापः प्रणवव्याहृतिपूर्वया ।
रवेरभिमुखस्तिष्ठन् ऊर्ध्वं त्रिस्सन्ध्ययोः क्षिपेत् ॥

अर्घ्यप्रदानमन्त्रस्य गायत्र्याः विश्वामित्र ऋषिः । गायत्री छन्दः, सूर्यो देवता । निं बीजं यं शक्तिः नः प्राणः यात् कीलकं अर्घ्यप्रदाने विनियोगः । तत्सवितुः ब्रह्मात्मने हृदयाय नमः । वरेण्यं विष्ण्वात्मने शिरसे स्वाहा । भर्गो देवस्य रुद्रात्मने शिखायै वौषट् । धीमहि सत्यात्मने कवचाय हुम् । धियो यो नः ज्ञानात्मने नेत्रत्रयाय वौषट् । प्रचोदयात् परब्रह्मात्मने अस्त्राय फट् ।

वेदसारं परं ज्योतिर्मूलभूतं परात्परम् ।
चिन्तयेत् परमात्मानमप ऊर्ध्वं विनिक्षिपेत् ॥

'द्रुपदादिवेन्मुमुचानः । स्विन्नः स्नात्वी मलादिव । पूतं पवित्रेणेवाज्यम् । आपश्शुन्धन्तु मैनसः' । इति अञ्जलिना जलमादाय आघ्राय वामभागे क्षिपेत् ॥

'द्वौ पाणी सम्पुटीकृत्य पूरयेदुदकाञ्जलिम् ।
गोशृङ्गमात्रमुद्धृत्य जलमध्ये विनिक्षिपेत् ॥
गोशृङ्गं तालमात्रं स्यादिति वेदविदो विदुः ॥

**देवलः** — 'अर्घ्यप्रदाने विप्राणामीषन्नम्रशरीरिणाम् ।
चूचुकाग्रसमौ हस्तौ गोशृङ्गमिति कीर्त्यते ॥'

**गोभिलः** — 'गोशृङ्गमात्रमुद्धृत्य ईषन्नम्रस्थितानन: ।
स्तनाग्रोच्चसमौ हस्तौ गोशृङ्गमिति तद्विदुः ॥

**शङ्खः** — 'जलमादाय पाणिभ्यां स्तनान्तरसमोन्नतम् ।
उद्धृतं मन्त्रवद्विप्रैः गोशृङ्गं तदुदाहृतम्' ॥

एवं त्रिरर्घ्यप्रदानं कृत्वा उपसंहारञ्च कुर्यात् । अयं प्रकारः । अस्त्रोपसंहारमन्त्रस्य ब्रह्मगायत्र्याः सविता भगवान् ऋषिः, गायत्री छन्दः, ब्रह्मा देवता अस्त्रोपसंहारे विनियोगः । अघोरास्त्राय सशराय शार्ङ्गाय सुदर्शनाय (सदाशिवाय) हृदयाय नमः । एवं षडङ्गन्यासं कुर्यात् ।

'सोऽहमर्कः अहं ज्योतिरर्कज्योतिरहं शिवः ।
आत्मज्योतिरहं शुक्रस्सर्वज्योतिरसौ महोम् ॥

आवायव्या वायव्ययवायव्या वा और्वोवायया वा (?) । 'हिरण्यगर्भस्समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम' । 'उदर्कोऽसि पाप्मानं मे विद्धि' । मध्याह्ने मध्यार्कोऽसि । सायं वृद्धार्कोऽसि । योनिमुद्रादर्शनन्तूपायनः ।

**पितामहः** — 'पाणिना जलमादाय सकृत् कुर्यात् प्रदक्षिणम् ।
आदित्यादिग्रहांस्तत्र तर्पयेत समाहितः ॥

**स एव** — 'ततः प्रदक्षिणीकृत्य त्वद्भिः सम्प्रोक्षिते शुचौ ।
देशे च दर्भसङ्क्लृप्ते वाग्यतः प्राङ्मुखः स्थितः ॥
दर्भान् धारयमणस्सन्नात्मनो ध्यानमारभेत् ।

अत्र भगवच्छास्त्रे मरीच्यादिभिरुक्तमार्गेण केशवादितर्पणमादित्यादितर्पणञ्च कृत्वा, आचम्य शुचौ देशे उपविश्य,

'अपक्रामन्तु भूतानि पिशाचाः प्रेतगुह्यकाः ।
ये चात्र निवसन्त्येते देवता भुवि सन्ततम् ॥

अपसर्पन्तु भूतानि पृथिव्यन्तरवासिनः ।
अस्माकमविरोधेन ब्रह्मकर्म समारभे ॥' इति भूशुद्धिं कृत्वा ।

आसनमन्त्रस्य पृथिव्याः मेरुपृष्ठऋषिः । सुतलं छन्दः । कूर्मो देवता आसने विनियोगः ।

'पृथ्वि! त्वया धृता लोका देवि त्वं विष्णुना धृता ।
त्वञ्च धारय मां देवि पवित्रं कुरु चासनम् ॥'

अनन्तासनायनमः विमलासनायनमः कूर्मासनाय नमः । इदमासनम् । इत्युच्चरेत् ।

'नद्यां तीर्थे ह्रदे वापि भाजने कांस्यसम्भवे ।
औदुम्बरे वा सौवर्णे राजते दारुसम्भवे ॥

कृत्वा तु वामहस्ते वा सन्ध्योपास्तिं समाचरेत् ।

अथ प्राणायामं त्रिवारमेकवारं वा कुर्यात् ।

सङ्ग्रहे — 'देवार्चने जपे होमे सन्ध्ययोः श्राद्धकर्मणि ।
स्नाने दाने तथा ध्याने प्राणायामास्त्रयस्त्रयः ॥

आदावन्ते च गायत्र्याः प्राणायामास्त्रयस्त्रयः ।
सन्ध्यायामर्घ्यदाने च प्राणायामैक उच्यते ॥

अङ्गुष्ठानामिकाभ्यान्तु तथैव च कनिष्ठया ।
प्राणायामस्तु कर्तव्यो मध्यमां तर्जनीं विना ॥
तर्जनीन्तु सकृत् स्पृष्ट्वा जपन् शूद्रसमो भवेत् ।

मनुः — 'सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।
त्रिः पठेदायतप्राणः प्राणायामस्स उच्यते ॥'

बृहस्पतिः — 　‘ बद्ध्वा नासां नियम्यासून् स्मृत्वा चर्ष्यादिकांस्तथा ।
सन्निमीलितदृङ्मौनी प्राणायामं समभ्यसेत् ॥

योगयाज्ञवल्क्यः — ‘ य एतां व्याहृतीस्सप्त संस्मरेत्प्राणसंयमे ।
उपासितं भवेत्तेन विश्वं भुवनसप्तकम् ॥ ’

व्यासः — 　‘ षोडशाक्षरकं ब्रह्म गायत्र्यास्तु शिरः स्मृतम् ।
सकृदावर्तयन् विप्रस्संसारादपि मुच्यते ॥ ’

संवर्तः — 　‘ वाचिकं मानसं पापं कायेनैव तु यत्कृतम् ।
तत्सर्वं नश्यति क्षिप्रं प्राणायामत्रये कृते ॥ ’

पापक्षयप्रकारः भगवच्छास्त्रे भृग्वादिभिरुक्तः ।

निरोधाज्जायते वायुर्वायोरग्निश्च जायते ।
तापेनाऽपोऽधिजायन्ते ततोऽन्तश्शुद्ध्यते त्रिभिः ॥

मनुरपि — 　‘ दह्यन्ते ध्मायमानानां धातूनां हि यथा मलाः ।
तथेन्द्रियाणां दह्यन्ते दोषाः प्राणस्य निग्रहात् ॥

व्यासः — 　‘ स्नानमाचमनं होमं भोजनं देवतार्चनम् ।
प्रौढपादो न कुर्वीत स्वाध्यायं पितृतर्पणम् ॥

आसनारूढपादो वा जान्वोर्वा जङ्घयोस्तथा ।
कृतावसक्थिको यस्तु प्रौढपादस्स उच्यते ॥ ’

कृतावसक्थिकः — वस्त्रादिना कृतपादबन्ध इत्यर्थः ।

‘ तृणासने यशोहानिर्दौर्भाग्यं दारुकासने ।
वंशासने दरिद्रः स्यात्पल्लवे चित्तविभ्रमः ॥

धरण्यां मृत्युमाप्नोति पाषाणे व्याधिसम्भवः ।
कृष्णाजिने मन्त्रसिद्धिः मोक्षस्स्याद्व्याघ्रचर्मणि ॥

कम्बले सर्वसिद्धिस्स्यादासनस्य शुभाशुभम् ।
गृहे जयं समं विद्याद्गोष्ठे दशगुणं भवेद् ॥

वटमूले शतं विद्यान्नदीतीरे सहस्रकम् ।
अश्वत्थमूले त्वयुतमनन्तं विष्णुसन्निधौ ॥'

पराशरः— 'अग्निरापश्च वेदाश्च चन्द्रसूर्यानिलास्तथा ।
सर्वेऽत्र खलु विप्राणां कर्णे तिष्ठन्ति दक्षिणे ॥

गङ्गाद्या दक्षिणे श्रोत्रे नासिकायां हुताशनः ।
उभावपि तु स्प्रष्टव्यौ तत्क्षाणादेव पापनुत् ॥'

नारदः— 'रेचकः पूरकश्चैव कुम्भकश्शून्यकस्तथा ।
एवं चतुर्विधः प्रोक्तः प्राणायामो मनीषिभिः ॥'

अन्यत्र— 'प्राणो वायुश्शरीरस्थ आयामस्तस्य निग्रहः ।
प्राणायाम इति प्रोक्तो द्विविधः प्रोच्यते हि सः ॥

अगर्भश्च सगर्भश्च द्वितीयस्तु तयोर्वरः ।
मन्त्रध्यानसमायुक्तः सगर्भः परिकीर्तितः ॥

निरोधः केवलं वायोरगर्भः प्राणसंयमः ॥'

बोधायनः— 'प्राणायामो द्विधा प्रोक्तः सगर्भोऽगर्भ एव च ।
स च ध्यानं विनाऽगर्भस्सगर्भस्तत्समन्वितः ॥

सगर्भो भगवान् ज्ञेयः प्राणायमशताधिकः ।
सगर्भं धारयेत्तस्मादिन्द्रियाणां जयात्मकम् ॥

समस्तानीन्द्रियाण्येव प्राणवायोः स्थितानि वै ।
समस्तेन्द्रियवृत्तिश्च प्राणो वायुः प्रकीर्तितः ।
तज्जयादिन्द्रियाण्येव निर्जितानि भवन्ति हि ॥

सम्यगभ्यस्यतो नित्यं समाधिं प्र यत्यसौ ।
तस्माद्द्विजेन्द्र परमः प्राणायामः प्रकीर्तितः ॥

मुञ्चेत्पिङ्गलया वायुमिडया पूरयेत्पुनः ।
स्वदेहे पूरितं वायुं निगृह्य न विमुञ्चति ॥

सम्पूर्णकुम्भवत्तिष्ठेत् कुम्भकस्स हि विश्रुतः ।
न गृह्णाति न त्यजति वायुमेतं, बहिःस्थितम् ॥
ज्ञेयं तच्छून्यकं नाम प्राणायामे यथास्थितम् ।

प्रणवेन षोडशमात्रया रेचयेत् द्वात्रिंशन्मात्रया पूरयेत् । चतुष्षष्ट्या-कुम्भकम् ॥

प्रणवस्य ब्रह्मा ऋषिः, गायत्री छन्दः, परमात्मा देवता । अं ब्रह्मात्मने हृदयाय नमः । उं विष्ण्वात्मने शिरसे स्वाहा । मं रुद्रात्मने शिखायै वौषट् । अं ब्रह्मात्मने कवचाय हुम् । उं विष्ण्वात्मने नेत्रत्रयाय वौषट् । मं रुद्रात्मने अस्त्राय फट् । प्रणवध्यानम् —

'विष्णुं भास्वत्किरीटाङ्गदवलयगलाकल्पहारोदरांघ्रि-
श्रोणीभूषासुवक्षोमणिमकरमहाकुण्डलैर्मण्डिताङ्गम् ।
हस्तोद्यच्छङ्खचक्राम्बुजगदममलं पीतकौशेयमाशा-
विद्योतद्भासमुद्यद्दिनकरसदृशं पद्मसंस्थं नमामि ॥' इति

पितामहः — 'जपकाले त्रयी देवो होमकाले हुताशनः ।
ध्यानकाले परं ब्रह्म विश्वेदेवास्ततोऽन्यथा ॥'

अथ सप्तव्याहृतीनाम् —

'अत्रिर्भृगुश्च कुत्सश्च वसिष्ठो गौतमस्तथा ।
कश्यपश्चाङ्गिराश्चैते ऋषयस्स्युर्यथाक्रमम् ॥

गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च ।
त्रिष्टुप् च जगती चैव छन्दांस्येतानि सप्त वै ॥

अग्निर्वायुस्तथाऽऽर्कश्च वागीशो वरुणस्तथा ।
इन्द्रश्च विश्वेदेवाश्च देवतास्समुदाहृताः ॥'

प्राणायामे विनियोगः ।

'स्वस्वोक्तवर्णतनवो रूपयौवनसंयुताः ।
क्षौमवस्त्रपरीधानास्सर्वाभरणभूषिताः ॥

दिव्यचन्दनलिप्ताङ्गा दिव्यमाल्यैरलङ्कृताः ।
सितोपवीतहृदयास्सपवित्रचतुष्कराः ॥

उन्निद्रवदनाम्भोजप्रभामण्डलमण्डिताः ।
जटाकलापपूर्णेन्दुप्रभापूरितदिङ्मुखाः ॥

अभयाक्षस्रगप्पात्रवरहस्तसरोरुहाः ।
एवं होमे जपारम्भे ध्येया व्याहृतयो द्विजैः ॥'

गायत्र्याः विश्वामित्रऋषिः गायत्री च्छन्दः सविता देवता ।

ब्राह्मी स्वाहा वाहिनी च तथा नित्या विलासिनी ।
प्रभावती च लोला च सप्तव्याहृतिशक्तयः ॥

श्वेतं श्यामञ्च पीतञ्च पिशङ्गं नीललोहितम् ।
नीलं कनकवर्णञ्च वर्णान्येतान्यनुक्रमात् ॥

प्रणवस्यैतयोर्वर्णः शुद्धस्फटिकसन्निभः ।
तत्त्वमेषां त्रयाणान्तु सर्वतत्त्वमिति स्मृतः ॥

इत्येवमुक्त्वा नत्वा च प्राणायामं समाचरेत् ।
विश्वामित्रस्तु गायत्र्या ऋषिश्छन्दस्स्वयं स्मृतम् ॥

देवता सविता प्रोक्ता ब्रह्मा तु शिरसो ऋषिः ।
अनुष्टुप् चैव छन्दः स्यात् परमात्मा हि देवता ॥
प्राणायामे विनियोगः .... .... .... ।

भारद्वाजः — 'समाहितमनाः प्राणानायम्यैवं तदाकृतिम् ।
जपित्वैवं दशकृत्वः प्राग्गायत्रीं ततो जपेत् ॥
जपक्रमोऽयमेव स्यात् सर्वपापप्रणाशनः ।

स्मृत्यन्तरे — सप्तव्याहृतिसंयुक्तां गायत्रीं शिरसा सह ।
दशवारं जपित्वैव गायत्रीन्तु ततो जपेत् ॥

अत्र व्याहृतिन्यासः ।

**ब्रह्मा**— 'पादयोर्जङ्घयोर्जान्वोस्तथैव जठरेऽपि च ।
कण्ठे मुखे तथा मूर्ध्नि क्रमेण व्याहृतीर्न्यसेत् ॥
एकाक्षरं परं ब्रह्म प्राणायामः परन्तपः ।
सावित्र्यास्तु परं नास्ति मौनात्सत्यं विशिष्यते ॥'

**भारद्वाजः**— 'आयात्वित्यनुवाकेन हृदये वाऽर्कमण्डले ।
देवमावाह्य गायत्रीं ततो ध्यायेद्द्विजोत्तमः ॥

**पितामहः**— 'आयात्वित्यनुवाकस्य वामेदेव ऋषिः स्मृतः ।
अनुष्टुप् जगती छन्दो गायत्री देवता स्मृता ॥
अनेन चानुवाकेन त्वावाह्य च यथाविधि ।
गायत्रीं विमलां देवीं हृदये सूर्यमण्डले ॥
ध्यानयोगेन सम्पश्येत् वर्णरूपसमन्विताम् ॥'

**श्रुतिः**— 'देवासुरास्संयत्ता आसन् तेषां गायत्र्योजो बलमिन्द्रियं वीर्यं प्रजां पशून्त्संगृह्यादायापक्रम्यातिष्ठत्ते देवा अमन्यन्त यतरान् वा इयमुपावर्त्स्यति त इदं भविष्यन्तीति तां व्यह्वयन्त विश्वकर्मन्निति देवा दाभीत्यसुरास्सानान्यतरांश्च नोपावर्तत ते देवा एतद्यजुरपश्यन्नोजोऽसि सहोऽसि बलमसि भ्राजोऽसि देवानां धाम नामासि विश्वमसि विश्वायुस्सर्वमसि । सर्वायुरभिभूरिति वा व देवा असुराणामोजो बलमिन्द्रियं वीर्यं प्रजां पशूनवृञ्जते' त्यादि ॥

'विश्वामित्र ऋषिश्छन्दो गायत्री देवता रविः ।
सावित्र्यास्तु त्रयः पादा चतुष्पादाः षडक्षराः ॥
जपे तु त्रिपदा प्रोक्ता ह्यर्चने तु चतुष्पदा ।
प्रथमस्तु करन्यासो देहन्यासोऽप्यनन्तरम् ॥
अङ्गन्यासस्ततः प्रोक्त एतन्न्यासत्रयं क्रमात् ।
हृन्मस्तकशिखागात्रनेत्रप्रहरणानि षट् ॥
अङ्गान्यमूनि चोक्तानि वच्मि षट्पल्लवानि च '

चन्द्रिकायाम् — अङ्गुष्ठे चैव गोविन्दं तर्जन्यान्तु महीधरम् ।
मध्यमायां हृषीकेशमनामिक्यां त्रिविक्रमम् ॥
कनिष्ठायां न्यसेद्विष्णुं करमध्ये तु माधवम् ।
यत्कृतञ्च हुतं दत्तं जप्तमिष्टं तथैव च ॥
हस्तन्यासप्रभावेन सर्वं भवति चाक्षयम् ।

व्यासः — 'भूरङ्गुष्ठद्वये न्यस्य भुवस्तर्जनिकाद्वयोः ।
ज्येष्ठाङ्गुलिद्वयोर्धीमान् स्वः पदं विनियोजयेत् ॥
अनामिकद्वयोर्धीमान् न्यसेत्तत्पदमग्रतः ।
कनिष्ठिकाद्वयोर्भर्गः पाण्योर्मध्ये धियः पदम् ॥
भूः पदं हृदि विन्यस्य भुवः शिरसि विन्यसेत् ।
शिखायाः स्वः पदं न्यस्य कवचे तत्पदं न्यसेत् ॥
अक्ष्णोर्भर्गपदं न्यस्य न्यसेद्दिक्षु धियः पदम् ।'
'हृदि तत्सवितुर्न्यस्य न्यसेन्मूर्ध्नि वरेण्यकम् ॥
भर्गो देवस्येति खण्डं शिखायान्तु ततो न्यसेत् ।
धीमहीति न्यसेद्वर्मे धियो योनश्च नेत्रयोः ॥
प्रचोदयात्तु चास्त्रार्थे पदन्तु विनियोजयेत्' ।

अथ ध्यानम्

'मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणैः
युक्तामिन्दुनिबद्धरत्नमकुटां तत्त्वार्थवर्णात्मिकाम्
गायत्रीं वरदाभयाङ्कुशकशाः शुभ्रं कपालं गदां (गुणं)
शङ्खं चक्रमथारविन्दयुगलं हस्तैर्वहन्तीं भजे' ॥

अथ सन्ध्याभेदेन रूपभेदमाह ।

'प्रातः काले तु गायत्री सायङ्काले सरस्वती ।
मध्याह्ने च तु सावित्री उपास्या रूपभेदतः ॥

गायत्री स्याद्दवेदृक्ता सावित्री शुक्लवर्णिका ।
सरस्वती तथा कृष्णा उपास्या रूपभेदतः ॥

गायत्री ब्रह्मरूपा तु सावित्री रुद्ररूपिणी ।
सरस्वती विष्णुरूपा उपास्या रूपभेदतः ॥

**विश्वामित्रः**— 'आदित्यमण्डलान्तस्स्थं परब्रह्माधिदैवतम् ।
छन्दो निचित्स्याद्गायत्री मया दृष्टा सनातनी ॥

सावित्रीमेतां पितामहः सवितृदेवत्यामाह, ब्रह्मदेवत्या मगस्त्य बोधायनौ। एतेषां सवित्रादिशब्दानां निखिलनिगमान्तसमाम्नातस्य परस्यैकस्यैव वाचकत्वात् न विरोधः ।

**तथाहि श्रुतिः**— 'एकं सद्विप्रा बहुधा वदन्ति' 'तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु-चन्द्रमाः। तदेव शुक्रममृतं तद्ब्रह्म तदापः स प्रजापतिः । तदेवर्तं तदु सत्य-माहुस्तदेव ब्रह्म परमं कवीना' मित्यादिका ।

**मनुः**— 'एनमेके वदन्त्यग्निं मरुतोऽन्ये प्रजापतिम् ।
इन्द्रमेके परे प्राणानपरे ब्रह्म शाश्वतम् ॥

विष्णुर्ब्रह्मा च रुद्रश्च विष्णुर्देवो दिवाकरः ।
स एव चन्द्रश्चेन्द्राग्नी सूर्यो वैश्रवणो यमः ॥

वदन्ति नामभिश्चान्यैरनामानमरूपिणम् ।

अथ ध्यानम् । श्रीवैखानसभगवच्छास्त्रे मरीचिः —

अथातस्सावित्रीकल्पं वक्ष्ये । चतुर्विंशत्यक्षरा गायत्रीतिति श्रुतिः । सा गायत्री सवितृदेवत्या सावित्रीत्युच्यते । तस्या ऋषिच्छन्दोऽधिदैवतं पुरा चोक्तम्। अष्टाक्षरा त्रिपदा, चतुष्पदाषड्क्षरा, जपे त्रिपदा, अर्चने चतुष्पदा । अग्निवर्णा षट्कुक्षिः पञ्चशीर्षा शुक्लमुखी कमलेक्षणा। ऋग्वेदः प्रथमः पादः, यजुर्वेदो द्वितीयः पादः, सामवेदस्तृतीयः पादः, पृथिवी चरणम्, ऊरू पर्वतः अम्बरोऽस्थीनि, पूर्वः प्रथमः कुक्षिः, दक्षिणो द्वितीयः, पश्चिमस्तृतीयः, चतुर्थ उत्तरः, पञ्चम ऊर्ध्वः, अधरष्षष्ठः, इतिहासपुराणानि (दिव्यागमनिगमा दिव्यरूपं) नाभिः, जगत् रूपम्,

उदरान्तरमाकाशः, श्छन्दस्स्तनौ, धर्मशास्त्रम् हृत् न्यायो बाहू गिरिराट् ग्रीवा, प्रथमं शिरश्शब्दशास्त्रं, द्वितीयं शीक्षा तृतीयं कल्पः, चतुर्थं निरुक्तं, पञ्चमं ज्यौतिषम्। अनलं मुखं, वदनमिन्दुमण्डलं, श्वसनो वायुः, अलका अभ्रपङ्क्तिः, सहस्रकिरणो मुक्ताहारः, सोमो हारः, ताराः कुसुमानि, ग्रहाः रत्नविभूषणानि, ब्रह्मा मूर्धा शिखा रुद्रः, विष्णुरात्मा, वेदान्ताः विमलं मनः, वेदा प्राणाः, मीमांसा चित्तमित्येवं ज्ञात्वा त्रिसन्धिषु त्रिविधं ध्यानमाचरेत्। पूर्वां सन्ध्यां कौमारीं रक्तवर्णां हंसवाहनां अक्षसूत्रयज्ञोपवीतकमण्डलुधारिणीं ब्रह्मदेवत्यां सावित्रीं नाम, सावित्र्या वासस्थानं भूमिः, साङ्ख्यायनगोत्रं, अग्निर्गार्हपत्यम्, उपनयने, विनियोगः, सूत्रं कात्यायनमित्येवं ध्यायेत्।

... मध्याह्नसन्ध्यायाम् यौवनवतीं रुद्राक्षार्धचन्द्रत्रिशूलधारिणीं - श्वेतवर्णां वृषभवाहनां रुद्रदेवत्यां गायत्रीं नाम। गायत्र्या वासमन्तरिक्षम्, अन्यानि पूर्ववत्। सायं सन्ध्यायाम् सलक्षणां वृद्धां श्यामवर्णां सर्वाभरणभूषितां शङ्खचक्रधारिणीं गरुडवाहनां विष्णुदेवत्यां सरस्वतीं नाम। सरस्वत्या वासः स्वर्गम्, अन्यानि पूर्ववत्। एवं ध्यात्वा जपमाचरेत्'। इति

तथा प्रत्यक्षरमृष्यादिकं तत्रैवोक्तम्। 'अथातोऽक्षराणां ध्यानं वक्ष्ये। सर्वेषां वर्णानां त्रिसन्धिषु पूर्ववत् ब्रह्मविष्णुरुद्ररूपम्। वर्णं ऋषिच्छन्दो देवताः फलविशेषञ्च पृथग्वक्ष्ये तत्कारं पीताभं वसिष्ठऋषिः छन्दोगायत्रं ब्रह्मदेवत्यं महापातकनाशनम्, सकारं श्यामाभं भारद्वाजऋषिः उष्णिक् छन्दः, प्रजापतिर्देवता उपपातकनाशनम्, विकारं पिङ्गलाभं गौतमऋषिः अनुष्टुप् छन्दः सोमो देवता महापातकनाशनम्। तुकारं नीलाभं भृगुऋषिः बृहती छन्दः ईश्वरो देवता दुष्टपापग्रहरोगाद्युपद्रवनाशनम्, वकारं वह्निवर्णम् शण्डिलऋषिः पङ्क्तिश्छन्दः सूर्यो देवता भ्रूणहत्यादिविमोचनम्, रेकारं ज्वालारूपं लोहितऋषिः त्रिष्टुप् छन्दः बृहस्पतिर्देवता अगम्यागमनपापविनाशनम्, णिकारं विद्युन्निभं गर्गऋषिः जगतीछन्दः इन्द्रो देवता अभक्ष्यभक्षणपापविनाशनम्, यकारं हेमाभं शातातपऋषिः जगतीछन्दः विष्णुर्देवता ब्रह्महत्यादिसर्वपापविनाशनम्, भकारं कृष्णवर्णं सनत्कुमारः ऋषिः पदपंक्तिछन्दः अर्यमा देवता पुरुषहत्यादिपापविनाशनम्, गोकारं रक्ताभं कश्यपऋषिः विष्टारपंक्ति-

छन्दः सावित्री देवता गोहत्यादिपापविनाशनम्, देकारं श्यामाभं अत्रिऋषिः विराट् पङ्क्तिश्छन्दः त्वष्टा देवता स्त्रीहत्यादिपापविमोचनम्, वकारं श्वेताभं भार्गवऋषिः विराट्छन्दः पूषादेवता गुरुहत्यादिपापविमोचनम्, स्यकारं काञ्चनाभं पराशर ऋषिः अक्षरपङ्क्तिछन्दः महेन्द्रो देवता कूटकृतपापविनाशनम्, धीकारं काञ्चनाभं पौण्डरीकऋषिः कात्यायनीछन्दः वायुर्देवता अभक्ष्यभक्षणदोषविनाशनम्, मकारं पद्मरागनिभं क्रतुऋषिः ज्योतिष्मतीछन्दः वामदेवो देवता जन्मान्तरपापविनाशनम्, हिकारं श्वेताभं दक्षऋषिः त्रिष्टुप् छन्दः मित्रावरुणौ देवता सर्वपापविनाशनम्, धिकारं पुण्डरीकनिभं प्रजापतिऋषिः सर्वं छन्दः सोमो देवता सर्वदोषविनाशनम्, योकारं कपिलाभं आङ्गिरसऋषिः महाछन्दः विश्वेदेवा देवताः प्राणिहिंसापापविनाशनम्, द्वितीययोकारं अञ्जनाभं कात्यायनऋषिः महाछन्दः यमो देवता दुष्टग्रहनाशनम्, नकारं श्यामाभं मुद्गलऋषिः भूश्छन्दः विष्णुर्देवता भ्रूणहत्यादिपापविनाशनम्, प्रकारं शुद्धस्फटिकसङ्काशं भुवश्छन्दः विष्णुर्देवता विष्णुलोकप्रदम्, चकारं कुङ्कुमाभं रोमशऋषिः सुवश्छन्दः सर्वेदेवा देवताः ब्रह्मलोकप्रदम्, दकारं शुक्लवर्णं भूर्भुवस्सुवश्छन्दः विष्णुर्देवता विष्णुलोकप्रदम्, यात्कारं हेमाभं विश्वामित्रऋषिः देवीगायत्री छन्दः ब्रह्मा देवता सर्वसिद्धिप्रदमिति । एवं ध्यात्वा ध्यानयुक्तः ओं भूर्भुवस्सुवस्तत्सवितुरिति सावित्रीं दशशताष्टकं त्रिसन्धिषु मनसा जपेत् । सावित्र्यध्ययनात् आयुः श्रीर्ब्रह्मवर्चसं प्रजासमृद्धिर्धनधान्यसमृद्धिश्च भवती' ति ।

**अथ तत्त्वानि —** 'पृथिव्यापस्तथा तेजो वायुराकाश एव च ।
गन्धो रसश्च रूपञ्च शब्दः स्पर्शस्तथैव च ॥

उपस्थः पायुपादौ च पाणी वागपि च क्रमात् ।
घ्राणं जिह्वा च चक्षुश्च त्वक् च श्रोत्रमतः परम् ॥

मनो बुद्धिरहङ्कारश्चाव्यक्तश्च यथाक्रमम् ।

**अथ वर्णाः —** क्रमाच्चम्पकपुष्पाभमतसीपुष्पसन्निभम् ।
विद्रुमं स्फटिकाकारं पद्मपुष्पसमप्रभम् ॥

तरुणादित्यसङ्काशं शङ्खकुन्देन्दुसन्निभम् ।
प्रवालं पद्मपत्राभं पद्मरागसमप्रभम् ॥

वज्रनीलमणिप्रख्यं मौक्तिकं कुङ्कुमप्रभम् ।
अञ्जनाभञ्च गाङ्गेयं वैदूर्यं क्षौद्रसन्निभम् ॥

हारिद्रं कृष्णगन्धाभं रविकान्तिसमप्रभम् ।
शुकपिञ्छसमाकारं क्रमेण परिकल्पयेत् ॥

अथ शक्तयः— 'प्रह्लादिनी प्रभा नि(स)त्या विश्वभद्रा विलासिनी ।
प्रभावती जया शान्ता कान्ता दुर्गा सरस्वती ॥

विद्रुमा च विशालेशा व्यापिनी विमला तथा ।
तमोपहारिणी सूक्ष्मा विश्वयोनिर्जयावहा ॥

पद्मालया परा शोभा भद्ररूपा च शक्तयः ।'

अथाक्षरन्यासः । अत्र मरीचिः—

'पादादिमूर्धान्तं क्रमेण चतुर्विंशतिस्थानेष्वक्षराणि न्यसेत् । पादाङ्गुष्ठ-गुल्फजङ्घजानुद्वयोरुद्वयगुह्यप्रदेशवृषणकटिनाभिजठरस्तनहृदयकण्ठवदनतालुनासा-चक्षुः भ्रूमध्यललाटाग्रमूर्धपूर्वभागदक्षिणोत्तरपश्चिममूर्धतत्तन्मुखशिरोमध्यचतुर्मुखेष्वे-वमक्षराणि ध्यात्वा विन्यसेत् । सोऽपि सर्वपापैर्मुक्तो भवतीति विज्ञायते' इति ।

अगस्त्यश्च— 'वृषणे कटिदेशे च नाभौ चोदरमध्यतः ।
स्तनयोर्हृदये कण्ठे वक्त्रे तालुनि घोणके ॥

चक्षुषोश्च भ्रुवोर्मध्ये ललाटे पूर्ववक्त्रके ।
दक्षिणे चोत्तरे वक्त्रे पश्चिमे मूर्ध्नि च क्रमात् ॥' इति

न्यासप्रकारांश्च स एवाह—'ओं तत् प्रह्लादिन्यै चम्पकनिभायै नमः । ओं सं प्रभायै अतसीपुष्पसन्निभायै नमः । ओं विं नित्यायै पिङ्गलवर्णायै नमः । ओं तुं विश्वभद्रायै इन्द्रनीलनिभायै नमः । ओं वं विलासिन्यै वह्निरूपायै नमः । ओं रें प्रभावत्यै नीलवर्णायै नमः । ओं णिं जयायै विद्युत्प्रभायै नमः । ओं यं शान्तायै रक्तवर्णायै नमः । ओं भं कान्तायै जलवर्णायै नमः । ओं गों दुर्गायै

रक्तवर्णायै नमः। ओं दें सरस्वत्यै मरकतनिभायै नमः। ओं वं विद्रुमायै जातिपुष्पनिभायै नमः। ओं यं विशालायै स्वर्णप्रभायै नमः। ओं धीं ईशानायै कुन्दप्रभायै नमः। ओं मं व्यापिन्यै पद्मरागनिभायै नमः। ओं हिं विमलायै शङ्खनिभायै नमः। ओं धिं तमोपहारिण्यै पाण्डुरनिभायै नमः। ओं यों सूक्ष्मायै इन्द्रगोपनिभायै नमः। ओं यों विश्वयोन्यै क्षौद्रनिभायै नमः। ओं नं जयावहायै आदित्योदयसन्निभायै नमः। ओं प्रं पद्मालयायै नीलोत्पलनिभायै नमः। ओं चों परायै गोरोचनाभायै नमः। ओं दं शोभायै कुन्देन्दुशङ्खनिभायै नमः। ओं यात् भद्ररूपायै स्फटिकनिभायै नमः, इति।

**ब्रह्मा** — 'मूर्धादिपादपर्यन्तं संहारन्यास उच्यते।
पादादिनाभिपर्यन्तं शिरःप्रभृति वक्षसि॥
कर्तव्यः कामिभिर्न्यासो गृहस्थैः स्थितिसंज्ञकः।

अथ तत्त्वन्यासः॥

**अगस्त्यः** — 'तत्त्वन्यासमथो वक्ष्ये साधकानां हिताय वै।
यत्कृत्वा साधको गच्छेन्निर्वाणं पदमव्ययम्॥

**भृगुः** — 'ओङ्कारमादावुच्चार्य मन्त्रबीजमनन्तरम्।
ततस्तत्त्वं नमोऽन्तश्च जपन् न्यासं समाचरेत्॥

**तद्यथा** — 'ओ तत् पृथिव्यात्मने नमः इति पादयोः। ओं सं उदकात्मने नमः जान्वोः। ओं विं तेजआत्मने नमः हृदये। ओं तु वाय्वात्मने नमः मुखे। ओं वं आकाशात्मने नमः मूर्ध्नि। ओं रें गन्धतन्मात्रात्मने नमः घ्राणयोः। ओं णिं रसतन्मात्रात्मने नमः जिह्वायाम्। ओं यं रूपतन्मात्रात्मने नमः चक्षुषोः। ओं भं स्पर्शतन्मात्रात्मने नमः त्वचि। ओं गीं शब्दतन्मात्रात्मने नमः श्रोत्रयोः। ओं दें उपस्थात्मने नमः लिङ्गे। ओं वं पाय्वात्मने नमः पायौ। ओं स्यं पादात्मने नमः पादयोः। ओं धीं पाण्यात्मने नमः हस्तयोः। ओं मं वागात्मने नमः मुखे। ओं हिं घ्राणात्मने नमः घ्राणयोः। ओ धिं जिह्वात्मने नमः जिह्वायाम्। ओं यों चक्षुरात्मने नमः चक्षुषोः। ओं यों नमः त्वगात्मने नमः

त्वचि । ओं नं श्रोत्रात्मने नमः श्रोत्रयोः । ओं प्रं मनआत्मने नमः हृदये । ओं चों बुद्ध्यात्मने नमः हृदि । ओं यात् अव्यक्तात्मने नमः हृदि ।

'एवं विन्यस्य सावित्रीं ध्यात्वा सम्यक् प्रयत्नतः ।
यं यं पश्यति चक्षुर्भ्यां स्वयं स्पृशति पाणिना ।
यं यं वा भाषते चैव सर्वे पूता भवन्ति ते ॥' इति

अथ गायत्रीकवचम् —'ओं इति हृदये भूरिति मुखे, भुव इति शिरसि, सुवरिति सर्वाङ्गे । एवं विन्यस्य यथाविधि मुद्राश्च प्रदर्शयेत् ।

अगस्त्यः — 'अथातो दर्शयेन्मुद्राः सम्मुखं सम्पुटं तथा ।
ततो विततविस्तीर्णे द्विमुखं त्रिमुखं तथा ॥
चतुर्मुखं पञ्चमुखं षण्मुखाधोमुखे ततः ।
व्यापकं चलिकाख्यञ्च शकटं तदनन्तरम् ॥
यमपाशञ्च ग्रथितं ततस्स्यात्सम्मुखोन्मुखम् ।
वि(प्र)लम्बमुष्टिकामीनाः ततः कूर्मवराहकौ ।
सिंहाक्रान्तं महाक्रान्तं ततो मुद्गरवल्लवौ ॥

आसां मुद्राणां लक्षणमगस्त्यकल्पे स्मृतिचन्द्रिकायाञ्च द्रष्टव्यम् । ग्रन्थान्तरेषूक्तत्वात्केचिन्नेच्छन्ति । प्रत्यवायाभावात् ।

'न जातु दर्शयेन्मुद्रा महाजनसागमे ।
क्षुभ्यन्ति देवतास्तस्य विफलञ्च कृतं भवेत् ॥' इति
'यदधीतमविज्ञातं निगदेनैव शब्दते ।
अनग्नाविव शुष्केधो न तज्ज्वलति कर्हिचित् ॥' इति शौनकस्मरणात्
'अविदित्वा ऋषिं च्छन्दो दैवतं योगमेव च ।
योऽध्यापयेज्जपेद्वापि पापीयान् जायते तु सः ॥
ऋषिच्छन्दोदेवताश्च ध्यात्वा मन्त्रार्थमेव च ।
अनुष्ठानं ततः कुर्यादिति वेदविदो विदुः ॥' इति पितामहस्मरणाच्च

मन्त्रार्थचिन्तनपूर्वकं जपः कार्यः ।

ब्रह्माण्डे :— ' मनःप्रह्लादनं शौचं मौनं मन्त्रार्थचिन्तनम् ।
अव्यग्रत्वमनिर्वेदो जपसम्पत्तिहेतवः ॥

भारद्वाजः — ' निष्ठीवजृम्भणक्रोधनिद्रालस्यक्षुधामदाः ।
पतितश्चान्त्यजा लोको दर्शेते जपवैरिणः ' ॥

व्यासः— ' न प्रकम्पन्न च हसन्न पार्श्वमवलोकयन् ।
नापाश्रितो न जल्पंश्च न प्रावृतशिरास्तथा ॥
न पदा पदमाक्रम्य न चैव हि तथा करौ ।
न चासमाहितमना न च संश्रावयन् जपेत् ॥ '

सुमन्तुः — ' खण्डवस्त्रावृतस्यैव वस्त्रार्धालम्बिनस्तथा ।
उत्तरीयव्यतीतस्य समस्ता निष्फलाः क्रियाः ॥ '

नारदः — ' श्वशूद्रपतितांश्चैव रासभश्च रजस्स्वलाम् ।
दृष्ट्वा तोयमुपस्पृश्य भाष्य स्नात्वा पुनर्जपेत् ॥ '

चन्द्रिकायाम् — जपकाले न भाषेत जपहोमादिकेष्वपि ।
एतेष्वेवावसक्तस्तु यद्यागच्छेद्द्विजोत्तमः ॥
अभिवाद्य ततो विप्रं योगक्षेमश्च कीर्तयेत् ॥ '

यमः — ' नाभेरधः स्वकायन्तु स्पृष्ट्वा प्रक्षालयेत्करौ ।
दक्षिणं वा स्पृशेत्कर्णं स्मरेद्वा विष्णुमव्ययम् ॥ '

योगयाज्ञवल्क्यः —' यदि वाग्यमलोपः स्याज्जपादिषु कथञ्चन ।
व्याहरेद्वैष्णवं सूक्तं स्मरेद्वा विष्णुमव्ययम् ॥ '

**प्राणायाममेकावरं कृत्वा अष्टावरां सावित्रीमभ्यस्य 'मित्रस्ये' त्यादिभिः ऋग्भिस्तिसृभिस्तिष्ठन् सन्ध्यामुपासीत ॥ ९ ॥**

**सावित्रीमभ्यस्य—**

विश्वामित्रः — ' देवस्य सवितुस्तस्य धियो यो नः प्रचोदयात् ।
भर्गो वरेण्यं तद्ब्रह्म धीमहीत्यर्थ उच्यते ॥ '

अगस्त्यः — ' यो देवस्सविताऽस्माकं धियो धर्मादिगोचराः ।
प्रेरयेत्तस्य यद्भर्गस्तद्वरेण्यमुपास्महे ॥ '

**सवितुः**—जगतां प्रसवितुः। 'सविता वै प्रसवानमीशे' 'उतेशिषे प्रसवस्य त्वमेक' इत्यादिश्रुतेः। **वरेण्यं** 'वृङ् सम्पत्तौ-एण्यप्रत्ययः'। सर्वेषां भजनीयं **भर्गः** तेजः। भञ्जनात् भर्गः प्रकाशप्रदानेन जगतो बाह्यान्तरतमोभञ्जकत्वात्, भर्जनाद्वा। कालात्मतया सकलकर्मफलपाकहेतुत्वात्, धरणाद्वा वृष्टिप्रदानेन भूतानां भरण-हेतुत्वात्।

मैत्रायणश्रुतिः— 'एतत्सवितुर्वरेण्यं ध्रुवमचलममृतं भर्गाख्यं विष्णुसंज्ञं सर्वाधारं धामे' ति।

योगयाज्ञवल्क्यः — ' ईदृशं पुरुषाख्यञ्च सत्यधर्माणमच्युतम् ।
भर्गाख्यं विष्णुसंज्ञञ्च ध्यात्वाऽमृतमुपाश्नुते ॥ ' इति।

**देवस्य** द्योतमानस्य । **धीमहि** । ध्यै चिन्तायाम्। देवस्य सवितुर्वरेण्यं यत् भर्गः परं धाम तत् ध्यायामः। आदित्यमण्डलान्तर्वर्तिनं तेजोमयं पुरुषमनुचिन्तयामः। 'येन सूर्यस्तपति तेजसेत्थः'। 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषः' इत्याद्याः श्रुतयः। **धियो यो नः** यः सविताऽस्माकं **धियः** हानोपादा-नादिविषयाणि ज्ञानानि **प्रचोदयात्** प्रवर्तयति। तस्य सवितुः, तत्भर्गः चिन्तयामः।

तथा प्रपञ्चसारे— 'तदिति द्वितीयैकवचनम् । अनेनाखिलवस्तूनां सृष्ट्यादि-कारणं तेजोरूपमादित्यमण्डलेऽभिध्येयं सदानन्दं परं ब्रह्माभिधीयते । तत्र वरेण्यं वरणीयत्वात् । तत्र पापस्य भर्जनात् भर्गः । भक्तस्निग्धतया तत्र धीमहि —

' दृश्यो हिरण्मयो देवः आदित्ये नित्यसंस्थितः ।
यस्सूक्ष्मस्सोऽहमित्येव चिन्तयामस्तदेव तु ॥ इति ।

अथ देवताध्यानम् ।

विश्वामित्रः— ' आदित्यमण्डलासीनं रुक्माभं पुरुषं परम् ।
ध्यायन् जपेत्तदित्येतां निष्कामो मुच्यते द्विजः ॥

स्वप्रभं नित्यमानन्दं हृदये मण्डलेऽपि च ।
ध्यायन् जपेत्तदित्येतां निष्कामो मुच्यतेऽचिरात् ॥'

'स यश्चायं पुरुषे यश्चासावादित्ये । स एकः' इति ध्याय'न्नित्यर्थः । तत्र ध्येयत्वेनोक्तः पुरुषः पुण्डरीकाक्ष इति **छान्दोग्ये** श्रूयते । यथाः—

'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः । तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी' इत्यादि ।

'अन्तस्तद्धर्मोपदेशात्' इति सूत्रार्थोऽत्राभिप्रेतः । आदित्योपस्थानस्य सूत्रविहितत्वात् ।

अगस्त्यः — 'आदित्यमण्डले ध्यायेत्परमात्मानमव्ययम् ।
विष्णुं चतुर्भुजं रक्तपङ्कजासनमध्यगम् ॥

किरीटहारकेयूरनूपुरैरुपशोभितम् ।
हरिं पीताम्बरधरं शङ्खचक्रगदाधरम् ॥

प्रसन्नवदनं रत्नकुण्डलैर्मण्डिताननम् ।
सर्वरत्नसमायुक्तं सर्वाभरणभूषितम् ॥

एवं ध्यात्वा जपेन्मन्त्रं नित्यमष्टोत्तरं शतम् ।
सर्वपापविशुद्धात्मा जितक्रोधो जितेन्द्रियः ॥

संसारार्णवमुत्तीर्य परां सिद्धिमवाप्नुयात् ।

सनकस्मृतौ — 'रश्मिज्वालासहस्राढ्यं विपुलं मण्डलं रवेः ।

स्फुरत् स्फुलिङ्गममलं ज्वालामालासहस्रकम् ।
तस्य मध्ये सुखासीनं तप्तहाटकसन्निभम् ॥

चतुरङ्गुलमात्रन्तु शुकपत्रनिभाम्बरम् ।
रक्तनेत्रधरं रक्तपाणिपादनखं शुभम् ॥

शङ्खचक्रगदापाणिं श्रीवत्साङ्कितवक्षसम् ।
उद्दामविलसन्मुक्ताछन्नहारोपशोभितम् ॥

किरीटकेयूरयुतं कटिसूत्रोपशोभितम् ।
एवं ध्यात्वा जपेन्मन्त्रं गायत्रीं नियतश्शुचिः ॥ '

शौनकः — कृत्वोत्तानौ करौ प्रातः सायञ्चाधोमुखौ करौ ।
मध्ये स्कन्धभुजाभ्यान्तु जप एवमुदाहृतः ॥

अङ्गुली न वियुञ्जीत किञ्चिदाकुञ्चिते तले ।
अङ्गुलीनां वियोगे तु भेदे तु स्रवते जपः ॥

स्मृत्यन्तरे — ' अधोहस्तन्तु पैशाचमूर्ध्वहस्तन्तु दैवतम् ।
बद्धहस्तन्तु गान्धर्वं मध्यहस्तन्तु राक्षसम् ॥

जकारो जन्मविच्छेदः पकारः पापनाशनः ।
जन्मकर्महरो यस्मात् तस्माज्जप इति स्मृतः ॥

मकारो मन इत्याहुस्त्रकारस्त्राणमेव च ।
मनस्त्राणसमायुक्तो मन्त्र इत्यभिधीयते ॥

गायत्री प्रोच्यते तस्मात् गायन्तं त्रायते यतः ।
पुण्यस्य प्रसवात्सैव सावित्री परिकीर्तिता ॥ '

शातातपः — ' दर्भहीना तु या सन्ध्या यच्च दानं विनोदकम् ।
असङ्ख्यातन्तु यज्जप्तं तत्सर्वं स्यान्निरर्थकम् ॥

पराशरः — ' त्रिविधो जपयज्ञस्स्यात्तस्य भेदं निबोधत ।
यदुच्चनीचस्वरितैः शब्दैः स्पष्टपदाक्षरैः ॥

मन्त्रमुच्चारयेद्वाचा वाचिकोऽयं जपस्स्मृतः ।
शनैरुच्चारयेन्मन्त्रमीषदोष्ठौ प्रचारयेत् ॥

अपरैरश्रुतं किञ्चित्स उपांशुर्जपः स्मृतः ।
धिया यदक्षरश्रेण्या वर्णाद्वर्णं पदात्पदम् ॥

शब्दार्थचिन्तनं भूयः कथ्यते मानसो जपः ।
त्रयाणां जपयज्ञानां श्रेष्ठस्स्यादुत्तरोत्तरः ॥

व्यासः — 'प्रणवव्याहृतियुतां गायत्रीञ्च जपेत्ततः ।
समाहितमनास्तूर्णं मनसा वापि चिन्तयेत्' ॥

योगयाज्ञवल्क्यः— 'ओङ्कारं पूर्वमुच्चार्य भूर्भुवस्स्वस्तथैव च ।
गायत्रीं प्रणवञ्चान्ते जप एवमुदाहृतः' ॥

एषा सम्पुटगायत्री 'उभयतः प्रणवां सव्याहृतिका' मिति बोधाय

स्मृत्यन्तरे:— 'सम्पुटैकषडोङ्कारा गायत्री त्रिविधा मता ।
तत्रैकप्रणवा ग्राह्या गृहस्थैर्जपकर्मणि ॥

गृहस्थवत्तु जप्तव्या सदैव ब्रह्मचारिभिः ।
सम्पुटा च षडोङ्कारा भवेतामूर्ध्वरेतसाम् ॥

प्रणवव्याहृतियुता स्वाहान्ता होमकर्मणि ।
शुद्धा वात्र प्रयोक्तव्या व्याहृतिप्रणवैर्विना ॥

स्मृतिरत्ने: — शुद्धयैव तु होतव्यं गायत्र्या होमकर्मणि ।
त्रिकेणैव जपः कार्यो जपयज्ञप्रसिद्धये' ॥

व्यासः — 'प्रणवव्याहृतियुतां गायत्रीञ्च जपेत्ततः ।
समाहितमनास्तूर्णं मनसा वापि चिन्तयेत्' ॥ इति ।

वृद्धमनुः — 'षडोङ्कारां जपेद्विप्रो गायत्रीं मनसा शुचिः ।
अनेकजन्मजैः पापैर्मुच्यते नात्र संशयः ॥

तिस्रो व्याहृतयः पूर्वं पृथगोङ्कारसंयुताः ।
पुनस्संहृत्य चोङ्कारं मन्त्रस्याद्यन्तयोस्तथा ॥

सोङ्कारा चतुरावर्त्य विज्ञेया सा शताक्षरा ।
शताक्षरां समावृत्य सर्ववेदफलं लभेत् ॥

एतया ज्ञातया नित्यं वाङ्मयं विदितं भवेत् ।
उपासितं भवेत्तेन स्वयं भुवनपञ्चकम् ॥

याज्ञवल्क्यः — 'ब्रह्मचार्याहिताग्निश्च शतमष्टोत्तरं जपेत् ।
वानप्रस्थो यतिश्चैव सहस्रादधिकं जपेत् ॥

यद्वाऽऽपत्सु जपेद्देवीमष्टाविंशतिमष्ट वा ।
गृहस्थो ब्रह्मचारी च प्रणवाद्यामिमां जपेत् ॥
अन्ते यः प्रणवं कुर्यान्नासौ वृद्धिमवाप्नुयात् ।

भारद्वाजसंवर्तव्यासाः — 'सहस्रपरमां देवीं शतमध्यां दशावराम् ॥
गायत्रीं वै जपेद्विद्वान् प्राङ्मुखः प्रयतः स्थितः ।
न कदाचिदपि प्राज्ञो गायत्रीमुदके जपेत् ॥
गायत्र्यग्निमुखी प्रोक्ता तस्मादुत्तीर्य तां जपेत्' ।

पराशरः — 'पूर्वां सन्ध्यां जपंस्तिष्ठेत्सावित्रीमार्कदर्शनात् ॥
पश्चिमान्तु समासीनस्सम्यगृक्षविभावनात् ।
तथा मध्याह्नसन्ध्यायामासीनः प्राङ्मुखो जपेत् ॥
अच्छिन्नपादा गायत्री ब्रह्महत्यां प्रयच्छति ।
छिन्नपादा तु गायत्री ब्रह्महत्यां व्यापोहति ॥
चतुर्थ्यान्तु चतुष्षष्टिं सप्तम्यान्तु तदर्धकम् ।
शस्ता प्रदोषे दर्शे च गायत्री दशसङ्ख्यया ॥
अष्टाविंशदनध्याये सुदिने तु यथाक्रमम् ।

नारदः — कुशबन्धैर्जपेद्विप्रः सुवर्णमणिभिर्नृपः ॥
पुत्रजीवफलैर्वैश्यः पद्माक्षैस्सर्व एव वा ।
पुष्ट्यर्थं पञ्चविंशत्या पञ्चदश्याऽभिचारिकः ॥
जपस्य गणनां प्राहुः पद्माक्षैर्भक्तिवर्धनीम् ।
जपेत्तु तुलसीकाष्ठैः फलमक्षयमश्नुते ॥

भारद्वाजः — मध्यमाङ्गुलिमूलेन यत्पर्वद्वितयं भवेत् ।
तं वै मेरुं विजानीयाज्जपेत्तन्नाभिलंघयेत् ॥

नारदः — 'प्रारभ्यानामिकायास्तु मध्यमे पर्वणि क्रमात् ।
तर्जनीमूलपर्यन्तं जपेद्दशसु पर्वसु ॥

मध्याङ्गुलेर्मध्यरेखां समारभ्य प्रदक्षिणम् ।
मध्यमामूलपर्यन्तमङ्गुष्ठेन यथाक्रमम ॥

स्पृष्टिः द्वादशसंख्या स्यादेकवारेण तन्नव ।
वामहस्तेन सङ्ख्यातं शतमष्टोत्तरं स्मृतम् ' ॥

व्यासः — 'तुरीयं तु पदं तस्याः परे ब्रह्मणि संस्थितम् ।
उपस्थाय तुरीयेण जपेत्तान्तु समाहितः ॥

जपित्वा त्रिर्नियम्यासून् गायत्रीमभिवाद्य च ।
कृत्वा तुरीयोपस्थानं तामुद्वास्योपतिष्ठते ॥

तुरीयोपस्थानम् । 'गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पद्यपदसि ; न हि पद्यसे। नमस्ते तुरीयाय दर्शतायपदाय । परोरजसे । असावदोमा प्रापत्तदोम् । अस्य विमलऋषिः तुरीयश्छन्दः परमात्मा देवता मोक्षे विनियोगः ।

पितामहः — 'एवं जप्त्वा यथाशक्ति ह्युदिते तु दिवाकरे ।
उत्तमेत्यनुवाकेन उद्वास्येच्च यथागतम् ॥

उत्तम इत्यनुवाकस्य वामदेव ऋषिः अनुष्टुप् छन्दः गायत्री देवता । अनेनोद्वास्योपस्थानं कुर्यात् ।

मित्रस्येत्यादिभिरित्यादि—

पितामहः — 'मित्रस्येति त्र्यृचस्येह विश्वामित्र ऋषिस्स्मृतः ।
भवेद् गायत्रमादिस्तु त्रिष्टुभाविह पश्चिमौ ॥

देवता चैव मित्रस्स्यादित्युवाच बृहस्पतिः ' ।

स्मृत्यन्तरे— 'अथोपतिष्ठेदादित्यमुदयन्तु समाहितः ॥

मन्त्रैस्तु विविधैस्सौरैः ऋग्यजुस्सामसम्भवैः ।
एताभिः प्राञ्जलिस्सम्यग्विसृष्टोदितमण्डलम् ॥

सहस्रांशु भगवन्तमुपतिष्ठेत भास्करम् ।
अथ क्रमान्नमस्कुर्यात् चतुस्सन्ध्याधिदेवताः ॥

सन्ध्यां पुरस्तात्सावित्रीं गायत्रीञ्च सरस्वतीम् ।
एतास्सन्ध्यादयः प्रोक्ताश्चतस्रो देवताः क्रमात् ॥

स्वं स्वं नाम चतुर्थ्यन्तं प्रणवादिनमोन्तकम् ।
मन्त्रमासामिह प्रोक्तं प्रणमेत्स्वस्वमन्त्रतः ॥

केचिद्धि मुनयः प्राहुः प्रतिमन्त्रं प्रदक्षिणम् ।
कुर्वन् प्रणामं कुर्वीतेत्येताभ्यो भक्तितो द्विजः ॥

सर्वाभ्यो देवताभ्यश्चेत्येतत्प्रणवसम्पुटम् ।
उक्त्वा नमो नम इति प्रणमेत्सर्वदेवताः ॥

कामो कार्षीन्मन्युरकार्षीदित्येतत्पूर्वमन्त्रवत् ।
उक्त्वा प्रदक्षिणेनैव नमस्कुर्यात्तुरीयतनुम् ॥

प्राची च दक्षिणा चैव प्रतीची चोत्तरोर्ध्वका ।
अधरा चान्तरिक्षा च एतास्सप्तोदिता दिशः ॥

सन्ध्यादीनां यथाप्रोक्तं मन्त्रमासां तथैव च ।
ज्ञात्वा प्रदक्षिणेनैताः प्रणमेत्स्वस्वमन्त्रतः ॥

एवं सन्ध्यामुपास्याथ पितरावग्रजान् गुरून् ।
त्रिवर्षपूर्वाञ्छिष्टांश्च पार्श्वस्थानभिवादयेत् ॥

उदितार्कां पश्चिमार्कामिति सन्ध्ये यथादिशम् ' ।
विश्वामित्रः— ' तदित्यृचस्समो नास्ति मन्त्रो वेदचतुष्टये ॥

सर्वे वेदाश्च यज्ञाश्च दानानि च तपांसि च ।
समानि कलयाऽप्याहुः मुनयो न तदित्यृचः ॥

परिहाप्यापि वेदांस्त्रीन् कर्माणि विहितानि च ।
सावित्रीमन्त्रमाश्रित्य द्विजो भवति निर्भयः ' ॥

ब्राह्मकल्पे— ' सावित्रीं विस्तृतां दिव्यां यः पठेत् शृणुयात्तु वा ।
मुच्यते सर्वपापेभ्यः परं ब्रह्माधिगच्छति ' ॥

सप्तव्याहृतिपूर्वाञ्चेदाद्यन्तप्रणवान्विताम् ।
मनसा वा जपेच्चैव दशकृत्वोऽवरः स्मृतः ' ॥

विश्वामित्रः ' षट्कृत्वस्त्वभ्यसेद्यद्वा प्राणापानौ समाहितः ।
प्राणायामो भवेदेष सर्वपापप्रणाशनः ॥

सहस्रकृत्वस्त्वभ्यस्यः बहिरेतत्त्रिकं द्विजः ।
महतोऽप्येनसो मासात्त्वचेवाहिर्विमुच्यते ॥

पितामहः— ' सहस्रकृत्वः सावित्रीं जपेदेकाग्रमानसः ।
शतकृत्वोऽपि वा सम्यक् प्राणायामपरो यदि ॥

सन्ध्यामुपासते ये तु सततं संशितव्रताः ।
विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनम् ' ॥

' ब्रह्मणोपासिता देवी विष्णुना शङ्करेण च ।
कस्तं नोपासयेते देवीं श्रेयस्कामो द्विजोत्तमः ' ॥

बोधायनः— ' प्रणवो व्याहृतयस्सावित्री चेत्येते ब्रह्मयज्ञाः अहरहः ब्र
किल्बिषात्पापात्पावयन्ति ; पूतः पञ्चभिः ब्रह्मयज्ञैरिति ।'

विष्णुधर्मोत्तरेः— ' जपेनैकेन गायत्र्या नाशयेदुपपातकम् ।
जन्मत्रयार्जितं पापं दहेद्द्वयजपेन सः ॥

सप्तजन्मार्जितं पापं हरते चाष्टभिर्जपैः ।
तथैव विंशतिजपाद्गायत्री सर्वपापहा ॥

कुलं तारयते तस्य सप्त सप्त च सप्त च ।
जप्त्वा चाष्टशतं देवीं सर्वपापक्षयावहाम् ॥

जन्मत्रयार्जितं पापं निर्धूय दिवि मोदते ।
अष्टोत्तरसहस्रेण कुलसप्ततिसंयुतः ॥

ब्रह्मलोकं समासाद्य ब्रह्मवन्मोदते चिरम् ।
एवंप्रभावा सा देवी गायत्री ब्रह्मवर्धनी ॥
जिह्वाग्रे वर्तते यस्य तस्मात्कः पुरुषोऽधिकः' ॥ इति

अत एवाष्टाक्षरामित्युक्तम् ।

**मध्याह्न 'आपः पुन'न्त्वित्याचम्य तथा प्रोक्ष्य 'उद्वय'मित्यादिभिस्तिष्ठन्नादित्यमुपस्थाय तथा करोति । १० ॥**

मध्याह्ने विशेषः । आपः पुनन्त्वित्याचमनम् । ओपो हिष्ठेति प्रोक्षणम् ।

पितामहः — 'आपः पुनन्त्वित्येतस्य आप एव भवेदृषिः ।
ब्रह्मणस्पतिरित्येषा देवतेति च कीर्त्यते ॥
अनुष्टुबिति छन्दः स्यात् पानेऽपां विनियुज्यते' ॥ इति

तथाप्रोक्ष्येत्युक्तत्वात् प्रातस्सन्ध्यावन्मार्जनादिकम् ।

'अर्घ्यमेकं प्रदातव्यं मध्याह्ने भास्करं प्रति' ॥ इति

उपसंहारः पूर्ववत् । उपस्थाने तु—

पितामहः — 'आसत्याद्यृक्षु पूर्वे द्वे त्रिष्टुभौ कवयो विदुः ।
गायत्री तु तृतीया स्यात् चतुर्थी जगती मता ॥
उष्णिक् तच्चक्षुराद्यस्य मन्त्रस्य छन्द उच्यते ।
हिरण्यस्तूब इत्येव ऋषिर्देवोऽत्र भास्करः' ॥

**सायं 'अग्निश्चे'त्यादिनाऽऽचम्य तथा प्रोक्ष्य 'यच्चिद्धी'त्यादिभिः मार्जभिरुपास्यासीनस्तथा करोति ॥ ११ ॥**

सायं अग्निश्चेत्यादिना आचम्येति ।

'अग्निश्चेत्यनुवाकस्य छन्दो गायत्रमुच्यते ।
ऋषिस्सूर्य इति ज्ञेयो देवता च हुताशनः' ॥

एवं मन्त्राचमनं कृत्वा मार्जनादिकं पूर्ववत् कुर्यात्। उपस्थाने च 'इमं मे वरुण' इत्यादि पञ्चानामादितस्तिसृणां शुनश्शेफऋषिः। चतुर्थ्याः वसिष्ठः। पञ्चम्या अत्रिः। प्रथमातृतीययोर्गायत्री द्वितीयापञ्चम्योः त्रिष्टुप्छन्दः। चतुर्थ्या जगती छन्दः। सर्वासां वरुणो देवता। एवमुपस्थाय प्रदक्षिणादिकं कुर्यात्।

बृहस्पतिः — 'वारुणीभिस्तथाऽऽदित्यमुपस्थाय प्रदक्षिणम्।
कुर्वन् दिशो नमस्कुर्यात् दिगीशांश्च पृथक्पृथक्॥'

चन्द्रिकायाम् — 'वामहस्ते जलं कृत्वा ये तु सन्ध्यामुपासते।
सा सन्ध्या वृषली ज्ञेया असुरास्तैस्तु तर्पिताः॥

ब्रह्मा 'धाराच्युतेन तोयेन सन्ध्योपास्तिर्विगर्हिता॥'

'उदितार्कां पश्चिमार्का'मिति च सन्ध्ये यथादिशं तन्नामादिना दिग्देवताः पितॄन् सापसव्यं ब्रह्माणञ्चोदङ्मुखो नारायणादीन् नमोऽन्तेनोपतिष्ठेत॥ १२॥

आश्वमेधिके — उत्थाय तु नमस्कृत्य द्विजो दिग्देवता अपि।
ब्रह्माणञ्च ततश्चाग्निं पृथिवीमोषधीस्तथा॥

वाचं वाचस्पतिञ्चैव माञ्चैव सरितस्तथा'॥ इति

नारायणशब्देन परमात्मध्यानम्।

'परमात्मानमात्मानं भावयित्वा द्विजोत्तमः।
आत्मानमात्मना ध्यात्वा ह्यात्मन्येवोपसंहरेत्॥

कर्णयुग्मं स्वहस्ताभ्यां स्पृष्ट्वा जानुद्वयादिकम्।
चरणाङ्गुष्ठपर्यन्तं सम्मृज्य तु शनैश्शनैः॥

दक्षिणश्रवणे बाहुं दक्षिणञ्च प्रसार्य च।
बाहूपरि शिरो नम्रमुक्तं तदभिवादने॥

.... .... .... .... ....

इत्येतद्ब्राह्मणं यत्तन्मन्त्रस्स्यादभिवादने ।
प्रदक्षिणेऽभिवादे च आत्मानश्चाभिवादयेत् ॥

आत्मपादौ तथा भूमिं सन्ध्याकालेऽभिवादयेत् ।
आयुर्विद्यां धनारोग्ये प्राप्नोति पुरुषस्सदा ' ॥ इति

अत्रिः — ' सन्ध्यालयन्तु कर्तव्यं द्विजेनात्मविदा सदा ।
उभे सन्ध्ये तु कर्तव्ये ब्राह्मणैश्च गृहेष्वपि ' (?) ॥ इति

एवं सन्ध्योपासनविधिरुक्तः ।

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने तात्पर्यचिन्तामणौ तृतीयखण्डार्थविवरणं

समाप्तम् ।



# अथ चतुर्थः खण्डः

अथाऽऽचम्य 'कौरुक्षेत्र' मिति जलं नमस्कृत्य महाव्याहृत्या जलमभिमन्त्र्य हस्तेन तलतीर्थक्रमेण 'कूप्याभ्यः स्वाहा' इत्यादिभिस्तर्पयति ॥ १ ॥

अथ सन्ध्योपासनानन्तरं आचम्य कौरुक्षेत्रमिति जलं नमस्कृत्य। देवनिर्मितदेशत्वात् कुरुक्षेत्रादिस्मरणम्।

मनुः — 'सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम्।
तं देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते ॥

कुरुक्षेत्रं शूरसेनं मात्स्यं पाञ्चालिका अपि।
एष ब्रह्मर्षिदेशो वै ब्रह्मावर्तादनन्तरम्' ॥ इति

जलमित्यनेन द्रव्यान्तरनिवृत्तिः। प्रतिदिनं द्रव्यान्तरेण कर्तुमशक्यत्वात्। किञ्च 'अम्भांसि जुहोति' इत्यारभ्य 'यदम्भांसि जुहोति। वसूनां सायुज्यं गच्छति' इति मधुविद्याफलप्राप्तिः श्रूयते' इति जलमित्युक्तम्।

व्यासः — 'अन्वारब्धेन सव्येन पाणिना दक्षिणेन तु।
देवर्षींस्तर्पयेद्देवानुदकाञ्जलिभिः पितॄन्' ॥ इति।

आश्वमेधिके — 'अन्वारब्धेन सव्येन पाणिना दक्षिणेन तु।
निवीती तर्पयेत्पश्चात् ऋषीन्मन्त्रकृतस्तथा' ॥ इति।

हस्तेन तलतीर्थक्रमेणाल्पमपि कृतमनेकफलप्रदमित्यभिप्रायेण हस्तेन तलतीर्थक्रमेणेत्युक्तम्।

आनुशासनिके युधिष्ठिरः — 'कानि तीर्थानि भगवन् नृणां देहाश्रितानि वै।
तानि मे शंस भगवन् याथातथ्येन पृच्छतः ॥

सर्वतीर्थेषु तीर्थज्ञ किं तीर्थं परमं नृणाम् ।
यत्रोपस्पृश्य पूतात्मा नरो भवति नित्यशः ॥'

नारदः— 'देवर्षिपितृतीर्थानि ब्राह्मं मध्येऽथ वैष्णवम् (?) ।
नृणां तीर्थानि पञ्चाहुः पाणौ सन्निहितानि वै ॥
आद्यं तीर्थन्तु तीर्थानां वैष्णवो भाग उच्यते ।
यत्रोपस्पृश्य वर्णानां चतुर्णां वर्धते कुलम् ॥
पितृदैवतकार्याणि वर्धन्ते प्रेत्य चैव हि' । इति ।

कूप्याभ्यस्स्वाहेत्यादिभिस्तर्पयति । श्रुतिः । 'कूप्याभ्यस्स्वाहाद्भ्य स्स्वाहेत्यपां होमं जुहोति' इति । नन्वत्र देवताद्रव्ययोरभेदावगमाद्विरोध इति चेत् उच्यते । 'अप एव ससर्जादा' वित्यादिभिः 'आपो वा इदं सर्वं' मित्यादिभिश्च प्रमाणैः सर्वदेवतारूपत्वेन श्रुतानां अपां नानारूपसम्भवशक्तेः विद्यमानत्वान्न विरोधः । यद्वा अपामद्भिस्तर्पणं तदभिमानिदेवताया इति । यद्वा 'योऽप्सु तिष्ठन् योऽपोऽन्तरे सञ्चरन् यमापो न वेद यस्यापः शरीर' मित्यादिभिः श्रुतिभिः तदन्तर्यामिणः परमात्मनो वेति न विरोधः ।

**भूपतिं तर्पयामि भुवनपतिं तर्पयामि भूतानां पतिं तर्पयामि प्रजापतिं तर्पयामि ब्रह्माणं तर्पयामि नारायणं तर्पयामि महादेवं तर्पयामि स्कन्दं तर्पयामि विघ्नं तर्पयामि विनायकं तर्पयामि ॥ २ ॥**

**यथादिशं तन्नामादिना दिग्देवतास्तर्पयति ॥ ३ ॥**

दिग्देवता इत्यनेन लोकपालानां निवृत्तिः ।

श्रीविष्णुपुराणे— 'सुधन्वा शङ्खपालश्च कर्दमस्यात्मजा द्विज ।
हिरण्यरोमा चैवास्य चतुर्थः केतुमानिति ॥
निर्द्वन्द्वा निरभिमाना निस्तन्द्रा निष्परिग्रहाः ।
लोकपालाः स्थिता ह्येते लोकालोके चतुर्दिश' मिति ॥

इन्द्रं तर्पयामि यमं तर्पयामि वरुणं तर्पयामि कुबेरं तर्पयामि अग्निं तर्पयामि निर्ऋतिं तर्पयामि वायुं तर्पयामि ईशानं तर्पयामि ॥ ४

दिग्देवता उपपादयति इन्द्र मित्यादिना ।

आदित्यं तर्पयामि सोमं तर्पयामि अङ्गारकं तर्पयामि बुधं तर्पयामि बृहस्पतिं तर्पयामि शुक्रं तर्पयामि शनैश्चरं तर्पयामि राहुं तर्पयामि केतु तर्पयामि इति ग्रहा ँस्तर्पयति ॥ ५ ॥

नक्षत्राणि तर्पयामि तारा ँस्तर्पयामि विश्वान् देवा ँस्तर्पयामि सर्वाश्च देवतास्तर्पयामि वेदा ँस्तर्पयामि यज्ञा ँस्तर्पयामि छन्दा ँसि तर्पयामि ॥ ६ ॥

स्वगोत्रादि सप्तऋषी ँस्तर्पयति ॥ ७ ॥

विश्वामित्रं तर्पयामि जमदग्निं तर्पयामि भरद्वाजं तर्पयामि गौतमं तर्पयामि अत्रिं तर्पयामि वसिष्ठं तर्पयामि कश्यपं तर्पयामि सर्वान् ऋषी ँस्तर्पयामि सर्वा ऋषिपत्नी ँस्तर्पयामि ॥ ८ ॥

ननु—अत्र स्वगोत्रस्यादिभूतेन सहेतरान् सप्तऋषीन् इति वा उत सप्तैवेति वा। प्रथमे शिरसि ....। नवसंख्याकत्वेन विद्यमानत्वात्। द्वितीये तु प्रत्यक्षापलापः, इति चेत् सत्यम्। नात्र संख्या विवक्षिता। सप्तर्षीनित्यत्र वैखानसानां वंशकर्तारः विश्वामित्रादयः सप्तैव। भृगुजमदग्न्योरेकत्वात्। पृथक्त्वेन जमदग्निप्रतिपादन *

प्राचीनावीती पित्र्याणि करोति ॥ ९ ॥

तर्पणादीनीत्यर्थः। तत्र तत्र विशेषोऽवगन्तव्यः।

'ऊर्म्योदकान्त' इति पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यः ज्ञातिवर्गेभ्यः पितृपत्नीभ्यः पितामहपत्नीभ्यः प्रपितामहपत्नीभ्यः ज्ञातिवर्गपत्नीभ्यः स्वधानमस्तर्पयामीति तर्पयति ॥ १० ॥

---

*अत्र ग्रन्थपातः

अथ निवीती भौमा ँस्तर्पयामि भौमदिव्या ँस्तर्पयामि नागा ँस्तर्पयामि नागदिव्या ँस्तर्पयामि ॥ ११ ॥

अथ पितृतर्पणानन्तरं निवीती । यद्वा व्यवहितत्वात् ऋषितर्पणस्यापि निवीतित्वद्योतकः ।

'पितरो मुनयो देवा भूतानि मनुजास्तथा ।
कृमिकीटपतङ्गाश्च वयांसि पशवो मृगाः ॥
गृहस्थमुपजीवन्ति ततस्तृप्तिं प्रयान्ति च ॥

इति मार्कण्डेयस्मरणात् ।

'ससोमग्रहनक्षत्रतारकं व्योममण्डलम् ।
सशैलनिम्नगाम्भोधिकाननानि च तर्पयेत् ॥

इत्याश्वमेधिकवचनाच्च मनुष्यसमानधर्मणामृषीणाञ्च निवीतित्वद्योतनार्थं अथ शब्दः । श्रुतिः । 'निवीतं मनुष्याणां प्राचीनावीतं पितॄणामुपवीतं देवानामुपव्ययते' इति । 'अथ निवीतकार्याणि—ऋषीणां तर्पणं, व्यवायः, प्रजासंस्कारोऽन्यत्र होमात्, मूत्रपुरीषोत्सर्गः, प्रेतोद्वहनं, यानि चान्यानि मनुष्यकार्याणि कण्ठेऽवसक्तं निवीत' मिति बोधायनस्मरणात् ऋषीणामपि भौमत्वादिसम्भवाच्चात्र निवीतग्रहणं ऋषितर्पणादावपि निवीतत्वद्योतकम् ।

'याश्चन्नो जलार्थिनस्तास्ताः प्रतिगृह्णन्तु' इत्यपो विसृज्य आचम्य ब्रह्मयज्ञं करोति ॥ १२ ॥

'ब्रह्मयज्ञेन यक्ष्ये' इत्यारभ्य 'उदित आदित्य' इत्युदयानन्तरं श्रूयते ।

कात्यायनः— 'यश्च श्रुतिजपः प्रोक्तो ब्रह्मयज्ञस्स उच्यते ।
स त्वर्वाक् तर्पणात्कार्यः पश्चाद्वा प्रातराहुतेः ॥ इति

'वैश्वदेवं हुत्वा अतिथिमाकांक्षे' दित्यनतरं 'जघनेन गार्हपत्यमुपविश्यौपासनं वा 'अधीहि भो' इति गार्हपत्यमुक्त्वा 'प्राणायामैः त्रिरायम्य' इत्युक्त्वा 'यदधीते ........ स ब्रह्मयज्ञ' इति बोधायनः ।

मनुः— 'पञ्च क्लृप्ता महायज्ञाः प्रत्यहं गृहमेधिनः ।
अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् ॥
होमो दैवो बलिर्भौतोऽन्नयज्ञोऽतिथिपूजनम्' ॥ इति

'अप आप्लुत्य यज्ञोपवी'तीत्यादिना 'माध्यन्दिनानन्तरं ब्रह्मयज्ञं तदनन्तरं तर्पणञ्चे'त्याश्वलायनस्मरणरीत्या बोधायनादिभिः श्रुतिविरुद्धकालान्तरेऽप्युक्तेरयुक्तत्वात्, श्रुत्युक्तमार्गेण सन्ध्योपासनानन्तरकालस्यैव न्याय्यत्वात्

'प्रातस्स्नात्वाऽथ सावित्रीं जप्त्वा सन्ध्यामुपास्य च ।
सूक्तानि ब्रह्मयज्ञान्ते जपेत् द्वादश संयतः ॥
अथानुदितहोमी चेद्धोमं कुर्यादथाग्निषु ।
जुहोत्युदितहोमी चेत् प्रातस्सन्ध्यावसानके ॥

इति क्रियाधिकारे भगवदाराधनविधौ भृगुणा प्रतिपादितत्वाच्च सन्ध्योपासनानन्तरं ब्रह्मयज्ञः कर्तव्यः । यद्वा होमान्ते ॥

**शुद्धे देशे बर्हिरास्तीर्य ब्राह्ममासनमास्थाय पवित्रपाणिः ब्रह्माञ्जलिं कृत्वा प्राङ्मुखः सावित्रीपूर्वं नित्यं 'इषे त्वोर्जे त्वा' इत्यादि यथाकामम् ॥ १३ ॥**

ब्रह्मयज्ञविधिरुच्यते शुद्धे देशे इत्यादिना । अमेध्यशवशूद्रान्त्यपतितान्तिके न कर्तव्यः । बर्हिरास्तीर्य । श्रुतिः । 'दर्भाणां महदुपस्तीर्योपस्थं कृत्वा प्राङासीनः स्वाध्यायमधीयीत—'अपां वा एष ओषधीनाꣳ रसः यद्दर्भाः । सरसमेव ब्रह्म कुरुते' इति ।

**ब्राह्ममासनमास्थाय ।**

भृगुः— 'पादौ भूमिस्पृशौ कृत्वा स्वस्तिकेनैव बन्धयेत् ।
वाममुत्तानकं कुर्यात् करं पश्चाच्च दक्षिणम् ॥
एवं ब्रह्मासनं कुर्यात् देवदेवमनुस्मर'न्निति ।

मरीचिः— 'दक्षिणपादमूर्ध्वं वामपादमधः कृत्वा जान्वन्तरेऽङ्गुष्ठौ निकुञ्च्याऽङ्के पाणिं सन्न्यस्य तदूर्ध्वं दक्षिणं पाणिमुत्तानं न्यस्य भ्रूमध्येक्षण आसीत तद्ब्रह्मासन' मिति।

पवित्रपाणिः।

चन्द्रिकायाम् :— 'यज्ञोपवीते मौञ्ज्याञ्च तथा कुशपवित्रके।
ब्रह्मग्रन्थिं विजानीयात् अन्यत्र तु यथारुचि॥
गवां वालपवित्रस्य सौवर्णस्य तथैव च।
न ब्रह्मग्रन्थिनियमो धारयेत्तु यथातथम्॥
जपकर्महरा ह्येते असुरा व्यक्तरूपिणः।
पवित्रकृतहस्तस्य विद्रवन्ति दिशो दश॥

आचम्य — ब्रह्माञ्जलिं कृत्वा।

मनुः — 'ब्रह्माञ्जलिकृतोऽध्याप्यो लघुवासा जितेन्द्रियः।
संहत्य हस्तावध्येयं स हि ब्रह्माञ्जलिः स्मृतः॥

स्मृतिरत्नावल्याम्-'सव्यस्य पाणेरङ्गुष्ठप्रदेशिन्योस्तु मध्यतः।
दक्षिणस्याङ्गुलीर्न्यस्य चतस्रोऽङ्गुष्ठवर्जिताः॥
तथा सव्यकराङ्गुष्ठं दक्षिणाङ्गुष्ठवेष्टितम्।
सदर्भहस्तो जानूर्ध्वे दक्षिणे दक्षिणोत्तरम्॥
कृत्वा जानुनि कर्तव्यमेतत्कर्म करोमि यत्।
तिथिवारादिकं स्मृत्वा सुसङ्कल्प्य यथाविधि॥
स्वमानसेन वाचा वा स तु सङ्कल्प उच्यते।
प्रणवं व्याहृतीश्चैव गायत्रीञ्च जपेत् क्रमात्॥
पच्छोऽर्धर्चस उच्छ्वासात् वेदादींश्चतुरो जपेत्।
हरिरोमिति निर्दिश्य यत्कर्म क्रियते बुधैः॥
अधीयते वा राजर्षे तद्धि वीर्योत्तरं भवे'दिति।

'दक्षिणोत्तरौ पाणी कृत्वा सपवित्रावोमिति प्रतिपद्यते' 'ब्रह्मयज्ञेन यक्ष्ये — विद्युदसि — प्राङासीनस्स्वाध्यायमधीयीत' इति श्रुतिः ।

**आश्वमेधिके** — भगवान् —

'सावित्रीञ्चैव वेदांश्च तुल्याऽतुलयन् पुरा ।
देवा ऋषिगणाश्चैव सर्वे ब्रह्मपुरस्सराः ॥
चतुर्णामपि वेदानां सा हि राजन् गरीयसी ।
यथा विकसिते पुष्पे मधु गृह्णाति षट्पदः ॥
समुत्सृज्य रसं सर्वं निरर्थकमसारवत् ।
एवं हि सर्ववेदानां सावित्री प्राण उच्यते ॥
निर्जीवा हीतरे वेदा विना सावित्र्या नृप' ॥ इति

नस्य क्रमः । 'ओं भूः तत्सवितुर्वरेण्यं — ओं भुवः, भर्गो देवस्य धीमहि — ओं सुवः धियो यो नः प्रचोदयात्' इति पच्छः । 'ओं भूर्भुवः तत्सवितुर्वरेण्यम् भर्गो देवस्य धीमहि, ओं सुवः धियो यो नः प्रचोदयात्' इत्यर्धर्चशः । ओं भूर्भुवस्सुवः तत्सवितुर्वरेण्यम् भर्गो देवस्य धीमहि धियो यो नः प्रचोदयत्' इति समस्ता । एवं जप्त्वा अनन्तरं 'इषे त्वोर्जे त्वा — अग्निमीले — अग्न आयाहि — शन्नो देवी' रित्यादि जपेत् ।

**पैठीनसिः** — 'स्वशाखाध्ययनं यत्तत् ब्रह्मयज्ञ प्रचक्षते ।
ब्रह्मयज्ञपरो विप्रो ब्रह्मलोके महीयते' ॥ इति

**वसिष्ठः** — 'ऋक्सामाथर्ववेदोक्तान् जपेन्मन्त्रान् यजूंषि च ।
जपित्वैवं ततः कुर्याद्देवर्षिपितृतर्पणम्' ॥ इति

**तलवकारोपनिषदि** — 'कस्सविता का सावित्रीत्यारभ्य 'तस्या एष प्रथमः पादः भूः तत्सवितुर्वरेण्यम्, अग्निर्वै वरेण्यमापो वै वरेण्यं चन्द्रमा वै वरेण्यं, तस्या एष द्वितीयः पादः भुवः भर्गो देवस्य धीमहि, अग्निर्वै भर्गः, चन्द्रमा वै भर्गः, तस्या एष तृतीयः पादः सुवः धियो यो नः प्रचोदयात्, यज्ञो वै प्रचोदयति, स्त्री चैव पुरुषश्च प्रजनयतः । भूर्भुवस्सुवस्तत्सावितुर्वरेण्यं भर्गो देवस्य धीमहि

धियो यो नः प्रचोदयात् ' इति । यज्ञो वै प्रचोदयति स्त्री चैव पुरुषश्च प्रजनयतः यो वा एतां सावित्रीं वेद । अपपुनर्मृत्युं जयति गायत्र्या एव सलोकतां जयती'ति श्रुतिः ।

मनुः — ' अकारञ्चाप्युकारञ्च मकारञ्च प्रजापतिः ।
वेदत्रयान्निरदुहत् भूर्भुवस्स्वरुदीर्य च ॥
त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत् ।
तदित्यृचोऽस्यास्सावित्र्याः परमेष्ठी प्रजापतिः ' ॥ इति

बोधायनः — ' पच्छोऽर्धर्चशः समस्तां व्याहृतीः विहृता पादादिष्वन्तेषु ' वेति । ' एकामप्यृचं यजुस्साम वा तद्ब्रह्मयज्ञस्सन्तिष्ठते ' इति श्रुतिः ।

**यथाकामम्** – यथोक्तम् ।

मनुः — ' ब्रह्मयज्ञे जपन् सूक्तं पौरुषं चिन्तयन् हरिम् ।
स सर्वान् जपते वेदान् साङ्गोपाङ्गान् द्विजोत्तमः ' ॥ इति

श्रुतिः – ' नमो ब्रह्मण इति परिधानीयां त्रिरन्वाह ' इति अप उपस्पृश्य गृहानेति ततो यत्किञ्चिद्ददाति सा दक्षिणा ' वृष्टिरसि वृश्च मे पापनमृतात्सत्यमुपागा ' मित्यप उपस्पृश्य काण्डर्षितर्पणञ्च कुर्यात् ।

स्मृत्यन्तरे च — ' अथ काण्डऋषीनेतानुदकाञ्जलिभिश्शुचिः ।
अव्यग्रस्तर्पयेन्नित्यं मन्त्रैर्वैष्णवनामभिः ॥ इति

एवं नित्यब्रह्मयज्ञ उक्तः ।

**नैमित्तिकम् । ' ऋतञ्च सत्यञ्च - देवकृतस्य – यन्मे गर्भे – तरत्समन्दी – वसोः पवित्रं – जातवेदसे – विष्णोर्नुकं – सहस्रशीर्षा – एकाक्षरं–आ त्वा हार्षं–त्वमग्ने–पवस्वा'दीन् स्वाध्यायमधीयीत ॥ १४**

**सौरीभिः ऋग्भिः यथाकाममादित्यञ्चोपतिष्ठेत ॥ १५ ॥**

**नैमित्तिकमृतञ्च सत्यञ्चेत्यादि** - ' ऋतं च सत्यं च - देवकृतस्य - यन्मे गर्भेतरत्समन्दीति प्राजपत्ये, वसोः पवित्रं ' इति सौम्ये इत्यादि तत्तद्व्रतेष्वधीयमानं सूक्तम् । यद्वा –

वसिष्ठः — 'अघमर्षणं देवकृतं शुद्धवत्यस्तरत्समाः ।
कूश्माण्ड्यः पावमान्यश्च विराजा मृत्युलाङ्गलम् ॥
दुर्गा व्याहृतयो रुद्रा महापातकनाशनाः' ॥ इति

तत्र तरत्समन्दी –

छन्दोगब्राह्मणे — 'चतुर्ऋचो भवति प्रतिष्ठाया' इत्यारभ्य

'कथं नाविन्दमात्तमप्रतिगृहीतं स्यादिति तौ प्रत्येतं 'ध्वस्रयोः पुरुषन्त्योरा सहस्राणि च दद्महे । तरत्समन्दी धावतीति । ततो वै तयोरात्तमप्रतिगृहीतमभवत् । आत्तमस्याप्रतिगृहीतं भवति । य एवं वेद' इति ।

बोधायनः 'बह्वप्रतिग्राह्यस्य वा प्रतिगृह्य अयाज्यं वा याजयित्वा नाश्यान्नस्य वान्नमशित्वा तरत्समन्दीयं जपे'दिति

स्मृत्यन्तरे: – 'प्रतिगृहीष्यमाणश्च प्रतिगृह्य तथैव च ।
ऋचस्तरत्समन्द्याद्याः चतस्रः परिवर्तयेत् ॥
अभोज्यान्नान्तु सर्वेषां प्रजानां पावनं स्मृतम्' ॥ इति

सौम्यत्वात् धर्माः प्रकर्ममिति । जातवेदसे — ऋग्ब्राह्मणे — 'जातवेदसे सुनवाम सोम' मिति जातवेदस्यां पुरस्तात्सूक्तस्य शंसति । स्वस्त्ययनं वै जातवेदस्याः स्वस्तितायै । स्वस्त्ययनमेव तत्कुरुते । इति

बोधायनः — 'दुर्गमध्वानं प्रपद्य जातवेदस्सहस्रेणादित्यमुपतिष्ठते । आसन्नभयो वा स्याच्छत्रुव्यवहारराजकुलव्यसने बद्धो वा शतं जपेदेतदेव दुस्स्वप्नेषु शतं जपेदेतदेवेति । विष्णोर्नुकमिति ।

'सर्वं तदाराधनमेव मत्वा ध्यायन् हरिं यज्ञपुमांसमीशम् ।
जपंश्च विष्णोर्नुकमित्यथान्ते सर्वेषु यज्ञेष्वपि हन्ति दोषान्' ॥ इति

सहस्रशीर्षा ।

पद्मपुराणे: — 'वेदेषु पौरुषं सूक्तं धर्मशास्त्रेषु मानवम् ।
भारते भगवद्गीता पुराणेषु च वैष्णवम् ॥

श्रुतिषु प्रबला मन्त्रास्तेष्वप्यध्यात्मवाचिनः ।
तत्रापि पौरुषं सूक्तं न तस्माद्विद्यते परम् ' ॥ इति

शौनकः — 'प्रायश्चित्ते जपे चैव विष्णोराराधने तथा ।
मोक्षे वश्येऽभ्युपस्थाने सुपुत्रप्रापणेऽपि च ॥
सर्वकामफलावाप्तावारोग्ये मृत्युनाशने ।
एतेष्वर्थेष्विदं सूक्तं मुनिभिर्विनियुज्यते ' ॥ इति

प्रायश्चित्ते — वाधूलसूत्रे

'यत्र यत्र कर्मभ्रेषो यज्ञकर्मभ्रेषो वा तत्र तत्र पुरुषं ध्यायन् पुरुषसूक्तमुच्चरेत् ' इति ।

जपे — यमस्मृतौ 'योऽनूचानं द्विजं मर्त्यो हतवानर्थलोभतः ।
स वदेत्पौरुषं सूक्तं जलस्थः चिन्तयन् हरिम् ॥
जप्त्वा तु पौरुषं सूक्तं मुच्यते गुरुतल्पगः ।
रुक्जप्त्वाऽऽस्यवामीयं शिवसङ्कल्पमेव च ' ॥ इति

आराधने — दद्यात् पुरुषसूक्तेन यः पुष्पाण्यप एव वा ।
अर्चितं स्याज्जगदिदं तेन सर्वचराचरम् ' ॥ इति

मोक्षे — वासिष्ठयोगरत्ने

'संसारान्मोक्षमिच्छन् यः स सन्न्यस्येषणात्रयम् ।
निःस्पृहस्सर्वकामेभ्यः समलोष्टाश्मकाञ्चनः ॥
शुचौ देशे समासीनः वाग्यतो नियतेन्द्रियः ।
ब्रह्मविद्यां ततो धीमान् गृह्णन् पादौ गुरोर्मुनिः ' ॥ इत्यारभ्य
' ध्यायेन्नारायणं देवं हृदयाम्बुजमध्यगम् ।
दिग्देशकालावस्थाद्यैरनवच्छेद्यवैभवम् ॥
सर्वदा पौरुषं सूक्तं मनसैव जपेच्छुचिः ' ॥ इति

वश्ये — उत्तरागार्ग्ये वश्याध्याये

'सर्वं जगन्मम भवेदिति सञ्चिन्तयन्मुनिः ।

ध्यायेत्पुरुषसूक्तेन प्रतिपाद्यं जनार्दनम् ।
वशो भवति तस्यापि जगत्सर्वं मुनेरपि '॥ इति

अग्न्युपस्थाने— हुत्वाऽग्निं विधिवद्भक्त्या ऋग्भिष्षोडशभिर्बुधः ।
कृताञ्जलिपुटो भूत्वा स्तुवन्नाशीः प्रयोजये' दिति ॥

आयुष्मत्पुत्रप्राप्तौ – ऋग्विधाने

'पुत्रीयन् ब्राह्मणश्शुद्धः सुप्रसन्नमना भवेत् ।
पौरुषेणैव सूक्तेन जुहुयादाज्यमन्वहम् ॥

पयसाऽपि चरुं हुत्वा तेनापि जुहुयाच्छुचः ।
हुतशिष्टं चरुं शुद्धमश्नीयाताञ्च दम्पती ॥

एवं त्रिंशद्दिनादूर्ध्वं गर्भो भवति सुस्थितः ।
सर्वलक्षणसम्पन्नः पुत्रो भवति पावनः '॥ इति

अन्यत्र :— 'शुक्लपक्षे शुभे वारे पुंनक्षत्रे सुगोचरे ।
द्वादश्यां पुत्रकामाय चरुं कुर्वीत वैष्णवम् ॥

दम्पत्योरुपवासस्स्यादेकादश्यां सुरालये ।
ऋग्भिः षोडशभिः सम्यगर्चयित्वा जनार्दनम् ॥

चरुं पुरुषसूक्तेन प्राशयेत्पुत्रकाम्यया ।
प्राप्नुयाद्वैष्णवं पुत्रमचिरात्सन्ततिक्षम ' मिति ॥

तथाऽन्यत्र :— 'द्वादश्यान्तु चरुं सम्यक् पयसा निर्वपेद्द्विजः ।
यः करोति सहस्रं स याति विष्णोः परं पदम् ' ॥ इति *

एकाक्षरमान्वाहार्षमिति । फलं तत्रैवोक्तम् (?) 'त्वमग्ने रुद्र इति । पूर्वमेवोक्तम् । पवस्वादीनिति – 'पवस्व शतं वैखानसाः इति ।

आर्षेय ब्राह्मणे – 'अथ खल्वयमार्ष उपदेशो भवति ऋषीणां नामधेयगोत्रोपधारणं स्वर्ग्यं यशस्यं धन्यं पुण्यं पुत्र्यं पशव्यं ब्रह्मवर्चस्यं प्राक् प्रातराशकमित्याचक्षते

* शौनकवाक्योपात्तेषु, सर्वकामावाप्ति–आरोग्य–मृत्युनाशनां प्रमाणवाक्यानि नोपलभ्यन्ते ।

य इदमुपधारयेदेकैकस्यर्चे दिव्यं सहस्रमतिथिर्भवति । अभिनन्दितः पूजितो मानितः ततः स्वाध्यायफलमुपजीवति ' इति । आदिशब्देन पावमान्यादयः ।

' जपेद्वाऽप्यास्यवामीयं पावमानीरथापि वा ।
कुन्तापं वालखिल्यांश्च निविल्प्रैषं वृषाकपिम् ॥
होतृन् रुद्रान् पितृन् जप्त्वा मुच्यते सर्वपातकैः ' ॥ इति

श्रौते – ' माहित्रेण तृचेनाहवनीयमुपतिष्ठते । दूरं प्रवसन् स्वस्तिकामस्तमेतेन तृचेन पश्येत् स्वस्ति पुनरागच्छेच्छुद्धिकामश्चैतं जपे ' दिति ।

जपविधौ नियमः

अङ्गिराः ' प्रच्छन्नानि च दानानि ज्ञानञ्च निरहङ्कृति ।
जप्यानि च सुगुप्तानि तेषां फलमनन्तकम् ॥
यक्षराक्षसभूतानि सिद्धविद्याधरोरगाः ।
हरन्ति प्रसभं यस्मात् तस्मादुप्तन्तु कारयेत् ॥ गायत्र्यपि ।

व्यासः – ' यक्षरक्षःपिशाचाश्च ग्रहास्सर्वे विभीषणाः ।
जपिनं नोपसर्पन्ति दूरादेव प्रयान्ति ते ' ॥ इति

एवं नैमित्तिकं स्वाध्यायमधीयीत ।

याज्ञवल्क्यः – ' वेदधर्मपुराणानि सेतिहासानि शक्तितः ।
जपयज्ञार्थसिद्ध्यर्थं विद्याञ्चाध्यात्मिकीं जपेत् ' ॥ इति

मनुः – ' अपां समीपे नियतो नैत्यकं विधिमास्थितः ।
सावित्रीमप्यधीयीत गत्वाऽरण्यं समाहितः ' ॥ इति

अशक्तस्य गायत्री । ब्रह्मचारिणोऽपि ब्रह्मयज्ञः कर्तव्यत्वेन स्मर्यते । ' ब्रह्मयज्ञः, सर्वयज्ञानामादिः तस्मात् उपनयनप्रभृत्येव द्विजैः कर्तव्यः ' इति । तस्मात् ब्रह्मचारिभिः गृहस्थैर्विधुरादिभिश्च कर्तव्य एव ।

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ चतुर्थखण्डार्थविवरणं समाप्तम् ।

## अथ पञ्चमः खण्डः

**अशक्तो नित्यं पादौ प्रक्षाल्याचम्य 'अतो देवादि' वैष्णवं जप्त्वा दिव्यं वायव्यमाग्नेयं मान्त्रं वा स्नानं कृत्वा पूर्ववदाचमनादीनि कुर्यात् ॥ १ ॥**

'अस्नात्वा नाचरेत्कर्म जपहोमादि किञ्चन ।
स्नात्वाऽधिकारी भवति दैवे पित्र्ये च कर्मणि' ॥

इति स्मृते वारुणस्नानेऽशक्तस्य प्रकारान्तरेण स्नानविधिभेदान् वक्तुमुपक्रमते **अशक्त** इत्यादिना । **अशक्तः**—आतुरः । यद्वा राजतस्करादिभयाविष्टः । **नित्यं** प्रतिदिनम् । यद्वा नित्यकर्म । **पादौ प्रक्षाल्याचम्य 'अतो देवादि वैष्णवं जप्त्वा** । वैष्णवमिति जात्येकवचनम् ।

**पुराणे**:— 'यां शुद्धिं वैष्णवैर्मन्त्रैः आधत्ते वैष्णवो गुरुः ।
सर्ववेदधरोऽप्यन्यो नान्यैः कुर्वीत तादृशम्' ॥ इति

**दिवश्च्युतैः गाङ्गेयैराधावैः सातपैर्वर्षैर्वा आसेचनं दिव्यम् ॥ २ ॥**

वारुणव्यतिरिक्तान् स्नानभेदानुदाहरति **दिव्यमित्यादिना** । दिव्यं वायव्यं आग्नेयं मान्त्रं वा स्नानं कृत्वा पूर्ववदाचमनादि सन्ध्योपासनादीनि कुर्यात् । दिव्यस्नानलक्षणमाह **दिवश्च्युतैरिति** । दिवश्च्युतैः अनभ्रगतैः **गाङ्गेयैः**—आकाशगङ्गाजलैः । **सातपैः** आतपसहितैः । **आधावैः** जलैः । 'एतद्वा अपां नामधेयं गुह्यं यदाधावा' इति श्रुतेः । **आसेचनं दिव्यम्** । अनभ्रगतः सातपैर्वर्षैर्वाऽऽसेचनं दिव्यम् ।

**श्रीविष्णुपुराणे**— 'आकाशगङ्गासलिलं तदादाय गभस्तिमान् ।
अनभ्रगतमेवोर्व्यां सद्यः क्षिपति रश्मिभिः ॥
तस्य स्पर्शननिर्धूतपापपङ्को द्विजोत्तमः ।
न याति नरकं मर्त्यो दिव्यस्नानं हि तत् स्मृतम् ॥

दृष्टसूर्यं हि यद्वारि पतत्यभ्रैर्विना दिवः ।
आकाशगङ्गासलिलं यद्भोभिः क्षिप्यते रवेः ॥

कृत्तिकादिषु ऋक्षेषु विषमेष्वम्बु यद्दिवः ।
दृष्टार्कपतितं ज्ञेयं तद्गङ्गादिग्गजोज्झितम् ॥

युग्मर्क्षेषु च यत्तोयं पतत्यर्कोऽज्झितं दिवः ।
तत्सूर्यरश्मिभिस्सद्यः समादाय निरस्यते ॥

उभयं पुण्यमत्यर्थं नृणां पापहरं द्विज ।
आकाशगङ्गासलिलं दिव्यस्नानं महामुने ' ॥ इति

ग्रन्थान्तरे: — ' उत्तरायणमध्ये तु यदा वर्षति वासवः ।
आतपेन सह स्नानं दिव्यस्नानं तदुच्यते ' ॥ इति

**गवां पादोद्धतैः वायुनीतैः पांसुभिः स्पर्शनं वायव्यम् ॥ ३ ॥**

स्मृत्यन्तरे: — ' गोपुच्छन्तु समागम्य गोसावित्रीं जपेद्बुधः ।
गायत्रीमथ वा तच्च स्नानं वायव्यमुच्यते ' इति ॥

बृहस्पतिः — ' वायव्यं गोरजः प्रोक्तमस्तं गच्छति गोपतौ ।
द्विद्वत्सरस्वतीप्राप्तं स्नानं सारस्वतं स्मृतम् ॥

प्राप्य सारस्वतं तीर्थं भवेन्मुदितमानसः ।
सर्वतीर्थाभिषेकात्तु पवित्रं विदुषां हि वाक् ' ॥ इति

**भस्मना शुद्धेन सर्वाङ्गमालेपनमाग्नेयम् ॥ ४ ॥**

सङ्ग्रहे: — ' भस्म स्यादग्निहोत्रादेरावसथ्यादथापि वा ।
अभावे चानयोर्विप्र लौकिकाग्नेरथाऽहरेत् ॥

भस्मस्नानं जलस्नानादसंख्येयगुणाधिकम् ।
तस्माद्वारुणमुत्सृज्य स्नानमाग्नेयमाचरेत् ॥ ' इति

**' आपो हिष्ठाम ' इति मन्त्रेण आग्नेयेन तीर्थेन अभ्युक्षणं मन्त्रस्नानम् ॥ ५ ॥**

'पादादौ प्रणवं कुर्यादर्धर्चादौ यथाक्रमम् ।
ऋगादौ प्रणवं कुर्यान्मन्त्रस्नानविधौ नरः ॥
भुवि मूर्ध्नि तथाऽऽकाशे मूर्ध्न्याकाशे तथा भुवि ।
आकाशे भुवि मूर्ध्नि स्यान्मन्त्रस्नानं विधीयते' ॥ इति

याज्ञवल्क्यः — 'शन्न आपस्तु द्रुपदाऽऽप्यापो हिष्ठाऽघमर्षणः ।
एतैस्तु पञ्चभिर्मन्त्रैः मन्त्रस्नानं तदुच्यते' ॥ इति

**आग्नेयेन तीर्थेनाभ्युक्षणम् ।**

प्रचेताः — 'वैश्वानरेण यत्किञ्चित् कुरुते प्रोक्षणं द्विजः ।
गङ्गातोयसमं सर्वे वदन्ति ब्रह्मवादिनः' ॥ इति

(अशक्त इत्यादि सूत्रे) वा शब्देन स्नानान्तराणि संगृह्यन्ते ।

मनुः — 'मान्त्रं भौमं तथाऽऽग्नेयं वायव्यं दिव्यमेव च ।
वारुणं मानसञ्चेति सप्तस्नानान्यनुक्रमात् ॥
'आपो हि ष्ठा' दिभिर्मान्त्रं मृदालेपस्तु पार्थिवम् ।
आग्नेयं भस्मना स्नानं वायव्यं गोरजः स्मृतम् ॥
यत्तु सातपवर्षेण स्नानं तद्दिव्यमुच्यते ।
अवगाह्य वारुणं स्यान्मानसं विष्णुचिन्तनम् ॥
चतुर्भुजं महादेवं शंखचक्रगदाधरम् ।
मनसा ध्यायते विष्णुं स्नानं मानसमुच्यते ॥' इति

हारीतः — 'प्रातस्स्नातुमशक्तश्चेत्कापिलं स्नानमाचरेत् ।
नाभेरधः प्रविश्याप्सु कटिं प्रक्षाल्य मृज्जलैः ॥
आर्द्रेन कर्पटेनाङ्गमार्जनं कापिलं स्मृतम्' ॥ इति

स्मृत्यन्तरे: — 'गायत्र्या जलमादाय दशकृत्वोऽभिमन्त्र्य च ।
शिरस्यङ्गेषु सर्वेषु प्रोक्षयेत्तेन वारिणा ॥
स्नानं गायत्रिकं नाम सर्वपापप्रणाशनम्' ॥ इति ।

विष्णुः — ‘ त्र्यृचाऽभिमन्त्रितं तोयं प्रोक्षयेन्मूर्ध्नि सर्वतः ।
अनुकल्पमिदं स्नानं सर्वपापहरं नृणाम् ॥.

अज्ञानाद्यदि वा मोहात् रात्रौ दुश्चरितं कृतम् ।
प्रातःस्नानेन तत्सर्वं शोधयन्ति द्विजातयः ’ ॥ इति

याज्ञवल्क्यः — ‘ अगम्यागमनात् स्तेयात् पापेभ्यश्च प्रतिग्रहात् ।
रहस्याचरितात्पापात् मुच्यते स्नानमाचरन् ’ ॥ इति

मनुः — ‘ असामर्थ्याच्छरीरस्य वैषम्याद्देशकालयोः ।
स्नानान्येतानि तुल्यानि मानसं श्रेष्ठमुच्यते ’ ॥ इति

दक्षिणपाणेर्मध्यतलमाग्नेयं तीर्थम् ॥ ६ ॥

दक्षिणपाणेर्मध्यमित्यादिना देवर्षिपितृब्राह्मतीर्थानां लक्षणान्याह —

कनिष्ठांगुलिमूलं दैवम् ॥ ७ ॥

सर्वांगुलिमूलाग्रमार्षम् ॥ ८ ॥

अङ्गुष्ठव्यतिरिक्तानामित्यर्थः । ‘ अंगुष्ठस्य मूलं ब्राह्म ’ मित्युक्तत्वात् ।

प्रदेशिन्यंगुष्ठयोर्मध्यं पैतृकम् ॥ ९ ॥

अंगुष्ठस्य मूलं ब्राह्मम् ॥ १० ॥

दैवेन तीर्थेन (उपवीती) दैविकं कार्यम् ॥ ११ ॥

आर्षेणार्षम् ॥ १२ ॥

पैतृकेण पित्र्यं सर्वम् ॥ १३ ॥

ब्राह्मेण ब्रह्मतर्पणमाचमनम् ॥ १४ ॥

आग्नेयेन तीर्थेनाभ्युक्षणं करोति ॥ १५ ॥

दक्षिणहस्तमुद्धृत्योपवीतं धारयेदुपवीती ॥ १६ ॥

वाममुद्धृत्य प्राचीनावीती ॥ १७ ॥

**कण्ठसक्तं निवीती भवति ॥ १८ ॥**

उपवीतादिलक्षणमाह दक्षिणहस्तमित्यादिना । श्रुतिरपि । 'दक्षिणं बाहुमुद्धरतेऽवधत्ते सव्यमिति यज्ञोपवीतमेतदेव विपरीतं प्राचीनावीत" संवीतं मानुष'मिति ।

**स्नात्वा पुण्येऽहनि संस्कारहोमं जुहुयादिति विज्ञायते ॥ १९ ॥**

**स्नात्वे**त्यनेन समावर्तनम् **पुण्येऽहनी**त्यनेन विवाहयोग्यतिथिवार-नक्षत्रादीनि - **संस्कारहो**ममिति पाणिग्रहणसंस्कारश्चोच्यते । पाणिग्रहणे पुण्य-र्क्षादिप्रतिपादनाभावात् इतरसंस्कारेषु प्रतिपादनाच्च ब्राह्मादिविवाहानामपि पुण्येऽहनि कर्तव्यताज्ञापनार्थं **स्नात्वा पुण्येऽहनी**त्युक्तम् । यद्वा —

'ग्रहणोद्वाहसंक्रान्तियात्रार्तिप्रसवेषु च ।
स्नानं नैमित्तिकं ज्ञेयं रात्रावपि तदिष्यते' ॥

इत्युद्वाहोक्तस्य मङ्गलस्नानस्य पुण्यनक्षत्र एव कर्तव्यताज्ञापनार्थं **स्नात्वा पुण्येऽहनी**त्युक्तम् । श्रुतिः । 'समानस्याह्नः पञ्च पुण्यानि नक्षत्राणि चत्वार्य-श्लीलानी'ति । तानि ।

'नवभागमह्नः कृत्वा तत्र युग्मांशकास्तु ये ।
अश्लीलसंज्ञास्ते निन्द्या अन्ये पुण्याह्वकाश्शुभाः' ॥ इति

यद्वा — **संस्कारहोम**मित्यनेन शारीरसंस्कारा गृह्यन्ते । पुण्येऽहनि स्नात्वा पुण्येऽहनि संस्काराणां होमञ्च जुहुयात् । अनुक्ततिथिवारनक्षत्रादिषु कर्तुमयुक्त-त्वात् । गान्धर्वादिविवाहेषु कालनियमाभावात् तत्र पश्चाद्वा पुण्येऽहनि कर्त-व्यताज्ञापनार्थं **स्नात्वा पुण्येऽहनी**त्युक्तम् ।

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ पञ्चमखण्डार्थविवरणं समाप्तम् ।

---

## अथ षष्ठः खण्डः

—※०※—

अथ पुण्याहम् ॥ १ ॥

अथ स्नानादिनित्यकर्मानन्तरम् । नैमित्तिकत्वाद् पुण्याहस्य । पुण्याहः परिशुद्धिकृत् कर्म ॥

पञ्चावरान् श्रोत्रियानाहूयाभिपूजयति ॥ २ ॥

आचार्यः करकं 'धारा' स्वित्यद्भिरापूर्य 'इदमापश्शिवा' इत्यपोऽभिमन्त्र्य पुष्पादिभिः 'सर्वतीर्थजल' मित्यभ्यर्च्य प्रतिवाचकान् प्राङ्मुखानुदङ्मुखान्वा स्थापयित्वा उदङ्मुखः 'सुपुण्याहं करोमी' ति सङ्कल्प्य 'स्वस्ति सुप्रोक्षितमस्तु' इति स्थानं प्रोक्ष्य 'प्रजापतिः प्रियता' मित्युक्त्वा तैः 'प्रियता' मिति वाचयति ॥ ३ ॥

पञ्चावरान् पञ्चसंख्याऽहीनान् श्रोत्रियान् पूर्वोक्तलक्षणान् आहूयाभिपूजयति ।

आचार्यः ---

'आचिनोति हि शास्त्रार्थानाचारे स्थापयत्यपि ।
तस्मादाचार्य इत्युक्तः सर्वकार्योपदेशकः' ॥ इत्युक्तः ।

ब्रह्मपरमन्त्रत्वात् 'इदमापश्शिवा' इत्यभिमन्त्रणम् । श्रुतिः । 'ब्रह्मवादिनो वदन्त्यद्भिर्हवीँषि प्रौक्षीः केनाप इति ब्रह्मणेति ब्रूयात् अद्भिर्ह्येव हवीँषि प्रोक्षति ब्रह्मणाऽपः' इति । पुष्पादिभिरित्यादि गन्धपुष्पाक्षताद्यैः । करकाधिदेवतां पाञ्चभौतिकमपीत्यभिप्रायः । प्रतिवाचकान् ऋत्विजः प्राङ्मुखानुदङ्मुखान्वा स्थापयित्वा—पुण्याहकर्ता स्वयमुदङ्मुखः । सुपुण्याहं करोमीति संकल्प्य

'सदर्भहस्तो जानूर्ध्वे दक्षिणे दक्षिणोत्तरौ ।
कृत्वा जानुनि कर्तव्यमेतत्कर्म करोमि यत् ॥
स्वमानसेन स्मरणं यत्तत्सङ्कल्प ईरितः' ॥ इति

सङ्कल्पस्य सर्वकर्मस्वपि कर्तव्यताज्ञापनार्थं सर्वसाधारणे पुण्याहे प्रतिपादनम्। ननु — दैविकानि कर्माणि प्राङ्मुखेन कर्तव्यानि। पुण्याहस्यापि दैविकत्वात् कथमुदङ्मुखेन क्रियत इति चेत् - उच्यते।

शान्तिपर्वणि — 'यस्मादुत्तार्यते पापाद्यस्मान्निश्श्रेयसं चरेत्।
तस्मादुत्तारणफलादुत्तरेत्युच्यते बुधैः' ॥

इत्यतिशयगुणस्य विद्यमानत्वात् 'उदङ्मुखन्तु देवानां पितॄणां दक्षिणामुख' मिति शातातपस्मरणात् 'उदीचीनमुद्वासयति एषा वै देवमनुष्याणां शान्ता दिगि' ति श्रुतेश्च पुण्याहस्य जपरूपशान्तिकर्मत्वात्' उदङ्मुख इत्युक्तम्। स्थानं पुण्याहस्थलम्। यद्वा स्थण्डिलम्।

'शाम्यन्तु घोराणि' इत्युत्तरान्नं त्रिरपः स्रावयति ॥ ४ ॥

'अतो देवा' इत्यग्रं दैविके ॥ ५ ॥

'सन्त्वा सिञ्चामि' इत्यग्रं सूतके ॥ ६ ॥

'शुची वो हव्य' इत्यग्रं प्रेतके ॥ ७ ॥

अतोदेवा इत्यग्रमिति। ऋचामादौ अतो देवा इत्युक्त्वा सन्त्वा सिञ्चामि शुचीवो हव्या इत्यादि जपेत्। सन्त्वासिञ्चामीत्यग्रम्—आदौ सन्त्वा सिञ्चामि— अतो देवाः – शुचीवो हव्या इति। शुची वो हव्येत्यग्रम्—आदौ शुचीवोहव्य उक्त्वा सन्त्वा सिञ्चाम्यतो देवा इत्यादि जपेत्।

'द्रविणोदाः - सविता - नवो नवो - विद्युत् - शतं जीव - अष्टौ देवाः - हिरण्यरूपः - ऋद्ध्यामस्तोमं - आहार्षन्त्वा - अर्यमणं - सोमं राजानं - इन्द्रावरुणा - श्रिये जातः - या गुंगूः - यस्त्वा हृदा - यस्मै त्वं - नर्यप्रजां - सुत्रामाणं - शतायुधाय - दक्षिणावतां - भद्रं कर्णेभिः - शतमिन्नु - अदितिर्द्यौः' इति ऋत्विजस्सर्वे वदेयुः ॥ ८ ॥

सर्वे आचार्याद्याः।

अत्र पुण्याहं द्विविधं दैविकं मानुषञ्चेति। दैविकञ्च द्विविधं शुद्धं मिश्रञ्चेति। देवालयादिषु शुद्धं, शारीरेषु संस्कारेषु क्रियमाणं मिश्रम्। मानुषं द्विविधं सूतकं प्रेतकञ्चेति। यथा

क्रियाधिकारे: — दैविकेषु च सर्वेषु भूपरीक्षादिकर्मसु।
पुण्याहे विहिते सम्यक् यत्पुण्यमिति च ब्रुवन्॥
पुण्याहं स्वस्तिमृद्धिञ्च वाचयित्वा त्रिधात्रिधा।
स्वस्ति ऋद्ध्यास्मेति ततो वाचयित्वाऽन्तरान्तरा॥
आपो हिरण्य पवमानैः प्रोक्षयित्वा ततः परम्।
दक्षिणादानादाने च सूत्रोक्तविधिना चरेत्॥
हीनक्रियासु सर्वासु प्रायश्चित्तमिदं भवेत्।
गवादिदक्षिणां दत्वा पश्चात्कर्म समारभेत्' ॥ इति

इति श्रीमत्कौशिकवंशजेन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ षष्ठखण्डार्थविवरणं समाप्तम्।



# अथ सप्तमः खण्डः

—⁕०⁕—

देवाः-ऋषयः-पितरः-ग्रहाः-देव्यः-ऋषिपत्न्यः-पितृपत्न्यः वेदाः यज्ञाश्च सर्वाद्याः प्रियन्तामन्ताः ॥ १ ॥

तथाऽन्तः प्रतिवचनम् ॥ २ ॥

आचार्यः ऋत्विजश्च, अन्तः मध्ये, यद्वा—मन्त्रान्ते प्रियन्तामिति वदेयुः ।

पुण्याहं-शिवमायुष्यमारोग्यमविघ्नमचलमैश्वर्यं-यत्पापं तत्प्रतिहतं यच्छ्रेयः - शिवं कर्म - शिवः पक्षः इत्यस्त्वन्ताः ॥ ३ ॥

तथाऽन्तः प्रतिवचनम् ॥ ४ ॥

शिवा ऋतवस्सन्तु - शिवानि नक्षत्राणि भवन्तु - सर्वकर्मसमृद्धिरस्तु - सर्वधनधान्यसम्मृद्धिस्तु - इत्येकैकमुक्त्वान्तः प्रतिवचनम् ॥ ५ ॥

यत्पुण्यं स्वस्तिन-ऋद्ध्यास्स्मेति पूर्वोक्तमितरेऽनुवदेयुः ॥ ६ ॥

यत्पुण्यमित्यादिमन्त्रत्रयं आचार्येण पूर्वमुक्तमितरे ऋत्विजोऽनुवदन्ति । पुण्याहं भवन्तो ब्रुवन्त्वित्युक्ते ओं पुण्याहमित्यादिप्रतिवचनम् ।

*यजमानस्य नक्षत्रनामादिगोत्रनामान्तं मातृगोत्रनामान्तात्परं शर्मान्तं नाम प्रणवादि भवन्तो ब्रुवन्तु ॥ ७ ॥

अश्विन्यां आश्वयुजाय - गोत्राय ? लक्ष्म्याः सुताय शर्मणे अस्मिन् कर्मणि पुण्याहं भवन्तो ब्रुवन्त्विति । एवमेव भरण्यादिषु ।

---

*अत्र सुदर्शनाचार्यैः कृतं विवरणम्

रोरेममृज्येच्चिषु वृद्धिरादौ ष्ठात्पे च शान्त्यश्रवणाश्वयुक्षु ।

शेषेषु नाम्वोः कपरस्स्वरोऽन्त्यः स्वाप्वोरदीर्घः सविसर्ग इष्टः ॥

इदं फलितम् ॥ रोहिणी रेवती मघा मृगशीर्षा ज्येष्टा चित्रा इत्येतेषु आदौ वृद्धिः । रूपञ्च रौहिणः रैवतः माघः मार्गशीर्षः ज्यैष्ठः चैत्र इति । प्रोष्ठपदेत्यत्र ष्ठकारात्परे पकारे च वृद्धिः । प्रोष्ठपादः इति । शतभिषक्—शातभिषजः । अन्त्यश्रवणाश्वयुक्षु । अपभरणः—आपभरणः । श्रवणः, श्रावणः । अश्वयुक्—आश्वयुजः, शेषेषु न । कृत्तिकः—तिष्यः—आश्रेषः—फल्गुनः—हस्तः—विशाखः—अनूराधः—आषाढः—श्रविष्ठः । आम्वोः कपरः स्वरान्त्यः । आर्द्रकः—मूलकः । स्वाप्वोरदीर्घः सविसर्गश्च । स्वातिः पुनर्वसुः इति । (अन्त्यः—अपभरणः)

**पुण्याहं स्वस्ति ऋद्धयन्तं प्रत्येकं त्रिधा त्रिधा यथाविभक्ति वाचितमनुवाचयेयुः ॥ ८ ॥**

ओं पुण्याहं ओं स्वस्ति ओमृद्ध्यतामिति प्रतिवचनम्। यथाविभक्ति उक्तमनु वदेयुः।

**'आपोहिरण्यपवमानैः प्रोक्षयति ॥ ९ ॥**

पुण्याहपात्रजलं पात्रान्तरे कृत्वा प्रोक्षयेत्।

**पुण्याहे कृते तदहः पुण्यं भवति ॥ १० ॥**

सद्वारकत्वेन यजमानस्यापि पवित्रता अवगम्यते। बोधायनः – 'पुण्याहं भवन्तो ब्रुवन्त्वित्यनेनाहश्च नक्षत्रञ्च पूते भवतः। ते वैनं पूते पुनीत' इति। पुण्याहशब्दार्थस्तु 'स एव ब्राह्मणोऽष्टाविंशो नक्षत्राणां तस्य वचः पुण्य' मिति बोधयनेन निरुक्तः।

**आदावन्ते वा पुण्याहेन सर्वाः क्रियाः पुण्याः परिपूर्णा भवन्ति**

**'स्वाङ्कृतोऽ' सीति दक्षिणाकालमुक्तवन्तु 'घृतात्प' रीत्यद्भिः यथाशक्ति दक्षिणां हस्तेन दक्षिणेन ददाति ॥ १२ ॥**

'दर्भहीना तु या सन्ध्या यच्च दानं विनोदकम्।
असंख्यातं च यज्जप्तं तत्सर्वं निष्फलं भवेत् ॥'

इत्यद्भिर्दानमुच्यते।

**'त्वमग्ने यज्ञानां होतेति तामाददीरन् ॥ १३ ॥**

**यत्र दक्षिणादानादाने तत्रैवं स्यादिति विज्ञायते ॥ १४ ॥**

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ सप्तमखण्डार्थविवरणं समाप्तम्।

---

## अथ अष्टमः खण्डः

—※०※—

**अथाग्न्यायतनम्** ॥ १ ॥

**अथ**–पुण्याहानन्तरम् । यद्वा शुद्धे सति । **अग्न्यायतनम्** 'कुण्डे वा स्थण्डिले वापि अग्नेरायतनं द्विधा' इति भृगुवचनात् अग्न्यायतनं कुण्डस्थण्डिल भेदेनद्विधोच्यते । कुण्डेषु किमिति चेत् । गार्हपत्याद्यग्नीनां तत्तल्लोकाकारेण परिकल्पनमुपास्यत्वञ्च भगवच्छास्त्रे भृगुणा प्रतिपादितम् । यथा—

'ब्रह्माऽग्निं पञ्चधा सृष्ट्वा पञ्चलोकेष्वकल्पयत् ।
स्वर्गे चाहवनीयन्तु प्रतिष्ठाप्य ततः परम् ॥
तथाऽन्तरिक्षेऽन्वाहार्यं द्वितीयं परिकल्प्य च ।
भूम्याञ्च गार्हपत्याग्निं, महर्लोके तथैव च ॥
आवसत्थ्यं, जनोलोके सभ्यञ्चाग्निमकल्पयत् ।
चतुरश्रो यतः स्वर्गः कुण्डञ्चाहवनीयकम् ॥
चतुरश्रं समाख्यातं, चापवच्चान्तरिक्षकम् ।
अन्वाहार्यस्य कुण्डञ्च धनुराकृतिवत्ततः ॥
आकृतिर्मण्डलाकारो भुवस्तस्मात्तथाविधः ।
कुण्डञ्च गार्हपत्यस्य, महर्लोकः त्रियश्रकः ॥
आवसत्थ्यस्य तु प्रोक्तः तथा कुण्डस्त्रियश्रकः ।
चतुरश्रो जनोलोकः कुण्डस्सभ्यस्य तादृशः ॥
आकारञ्चाप्यथैतेषां तत्तल्लोकसमं विदुः ।' इति ।

**श्रुतावपि**—'अग्नयो वै त्रयी विद्या देवयानः पन्थाः, गार्हपत्यः ऋक् पृथिवी रथन्तरम्, अन्वाहार्यपचनो यजुरन्तरिक्षं वामदेव्यमाहवनीयः साम सुवर्गो लोको बृहत्, तस्मादग्नीन् परमं वदन्ति ॥' इति ।

यथा कालतो देशतो वस्तुतश्चापरिच्छिन्नमूर्तेः भगवतो नारायणस्योपासनार्थं उत्तमदशतालादिमानपरिकल्पनं 'अङ्गुष्ठमात्रोरवितुल्यरूपः सदा जनानां हृदये सन्निविष्टः' इति श्रुतेरङ्गुष्ठमात्रपरिकल्पनं च, एवमेव तदुपासनार्थञ्च कुण्डानां त्रिंशदङ्गुलादिपरिकल्पनमिति। आयतनकल्पनाभावेतु उपासितुमशक्यत्वादग्न्याय तनमुक्तम्।

**प्राक्प्रवणे चोत्तरप्रवणे वा शुद्धे देशे गोमयेनोपलिप्ते शुद्धाभिस्सिकताभिः प्राक्पश्चिमं दक्षिणोत्तरञ्च द्वात्रिंशदङ्गुलायतं त्र्यङ्गुलोन्नतं यथालाभोन्नतं वा स्थण्डिलमग्न्यायतनं भवति ॥ २ ॥**

श्रुतिः — 'पृथिव्यै मेध्यञ्चामेध्यञ्च व्युदक्रामतां प्राचीनमुदीचीनं मेध्यं, प्रतीचीनं दक्षिणाऽमेध्यं, प्राचीमुदीचीं प्रवणां करोति मेध्यामेवैनां देवयजनीं करोति' इति। किञ्च विशेषफलमपि प्रतिपाद्यते। **बोधायनः**। 'प्राचीनप्रवणं ब्रह्मवर्चसकामस्योदीचीनप्रवणमन्नाद्यकामस्य प्रागुदक्प्रवणं प्रजाकामस्य समं प्रतिष्ठाकामस्य' इति। गोमयस्य लक्ष्म्या निवासत्वेन शान्तिपर्वण्यभिहितत्वात **गोमयेनोपलिप्ते** इत्युक्तम्। **शुद्धाभिः सिकताभिः**। दोषरहिताभिः। सिकतादोषास्तु भगवच्छास्त्रे मरीचिना प्रतिपादिताः। यथा — 'अथातः सिकतादोषं व्याख्यास्यामः। भस्मकेशतुषकपालशर्करातृणास्थिपिपीलिकार्द्रसिकता वर्जयेत्। भस्मना यजमानक्षयः केशेन स्त्रीमरणं तुषेण पुत्रहानिः कपालैरर्थनाशनं शर्कराभिः बन्धुवियोगः तृणेन कर्मक्षयः अस्थिना ग्रामनाशनं पिपीलिकाभिः राष्ट्रनाशनं आर्द्रसिकताभिर्व्याधिभयं भवति' इति। **बोधायनेनाप्युक्तम्**। 'वैश्वानररूपत्वात्सिकताभि' रिति। **श्रुतिश्च**। 'सिकता निवपति। एतद्वा अग्नेर्वैश्वानरस्य रूप' मिति।

देवलः — 'यत्र प्रसूयते वापि म्रियते हन्यतेऽपि वा।
चण्डालाध्युषितं यत्र यत्र विष्ठादिसंहतिः॥
एवं कश्मलभूयिष्ठा भूरमेध्या प्रकीर्तिता।
श्वसूकरखरोष्ट्रादिसंस्पृष्टा दुष्टतां व्रजेत्॥

अङ्गारतुषकेशाद्यैरस्थिभिर्मलिना भवेत् ।
पञ्चधा वा चतुर्धा वा भूरमेध्या विशुद्ध्यति ॥
दुष्टा तु या द्विधा कृत्वा शुद्ध्यते मलिनैकधा ॥(?) इति ।

सिकताभावे

'केवलैस्तण्डुलैर्वापि तच्चूर्णेन मृदापि वा ।
गौरवर्णेन कुर्वीत स्थण्डिलं चतुरश्रक' मिति ॥

**प्राक्पश्चिमं दक्षिणोत्तरञ्च** । चकाराच्चतुरश्रत्वम् । यद्वा चकारेण न्यूनातिरिक्तत्वशङ्कानिरासः, अत्र वास्तुपरीक्षामधिकृत्य कश्यपेनोक्तम् — यथा । 'अध्यर्धायामं भौतिकं द्विदीर्घायामं राक्षसं किञ्चिद्धीनमासुरं किञ्चिद्दीर्घं पैशाचमित्यतस्सर्वं समं चतुरश्रं मण्डलं वा दण्डेन समुपकल्प्य खानये' दिति । **द्वात्रिंशदङ्गुलायतमित्यादि** । अङ्गुललक्षणम् ।

भृगुः — 'स्वहस्तेनाष्टतालो यस्स वै मध्यमपूरुषः ।
तस्य दक्षिणहस्तस्य मध्यमाङ्गुलिपर्वणा ॥
मध्यमेन मितं यत्तन्मात्राङ्गुलमिहोच्यते ।
गृहं शय्यासनं यानं पात्रमायुधमेव च ॥
इध्मस्रुक्स्रुवजुह्वादीन् कुर्यान्मात्राङ्गुलेन वै ।
मुष्टिमध्यप्रमेयस्स्यात् सोऽग्निकुण्डाऽदिकल्पने ॥
भेदो मात्राङ्गुलस्यैव शाखाङ्गुलसमाह्वयः' इति ।

श्रौते :— 'सर्वेषां याज्ञिकानां यजमानस्याध्वर्योर्वा दक्षिणहस्तस्य मध्यमाङ्गुलेर्मध्यमपर्वणा मानमाचरति' इति । **वा**शब्दो विकल्पार्थः केवलभूमिपरः ।

**परिस्तरणबर्हिषः प्रतिदिशं पञ्चदश स्थण्डिलप्रमाणाः** ॥ २ ॥

'पञ्चदश वा अर्धमासस्य रात्रयः । अर्धमासशः संवत्सर अप्यते । 'संव-त्सरः प्रजापतिः' इति **श्रुतिः** । यद्वा 'पञ्चदशो वज्रो भ्रातृव्याभिभूत्यै' इति ।

**कुण्डे षट्त्रिंशदङ्गुलाः ॥ ४ ॥**

**तथैकाङ्गुलिपरीणाहाः व्रणवक्रहीनाः परिधयः ॥ ५ ॥**

**तथा ।** परिस्तरणवत् दीर्घाः ।

भृगुः – 'समित्सु ग्राह्यमेवोक्तमेकैकन्तु पृथक्पृथक् ।
पालाशं खादिरं बैल्वमाश्वत्थादि चतुर्थकम् ॥

शमीचार्कमपामार्गं यथालाभं प्रकल्पयेत् ।
कनिष्ठिकापरीणाहं द्वादशाङ्गुलमायतम् ॥

चतुर्विंशाङ्गुलञ्चेध्मं सर्वेषां ? दोषवर्जितम् ।
सम्पाद्य बहुलञ्चेध्मं सर्वेषां होममाचरेत् ॥

होमश्चेच्छ्रामणाग्नौ तु समिधष्षोडशाङ्गुलाः ।
द्वात्रिंशदङ्गुलञ्चेध्ममवक्रं सम्प्रगृह्य च ॥

कण्टकि कृमिदष्टञ्च छिन्नचर्म पिपीलिकैः ।
कृशं स्थूलं पुराणञ्च समिदिध्म तु वर्जयेत् ॥

नदीतीरवनोद्यानदेवालयनगेषु च ।
पक्ष्यावासोरगावासजीर्णानि च विवर्जयेत् ॥

महापथे श्मशाने च क्रूरदेवालये त्यजेत् ।
वर्णानां ब्राह्मणादीनां कुम्भकारस्तु सङ्ग्रहेत् ॥

आसुरस्त्वशुचिश्चैव हीनजातिर्न सङ्ग्रहेत् ।
कण्टकि ग्रामनाशं स्यात्सुषिरं स्वामिनाशनम् ॥

शुष्कञ्चैव तु दारिद्र्यं कृमिर्दष्टिवि· ·शनम् ।
पिपीलिका तु त्वग्दोषं दीर्घे च ·रणं भवेत् ॥

चर्मछेदे तु दौर्बल्यं पक्ष्यावासैश्च मूषिकैः ।
दूषितैश्चापि हुत्वा तु दुर्भिक्षव्याधितस्कराः ।

जीर्णालयोस्थैर्हुत्वातु तदारण्यं न संशयः ॥
आसुराशुचिनीताभिरनावृष्टिभयं भवेत्' ॥ इति ।

१ मृत्यर्चसारे— 'पलाशखदिराश्वत्थबिल्वौदुम्बरजा समित् ।
अपामार्गा च दूर्वा च कुशाश्चेत्यपरे विदुः ॥
वनस्पतीनां सर्वेषामिध्मः कार्यो विशेषतः ।
तत्रैतान् वर्जयेद्वृक्षान् कोविदारविभीतकान् ॥
कपित्थामलकान् राजन् वंशवृक्षांस्तथैव च ।
नीपनिम्बकरञ्जांश्च तिलकं शाल्मलीमपि ॥
श्लेष्मातकमपि त्याज्यमेते सङ्करजास्स्मृताः ।
समिधां लक्षणं वक्ष्ये सङ्ख्यामासां तथैव च ॥
विशीर्णा विदला ह्रस्वा वक्राश्च सुषिराः कृशाः ।
अतिस्थूलातिदीर्घाश्च समिधः कार्यनाशनाः ॥
विशीर्णायुःक्षयं कुर्यात् विदला पुत्रनाशिनी ।
सुषिरा व्याधिजननी कृशा च रिपुवर्धिनी ॥
दीर्घा विदेशगमनी स्थूला चात्मविनाशिनी ।
अकृशाः स्युः समाः स्थूला आर्द्राश्च सपलाशिनः ॥
प्रादेशान्नाधिकाश्चैव समिधस्सर्वकर्मणि ।

अतो व्रणवक्रहीना इत्युक्तम् ।

**पञ्चदशदर्भैर्ग्रथितं चतुरङ्गुलाग्रं द्व्यङ्गुलग्रन्थि हस्तमात्रं प्रोक्षणकूर्चम् ॥ ६ ॥**

*(यज्ञाधिकारे :— चतुर्विंशत्यङ्गुलं किष्कुः पञ्चविंशत्प्रजापतिः ।
धनुर्ग्रहश्च षड्विंशद्धनुर्मुष्टिस्सप्तविंशतिः ॥

* एषां वचनानामत्रोदाहरणं असङ्गतमिव भाति ।

एतैश्चतुर्गुणं दण्डः तद्दण्डेन तु वेश्मनाम् ।
विन्यासं कारयेद्वाथ दण्डच्छेदं विना सदा ॥

हस्तेन देवताऽऽवासं मनुष्यसदनादिकम् ।
शयनादिं वितस्त्या च अङ्गुल्यादिदशादिकान् ॥

यवेन च तिलेनैव मितमेतद्गृहार्चने ।
प्राजापत्येन हस्तेन देवतामन्दिरं स्मृतम् ॥

धनुर्ग्रहेण वासश्च धनुर्मुष्ट्याथवा पुनः ।
किष्कुणा वा मनुष्यस्य विश्वेषां वाथ किष्कुणा ॥ )

दर्भाश्च स्त्रीपुंनपुंसकभेदेन त्रिधा ।

प्रकीर्णे—
मूलस्थूलं भवेन्नारी अग्रस्थूलं नपुंसकम् ।
मूलादग्रं क्रमाद्वृत्तं पुंदर्भमिति कथ्यते ॥

अप्रसूताः स्मृताः दर्भाः प्रसूतास्तु कुशाः स्मृताः ।
समूलाः कुतपाः प्रोक्ताः छिन्नाग्रास्तृणसंज्ञकाः । इति ।

**तथैव द्वादशाङ्गुलमात्रं पवित्रम् ॥ ७ ॥**

तथैवेत्युक्तत्वात् पञ्चदशदर्भैरिति चेत्—न । श्रौते—'समावप्रवन्तौ दर्भौ प्रादेशमात्रौ पवित्रे' इत्युक्तत्वात् । 'पवित्रेस्थ' इति मन्त्रे च तथा दृश्यते । द्वाभ्यामगर्भदर्भाभ्यां पवित्रं कारयेद्बुधः' इति स्मृतेः । 'उदगग्रे पवित्रे कुरुत' इतिसूत्रे उत्तरत्र वक्ष्यमाणत्वाच्च ।

'स्मृतेर्वेदविरोधे तु परित्यागो यथा भवेत् ।
तथैव लौकिकं वाक्यं स्मृतिबा त्परित्यजेत् ॥'

इति चतुर्विंशतिमतवचनात्,

'श्रुतिस्मृतिविरोधे तु श्रुतिरेव बलीयसी ।
अविरोधे सदा कार्यं स्मार्तं वैदिकवत् सदा ॥'

इति लोकाक्षिस्मरणात् ।

श्रुतिस्मृतिपुराणेषु विरुद्धेषु परस्परम् ।
पूर्वंपूर्वं बलीयस्स्यादिति वेदविदो विदुः' ॥

इति स्मृत्यन्तरवचनाच्च श्रुत्यनुसारेण द्वाभ्यामेव कर्तव्यम् ।

**तत्प्रमाणा याज्ञिकास्समिधः ॥ ८ ॥**

अत्र यथा तच्छब्दः पञ्चदशसङ्ख्यां विहाय दैर्ध्यमात्रपर्यवसायी तथा पूर्वत्रापीति भावः । द्वादशाङ्गुलप्रमाणा इत्यर्थः ।

**पात्रस्रुगादयो यज्ञे प्रोक्ताः ॥ ९ ॥**

यज्ञोक्तवृक्षाः **पात्रस्रुवादयः** । पात्रशब्देन आद्याः

'जुष्टाकारद्वयं पात्रं ब्रह्मसोमौ तथैव च ।
प्राणिधी चाज्यपात्रञ्च सप्तपात्रं पृथक् पृथक् ॥'

इति वासाधिकारे उक्ताः ।

**स्रुवादयः** स्रुवजुहूपभृदादयः । **यज्ञे** यज्ञीये यज्ञसूत्रे **प्रोक्ताः** वक्ष्यमाणः ।

**श्रौते** – 'जुह्वादीनां स्रुचां चतसृणामायामश्चतुर्विंशत्यङ्गुलं बाहुमात्रं वा, मूलेन मूलमग्रेणाग्रं त्वक्पार्श्वोर्ध्वबिलञ्च कर्तव्यम् । दण्डस्यायामो द्वादशाङ्गुलं मूलनाहमष्टाङ्गुलमग्रनाहं षडङ्गुलं तदूर्ध्वे द्वादशाङ्गुलं तस्मिंस्त्र्यङ्गुलं घनं षडङ्गुलविस्तारमग्रं गजोष्ठवद्वा बिलं निम्नमग्रान्तं घृतधारापातार्थं कुल्याञ्च कारयेत् । ध्रुवा दण्डस्योर्ध्वे चतुरङ्गुलं घनं मध्ये द्व्यङ्गुलं निम्नञ्चेति विशेषः । जुहूवदायामौ दर्शपूर्णमासाग्निहोत्रार्थौ स्रुवौ । द्वयोश्च दण्डायाममेकविंशत्यङ्गुलं तन्मूलमग्रञ्च पूर्ववद्दण्डोर्ध्वे द्व्यङ्गुलं घनं नासिकवद्द्विपुटं बिलं तत्पुटयोर्विस्तारं निम्नञ्चैकाङ्गुलम् । एतेषां बाहुमात्रायामेऽप्यविशेषः । ऊर्ध्वे साग्रं बिलमेकमेवेति विज्ञायते । शिष्टं दण्डायामं कुर्वीत । स्फ्यस्यायामो द्विप्रादेशः । तस्य विस्तारं घनञ्च द्व्यङ्गुलं हंसस्य मुखवन्मूलं खननार्थमग्रं कुशतीक्ष्णञ्च । २१-७ ॥ शम्या जुहूवदायामा तथैव दण्डस्य मूलमग्रञ्च । दण्डं विंशत्यङ्गुलमूर्ध्वेऽग्रे चतुरङ्गुलं पद्मस्य मुकुलोपमं कुम्बमेतस्य बाहुप्रमाणे चैवं कुम्बशेषं दण्डायतं कुर्यात् । अष्टाङ्गुलि-

विस्तारायता प्रणीता चतुरङ्गुलोन्नता मध्ये षडङ्गुलविस्तारायता त्र्यङ्गुलनिम्ना चतुरश्रा प्रस्थार्धोदकपूर्णा वृत्ता वा तथा करोति । दोहनी प्रस्थपयःपूर्णा । मेक्षणं स्फ्यायामविस्तारं घनमेकाङ्गुलं द्व्यङ्गुलं वा । चतुरङ्गुलिविस्तारायतमग्रं प्राशित्रपात्रं द्वादशाङ्गुलायामं तस्य मूलं त्र्यङ्गुलमुन्नतं चतुरङ्गुलं तदूर्ध्वं नवाङ्गुलायतं षडङ्गुलिविस्तारञ्च । मध्ये द्वादशाङ्गुलायतं चतुरङ्गुलविस्तारं मूलं त्र्यङ्गुलं निम्नम् । तत्प्रमाणाकारौ गोकर्णवद्वा भवेताम् । इडापात्रं चतुर्विंशत्यङ्गुलायतं तदूर्ध्वविस्तारमुन्नतञ्च प्रादेशमूलविस्तृतं प्रादेशार्धं भित्तिः परितश्चैकाङ्गुला मध्यतः शेषविस्तारायतं दशाङ्गुलं निम्नम् । चमसं प्रस्थपूर्णं सुवृत्तं चतुरश्रं वा भवेत् । उलूखलं हस्तोन्नतं तस्य नाहं द्विगुणं परितो भित्ति द्व्यङ्गुलायतं अष्टकशेषाङ्गुलविस्तारायतं बिलम् । तस्य निम्नं षोडशाङ्गुलम् (२२-८) ॥ मुसलं चतुर्हस्तं यजमानायतं वा युक्तनाहं मूलेऽयसा निबद्धमेतौ यावता हविर्द्रव्यस्यावघातयोग्यौ तावत्प्रमाणौ वा । वेणुवेत्रकरीषकेष्वेकेनारत्निमात्रायतं वृत्तमूलं विंशत्यङ्गुलिविस्तारं अष्टादशाङ्गुलिविस्तारं वा क्रमान्न्यूनं द्व्यङ्गुलाग्रं शूर्पम् । याज्ञिकं यत्किञ्चित्काष्ठं द्वितालदीर्घं धृष्टिः । अधरा दृषदूर्ध्वोपला च पेषण्यौ सम्पेषणशक्ते तथा ग्रावाणौ द्वौ यथोक्तयोग्यौ । मृण्मयी प्रस्थपूर्णा चरुस्थाली कांस्यायसादिलोहमयीत्येके । विंशत्यङ्गुलविस्तारायता पिष्टसंयवनी पात्री, सुवृत्ता चतुष्प्रस्थोदकपूर्णा मदन्ती । यावत्पयोदोहः तावत्पयःपूर्णौ सान्नाय्यदधिकुम्भ्यौ च । संयुक्तेषु पुरोडाशनिधानाय यावताऽलं तदुक्तसङ्ख्याप्रमाणानि कपालानि द्व्यङ्गुलायतविस्ताराणि वा । सर्वेषां घनमर्धाङ्गुलम् । प्रस्थतण्डुलपाका चरुस्थाली । हविश्शेषदानोक्ते द्विप्रस्थतण्डुलपाका वा प्रस्थार्धतण्डुलपाका प्रस्थचतुर्भागतण्डलपाका वा । संस्रावस्रोतोयुक्ता वृत्तोर्ध्वकपाला अग्निहोत्रस्थाली । द्रोणार्धतण्डुलपाकाऽन्वाहार्यपचनस्थाली । प्रस्थपूर्णस्तदर्धपूर्णो वा शरावस्स्यात् । (२२-९) ॥ कर्मण्यधिके च तथैवाधिकानि पात्राणि अपेक्षणीयानि लौकिकानि भाण्डानि तत्तत्कर्मार्हाणि स्युः । द्विप्रादेशैः कुशैः दर्भैः प्रादेशविस्तृतं द्विकानुबन्धमग्रे ग्रथितञ्चोपावहरणीयं कूर्चं तथैवोपसादनीयं समसमादधाति । प्रादेशं वितस्तिस्तालमिति द्वादशाङ्गुलस्य हस्तोऽरत्निरिति चतुर्विंशत्यङ्गुलस्य संज्ञा भवेत् । सिकतासूक्तासु शुष्कास्सिकता ग्राह्याः । तास्वार्द्र-

तृणमृत्काष्ठाश्मलोष्टलोमादीन् विसृजेत्। परिस्तरणकूर्चपवित्रादीनां बर्हिरुक्तौ कुशान् काशानाश्ववालान्वा तदलाभे सुगन्धितेजनमुञ्जोलपश्यामाकनीवार सस्य दूर्वातृणान्यन्यानि पलालानि वा गृह्णाति। शुष्ठशरशूकविशीर्णतृणनडदमूत बल्बजानि वर्जयेत्। परिधीध्मोक्तौ पलाशखदिरबिल्वाश्वत्थशमीनां शाखाः समिधः परिधयश्च मुख्याः। विकङ्कतोदुम्बरन्यग्रोधप्लक्षकार्ष्मर्यपौतुद्रवरोहितकादीनां यज्ञोक्तवृक्षाणां मध्यमाः। तदन्यवनस्पतीनां गौणाः। स्वयं शुष्का न ग्राह्याः। (२२ १०) ॥ त्रिपर्णास्सर्वे पलाशोपमाः। सर्वत्र विहितद्रव्याभावे प्रतिनिधीन् गृह्णीयात्। अनामिकाङ्गुलिनाहाः मुख्याः कनिष्ठाङ्गुलिनाहा मध्यमा न्यूननाहा गौणाः। शम्योदुंबराः परिधय इत्येके। मूलाग्रे विज्ञाय प्रागग्राः समिधो होतव्याः। निम्बश्लेष्मातकनीपतिल्वराजवृक्षविभीतकशाल्मलि कोविदारकरञ्ज-बाधकारुनिर्गुण्डीपलाण्डुजपानां समिधः परिधींश्च वर्जयेत्। हविरुक्तौ यवनी-वारवेणु श्यामाकव्रीहिजातिप्रियङ्गवो धान्यानि हविष्याणाम्। तेषामलाभे मूलकन्दफलानि ग्राह्याणि। सर्वेषु धान्येषु वरककोदारकोद्रवाणि वर्जनीयानि। आज्योक्तौ गव्यं घृतं श्रेष्ठम्। तदलाभे घृतं आजं माहिषं वा। तदलाभे पयस्तैलं सार्षपं प्रतिनिधिः। कुसुम्भातसीनारिकेलवृक्षाणां स्नेहमन्यच्च यद्रस-वद्भोज्यं तद्वापि पिष्टमिश्रोदकञ्च होम्यं भवति। अभोज्यं गन्धरसदुष्टञ्च वर्जनीयम्। सर्वेषां पूर्वं पूर्वं श्रेष्ठतमम्। पूर्वेषामभावे परं गृह्णा'तीति। (२२-११) ॥

व्यासः— 'हव्यार्थे गोघृतं ग्राह्यं तदलाभे तु माहिषम्।
आजं वा तदलाभे तु साक्षात्तैलमपीष्यते' ॥ इति

श्रुतौ च—'वषट्कारो वै गायत्रियै शिरोऽच्छिनत् तस्यै रसः परापतत् स पृथिवीं प्राविशत्। स खदिरोऽभवद् यस्य खादिरः स्रुवो भवति छन्दसामेव रसेनावद्यति सरसा अस्याहुतयो भवन्ति। तृतीयस्यामितो दिवि सोम आसीत्तं गायत्र्याहरत्तस्य पर्णमच्छिद्यत तत्पर्णोऽभवत्तत्पर्णस्य पर्णत्वम्। यस्य पर्णमर्णायी जुहूर्भवति सौम्या अस्याहुतयो भवन्ति जुषन्तेऽस्य देवा आहुतीः। देवा वै ब्रह्मन्नवदन्त तत्पर्ण उपाशृणोत् सुश्रवा वै नाम। यस्य पर्णमयी जुहूर्भवति न स पापꣳ श्लोकꣳ शृणोति' इत्यादि।

दर्भेषु वर्ज्यानाह

व्यासः– 'छिन्नमूला गृहीतव्याः प्रस्तरार्थं कुशोत्तमाः ।
अग्निकार्ये च होमे च सन्नतान् परिवर्जयेत ॥

कात्यायनः– हरिता ये त्रिधा दर्भा धवलाः पाकयज्ञियाः ।
समूलाः पितृदेवत्याः कल्माषा वैश्वदेविकाः ॥

हारीतः– 'पथि दर्भाश्चितौ दर्भा ये दर्भा यज्ञभूमिषु ।
स्तरणासनपिण्डेषु षट्कुशान् परिवर्जयेत् ॥

ब्रह्मयज्ञेषु ये दर्भाः ये दर्भाः पितृतर्पणे ।
हता मूत्रपुरीषाभ्यां तेषां त्यागो विधीयते ॥

स्रुवादीनामलाभे तु पलाशस्य तथैव च ।
किंशुकस्याथवा मध्यपत्रेणैव प्रकल्पयेत् ॥

अथवाऽश्वत्थपत्रेण कुर्यात् होमं यथाविधि ।
ये त्वन्तर्गर्भिता दर्भा ये च छिन्ना नखैस्स्मृताः ।
कथिताश्चाग्निदग्धाश्च दर्भास्तान् परिवर्जयेत् ॥ इति ।

**दर्भेषु द्वन्द्वं पात्रादिसम्भारानुत्तरे दविके प्रत्येकं दक्षिणतः पैतृके सम्भरति ॥ १० ॥**

अग्न्यायतनस्योत्तरे दैविके निषेकजातकर्मोत्थानव्यतिरिक्तेषु कर्मसु द्वन्द्वं दर्भेषु सम्भरति । जातकर्मण्युत्थाने च सहैव । केवलमानुषत्वादाशौचे क्रियमाणत्वाच्च । दक्षिणतः स्थण्डिलस्य दक्षिणतः प्रत्येकं सम्भरति । श्रुतिरपि । 'यदेकमेकं सम्भरेत्पितृदेवत्यानि स्युर्यत्सह सर्वाणि मानुषाणि द्वे द्वे सम्भर' तीति । निषेकादिषु सहैव ।

आरण्यपर्वणि– 'यच्चापि पात्रमुपयुज्यते भवान्
वानस्पत्यमायसं पार्थिवं वा ।
दिव्येन रूपेण च प्रज्ञया वा
तेनैव रूपेण भुक्तमिति विद्धि विद्वन्' । इति

शालालक्षणादिकं श्रौते प्रतिपादितम्। 'गृहे सौम्ये पश्चिमपूर्वायतां तथाऽनुवंशां पूर्वदक्षिणयोर्द्वारयुतामग्निशालां कल्पयति। अस्थिरोमकेशतुषाङ्गार-काष्ठाश्मलोष्टपिपीलिकादीन्वर्जयित्वा मृदा शुद्धया पश्चिमे 'भू' रिति गार्हपत्यायतनं रज्ज्वाऽष्टादशाङ्गुल्या वृत्तं भ्रामयित्वाऽष्टाङ्गुलोन्नतं स्थण्डिलं कृत्वा परितश्चतु-रङ्गुलिविस्तारं हित्वा मध्ये षडङ्गुलनिम्नं खनति। शिष्टं तदूर्ध्वमेखला स्यात्। तत्परिगतां चतुरङ्गुलिविस्तारोन्नतामधोमेखलां करोति। तत्प्राच्यामष्टपदप्रक्रमे ब्राह्मणस्यैकादशपदप्रक्रमे क्षत्रियस्य द्वादशपदप्रक्रमे वैश्यस्यापि 'भुव'रित्याहव-नीयाग्न्यायतनं चतुरश्रं चतुर्दिक्षु द्वात्रिंशदङ्गुल्यायतमष्टाङ्गुलोन्नतं स्थण्डिलं प्रकल्प्य पूर्ववत्परितो हित्वा मेखलामूर्ध्वां मध्ये निम्नमधोमेखलां करोति। द्वयो-र्मध्ये 'वेदिर' सीत्युक्त्वा गार्हपत्याहवनीयसम्बन्धां दक्षिणोत्तरयोश्चतुरङ्गुलिविस्ता-रोन्नतां तदन्तरे षोडशाङ्गुलिविस्तारां वेदिं कुरुते। (१२-२)॥ वेद्यां दक्षिणस्यां पश्चिमभागे 'सुवः' इत्यन्वाहार्यपचनं पञ्चविंशत्यङ्गुल्या वृत्तं भ्रामयित्वा दक्षिणार्धेऽर्ध-चन्द्राकारं स्थण्डिलं पूर्ववत्तस्योन्नतं मध्यनिम्नमूर्ध्वाधरा मेखला च। वेद्युत्तरं त्रिधा कृत्वा पूर्वभागोत्तरे प्रक्रमे वेद्युन्नतमुत्करं कुर्यात्। 'आहवनीया-त्प्राच्यां 'जन' इति सभ्याग्न्यायतनं द्वादशाङ्गुलोन्नतमाहवनीयवच्चतुरश्रं स्थण्डिलं परितस्तथैव हित्वा द्वादशाङ्गुलं मध्यनिम्नं चतुरङ्गुलिविस्तारोन्नतास्तिस्रो मेखलाः। पञ्चाङ्गुलिविस्तारा मध्यमा मेखला। तत्प्राच्यां 'मह' इत्यावसथ्याग्न्यायतनं त्रिकोणं पश्चिमदक्षिणोत्तरेषु पञ्चचत्वारिंशदङ्गुल्यायतं स्थण्डिलं तस्योन्नतं मध्ये निम्नं द्वे मेखले च पूर्ववत्। आवसथ्यं चतुरश्रमित्येके। सर्वेषां याज्ञिकानां यजमानस्याध्वर्योर्वा दक्षिणहस्तस्य मध्यमाङ्गुलेर्मध्यमपर्वणा मानमाचरति' इति। (१२-३)॥

**नित्यहोमेऽग्निशालायां मृदा चतुर्दिशं द्वात्रिंशदङ्गुलायतां चतुरङ्गुलविस्तारां द्व्यङ्गुलोन्नतामूर्ध्ववेदिं चतुरङ्गुलविस्तारोन्नतां तत्परिगतामधोवेदिं मध्ये निम्नं षडङ्गुलमग्निकुण्डं कृत्वा अस्मिन् गृहस्थोऽग्निमौपासनमाधाय नित्यं जुहोति॥ ११॥**

अस्मिन्नित्यनेन चुल्यादावौपासनप्रतिषेधः। 'न चुल्यामौपासनं जुहुया'दिति बोधायनः। कुण्डे स्थण्डिले वा कर्तव्यमित्यभिप्रायेण अस्मिन्नित्युक्तम्। **गृहस्थ** इत्युक्तत्वादितरेषां निवृत्तिः। **औपासनमिति**।

'विवाहादि गृहस्थेन निधायाजस्रमेव च।
होमैरुपासनादग्निरौपासन इतीरितः' ॥ इति भृगुः

अन्यत्र-- 'यद्वाऽऽहवनभेदोऽयमग्निरौपासनो यतः।
कुण्डमौपासनस्यापि ज्ञेयमाहवनीयव'दिति ॥

अत्र विशेषः खिले।

'दक्षिणे ब्रह्मणः स्थानं षोडशाङ्गुलमायतम्।
चतुरश्रं समं कृत्वा भागोन्नतमनिन्दिताः ॥

तस्य पश्चिमभागे तु पितृस्थानं प्रकल्पयेत्।
षोडशांगुलमायाममुन्नतं गोलकं भवेत् ॥

शूर्पाकारञ्च कृत्वा तु दक्षिणाग्रं प्रकल्पयेत्।
उत्तरे सोममुद्दिश्य षोडशांगुलमायतम् ॥

भागोन्नतं तथा कुर्यात्समवृत्तं विचक्षणः।
वेदिप्रमाणं कर्तव्यं ................ ॥ इति

**वनस्थस्य श्रामणकाग्नेः कुण्डमाधानविशेषश्च धर्मे वक्ष्यामः॥१२**

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ अष्टमखण्डार्थविवरणं समाप्तम्।

---

## अथ नवमः खण्डः

—*०*—

**अथाऽघारविधानम्** ॥ १ ॥

अथ — कुण्डसम्भारादिसङ्ग्रहणानन्तरम् । **आघारविधानमाघारविधिः** । 'शिरो वा एतद्यज्ञस्य यदाघारः' इति श्रुतेः, 'शिरो वा अग्रे सम्भवति, चतुर्धा विहितं वै शिरः प्राणश्चक्षुः श्रोत्रं वागात्मे'ति छन्दोगब्राह्मणवचनात्, 'शिरस्येव प्राणा धीयन्ते' इति श्रुतेश्च आघारविधानमित्युक्तम् ।

**ब्राह्मं प्राङ्मुखमासीनः 'एतोन्विन्द्र' मित्यग्न्यालयं प्रोक्ष्य 'मयि देवा' इत्यादिभिश्चतुर्दिशं दर्भानुक्षयेत्** ॥ २ ॥

ब्रह्मासनलक्षणं ब्रह्मयज्ञे उक्तम् । प्राङ्मुखमासनं यथा भवति तथा । **छन्दोगब्राह्मणे** — 'प्राञ्चोऽस्य ऋत्विज आर्त्विज्यं कुर्वन्ति तस्मादेषा दिशां वीर्यवत्तमा । एतां हि भूयिष्ठाः प्रीणन्ति । ब्रह्मवादिनो वदन्ति कस्मात्सत्यात्प्राञ्चोऽन्य ऋत्विज आर्त्विज्यं कुर्वन्ति विपरिक्रम्योद्गातारः इति दिशामभिष्ट्यै दिशामभिप्रीत्या इति ब्रूयात् । तस्मात्सर्वासु दिक्ष्वन्नं विद्यते सर्वा ह्यभीष्टाः प्रीता' इति । **यजुषि** 'देवमनुष्या दिशो व्यभजन्त' — 'प्राचीं देवा दक्षिणां पितरः' इत्याद्युक्तेः प्राङ्मुखमित्युक्तम् । 'आसीनो हविर्यज्ञादिषु ऊर्ध्वस्तिष्ठ'न्निति तिष्ठतो होमविधानात् निषेकादिष्वपि तथेति शङ्कायां तद्व्यावृत्त्यर्थ**मासीन** इत्युक्तम् । 'पाकयज्ञसंस्थानां न तिष्ठद्धोमो विद्यते' इति बोधायनस्मरणात् पाकयज्ञेष्वेवेति चेन्न — 'सर्वहोमानामादिराघारो विज्ञायते' इत्युत्तरत्र वक्ष्यमाणत्वात् । अत्र केचिदूचुः — ब्राह्म प्राङ्मुखमासीन इत्यग्निपरत्वेन । तदसत् । कर्तृनियमाभावात् उदङ्मुखेनापि कर्तुमुचितं भवेत् ।

**कात्यायनः** — 'यत्र दिङ्नियमो नास्ति जपहोमादिकर्मसु ।
तिस्रस्तस्य दिशः प्रोक्ता ऐन्द्री सौम्या पराजिता' ॥

आसीन ऊर्ध्वं प्रह्वो वा नियमो यत्र नेदृशः ।
तदासीनेन कर्तव्यं न प्रह्वेण न तिष्ठता' ॥ इति ।

आसनोक्तौ प्रचेताः ।

गोशकृन्मृन्मयं भिन्नं तथा पालाशमेव च ।
लोहाश्वत्थं तथैवार्कं वर्जयेदासनं बुधैः ' ॥ इति ।

ग्राह्याणि यथा :—

' उदुम्बरवटाश्वत्थप्लक्षजम्बूकमादयः (?) ।
अश्मपीठस्तथा चैवाप्यटवीस्थतरूद्भवाः ' ॥ इति ।

सर्वशुद्ध्यर्थं प्रोक्षणम् । छन्दोगब्राह्मणे—' शुद्धाशुद्धीये भवतः ' । यजुषि—' इन्द्रो यतीन् सालावृकेभ्यः प्रायच्छत् ' अन्यत्र—' तमश्लीला वागभ्यवदत् । सोऽशुद्धो मन्यत । स एते शुद्धाशुद्धीये अपश्यत् ताभ्यामशुद्ध्यत् । यदेव बहु प्रतिगृह्य यदनं(?) नमति । यदशुद्धो मन्यते । तदैताभ्यां शुद्ध्यति ' इति । षड्विंशब्राह्मणे च—' बहु प्रतिगृह्य याजयित्वा वा सन्नमात्मानं मन्यमानो गोसूक्ताश्वसूक्ते शुद्धाशुद्धीये तरत्समन्दीत्येताः प्रयुञ्जानः पूतो भवति ' इति । उक्षयेत् इति । दक्षिणहस्तेनोत्तानेन सेचनं प्रोक्षणं करतलमवाक् कृत्वा सेचनमवोक्षणं ऊर्ध्वाङ्गुष्ठेन मुष्टिनाऽभितः सेचनमभ्युक्षणम् । एवं कूर्चेन वा कुर्यात् । 'अपामेव मेध्यांशा दर्भा' इति श्रूयते । तथा यजुषि—' इन्द्रो वृत्रमहन्त्सोऽपोभ्यं म्रियत । तासां यन्मेध्यं यज्ञियँ सदेवमासीत्तदपोदक्रामत्ते दर्भा अभवन् ' इत्यादि ।

**' उद्धन्यमान ' मिति मध्यपूर्वापरयमाग्निनिर्ऋतिसोमेशानमरुतो बर्हिषा खनति ॥ ३ ॥**

खननममेध्यांशनिरसनार्थम् । श्रुतिः । ' उद्धन्ति यदेवास्या अमेध्यं तदपहन्ति ' इति । ' उद्धन्ती ' ति अत्र बोधायनः —

' न लोष्टेन न काष्ठेन शर्करैर्न नखैः क्रियात् ।
काष्ठेन व्याधितश्च स्याल्लोष्टेन कुलनाशनम् ।
शर्करैः पुत्रनाशः स्यान्नखैर्बन्धुविनाशनम् ' ॥

इत्युक्तत्वात् सुवर्णरजतताम्रशकलेन व्रीहिभिर्यवैर्वा खननमुच्यते दर्भैः तदङ्गुष्ठेन चेति । श्रौते च – 'उद्धन्यमानमिति सौवर्णेन रौक्मेण राजतेन वा नूवधा खने' दिति ।

**तथा 'पूतह्यत' नेनेति षड्रेखा लिखित्वा 'अष्टाबन्ध' मिति वक्रितं दर्भं दक्षिणपश्चिमस्यामुत्सृज्य रेखा गायत्र्या प्रोक्ष्य 'जातवेदो भुवन'स्येत्यरणिं गृहीत्वा मथितं लौकिकं वाऽग्निमादायाऽऽहरेत ॥ ४ ॥**

तथा खननप्रकारेण यद्वा 'प्रादेशसम्मिताः प्रागन्तास्तिस्रःतिस्रस्तथोत्तरे रेखाश्च षड्लिखति' इति श्रौतोक्तवत् ।

**निरुक्ताधिकारेः-** 'अग्निकार्यविधिं वक्ष्ये सर्वलोकहिताय च' । इत्यारभ्य

'प्रागग्रास्तिस्रो रेखास्तु उदगग्रास्तथैव च' ।
ब्रह्मा चैव यमस्सोमो मध्ये दक्षिणवामयोः ।
प्रागग्राणां तिसृणान्तु अधिदेवाः प्रकीर्तिताः ॥

रुद्रो विष्णुश्च शक्रश्च मध्ये पश्चिमपूर्वयोः ।
तिसृणामुदगग्राणामधिदेवाः प्रकीर्तिताः ॥' इति उक्तम् ।

खननं पितृदेवत्यम् । पितृदेवत्यस्य दक्षिणान्तत्वेन कर्तव्यत्वात् आधारस्य दैविकत्वाच्च मध्यस्थतामवलम्ब्य प्रत्यगन्तत्वेनोत्तरान्तत्वेन चोक्तम् ॥

**मनुः—** 'सम्मार्जनेनाञ्जनेन सेचनोल्लेखनेन च ।
गवाञ्च परिवासेन भूमिश्शुद्ध्यति पञ्चभिः' ॥ इति ।

द्रैण्यनिरसनार्थं विसर्गः ।

**श्रौते** – 'राक्षसरौद्रनैर्ऋतपैतृकच्छेदनभेदनखनननिरसनावघ्राणात्माभिमर्शनानि च कृत्वा सर्वत्राप उपस्पृशे' दित्युक्तत्वात् विसर्गानन्तरं उपस्पर्शः ।

**गायत्र्या प्रोक्ष्य – छन्दोगब्राह्मणे ।** 'चतुर्विंशत्यक्षरा गायत्री तेजो ब्रह्मवर्चसं गायत्री । तेज एव ब्रह्मवर्चसमवरुन्धे । प्राणो गायत्री प्रजननम् । प्राणादेव गायत्र्या प्रजायन्ते' इति ।

अरणिलक्षणादिकं श्रौते उक्तम् । यथा—'अथाग्न्याधेयं व्याख्यास्याम' इत्यारभ्य—यथोपपादं शमीगर्भमश्वत्थं, यद्यशमीगर्भं शुक्लांकुरं अशनिवाय्वनुपहतं अग्न्यदग्धं बहुपक्ष्यनावासं, अशुष्कमशीर्णं अन्त्यजात्यनुपहतं गत्वा, वैश्वानरसूक्तेन प्रदक्षिणं कृत्वा, प्रणमेत् । तेनैव प्राचीमुदीचां वा शाखां प्रागादिप्रदक्षिणं छेदयित्वा प्रागग्रमुदगग्रं वा निपातयेत् । पतत उत्तरमधरं मूलमग्रं च यथा ज्ञेयं तथा अङ्कयित्वा शाखापत्राणि प्राहापयति । तां द्विधा छेदयित्वा अधोभागेन अधरारणिं त्वक्पार्श्वोर्ध्वभागां विगतत्वचमविशोषितां चतुर्विंशत्यंगुलायतां अष्टांगुलविस्तारां चतुरंगुलोन्नतां, तथोत्तरभागेन उत्तरामरणिं च गायत्र्या करोति । तत्र प्रथमानि यानि चत्वार्यंगुलानि शिरश्चक्षुः श्रोत्रमास्यं च, द्वितीयानि यानि ग्रीवावक्षोहृदयस्तनाः, तृतीयानि उदरप्रभृतीनि, चतुर्थानि श्रोणी, पंचमान्यूरू, षष्ठानि जङ्घे, पादावित्येके । एवमरणी सर्वैरंगैः पूर्णे भवतः । यच्छीर्ष्णि मन्थति, शीर्षक्तिमान् यजमानो भवति, यद्ग्रीवायां वेपनः, यदुदरे नारब्धोस्य यज्ञो भवति, ऊरू रक्षसां योनिः, जंघे पादौ पिशाचानां, श्रोणी देवानां योनिः, तस्मात् श्रोण्यामेव प्रथमं मन्थेत् । मूलादष्टांगुलं परित्यज्य अग्राच्च द्वादशांगुलं पार्श्वतस्त्रीणि त्रीण्यंगुलानि, प्रथममन्थने एवं प्रजननं कुर्वीत । उत्तरारणेः अष्टांगुलं युक्तनाहं प्रमन्थं च्छित्वा, मन्थमूले सन्धत्ते । तेन सहितः षड्विंशत्यंगुलायतो मन्थो भवति । तथा भद्रमित्युत्ताना प्राक्छिरा अरणिः तथा वेदिः' इति ।

ननु—श्रीविष्णुपुराणे मानुषे लोके मया वस्तव्यमिति कृतमतिमूर्वशीं ददर्शेत्यादिना ऊर्वशीपुरूरवसोः संयोगादिकं प्रतिपाद्य अनन्तरं गन्धर्वैर्वरदानमूर्वश्या सहवासप्रार्थनां तदर्थमग्निस्थालीदानं तद्ग्रहणमटव्यामेवाग्निस्थालीविसर्जनं स्वपुरप्रवेशनं पुनरग्निस्थालीग्रहणार्थं स्वपुरान्निर्गमनं तत्राग्निस्थाल्यदर्शनञ्च प्रतिपाद्य शमीगर्भञ्चाश्वत्थमग्निस्थाने दृष्ट्वा पुरूरवाः—'मयात्राग्निस्थाली निक्षिप्ता सा चाश्वत्थश्शमीगर्भोऽभूत् । तदेतदेवाग्निरूपमादाय स्वपुरमभिगम्यारणिं कृत्वा तदुत्पन्नाग्नेरुपास्तिं करिष्या'मीति सङ्कल्प्यैवमेव स्वपुरमुपगतोऽरणिं चकार । तत्प्रमाणञ्चांगुलैः कुर्वन् गायत्रीमपठत् । पठतश्चाक्षरसङ्ख्यान्येवाङ्गुलान्यभवन् ।

अत्राग्निमाम्नायानुसारी भूत्वा जुहाव उर्वशीसालोक्यं च फलमभिपेदिवानिति कथा। अत्राल्पास्थिरफलोर्वशीसङ्गमनार्थं तत्रोत्पन्नाग्नेरुपासनं किमर्थमन्यैः क्रियत इति चेत्—सत्यम्। 'यानि त्रेतायां बहुधा सन्ततानि तान्याचरथ नियतं सत्यकामाः॥ एष वः पन्थाः सुकृतो ब्रह्मलोके' इत्याथर्वणश्रुतेः उपपन्नमेव। अयमर्थः त्रेतायां त्रेताग्नौ यद्वा त्रयी, तस्यां वेदोदितकर्माणि सत्यकामाः सत्यशब्देन चिदचिच्छरीरकः परमात्मा। यद्वा यथार्थभूतः। तत्प्रातिकामाः तान्याचरथ। एष वः पन्था इति। तथा

'तस्मादसक्तः सततं कार्यं कर्म समाचार।
असक्तो ह्याचरन् कर्म परमाप्नोति पूरुषः'॥

इति च भगवद्वचनम्।

'यस्तु वै भगवत्प्रीत्या कुर्याद्यज्ञादिकर्म यत्।
तद्विशिष्टमिति प्रोक्तं सामान्यमितरत् स्मृतम्॥' इति स्मृतिः।

'य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयते' इति श्रुतिः। अतः काम्यान्यपि कर्माणि यद्यनभिसंहितफलानि तदा भगवत्प्रीतिद्वारा अनन्तस्थिरफलानि भवन्ति। अन्यथा 'यो हवा एतदक्षरं गार्ग्यविदित्वाऽस्मिन् लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राणिं अन्तवदेवास्य तद्भव' तीति श्रुतेः विपरीतफलानि स्युः।

'समस्तयज्ञभोक्तारं ज्ञात्वा विष्णु सनातनम्।
दैवं पित्र्यं तथा यज्ञ कुर्यान्न तु परित्यजेत्'॥ इति चोच्यते।

**अरणिं गृहीत्वा**। 'शमीगर्भादग्निं मन्थति। एषा वा अग्नेर्यज्ञिया तनूः। तामेवास्मै जनयति' इति श्रुतिः। वा शब्दः तत्तदग्नीनां भेदप्रदर्शकः। यथा

'यस्मिन् विवाहः क्रियते सोऽग्निर्गृह्य इति स्मृतः।
जातकर्मादिसिद्ध्यर्थं यो व्याहृतिभिराहृतः।
सोऽग्निः पौरुष इत्युक्तः शालाग्निर्लौकिकस्तथा॥' इति।

वाशब्दात् पौरुषाग्न्यादिं मथितं लौकिकं वा आहरेतेति। औपासनाग्निश्चेन्मन्त्रलोपः। मथितं लौकिकं वेत्युक्तत्वात् आदायाहरेतेत्युक्तत्वाच्च

पूर्वमेव सिद्धानामौपासनाद्यग्नीनामरणिग्रहणापेक्षाभावात् समित्समारोपणे धार्याग्नि-विषये च लोपः। अर्थाभावात्। समित्समारोपणेऽभ्युदयः। तत्राप्यकरणे न दोषः। यद्वा श्रुत्युक्तमार्गेणाग्न्याहरणम्।

**'घृतप्रतीक' इति प्रज्वाल्य 'आयुर्दा' इति प्रणम्य 'उपाव-रोह' इति निधाय 'अग्न आयाहि—'अयन्ते योनि' रिति प्रज्वाल्य 'मयि गृह्णामि' इत्यभिवन्द्य 'कर्मणे वा' मिति करौ प्रक्षालयति ॥ ५ ॥**

**स्मृत्यन्तरे—** 'वस्त्रेण वाथ पर्णेन पाणिशूर्पास्यदारुभिः।
न कुर्यादग्निधमनं न कुर्याद्व्यजनादिना' ॥ इति

**सङ्ग्रहे—** 'पर्णेन वै भवेद्व्याधिः शूर्पेण धननाशनम्।
पाणिना मृत्युमाप्नोति आयुःक्षीणं मुखेन च ॥

धमनीमन्तरे कृत्वा तृणं वा काष्ठमेव वा।
मुखेनाग्निं समिन्धीत मुखतोऽग्निरजायत' ॥ इति।

ननु—सूत्रान्तरेष्वनुक्तं मन्त्रेण ज्वलनं किमर्थमिति चेत्—ब्रह्मवर्चसादि-फलार्थम्। छन्दोगब्राह्मणे—'त्रीणि धनमाग्नेयं भवती' त्यारभ्य 'अग्नि-स्सृष्टो नो दीप्यत। तं प्रजापतिरेतेन साम्नोपाधमत्। स उद्दीप्यत। दीप्तश्च ह वा एतत्साम ब्रह्मवर्चसञ्च दीप्तिश्चैव तेनावरुन्धे' इति। शाखाभेदान्मन्त्र-रूपेणोक्तम्। रक्षणार्थं प्रणामः।

**भृगुः—** 'यत्र यत्र च काष्ठानि तत्र कर्णं विदुर्बुधाः।
धूमः स्वल्पतरो यत्र नासिकामपि तद्विदुः ॥

मन्दप्रज्वलनं यत्र तत्र नेत्रं प्रचक्षते।
अङ्गारपुञ्जमग्नेस्तु शिरश्शंसन्ति पण्डिताः ॥

महत्प्रज्वलनं यत्र मुखं तत्र विशिष्यते।
**कर्णे** यदि हुवेद्व्याधिर्नासिकायां महद्भयम् ॥

चुक्षुष्यन्धो भवेत्किन्तु मस्तके सर्वनाशनम् ।
अन्यैः कराद्यैर्दारिद्यं तस्मादन्यैर्विचार्य च ।
शरोऽङ्गारेण सम्मन्त्र्य जिह्वाग्रे जुहुयात्सुधीः ' ॥ इति ।

**छन्दोगब्राह्मणे**—

'सुसमिद्धे होतव्यम् । अग्निर्वै सर्वा देवताः । सर्वा एव देवताः पश्यन् जुहोति' । इति

स्मृतौ— 'योऽनर्चिषि जुहोत्यग्नौ व्यङ्गारिणि च मानवः ।
मन्दाग्निरामयावी च दरिद्रश्च स जायते' ॥ इति ।

'यातयामान्यन्यानि छन्दांस्ययातयामा गायत्रीति **छन्दोगब्राह्मणे** मन्त्रान्तरेणोक्तम् ।

ननु— 'मन्त्राः कृष्णाजिनं दर्भा ब्राह्मणाः हविरग्नयः ।
अयातयामान्येतानि नियोज्यानि पुनः पुनः' ॥ इति ।

स्मृतावन्यत्र — 'दर्भाः पिण्डेषु निर्माल्या ब्राह्मणाः श्राद्धभोजने ।
मन्त्राः शूद्रेषु निर्माल्याः चित्याश्चैव हुताशनः' ॥

इति पिण्डादिषूपहतानां दर्भादीनामेव त्यागः ।

किञ्च । 'यो ह वा अविदितार्षेय छन्दो देवता ब्राह्मणेन मन्त्रेण याजयति वाऽध्यापयति वा स्थाणुं वर्च्छति गर्तं वा पद्यते प्रवा मीयते पापीयान् भवति । यातयामान्यस्य छन्दांसि भवन्ति । 'अथ यो मन्त्रे मन्त्रे वेद सर्वमायुरेतीत्यादिश्रुतेः

'अविदित्वा ऋषिछन्दोदैवतं योगमेव च ।
योऽध्यापयेज्जपेद्वापि पापीयान् जायते तु सः' ॥

इति स्मृतेश्च ऋषिछंन्दोदेवतारहितानां मन्त्राणां यातयामत्वादिकं ज्ञायते । आघारादिषु कथमिति चेत् । सत्यम् । यद्यपि प्रत्येकमृषिछन्दोदेवता नात्र प्रतिपादिताः । तथापि सामान्येन अन्तर्यामी ऋषिः । अनुष्टुप्छन्दः । परमात्मा देवता इति ज्ञेयम् ।

क्रियाधिकारे· 'अविज्ञातेषु सर्वेषां मन्त्राणान्तु पृथक् पृथक् ।
ऋषिछन्दोधिदेवेषु छन्दोऽनुष्टुबिति स्मरेत् ॥
अन्तर्यामी ऋषिः प्रोक्तः परमात्मा च देवता ।
इति सामान्यतः स्मृत्वा पूजयेत्पुरुषोत्तमम्' ॥ इति ।

स्वशरीरगताग्निधारणार्थं मयि गृह्णामीत्यभिवादनमुक्तम् । चयनमधिकृत्य यजुषि श्रूयते । 'यदध्वर्युरात्मन्नग्निमगृहीत्वाऽग्निं चिनुयाद्योऽस्य स्वोऽग्निस्तमपि यजमानाय चिनुयादग्निं खलु वै पशवोऽनूपतिष्ठन्तेऽपक्रामुका अस्मात्पशव्यस्स्युर्मयि गृह्णाम्यग्रे अग्निमित्याहात्मन्नेव स्वमग्निं दाधार नास्मात्पशवोऽपक्रामन्ती' ति ।

श्रौते च–'मयि गृह्णामि–'यो नो अग्नि' रिति द्वाभ्यां हृदयस्थमग्निं स्वात्मनि गृह्णीते' ति । कराविति । सूत्रान्तरेऽप्येवमेवोक्तम् 'मेध्यतासिद्ध्यर्थं समन्त्रकत्वेन हस्तावनेक्ति । आत्मानमेव पवयते' इति ।

आरण्यपर्वणि च–'न चाशुचि नाप्यनिर्निक्तपाणिः
नाब्रह्मविज्जुहुयान्नाविपश्चित् ।
बुभुक्षवः शुद्धिकामा हि देवाः
नाश्रद्दधानस्य हविर्जुषन्ति' ॥ इति ।

'उभयहस्तेन वामहस्तेन वा न होतव्यं यातुधाना गृह्णन्ति । वार्तायुक्ताहुतिमसुरा हस्तात् गृह्णन्ति' इति भगवच्छास्त्रे काश्यपीये प्रतिपादितत्वात् उभाभ्यामपि वामहस्तेन वा कर्तुमयुक्तत्वादुभयोः प्रक्षालनं किमर्थमिति चेत्–कर्मान्तरेषु वामहस्तापेक्षाया विद्यमानत्वात् करावित्युक्तम् ।

**'इदमापश्शिवा' इत्यपोऽभिमन्त्र्य 'अदितेऽनुमन्यस्व दक्षिणतो वेदिं परिमृजामी'ति दक्षिणवेदिं नैर्ऋत्याद्यन्तं, 'अनुमतेऽनुमन्यस्व पश्चिमतो वेदिं परिमृजामी'ति तथा पश्चिमवेदिं 'सरस्वतेऽनुमन्यस्वोत्तरतो वेदिं परिमृजामी'त्युत्तरवेदिं वायव्याद्यन्तं 'देवसवितः प्रसुव पुरस्ताद्वेदिं परिमृजामी'ति पूर्ववेदिमाग्नेयाद्यन्तमङ्गुलीरास्तीर्य साधावेन पाणिना कूर्चेन वा परिमृज्य गायत्र्या वेदीः प्रोक्षयति ॥ ६ ॥**

स्वभावतः परिशुद्धानामपां विशेषतो देवसान्निध्यार्थमभिमन्त्रणमुच्यते। यद्वा। अन्वाधानानन्तरं श्रौते यथाऽभिमन्त्रणमेवमत्रापि। स्वाभिमुखीकरणद्वारा वेदिपरिशुद्धिरुच्यते अदितेऽनुमन्यस्वेत्यादिना —

भृगुः— ‘अदितेऽनुमन्यस्वेति कथं पूर्वमिदं भवेत्।
स्वस्याग्नेस्सन्मुखार्थाय कृतश्शास्त्रेषु निश्चयः॥
अदितेऽन्वमंस्था इति च होमे चैव हुते सति।
अग्नेः स्वास्थ्यविधानाय कृतमन्ते विदुर्बुधाः॥’ इति।

दक्षिणवेदिमित्यादि। यत्रारभ्यते तत्र परिसमाप्तिः। ‘त्रिः प्रोक्षति त्र्यावृद्धि यज्ञः। अथो मेध्यत्वाय’ इति श्रुतिः। अत्र द्विवारमुक्तम्। वेदिरसीत्यत्रैकम्।

**‘ब्रह्मसोमावृत्विजौ वरयित्वा अध्वर्युः ‘ओं भूपते भुवनपते’ इति प्रत्येकं प्रेक्ष्य ताभ्यां ‘अहं भूपतिः’ इत्युक्ते ‘ब्रह्मन्–सोम प्रोक्षिष्यामि’ इत्यन्तं तथोक्त्वा पुनस्ताभ्यां ‘प्रोक्ष’ इत्युक्तस्तथा प्रोक्षयति॥ ७॥**

वासाधिकारे:– ऋत्विजौ वरयेत्पश्चात्पञ्च सप्त नवाथवा।
साक्षतैः दर्भयुग्मैश्च हस्ते हस्ते प्रदापयेत’॥ इति।

वरणप्रकारः। ‘देवदूता वा एते यदृत्विजः’ इति श्रुतेः। ब्रह्मणो देवदूतत्वाभावात् देवदूताकारेण कथं वरणमिति चेत्। सत्यम्। देवा एव ऋत्विजो यदि स्युः तर्हि यजमानस्य न मनुष्यलोकः। यदि मानुषा न देवलोकः। अथोभयोः प्राप्त्यर्थं ब्रह्माद्याकारेण वरणम्। श्रूयते हि षड्विंशब्राह्मणे — ‘ते ऋत्विजः स्थ यजमानो देवा वा अन्ये ऋत्विजो मानुषा अन्ये यं देवा यजन्ति देवलोकमेव स तैरवरुन्धे न मनुष्यलोकम्। अथ यं मानुषा यजन्ति मनुष्यलोकमेव स तैरवरुन्धे न देवलोकम्। अथ यमुभये याजयन्ति देवलोकं स तैरवरुन्धे मनुष्यलोकञ्च। स एतान् देवानृत्विजो वृणीत अग्निर्मे होतादित्यो मेऽध्वर्युश्चन्द्रमा मे ब्रह्मा पर्जन्यो उद्गाते’ त्यादि।

ननु – चन्द्रमसः कथं ब्रह्मत्वम् – उच्यते।

**मार्कण्डेयपुराणे —**

पतिव्रतामाण्डव्ययोश्शापादिकं प्रतिपाद्य अनसूयायाः पातिव्रत्यमाहात्म्यात् सूर्योदये तद्भर्तुर्जीवनं सुप्रसन्नैः कृष्णादिभिरनसूयाया वरप्रदानञ्चोक्त्वा

'तद्यान्तु मम पुत्रत्वं ब्रह्मविष्णुमहेश्वराः' ।

इति पुत्रत्वेन त्रिमूर्तीनां वरणं,

'ऋतुस्नातान्तु चार्वङ्गीं लोभनीयतमाकृतिम् ।
सकामो मनसा भेजे स मुनिस्तामनिन्दिताम् ॥

तस्याभिध्यायतस्तान्तु विकारो योऽन्वपद्यत ।
तमपोवाह पवनस्तिरश्चोर्ध्वञ्च वेगवान् ॥

ब्रह्मरूपं सुशुक्लं तत्पतमानं समन्ततः ।
सोमबीजं ततो रूपं दिशस्तज्जगृहुर्दश ।

स सोमो राजसो जज्ञे तस्यामत्रेः प्रजापतेः' ॥

इति ब्रह्मणः सोमरूपेणोत्पत्तिः हरिहरयोर्दत्तात्रेयदुर्वासोरूपेणोत्पत्तिश्च प्रतिपाद्यते ।

**ब्रह्मवरणञ्च:—**

'ब्राह्मणो दक्षिणत उपास्ते'। 'ब्राह्मणो वै प्रजानामुपद्रष्टा। उपद्रष्टुमत्येव प्रजायत' इति श्रुतेः उपद्रष्टृत्वेन ब्रह्मवरणं कर्तव्यम् । स तु सर्वज्ञश्चेत् यज्ञं यजमानं सर्वांश्च ऋत्विजोऽभिरक्षति । इदमाम्नायते छान्दोग्ये । 'प्रजापतिर्लोकानभ्यतपत् तेषां तप्यमानानाँ रसान् प्रावृहदग्निं पृथिव्या वायुमन्तरिक्षादादित्यं दिवः । स एतास्तिस्रो देवता अभ्यतपत् तासां तप्यमानानाँ रसान् प्रावृहदग्नेर्ऋचो वायोर्यजूँषि सामान्यादित्यात् । स एतां त्रयीँ विद्यामभ्यतपत् तस्यास्तप्यमानाया रसान् प्रावृहत् भूरित्यृग्भ्यो भुव इति यजुर्भ्यस्सुवरिति सामभ्य' इति । लोकादिव्याहृतिपर्यन्तानां पूर्वपूर्व कारणतामुत्तरोत्तरातिशयताञ्च प्रतिपाद्य 'अथ तद्यदृक्तो रिष्येत् भूस्स्वाहेति गार्हपत्ये जुहुयात् ऋचामेव तद्रसेनर्चां वीर्येणर्चां यज्ञस्य विरिष्टँ सन्दधाति । अथ यजुषो रिष्येत् भुवस्स्वाहेति दक्षिणाग्नौ जुहुयात् यजुषामेव तद्रसेन यजुषां वीर्येण यजुषां यज्ञस्य विरिष्टँ

सन्दधाति । अथ यदि सामतो रिष्येत् सुवस्स्वाहेत्याहवनीये जुहुयात् साम्नामेव तद्रसेन साम्नां वीर्येण साम्नां यज्ञस्य विरिष्टँ सन्दधाति । तद्यथा लवणेन सुवर्णं सन्दध्यात् सुवर्णेन रजतँ रजतेन त्रपु त्रपुणा सीसँ सीसेन लोहं लोहेन दारु दारुणा चर्म । चर्मणैवमेषां लोकानामासां देवतानामस्यास्त्रय्या विद्याया वीर्येण यज्ञस्य विरिष्टँ सन्दधाति भेषजकृतो ह वा एष यज्ञ ' इति प्रायश्चित्तञ्च तद्यथेत्यादिना दृष्टान्तमुखेन प्रतिपाद्य 'यत्रैवंवित् ब्रह्मा भवती' त्यारभ्य 'ब्रह्मैवैक ऋत्विक् कुरूनश्वानभिरक्षति । एवं विद्ध वै ब्रह्मा यज्ञं यजमानँ सर्वांश्च ऋत्विजोऽभिरक्षति । तस्मादेवंविदमेव ब्रह्माणं कुर्वीत नानेवंविदं नानेवंविद' मिति । (४. १२) । अत एव ब्रह्मवरणम् ।

ननु—सूत्रान्तरेष्वनुक्तं सोमवरणं किमर्थमिति चेत्—सत्यम् । 'सोमोऽस्माकं ब्राह्मणानां राजा' 'तस्मात्सोमराजानो ब्राह्मणाः' इत्यादि श्रुत्यनुसारेण स्वाधिदेवतां पुरस्कृत्य कर्म कृतञ्चेत् तत्समृद्धं भवतीति । एवमाह बोधायनः । 'विष्णुश्च ह वै सोमश्च ब्रह्मवाद्यमवदेतामहं ब्राह्मणानां प्रतिष्ठेति विष्णुरब्रवीदहं प्रतिष्ठेति सोमः तौ प्रजापतिं प्रश्नमैतां सोऽब्रवीत् प्रजापतिश्छन्दांसि विष्णुमधिगच्छन्ति नक्षत्राणि सोमं तावुभौ ब्रह्मण्याविति सोऽब्रवीत्पूजितौ पूजयन्तौ स्तुतौ स्तुन्वन्तौ प्रियौ प्रियवन्तौ ब्रह्मण्यौ ब्रह्मवित्तमौ वःप्रतिष्ठातारौ भवत इति । यन्मां ब्राह्मणा वक्ष्यन्ति यज्ञेषु सोऽहमिति विष्णुरब्रवीत्तस्माद्विष्णुर्यज्ञो यज्ञो वै ब्राह्मणानां प्रतिष्ठेति, विज्ञायते च ब्राह्मणो वै छन्दांसीत्येतस्मात् ब्राह्मणात् । यत्र मां ब्राह्मणा वक्ष्यन्ति नक्षत्रेषु तत्राहमिति सोमोऽब्रवीत् तस्माद्ब्राह्मणानां सोमो राजेति तस्माद्विज्ञायते च ब्राह्मणो वै अष्टाविंशो नक्षत्राणां तत्तस्य वचः पुण्यमिति तावुभौ ब्रह्मण्यौ ब्रह्मवित्तमौ ब्राह्मणानां प्रतिष्ठातारौ ब्राह्मणेषु प्रतिष्ठितौ य एवं विद्वान् ब्राह्मणपुरस्कृतानि कर्माणि करोति यज्ञस्य समृद्ध्यै' इति । अतस्सोमवरणं विष्ण्वावाहनञ्चोक्तम् । ब्रह्मर्त्विक्लक्षणमाह मनुः

'अग्न्याधेयं पाकयज्ञमाग्निष्टोमादिकान् मखान् ।
यः करोति वृतो यस्य स तस्यर्त्विगिहोच्यते' ॥ इति ।

ऋत्विग्वरणं यजमानस्य कृत्यम् । ऋत्विजामभावे भृगुः ।

‘ ऋत्विजामप्यभावे तु ऋत्विजौ ब्रह्मसोमयोः ।
रत्निमात्रायतौ कूर्चौ न्यसेद्दक्षिणवामयोः ॥
तत्राऽवाह्य समभ्यर्च्य दद्याद्ब्राह्मणभोजनम् ।
रत्निस्संवृतमुष्टिस्स्यादरत्निः प्रसृताङ्गुलिः ’ ॥ इति

कात्यायन :— ‘ स्याद्दर्शपूर्णमासेष्टौ चतुर्णामृत्विजां क्रियाः ।
चत्वारश्चेन्न लभ्यन्ते त्रयः कुर्युस्त्रयोऽपि वा ॥
न सम्भवन्ति कुर्यातां द्वावेवेष्टिं कथञ्चन ।
यदि द्वावपि न स्यातामेकेनापि समापयेत् ॥
यजमानः प्रयुञ्जीत तत्रानाज्ञातनिष्कृतिम् ’ । इति

**ताभ्यामहमित्यादि** न प्रकृतावूहो विद्यत इति सोमस्य यज्ञपतिरार्त्विज्यं करिष्यामीति सोमोऽहं. मनुष्याणामित्यादिस्वनामसङ्कीर्तनमात्रमेव नान्यत् । **‘ ब्रह्मन् ’** इत्यादि – ब्रह्मन् सोम प्रोक्षिष्यामीत्यन्तं यथा भवति तथा । **अग्निहोत्रह** ण्यामित्यादि – पात्रादाधावमादाय साक्षतं ‘ पृथिव्याप ’ इति प्रोक्षणीपात्रमापूर्य । **तथा** – वक्ष्यमाणवत्, श्रौतवद्वा । ‘ वसूनां पवित्र ’ मित्युदगग्रे पवित्रे प्रक्षिप्य । **दक्षिणे न पाणिनाग्रमित्यादि** – यद्वा श्रौतवत् उदगग्राभ्यां पवित्राभ्यां ‘ देवो व ’ इति त्रिरुत्पूय ‘ आपो देवी ’ रित्यभिमन्त्र्य ब्रह्मन् सोमप्रोक्षिष्यामीति । अन्यथा अन्तशब्दतथाशब्दयोः वैयर्थ्यम् ।

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ नवमखण्डार्थविवरणं
समाप्तम् ।

---

## अथ दशमः खण्डः

---

**पात्रादाधावमादाय 'पवित्रे स्थ' इति वेद्यां बर्हिषः स्थापयित्वा तान् 'परशुर' सीति प्रोक्ष्य, समिधो मुक्तबन्धाः 'कृष्णोऽसी' ति, 'वेदिर' सीति वेदिं, 'बर्हिरसी' ति बर्हिषः, स्रुवादीन् 'स्रुग्भ्य' इति। बर्हिषोऽग्रं 'दिवे' त्वेति, मध्यमन्तरिक्षाय' त्वेति, मूलं 'पृथिव्यै त्वे' ति प्रोक्षयति ॥ १ ॥**

**पात्रादिति**—प्रोक्षणीपात्राज्जलमादाय। **वेद्यां**—कुण्डवेद्याम्। **तान्**—दर्भान् पात्रादाधावमादायेति तूष्णीमुक्तत्वात् अमन्त्रकमेवेति चेन्न—पूर्वापरपर्यालोचनया आदौ मध्ये च क्रियान्तरं वक्तव्यम्। अमन्त्रकत्वेन समन्त्रकत्वेन च प्रोक्षणद्वयं कर्तव्यम्। 'तथा प्रोक्षय' तीत्युक्तत्वात्। पात्रादाधावमादायेत्युक्तत्वात् 'परशुरसी' त्यादिप्रोक्षणस्य प्रतिपादितत्वाच्च पूर्वोक्तमार्गेण कर्तव्यम्।

किञ्च **बोधायनः**—'अथाप्युदाहरन्ति असंस्कृताभिः प्रोक्षणीभिः प्रोक्षितैः पात्रैः, दोमश्चासंमार्जितैः स्रुक्स्रुवैः नाधिश्रितपक्वैराज्येन प्रचरेत् यातुधाना रक्षांसि पिशाचा यज्ञं ग्राहयेयु' रिति। अत्र श्रुतिः 'प्रोक्षणीरसादयति, आपो वै रक्षोघ्नीः, रक्षसामपहत्यै' इति। **समिधो मुक्तबन्धाः कृष्णोसीतीति**—**श्रुतिः**—'ग्रन्थिं विस्रंसयति, प्रजनयत्येव तदि' ति।

**स्रुवादीनिति**। **श्रुतिः** 'स्रुध्येषा, प्राणो वै स्रुवः, जुहूर्दक्षिणो हस्तः, उपभृत्सव्यः, आत्मा ध्रुवा, अन्नँ सम्मार्जनानि, मुखतो वै प्राणोऽपानो भूत्वा, आत्मानमन्नं प्रविश्य, बाह्यतस्तनुवं शुभयति, तस्मात्स्रुवमेवाग्रे सम्मार्ष्टि' इति। अन्यत्र 'स्रुचस्सम्मार्ष्टि, स्रुवमग्रे पुमाँसमेवाभ्यः सँश्यति मिथुनत्वाय, अथ जुहूम्, अथोपभृतम्, अथ ध्रुवाम्, असौ वै जुहूः, अन्तरिक्षमुपभृत्, पृथिवी ध्रुवा, इमे वै लोकास्स्रुचः, वृष्टिस्सम्मार्जनानि, वृष्टिर्वा इमान् लोकानुपूर्वं कल्पयन्ति, ते ततः क्लृप्ताः समेधन्त। समेधन्तेस्मा इमे लोकान् प्रजया पशुभिः' इति च। कृष्णोसीत्यादि मन्त्रैः इध्मादीनां प्रोक्षणं फलान्तरार्थमितिश्रूयते—

यजुषि– 'अग्निर्देवेभ्यो निलायत, कृष्णो रूपं कृत्वा, स वनस्पतीन् प्राविशत्, कृष्णोस्याखरेष्ठोऽग्नये त्वा स्वाहेत्याह, अग्नय एवैनं जुष्टं करोति, अथोऽग्नेरेव मेधामवरुन्धे, वेदिरसि बर्हिषेत्वा स्वाहेत्याह, प्रजा वै बर्हिः, यजमानमेव प्रजासु प्रतिष्ठापयति। दिवेत्वान्तरिक्षायत्वा पृथिव्यैत्वेति बर्हिरासाद्य प्रोक्षति, एभ्य एवैनं लोकेभ्यः प्रोक्षति'। अथ–ततः, 'सहस्रुचा पुरस्तात् प्रत्यञ्चं ग्रन्थिं प्रत्युक्षति प्रजावै बर्हिः, यथा सूत्ये काल आपः पुरस्ताद्यन्ति तादृगेव तत्, स्वधा पितृभ्य इत्याह, स्वधाकारो हि पितृणाम्। ऊर्भव बर्हिषद्भ्य इति दक्षिणायै श्रोणेरोत्तरस्यै निनयति संतत्यै, मासा वै पितरो बर्हिषदः, मासानेव प्रीणाति, मासा वा .... षड्निर्वेधयन्ति, मासाः पचन्ति समृद्ध्यै, अनतिस्कन्दन् ह पर्जन्यो वर्षति यत्रैतदेवं क्रियते, उर्जा पृथिवीं गच्छतेत्याह पृथिव्यामेवोर्जं दधाति, तस्मात् पृथिव्या ऊर्जा भुज्यते' इति।

**'पोषाय त्वा' इत्यपो बर्हिर्बन्धने संस्राव्य 'स्वधा पितृभ्यः' इति सापसव्यं दक्षिणतः प्रोक्ष्य अपां शेषं पश्चिमस्यामुत्तरान्तं 'ऊर्भव' इति स्रावयेत् ॥ २ ॥**

**'उभाभ्या' मिति पाणी प्रक्षालयति ॥ ३ ॥**

पाणिप्रक्षालनादि पूर्ववत्।

**'पूषा त' इति बर्हिर्बन्धं विसृज्य मूलादूर्ध्वं 'आदित्यव्युञ्जनमसि' इत्यभिमृश्य पश्चिमतो वेद्यधस्तादुत्तराग्रं 'ऊर्णाम्रदसं' इति दर्भैः परिस्तीर्य 'स्वासस्थं देवेभ्यः' इति प्रागग्रं स्वासने चैकं निधाय 'विष्णोः स्तूपोऽसि' इति प्राच्यां 'दक्षिणतः' इति याम्यां 'पश्चिमतः' इति प्रतीच्यां 'उत्तरतः' इत्युदीच्यां वेद्यां प्रागुत्तराग्रं परिस्तृणाति ॥ ४ ॥**

**दर्भैः परिस्तीर्ये**' त्यादि –'प्रजा वै बर्हिः, पृथिवी वेदिः, प्रजा एव पृथिव्यां प्रतिष्ठापयति। स्वासस्थं देवेभ्य इत्याह देवेभ्य एवैनँ स्वासस्थं करोति' इति। **विष्णोः स्तूपोऽसीति प्राच्यामित्यारभ्य** परिस्तरणमुच्यते। 'पश्चिमान्तं

प्रागपवर्गं प्रत्यगपवर्गं वा' इति श्रौते उक्तत्वात्। यद्वा उत्तराग्रम्। 'उपास्मिन् श्वो यक्ष्यमाणे देवता वसन्ति। य एवं विद्वानग्निमुपस्तृणाति' इति श्रुतिः।

**उत्तराग्रमैशान्यामूर्ध्वं कृत्वा 'गन्धर्वोऽसि' इति पश्चिमस्यां 'इन्द्रस्य' इति याम्यां 'मित्रावरुणौ' इत्युदीच्यां वेद्यां प्रागुत्तराग्रान् परिधीन् परिदधाति ॥ ५ ॥**

रक्षोहरणार्थं गन्धर्वोऽसीत्यादिभिः परिधिनिधानमुच्यते। श्रुतिः। 'गन्धर्वोऽसि विश्वावसुरित्याह विश्वमेवायुर्यजमाने दधाति। इन्द्रस्य बाहुरसि दक्षिण इत्याह इन्द्रियमेव यजमाने दधाति मित्रावरुणौ त्वोत्तरतः परिधत्तामित्याह प्राणापानौ मित्रावरुणौ प्राणापानावेवास्मिन् दधाति' इति ॥

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने तात्पर्यचिन्तामणौ दशमखण्डार्थविवरणं समाप्तम्।



## अथ एकादशः खण्डः

—※○※—

वायव्यामुत्तराग्रमूर्ध्वं करोति ॥ १ ॥

'सूर्यस्त्वा' इति प्राच्यामुत्तरान्तं 'उपरिष्टात्' इत्यूर्ध्वं 'अधस्तान्नागा' इत्यधश्च परिषिच्य 'वीतिहोत्रं' इत्यग्न्यालये समिधाचभीशयोर्दिशोरूर्ध्वाग्रे निदधाति ॥ २ ॥

श्रुतिः । 'सूर्यस्त्वा पुरस्तात्पात्वित्याह रक्षसामपहत्यै । कस्याश्चिदभिशस्त्या इत्याह अपरिमितादेवैनं पा' तीति । अन्यत्र च । 'परिधीन् परिदधाति, रक्षसामपहत्यै । सँस्पर्शयति रक्षसामनन्ववचाराय । न पुरस्तात्परिदधात्यादित्यो ह्येवोद्यन् पुरस्ताद्रक्षाँस्यपहन्त्यूर्ध्वे समिधावादधात्युपरिष्टादेव रक्षाँस्यपहन्ति यजुषान्यां तूष्णीमन्यां मिथुनत्वाय द्वे आदधाति द्विपाद्यजमानः प्रतिष्ठित्यै' 'परिधिमेवैतं परिदधात्यस्कन्नत्वा' येति च । अधस्तान्नागा इत्यधस्ताद्रक्षणम् । अस्तमितेऽपि । 'अग्निं वा वादित्यस्सायं प्रविशति । तस्मादग्निर्दूरान्नक्तं ददृशे । उभे हि तेजसी सम्पद्येते । उद्यन्तं वावादित्यमग्निरनुसमारोहति । तस्माद्धूम एवाग्नेर्दिवा ददृशे' । इति सूर्यरक्षणं सिद्धम् ।

विष्णुपुराणे:— 'प्रभा विवस्वतो रात्रावस्तं गच्छति भास्करे ।
विशत्यग्निमतो रात्रौ वह्निर्दूरात्प्रकाशते ॥
वह्नेः प्रभा तथा भानु दिनेष्वाविशति द्विज ।
अतीव वह्निसंयोगादतस्सूर्यः प्रकाशते ॥
तेजसी भास्कराग्नेये प्रभावोष्णस्वरूपिणी ।
परस्परानुप्रवेशादाप्याय्येते दिवानिशम्' ॥ इति ।

ननु— 'चत्वारोऽप्यथ ये वर्णा हव्यं कव्यं प्रदास्यते ।
मन्त्रहीनमरण्यायां तेषां दत्तं क्व गच्छति' ॥ इति पृष्टो नारदः—
'असुरान् गच्छते विप्रैः रक्षांसि क्षत्रियैस्तथा ।
वैश्यैः प्रेतांस्तथा शूद्रैर्दत्तं भूतानि गच्छति' ॥

इत्यानुशासनिके एकपञ्चाशाध्याये मार्कण्डेयं प्रति मन्त्रतन्त्रादिहीनं राक्षसं भवतीत्याह । रक्षोनिर्हरणार्थं परिध्यादिकमुक्तश्चेत् असुरादिभिः प्राप्तिसम्भावना कथमिति चेत् । सत्यम् । यजुषि श्रूयते । 'त्रयो वा अग्नयो हव्यवाहनो देवानां कव्यवाहनः पितृणां सहरक्षा असुराणां त एतर्ह्याशंसते मां वरिष्यते मामिति वृणीध्वं हव्यवाहनमित्याह य एव देवानां तं वृणीते' इति प्रसङ्गादिदमुक्तम् ।

**'परिस्तीर्य' मित्यादिनैन्द्राद्यमुदगन्तमार्षेणापो दत्वा 'सृता' सीत्यादिभिर्दक्षिणादि तेनैव प्रागन्तमुत्तरान्तञ्च परिषिच्य 'तारुणा' सीत्याग्नेयादीशानान्तं प्रदक्षिणमाग्नेयाद्यन्तमद्भिः परिषिञ्चति ॥ ३ ॥**

**सृतासीत्यादिभिरिति** । दक्षिणमुत्तरं प्रागन्तं पश्चिममुत्तरान्तम् । **तेनैव** – आर्षेणेत्यर्थः । तारुणासीत्याग्नेयादीशानान्तमित्यन्तेनैकम् । प्रदक्षिण-माग्नेयान्तमित्येकम् । इदममन्त्रकम् । एवं त्रिविधं परिषेचनं कुर्यात् । **श्रुतिः** । 'त्रिः परिषिञ्चन् पर्येति त्रिवृद्वा अग्निर्यावानेवाग्निः तस्य शुचं शमय' तीति । अन्यत्र । 'अपः परिषिञ्चति । मार्जयत्येवैनान् । अथो तर्पयत्येव तृप्यति प्रजया पशुभिः' इति ।

**'वानस्पत्योऽसीति प्रणिधी प्रक्षाल्य 'पृथिव्यापो गृहीष्या' मीति साक्षतमद्भिरापूर्य 'वसूनां पवित्र' मित्युदगग्रे पवित्रे प्रक्षिप्य दक्षिणेन पाणिनाग्रमितरद्वामेन गृहीत्वा 'देवो वस्सवि' तेति त्रिरु-त्पूय तथा निदधाति ॥ ४ ॥**

**वानस्पत्योऽसीति प्रणिधी प्रक्षाल्य** । अत्र मन्त्रावृत्तिः । 'मन्त्रान्तैः कर्मादीन् सन्निपातये' दिति वचनात् । प्रत्येकं वानस्पत्योऽसीत्येकवचननिर्देशात् इतिकरणसामर्थ्याच्च पृथगेव मन्त्रेण प्रक्षालनम् । **पृथिव्यापो गृहीष्यामीति साक्षतम्** – अक्षतसहितम् पात्रमद्भिरापूर्य **वसूनां पवित्रमित्युदगग्रे पवित्रे प्रक्षिप्य** । 'पवित्रवत्यानयति । अपाञ्चैवौषधीनाञ्च रसꣳ सꣳसृजति । अथो ओषधीष्वेव पशून् प्रतिष्ठापय' तीति **श्रुतिः** । पवित्रप्रक्षेपणानन्तरं जलेन पूरणम् । **दक्षिणेन पाणिनाग्रमितरद्वामेन गृहीत्वा देवो वस्सवितेति त्रिरुत्पूय** । **तथा** –

पुनरप्युदगग्रं निदधाति। यद्वा 'उदगग्राभ्यां पवित्राभ्यां तिरु'त्पूयेति श्रौते उक्तत्वात् वामहस्तेनाग्रं गृहीत्वा उत्पवनं कुर्यात्। अभिवादनवद्व्यत्यस्तपाणिना केचित्कुर्वन्ति। तदसत्। उत्तानाभ्यां पाणिभ्यामित्याश्वलायनेनोक्तत्वात्। व्यत्यस्तपाणिना इत्यनुक्तत्वाच्च। 'श्रुतिस्मृतिविरोधे तु श्रुतिरेव बलीयसी। अविरोधे सदा कार्यं स्मार्तं वैदिकवत्सदा' इति स्मृतेश्च उत्तानाभ्यां हस्ताभ्या-मङ्गुष्ठानामिकाभ्यामुत्पवनं कर्तव्यम्। 'देवोवस्सवितोत्पुनात्वित्याह। सवितृ-प्रसूत एवैना उत्पुनाति। अच्छिद्रेण पवित्रेणेत्याह। असौ वा आदित्योऽच्छिद्रं पवित्रम्। तेनैवैना उत्पुनाति। द्वाभ्यामुत्पुनाति, द्विपाद्यजमानः प्रतिष्ठित्यै' 'पच्छो गायत्रिया त्रिस्समृद्धत्वा' येति च श्रुतिः। 'पच्छः गायत्र्या उदग-ग्राभ्यां पवित्राभ्या'मिति श्रौते उक्तत्वाच्च न मन्त्रावृत्तिः। पादशः एकवारम्।

**'ब्रह्मन्नप' इति सोमाप' इति च ब्रह्मसोमावृत्विजौ प्रत्येकं प्रेक्ष्य ताभ्यां तथा 'प्रणये' त्युक्तः 'को व' इति प्रणीय वेद्यां दक्षि-णोत्तरयोः प्रणिधी निधाय 'संविशन्ता' मिति कूर्चेन जलँ सँस्राव्य गायत्र्या स्रुवं प्रोक्षयेत् ॥ ५ ॥**

'प्राणैस्समं धारयमाणोऽविषिञ्चन् प्रणयति' इति श्रौते प्रणयनप्रकार उक्तः। 'यो वै श्रद्धामनारभ्य यज्ञेन यजते नास्येष्टाय श्रद्दधे अपः प्रणयति' इत्यारभ्य देवमनुष्या इष्टाय श्रद्दधते' इति। तथा। 'अपः प्रणयति यज्ञो वा आपः' इत्यारभ्य 'आपो वै रक्षोघ्नीः यज्ञो वा आपः' 'आपो वै देवानां प्रियं धाम' 'आपो वै सर्वा देवताः' इत्यादि श्रुतयः अपां प्रणयनं शंसन्ति। अन्यत्र च 'अग्नौ तृतीयमप्सु तृतीयं ब्राह्मणे तृतीयं तस्मादुदपात्र-मुपनिधाय ब्राह्मणं दक्षिणतो निषाद्य भेषजं कुर्याद्यावदेव भेषजं तेन करोति समर्धुकमस्य कृतं भव'तीति।

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने तात्पर्यचिन्तामणौ एकादशखण्डार्थविवरणं समाप्तम्।

---

## अथ द्वादशः खण्डः

'भूः स्रुवं गृह्णा' मीति स्रुवं गृहीत्वा 'वर्षिष्ठे अधिनाक' इति वेद्यधस्तात् समिधौ न्यस्य 'अहीनो निर्वपामी' ति स्रुवं प्रक्षाल्य 'निर्दग्ध' मिति पर्यग्निं कृत्वा 'निष्टप्त' मिति समिधोर्निदध्यात् ॥ १

**बोधायनः ।** 'खादिरी दर्वी तेजस्कामस्य, औदुंबर्यन्नाद्यकामस्य, पालाशी ब्रह्मवर्चसकामस्य, अथ हैकेषां विज्ञायते निर्ऋतिगृहीता वै दर्वी यद्दर्व्या जुहुयात् निर्ऋतस्य यज्ञं ग्राहयेत् तस्मात् स्रुवेणैव होतव्य' मिति । 'पालाशेन स्रुवेणेत्यात्रेयः, खादिरेणैवेत्यांगिरसः, ताम्रायसेनेत्याथर्वणः । कार्ष्णायसेनाभिचरन्निति सार्वत्रिकमिति । 'वर्षिष्ठे अधिनाक इत्याह रक्षसामपहत्यै । अग्निष्टे तनुवं मातिधागित्याहानतिदाहाय । अग्ने हव्यँ रक्षेत्याह गुप्त्यै' इति । 'निर्दग्धँ रक्षो निर्दग्धा अरातय इत्याह रक्षाँस्येव निर्दहति 'त्रि पर्यग्नि करोति । त्र्यावृद्धि यज्ञः अथो रक्षसामपहत्यै' इति । समिधोरिति — वर्षिष्ठसमिधोरुपरि इत्यर्थः ।

'अदितिरस्यच्छिद्रपत्रे' त्याज्यस्थालीं गृहीत्वा उत्तरे 'भूतकृतःस्थापोढं' इत्यंगारं न्यस्य 'सगराः स्थ' इति विन्यस्य 'महीना' मिति पचति ॥ २ ॥

**उत्तरे** — उत्तरभागे । पत्नीरक्षणार्थमुत्तरे न्यासः । 'रुद्रो वा एष यदग्निः । पत्नी स्थाली । यन्मध्येऽग्नेरधिश्रयेत् । रुद्राय पत्नीमपिदध्यात् । प्रमायुका स्यात् । उदीचोंऽगारान्निरस्याधिश्रयति पत्नियै गोपीथाय । व्यन्तान् करोति । तथा पत्न्यमायुका भवति' इति श्रुतिः । महीनामिति । 'महीनां पयोऽस्योषधीनाँ रसमित्याह । रूपमेवास्यैतन्महिमानं व्याचष्टे' इति ।

पूर्ववत् पवित्रेण त्रिरुत्पूय आज्यस्थाल्यां (स्थाल्याः पृष्ठगतं) भस्म 'इदं विष्णु' रिति वेदेन शोधयित्वा 'उद्धृतस्थोदह' मिति बर्हिर्दग्ध्वा अंगारं 'अन्तरित' मित्याज्यस्य दर्शयेत् ॥ ३ ॥

श्रुतिः 'यजमानो वा आज्यम्। प्राणापानौ पवित्रे। यजमान एव प्राणापानौ दधाति' इति। अतः पवित्राभ्यामेवोत्पुनाति। पुनराहारमुत्पुनाति, एवमेव प्राणापानौ संचरतः। **वेदेन शोधयित्वेति**। मन्त्रेण शोधनमसुरनिवृत्त्यर्थम्। **श्रुतिः**—'वेदेनैव देवा असुराणां वित्तं वेद्यमविन्दन्त, तद्वेदस्य वेदत्वम्' इति। वेदलक्षणं श्रौते उक्तम्, 'वेदोसी' ति वत्सज्ञं त्रिवृच्छिरसं वा दर्भं वेदं कृत्वा अग्रान् प्रादेशे परिवासयतीति। **अन्तरितमित्यादि**।, **श्रुतिः** - अन्तरितँ रक्षोऽन्तरितमित्याह। रक्षसामन्तर्हित्यै' इति च।

**दक्षिणतोऽङ्गारं गायत्र्या व्यस्य तयैव चरुस्थालीमधिश्रित्य दर्भोल्केन पर्यग्न्यवतारयति ॥ ४ ॥** 38

**तयैव**—गायत्र्यैव। **चरुस्थालीमिति**। 'यजमानो वै पुरोडाशः इति श्रुतेः, येमुत्र पुरोडाशाः त इह चरवः' इति बोधायनवचनाच्च दक्षिणत इत्युक्तम्, इध्मवत् फलम्। **दर्भोल्केनेत्यादि**। **श्रुतिः**। 'यच्छृतं हविरनभिघारितम् अभिद्योतयति। अभ्येवैनद्धारयति। अथो देवत्रैवैनद्गमयति' इति। 'अभिघार्योद्वासयति देवत्रैवैनद्गमयति' इति च। **अवतारयतीति** प्रागादिष्वनुपपन्नत्वादुत्तरत एवावतारणम्। **श्रुतिरपि**। 'यत्प्राचीनमुद्वासयेत्। यजमानं शुचाऽर्पयेत्। यद्दक्षिणा, पितृदेवत्यं स्यात्। यत्प्रत्यक्, पत्नीँ शुचाऽर्पयेत्। उदीचीनमुद्वासयति। एषा वै देवमनुष्याणाँ शान्ता दिक्। तामेवैनदनूद्वासयति शान्त्यै' इति।

**पवित्रेणाऽऽज्यं पात्रे त्रिरुत्पूय 'घर्मोऽ' सीति ग्रन्थिं विसृज्य उत्तरपश्चिमे निधाय अद्भिः प्रोक्ष्य 'आप्यायन्ता' मिति पवित्रं जुहोति ॥ ५ ॥**

**उत्तरपश्चिमेति**। 'प्राणापानौ पवित्र' मिति श्रुतेः पवित्रस्य वायुरूपत्वादुत्तरपश्चिम इत्युक्तम्। **आप्यायन्तामित्यादि**। **श्रुतिः**। 'आप्यायन्तामाप ओषधय इत्याह। आप एवौषधीराप्याययति। मरुतां पृषतयस्स्थेत्याह। मरुतो वै वृष्ट्या ईशते। वृष्टिमेवावरुन्धे। दिवं गच्छ ततो नो वृष्टिमेरयेत्याह। वृष्टिर्वै द्यौः। वृष्टिमेवावरुन्धे' इति।

**'वीतिहोत्र' मिति समिदग्रं घृताक्तं वायव्येऽग्नौ स्थापयित्वा 'देवस्ये' ति स्रुवेण होम्यं द्विधा विहरति ॥ ६ ॥**

**समिदग्रं घृताक्तमिति ।** श्रुतिः – 'अस्थि वा एतत् । यत्समिधः । एतद्रेतः । यदाज्यम् । यदाज्येन समिधोऽभ्यज्यादधाति । अस्थ्येव तद्रेतसि दधाति' इति । द्विधा विहरणमाघारार्थमितरदेवतार्थञ्च, अथवा आघारार्थमन्तहोमार्थञ्च ।

'अबिम्बपूजने रूपं चतुरङ्गुलमुन्नतम् ।
सर्वाधिष्ठानकं देवं पद्मजं ध्यानगोचरम् ॥
सर्वावयवसम्पूर्णं पीतवस्त्रं चतुर्भुजम् ।
शुकपिञ्छाम्बरधरं विष्णुं प्रणवरूपिणम् ॥
एवं ध्यात्वा तु कृत्वा वै पर्जन्यस्य समर्चयेत् ।

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने तात्पर्यचिन्तामणौ द्वादशखण्डार्थविवरणं समाप्तम् ।



## अथ त्रयोदशः खण्डः

—*०*—

**दक्षिणप्रणिधौ ब्राह्मेण तीर्थेन प्रजापतिपुरोगानावाहयामीति उत्तरप्रणिधौ दैवेनाग्न्यादीन् 'औपासनयज्ञं यज्ञदैवतविश्वान् देवान् सर्वदेवानावाहयामीत्यन्तं, पैतृके वैश्वदेवयज्ञं यज्ञदैवतविश्वान् देवानावाहयामीत्यन्तमावाहयेत् ॥ १ ॥**

ननु—ब्राह्मेण तीर्थेनेन्द्रादीनां दैवेनाग्निप्रजापतिपुरोगाणाञ्चावाहनं कथमुपपद्यते । दैवेन तीर्थेनेत्यारभ्य तत्तीर्थेनेति पूर्वमेवोक्तत्वात् । सत्यम् । 'शिरो वा एतद्यज्ञस्य यदाघार' इति 'राजानौ वा एतौ देवतानां यदग्नीषोमावन्तरा देवता इज्येते देवतानां विधृत्या' इति श्रुतेश्च आघाराहुतौ प्रजापतेः अन्यत्राग्न्यादीनां प्राधान्यमवगमयितुं ब्राह्मेण तीर्थेनेत्याद्युक्तम् । यद्वा । 'एकविँशतिमिध्मदारूणि भवन्ति । एकविँशो वै पुरुषः । पुरुषस्याप्त्यै । 'दश हस्त्या अङ्गुल्यो दश पद्याः आत्मैकविँशो यावानेव पुरुषः' इति श्रुतेः, 'अङ्गुष्ठस्याग्नि' रिति सूत्रे उक्तत्वात् 'एकविंशतिराहुतिप्रमाणा' इत्युत्तरत्र वक्ष्यमाणत्वाच्च दैवेनाग्न्यादीन् इत्युक्तम् । पैतृके—पार्वणादौ—औपासनयज्ञस्थाने वैश्वदेवयज्ञमिति विशेषः ।

**यथाऽऽवाहनँ स्रुवेणाज्यमूर्ध्वं नीत्वा 'जुष्टं निर्वपा' मीति निर्वापं करोति ॥ २ ॥**

**यथावाहनम्**—आवाहनक्रमेण । **निर्वापमिति** निर्वापः पात्रान्तरे कर्तव्यः । अत्र भृगुः । 'जुष्टाकारद्वयं पात्र' मित्यादि ।

**'तृप्यधि' द्वयेन द्विधाऽग्नौ होम्यं दर्शयित्वा 'अग्नेर्ज्योति द्वयेन समिदुल्केन द्विधा दहति ॥ ३ ॥**

**तृप्यधिद्वयेन** मन्त्रावृत्त्या, **द्विधाऽग्नौ होम्यम्**—आज्यचरू । निरुप्तपात्रे दर्शयेदिति केचित् । **अग्नेर्ज्योतिर्द्वयेन** पूर्वन्यस्तेन **समिदुल्केन** । हविषो दहनं पश्वादिवृद्ध्यर्थम् । **श्रुतिः** । 'यजमानो वै पुरोडाशः, प्रजाः पशवः पुरीषम् ।

यदेवमधिवासयति। यजमानमेव प्रजया पशुभिस्समर्थयति' इति। यद्वा—रक्षो निर्हरणार्थम्। रक्षोनिर्हरणार्थमेकक्कतमेवालमिति चेत्—तथा न। श्रुतिः। 'काण्डे काण्डे वै क्रियमाणे यज्ञꣳरक्षाꣳसि जिघाꣳसन्ति' इति। 'काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु' इति निघण्टुः। रक्षसां कीर्तनमुपांशु। ऋग्ब्राह्मणे। 'न यज्ञे रक्षाꣳसि कीर्तये' दित्यारभ्य 'स यदि कीर्तयेदुपाꣳशु कीर्तये' दिति। 'तिर इव वा एतद्वाचो यो यदुपांशु तिर इव वैतद्यद्रक्षांसि। अथ यदुच्चैः कीर्तयेदीश्वरो हास्य वाचो रक्षो भाषो जनितो योऽयं राक्षसीं वाचं वदति स यां वै दृप्तो वदति यामुन्मत्तः सा वै राक्षसी वाक् नात्मना दृप्यति नास्य प्रजायां दृप्त आजायते य एवं वेद' इति। किञ्च। तुषैर्वै फलीकरणैर्देवा हविर्यज्ञेभ्यो रक्षांसि निर्भजन् अस्मा महायज्ञात्' इति।

**'समिदसि स्वाहे' ति समिधं जुहोति॥ ४॥**

**स्रुवेणाऽऽज्यं गृहीत्वा 'अमृतमसी' त्यनुत्तानं 'अन्तरितमि' त्युत्तानं 'प्रत्युष्ट' मित्यनुत्तानं होम्यं प्रदक्षिणमभिमन्त्र्य आज्यं गृहीत्वोत्तानꣳस्वनो दक्षिणतो वामतः प्रणीताग्रꣳसन्धाय 'चित्पतिस्त्वा' दिभिस्त्रिभिरेवं त्रिधाऽग्नौ संवपति॥ ५॥**

स्रुवेणेत्यादिना अनुत्तानादिकमुच्यते। अग्नौ संवपनेन पवित्रतासिद्धिः।

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने तात्पर्यचिन्तामणौ त्रयोदशखण्डार्थविवरणं समाप्तम्।



## अथ चतुर्दशः खण्डः

गायत्र्या समिधः प्रोक्ष्य एकविंशतिमाहुतिप्रमाणाः करसम्पूर्णा वा समिधो गृहीत्वा मूलाग्राभ्यां घृतँ स्पर्शयित्वाऽभ्यर्च्याक्षताज्य-चरुभिः 'इमा मे अग्न' इति मूलमध्याग्राणि स्पर्शँस्पर्शमधो नीत्वो-र्ध्वभागे मध्ये च सन्दधाति ॥ १ ॥

एकविंशतिसङ्ख्यात्वेन गृहीताः । आहुतिप्रमाणाः इत्यत्र आहुति-सङ्ख्याका इति केचिद्वदन्ति । तदसत् । आहुतीनां तदधिकसङ्ख्यात्वेन विद्यमानत्वात् श्रुतिविरोधाच्च । एकविंशतीध्मदारूणि भवन्ति' इत्यादिश्रुतिः । अभ्यर्च्येत्यादि । 'त्रेधा अनक्ति । त्रय इमे लोकाः । एभ्य एवैनं लोकेभ्योऽनक्ती' ति श्रुतिः । 'इमा मे अग्न इष्टका धेनवस्सन्त्वित्याह धेनूरेवैनाः कुरुते । ता एनं कामदुघा अमुत्रामुष्मिन् लोक उपतिष्ठन्ते' इति मन्त्रः । अत्रेष्टकाशब्दो यौगिकः । 'प्रकरणानुक्रान्तो योगो रूढिमपहरति' इति न्यायात् ।

दैवेन तीर्थेन दक्षिणस्यामद्भिः प्रागन्तं 'अदितेऽनुमन्यस्वे'ति, पश्चिमस्यामुत्तरान्तं 'अनुमतेऽनुमन्य' स्वेति, उत्तरस्यां प्रागन्तं 'सरस्वतेऽनुमन्य' स्वेति 'देवसवितुः प्रसुवे'ति' पूर्वस्यामुदगन्तमाग्ने-य्याद्यन्तं सर्वतश्च प्रदक्षिणं परिषिञ्चति ॥ २ ॥

दैवेनेति । स्वाभिमुखीकरणार्थं परिषेचनमुच्यते ।

'षष्टिँशते' त्यभिमन्त्र्य 'अयं त इध्म' इतीध्मानसङ्कुलान् शरोऽङ्गारेऽग्नौ जुहुयात् ॥ ३ ॥

श्रुतिः । 'यदाग्निमुद्धरति' इत्यारभ्य 'शरोऽङ्गारा अध्यूहन्ते । ब्रह्म तर्ह्यग्निः । तस्मिन् यस्य तथाविधे जुह्वति । ब्रह्मन्नेवास्याग्निहोत्रं हुतं भवति' इति ।

**यस्यै देवतायै हविर्निरूप्येत तां देवतां मनसा ह वै ध्यायन्निर्वपेत् ॥ ४ ॥**

**यस्यै देवतायै** इत्यादि । यां देवतामुद्दिश्य हविर्निरूप्यते तां देवतां ब्रह्मात्मादिशब्दवाच्यो नारायण एवेति ध्यायन्निर्वपेत् । 'एको ह वै नारायण आसी' दित्याद्युपनिषत्प्रत्यभिज्ञापकत्वेन ह वै इति प्रसिद्धवन्निर्देशस्य सूत्रे प्रतिपादितत्वात् । 'शरोऽङ्गारेऽग्नौ जुहुया' दित्युक्तत्वाच्च । यद्वा परमात्मनो नारायणस्याङ्गभावेन ध्यायन् । 'अङ्गान्यन्या देवता' इति श्रुतेः । यद्वा अन्तर्यामित्वेन ध्यायन् ।

ननु — 'विग्रहो हविरादानं युगपत्कर्मसन्निधिः ।
प्रीतिः फलप्रदत्वञ्च देवतानां न विद्यते' ॥

इति मीमांसकमते देवतानां विग्रहाद्यभावात् चतुर्थ्यन्तश्शब्दो देवतेति शब्दातिरिक्तदेवतानङ्गीकारात् मन्त्रार्थवादानां स्वार्थे तात्पर्याभावाच्च शब्दात पृथक्त्वेन देवता कथं प्रतिपाद्यत इति चेत् । उच्यते । 'यद्वै किञ्च मनुरवदत्तद्भेषज' मिति श्रुतेः ।

'वेदाद्युपनिबन्धत्वात् प्राधान्यन्तु मनोः स्मृतम् ।
मन्वर्थविपरीता तु या स्मृतिस्सा न शस्यते' ॥ इति ।

बृहस्पति स्मरणात्— 'यत्पूर्वं मनुना प्रोक्तं धर्मशास्त्रमनुत्तमम् ।
नहि तत्समतिक्रम्य वचनं हितमात्मनः' ॥

इत्यङ्गिरस्स्मरणाच्च प्रामाणत्वेनावगतमनुस्मृतौ —

'प्रत्यक्षमनुमानञ्च शास्त्रञ्च विविधागमम् ।
त्रयं सुविदितं ज्ञेयं धर्मसिद्धिमभीप्सते' ति स्मरणात्

'महाँ इन्द्रो वज्रबाहुरिति' शास्त्रादिभिरस्तीत्यवगम्यते । यथोपरागादिः । युगपत्कर्मसन्निधिश्च सौभरिप्रभृतिषु विद्यमानत्वादिन्द्रादिषु किंपुनर्न्यायसिद्धम् । युगपदनेकशरीरपरिग्रहश्च एकस्य कथं सम्भवतीति चेत्- ज्ञानद्वारे-

त्युच्यते । मन्त्रार्थवादानां स्वार्थे तात्पर्यं गारुडादिषु दृश्यते । अतस्तां देवता-मित्याद्युक्तम् ।

**यथाह वास्य सुषुम्ना ज्योतिष्मती प्राणवती रेतोधा इत्येत आहुतिं गृहीत्वा रश्मयश्चतस्रः पृश्नौ सन्दधीरन् सह वा शुद्धाऽमृतवहा चिबुही दिव्या लोकपानीत्येताभिश्चन्द्रमसमाप्याययति असौ नु राजा सोम आप्यायिनो मूलगामी वपागाम्यमृतोद्गारी सुरप्रियेत्येताभिरमृतेन तां देवतां तर्पयति ॥ ५ ॥**

**यथा ह वा अस्येति** । आहुतीनां कलाद्वारा तत्तद्देवताप्रापणमुच्यते । **सन्दधीरन्** स्थापयन्ति ।

मनुः – ‘ अग्नौ प्रास्ताहुतिस्सम्यगादित्यमुपतिष्ठते ’ । इति

पुनरपि कलाद्वारा चन्द्रस्याप्यायनमाह सह वेत्यारभ्य **चन्द्रमसमाप्याय-यतीत्यन्तेन** । सोमोत्पत्तौ अग्नौ हुतञ्च दत्तञ्च सर्वं सोमगतं भवेत् ’ इति । पुनरपि चन्द्रमसः कलाद्वारा तत्तद्देवताप्रीतिरुच्यते **मूलगामीत्यादिना** – कदा वा देवता-तृप्तिरिति चेत् – उच्यते । ‘अग्नौ हुतञ्च दत्तञ्च सर्वं सोमगतं भवे ’दित्यारभ्य ‘ प्रथमां पिबते वह्नि ’ रित्यादिना तत्तत्तिथिषु तत्तद्देवताप्रीतिमुक्त्वा ‘हुतमग्निषु यज्ञेषु पुनराप्यायते शशी ’ त्यादिना पुनराप्यायनस्य प्रतिपादितत्वात् । ‘सद्यो मनुष्याः, अर्धमासे देवाः, मासि पितरः संवत्सरे वनस्पतयः तस्मादहरहर्मनुष्या अशनमिच्छन्तेऽर्धमासे देवा इज्यन्ते मासि पितृभ्यः क्रियते संवत्सरे वनस्पतयः फलं गृह्णन्ति ’ इति श्रुतेः ‘ **अमृतेन तां देवतां तर्पयती** ’ ति सूत्रे प्रतिपादितत्वाच्च परपक्षे देवतातृप्तिः । **षड्विंशब्राह्मणे** । ‘अथैवा चन्द्रमसे क्षयवृद्धिर्भवति । यथा वै चन्द्रमाः क्षीयते च तदनुव्याख्यास्यामः पूर्वपक्षे वै देवा दीक्षन्तेऽपरपक्षे सोमं भक्षयन्ति तत्रेमानि त्रीणि पात्राण्युपधीयन्ते पृथिवी पात्रमन्तरिक्षं पात्रं द्यौः पात्रमिति । तं देवा दिव्येन पात्रेणादित्याः प्रथमं पञ्चकलं पञ्चमीं भक्षयन्ति तेऽन्तरिक्षेण पात्रेण रुद्राः द्वितीयं पञ्चकलं पञ्चमीं भक्षयन्ति ते पृथिव्या पात्रेण वनस्पतीयं पञ्चकलं पञ्चदशीं भक्षयन्ति षोडशी कलाऽवशिष्यते षोडशकलो वै चन्द्रमा ’ इति ।

श्रीविष्णुपुराणे—'सूर्यरश्मिस्सुषुम्ना यः तर्पितस्तेन चन्द्रमाः ।
कृष्णपक्षे तु वै शश्वत्पीयते वै सुधामयः' ॥
'मनुस्स वर्तते धीमान् साम्प्रतं सप्तमेऽन्तरे ।
आदित्या वसुरुद्राद्या देवास्तत्र महामुने' ॥ इति मनुः ॥

'अग्निं दूतं वृणीमहे' 'अग्निर्यज्ञस्य हव्यवाट्' 'अग्नेस्त्रयो ज्यायाँसो भ्रातर आसन् । ते देवेभ्यो हव्यं वहन्तः प्रामीयन्त' इत्यादि श्रुतिषु अग्न्यादिभिरिति श्रूयते । कलाद्वारेण कथमिति चेत्सत्यम्—श्रुतिमार्गानुसारेण सुषुम्नेत्यादिकमुक्तम् ।

किञ्च । आवाहितानामत्रैव भागग्रहणम् । 'उत्तिष्ठन्नोजसा सह पीत्वा शिप्रे अवेपयः' इति मन्त्रात् आवाहनरहितानामग्न्यादिभिर्नयनम् । यद्वा । 'ब्राह्मणस्य ह वै देवा हविर्जुषन्ते स्वल्पमप्येकामाहुतिमपि तद्गिरिमात्रं वर्धयन्ते' इति श्रुत्या गिरिरूपेण वर्धितस्य हविषो देवतार्पणं- अग्न्यादिभिः किञ्चित्, देवताभिः किञ्चित् अवशिष्टं कलाद्वारेण । यद्वा । सोमादमृतपानं कुर्वतां कलाद्वारेण तृप्तिः । 'तेऽपरपक्षे सोमं भक्षयन्ती'त्यादिश्रुतेः । यद्वा 'ते वा एते आहुती हुते उत्क्रामतस्तेऽन्तरिक्षमाविशतः तेऽन्तरिक्षमाहवनीयं कुर्वाते वायुमेव समिधं शुक्रामाहुतिं ते अन्तरिक्षं तर्पयतः, ते ततः उत्क्रामतः, ते ततः दिवमाविशतः ते दिवमाहवनीयं कुर्वाते आदित्यं समिधं चन्द्रमसमेव शुक्राहुतिं, ते दिवं तर्पयतस्ते तत आवर्तेते इमामाविशत' इति वाजसनेयके द्विवचनान्तत्वेन प्रतिपादनात् अग्निहोत्राहुतिपरमित्यवगम्यते । अत्र आहुतिशब्दार्थः क इति चेत्—देवताह्वानमिति ऋग्ब्राह्मणे श्रूयते । 'आहूतयो वा नामैता यदाहुतयः । एताभिर्वै देवान् यजमानो ह्वयति । तदाहुतीनामाहुतित्वम् । ऊतयः खलु वैता नाम याभिर्देवा यजमानस्य हवमायान्तीति ॥

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ चतुर्दशखण्डार्थविवरणं समाप्तम् ।

---

## अथ पञ्चदशः खण्डः

—*०*—

**स्रुवेणाज्यं स्रावयन् परिधी स्पृष्ट्वा वायव्यादाग्नेयान्तं प्रजापतये स्वाहेति, नैर्ऋत्यादीशानान्तमिन्द्राय स्वाहेत्याघारौ जुहुयात् ॥ १ ॥**

**स्रुवेणाज्यं स्रावयन्नित्यादिना** आघाराहुत्योर्होमप्रकार उच्यते। **श्रुतिः** 'आघारमाघारयति तिर इव वै सुवर्गो लोकः सुवर्गमेवास्मै लोकं प्ररोचयति, ऋजुमाघारयति ऋजुरिव हि प्राणः सन्ततमाघारयति प्राणानामन्नाद्यस्य सन्तत्या' इति। 'यं कामयेत प्रमायुकस्स्यादिति जिह्मं तस्याघारयेत् प्राणमेवास्माज्जिह्मन्नयति ताजक् प्रमीयते शिरो वा एतद्यज्ञस्य यदाघारः' इति। **श्रौते च।** 'वेदेनोपयम्य सन्ततमृजुं ज्योतिषि प्राजापत्यमाघारमाघारयति। नाभिं प्रति स्रुचौ धारयते समं प्राणैरित्येके' इति। 'तस्मान्मनसा प्रजापतये जुह्वति मन इव हि प्रजापतिः प्रजापतेराप्त्या' इति।

**चक्षुषी बुद्ध्वा अग्नये स्वाहा सोमाय स्वाहेत्याज्यभागावुत्तरदक्षिणयोः जुहोति ॥ २ ॥**

**चक्षुषीत्यादि। श्रुतिः।** '**चक्षुषी** वा एते यज्ञस्य यदाज्यभागौ, यदाज्यभागौ यजति चक्षुषी वा एतद्यज्ञस्य प्रतिदधाति, पूर्वार्धे जुहोति तस्मात्पूर्वार्धे चक्षुषी प्रबाहुग्जुहोति तस्मात्प्रबाहुक् चक्षुषी देवलोकं वा अग्निना यजमानोऽनुपश्यति पितृलोकं सोमेनोत्तरार्धेऽग्नये जुहोति दक्षिणार्धे सोमायैवमिव हीमौ लोकावनयोर्लोकयोरनुख्यात्यै राजानौ वा एतौ देवतानां यदग्नीषोमावन्तरा देवता इज्येते देवतानां विधृत्यै तस्माद्राज्ञा मनुष्या विधृताः' इति। **श्रौते।** 'उत्तरार्धेऽग्नये दक्षिणार्धेसोमाय तावन्तरेणेतरा आहुतीर्जुहोति' इति। **श्रुत्यन्तरे।** 'यदा लेलायते ह्यर्चिस्समिद्धे हव्यवाहने तदाज्यभागावन्तरेणाहुतीः प्रतिपादये' दिति। 'वज्र आज्यं' 'वज्र आज्यभागौ वज्रो वषट्कारः त्रिवृतमेव वज्रं सम्भृत्य भ्रातृव्याय प्रहरति' इति।

ननु वषट्कारस्तु श्रौते, स्मार्ते तावत् स्वाहा शब्द एव। वषट्काराभावात्। पृथक् फलमिति (?) चेत्। सत्यम्। स्वाहाशब्दस्य वषट्कारपर्यायवाचकत्वं श्रूयते। षड्विंशब्राह्मणे। 'स्वाहा वै कुतस्सम्भूता कस्य दुहिता केन प्रकृता किंगोत्रा कत्यक्षरा कतिपादा कतिमात्रा कतिवर्णा कत्युच्छ्वासा किञ्चास्याः शरीरं कान्यङ्गानि कानि लोमानि कति शिरांसि कति वा चक्षूंषि किमास्यं किंप्रावृता कौ बाहू कौ पादौ क्वचाधिष्ठिता किमधिष्ठाना कथञ्चन स्वाहा प्रतिगृह्णाति। ब्रूहि स्वाहाया रूपञ्च। स्वाहा वै सत्यसम्भूता ब्रह्मणो दुहिता ब्रह्मप्रकृता लातव्यसगोत्रा त्रीण्यक्षराणि एकं पादं त्रयोऽस्यै वर्णाः शुक्लं पद्मं सुवर्णमिति चत्वारोऽस्यै वेदाः शरीरं षडङ्गान्यङ्गानि ओषधिवनस्पतयो लोमानि द्वे चास्याश्शिरसी एकं शिरोऽमावास्या द्वितीयं पौर्णमासी चक्षुः चन्द्रादित्यावाज्यभागौ हुतं दक्षिणा प्रावृतं बृहद्रथन्तरमृग्यजुस्सामगतिः सा स्वाहा सा स्वधा सा वषट्कारः, सैषा देवेषु वषट्कारभूता प्रयुज्यते पितृयज्ञेषु स्वधाभूता शकटमुखं पृथिवीमन्तरिक्षेण विपर्येति। तस्याग्निर्दैवतं ब्रह्मणो रूपं यत्कामास्ते जुहुमस्तन्नो अस्तु वयँ स्याम पतयो रयीणाँ स्वाहेति। तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति' इति। किञ्च स्वाहाकारस्योत्पत्त्यादिकमग्निहोत्राहुतिं प्रस्तुत्य यजुषि श्रूयते। 'जुहवानीमाहौषामिति तद्विचिकित्सायै जन्मे' त्यारभ्य 'तं वागभ्यवदज्जुहुधीति। सोऽब्रवीत्। कस्त्वमसीति। स्वै वते वागित्यब्रवीत्। सोऽजुहोत्स्वाहेति। तत्स्वाहाकारस्य जन्म। य एवँ स्वाहाकारस्य जन्म वेद। करोति स्वाहाकारेण वीर्य' मिति। नमस्स्वाहास्वधावषट्काराणां प्रयोगेण यथाशक्ति कृतमपि(?) भयराहित्यं कर्मणामवगमयते!

शान्तिपर्वणि – 'ओमिति ब्रह्मणो योनिर्नमस्स्वाहा स्वधा वषट्।
यस्यैतानि प्रयुज्यन्ते यथाशक्ति कृतान्यपि॥
न तस्य त्रिषु लोकेषु परलोके भयं विदुः।
इति वेदा वदन्तीहं वृद्धाश्च परमर्षयः'॥ इति।

कथमिदमुपपद्यत इति चेत्। छन्दसां वीर्यरूपत्वादुपपद्यते। यजुषि। 'एतद्वै छन्दसां वीर्यमाश्रावयास्तु श्रौषट् यज येयजामहे वषट्कार' इति।

ननु–सर्वमन्त्रेष्वपि स्वाहान्तत्वेन किमर्थं क्रियते नमोऽन्तत्वेन किं वा न स्यादिति चेत्। सत्यम्।

'हव्यं कव्यञ्च यत्किञ्चिद्द्विजा मन्त्रपुरस्सरम्।
होष्यन्त्यग्नौ सदा देवि स्वाहेत्युक्त्वा समुद्यतम्॥
अद्य प्रभृति दास्यन्ति सुवृत्ताः सत्पथे स्थिताः।
एवमग्निस्त्वया सार्धं त्वया पश्यति शोभने'॥

इति आरण्यपर्वणि सप्तर्षिपत्नीसम्भोगालाभात् वनगतस्याग्नेररुन्धतीव्यतिरिक्तानां रूपेण सकामायाः स्वाहादेव्यास्सम्भोगादिकं स्वस्वभर्त्रा तासां त्यागं स्कन्दवरेण तासां षट्कृत्तिकात्वमनन्तरं मातॄणां वरप्रदानमपि प्रतिपाद्य अग्निना सह वस्तव्यमिति प्रार्थयमानाया (स्वाहायाः) एवमेव वरो दत्तः। अग्निना सहवास-सिद्धिद्वारा कर्तुरप्यभीष्टसिद्धिस्सम्भवतीत्यभिप्रायेण स्वाहान्तत्वेन प्रयुक्तम्।

अत्रोद्देशत्यागं केचिद्वदन्ति। केचित्तु–

'मान्त्रवर्णिकदेवेभ्यः स्वाहान्तं हूयते हविः।
स एवोद्देश इत्युक्तः त्यागश्च हविषः स्मृतः'॥ इति।

श्रौते च यजमानस्यैव समस्तक्रतौ श्रूयमाणाः कामाः ब्रह्मचर्यं द्रव्योपस्थान कर्मकरणाः मन्त्राः प्रत्यगाशिषश्चेति 'अग्नेरहं देवयज्यये' त्यादि मीमांसकमतानु-सारेण (उद्देशत्यागं) कुर्वन्ति। करणे अभ्युदयः। अकरणे न दोषः। अनुक्तत्वात्।

**'युक्तो वहे' ति पश्चिमादि सौम्यान्तं 'या तिर' श्चीति सौम्या-दीन्द्रान्तं 'सँराधन्यै देव्यै स्वाहे' तीन्द्रादियाम्यान्तं प्रसाधन्यै देव्यै स्वा' हेति याम्यादि वारुणान्तं स्रावयन् हुत्वा मध्यं आस्यमिति बुद्ध्वा तत्र व्याहृतीर्जुहोति ॥ ३ ॥**

**'तदग्निमुखमिति ब्रह्मवादिनो वदन्ति ॥ ४ ॥**

अग्नेर्मुखं दर्शयति–युक्तो वहेत्यादिना 'मध्यमास्यं बुद्ध्वे' त्युक्तत्वात्। बुद्धिसौकर्यार्थं वा 'व्याहृतीर्जुहोती' ति 'चतस्रश्चतस्रो व्याहृतयः। ता

यो वेद । स वेद ब्रह्म । सर्वेऽस्मै देवा बलिमावहन्ति' इति 'व्याहृतीनां प्रयोगे यथाकृतं यथावद्भवतीत्याचार्या ब्रुवते' इति बोधायनः ।

**'सत्येने' त्यभिमृश्य आज्येन जुहोति ॥ ५ ॥**

श्रुतिः । ब्रह्मवादिनो वदन्ति । यदाज्येनान्यानि हवींष्यभिघारयति । अथ केनाज्यमिति । सत्येनेति ब्रूयात् । चक्षुर्वै सत्यम् । सत्येनैवैनदभिघारयति' इति । आज्यस्यायातयामत्वञ्च श्रूयते । 'ब्रह्मवादिनो वदन्ति कस्मात्सत्याद्यातयामान्यन्यानि हवीँष्ययातमयाममाज्यमिति – प्राजापत्यमिति ब्रूयादयातयामो हि देवानां प्रजापति' रिति ।

**'अग्नये स्वाहा सोमाय स्वाहा अग्नीषोमाभ्याँ स्वाहा प्रजापतये स्वाहा ब्रह्मणे स्वाहेन्द्राय स्वाहा वसुभ्यस्स्वाहा मरुद्भ्यस्स्वाहा रुद्रेभ्यस्स्वाहा विष्णवे स्वाहा बृहस्पतये स्वाहा मित्राय स्वाहा वरुणाय स्वहा आदित्येभ्यस्स्वाहाऽश्विभ्याँ स्वाहा पूष्णे स्वाहा कक्षाय स्वाहा कक्षदैवतसोमाय स्वाहौपासनयज्ञाय स्वाहा यज्ञदैवतविश्वेभ्यो देवेभ्यस्स्वाहा सर्वदेवेभ्यस्स्वाहेत्यन्तं हुत्वा दर्व्याऽभिघार्य चरुँ सावित्र्या गृहीत्वा जुह्वा व्याहृतीर्जुहोति ॥ ६ ॥**

निरुप्ताज्येन अग्नये स्वाहेत्यारभ्य सर्वेभ्यो देवेभ्य इत्यन्तेन पूर्वोक्तदेवताभ्यो होमः । व्याहृतीरित्यादि – ऋग्ब्राह्मणे – 'सर्वास्तिर्वा एषा यदेता व्याहृतयः, सर्वेण हास्य परस्मै कृतं भवति' इति । यजुषि – 'दर्विहोमं करोति यज्ञस्य प्रतिष्ठित्या' इति । पक्वहोमान्तमेवाघारविधानम् ।

**'अतो देवा' – 'इदं विष्णु' रित्याज्यं समृद्ध्यै जुहुयात् ॥ ७ ॥**

ऋग्ब्राह्मणे । 'विष्णुर्वै देवानां द्वारपः स एवास्मा एतं द्वारं विवृणो'तीति ।

**पैतृके वैश्वदेवयज्ञाय स्वाहा यज्ञदैवतविश्वेभ्यो देवेभ्यस्स्वाहेत्यन्तं हुत्वा पक्वं जुहुयात् ॥ ८ ॥**

पैतृके औपासनयज्ञस्थाने वैश्वदेवयज्ञायेति । शेषं पूर्ववत् । पक्वहोमे श्रुतिः । यजुषि । 'यो विदग्धस्सनैर्ऋतो योऽशृतस्स रौद्रो यश्शृतस्स स देव' इति ।

इति सर्वहोमानामादिराघारो विज्ञायते ॥ ९ ॥

'या आघारवतीस्ता आयतनवती' रिति । प्रसङ्गादत्राग्निपरीक्षा चोच्यते । काश्यपीये । पौण्डरीकाग्निकुण्डोत्पत्तिमधिकृत्य श्रीकामं प्रत्युच्यते । 'पूर्ववदाघारं हुत्वा तत्राग्निमुपलक्षयेत् । विना यत्नेन वा दीप्यते शिखाभिरुज्ज्वलद्भिस्सहितो वा भवेत् प्रदक्षिणं वा ह्रुदं वा गन्धं रूपं वा सुमनोहरं सोऽग्निस्सिद्धिकरः । विसृजेद्वा विस्फुलिङ्गान् दुर्गन्धो यदि वा न दीप्यतेऽपसव्यं ज्वलत्यसिद्धये। तस्मादेवं विदित्वा साधयेत् । दक्षिणनयनादिस्फुरणमुपलक्षयेत् । उद्वहनकाले यदाऽऽज्यगन्धो वाति सद्यः हस्तप्राप्ता श्रीरिति वेदितव्य' मिति ।

अथाग्निध्यानम् –

'चत्वारि शृङ्गा इत्यग्निध्यानं सम्यक् समाचरेत् ।
वसन्तीं श्यामकौशेयं द्रुतकाञ्चनशोभिनीम् ॥

लक्ष्मीमिवापरां देवीं स्वाहां ध्यायेत्सुमन्त्रवित् ।
नवदूर्वादलश्यामां रक्तकौशेयवासिनीम् ॥

सुखभोगासनासीनां स्वधामेवं विभावयेत् ।
अथवा यज्ञमूर्तेस्तु ध्यानं सम्यक् समाचरेत् ॥

ब्राह्ममासनमासीनं कुण्डमध्ये हुताशनम् ।
प्रत्यङ्मुखं रक्तवस्त्रं तरुणाऽदित्यसन्निभम् ॥

स्वाहास्वधाभ्यामासीनं सर्वदेवात्मकं परम् ।
एकं वै हृदयं तस्य त्रयः पादाः शिरो द्वयम् ॥

चतुश्शृङ्गं चतुर्णेत्रं सप्तजिह्वं द्विनासिकम् ।
दक्षिणस्यां चतस्रस्तु जिह्वास्तिस्रस्तथोत्तरे ॥

सप्तहस्तं स्मरन्नग्निं सर्वाभरणभूषितम् ।
कृष्णाजिनोत्तरासङ्गं मौञ्जीदण्डसमन्वितम् ॥

स्रुक्स्रुवाक्षस्रजश्शक्तिं दधन्तं दक्षिणैः करैः ।
तोमरं व्यजनञ्चाज्यपात्रं वै वामबाहुभिः ॥

बिम्बञ्च यज्ञमूर्तेस्तु कुर्यादेवमिति श्रुतिः ।
हिरण्या कनका रक्ता कृष्णा चैव तु सुप्रभा ॥

अतिरिक्ता बहुरूपा जिह्वास्सप्त प्रकीर्तिताः ।
ईशानेन्द्राग्निनिर्ऋतिवरुणानिलमध्यगाः ॥

आघारान्ते सुहोतव्यं सप्तजिह्वासु वैष्णवम् ।
हिरण्यायां समिद्धोमः कनकायां यजेत् घृतम् ॥

सर्षपांश्चैव रक्तायां कृष्णायां लाजमेव च ।
सुप्रभायान्तु देवं तं ध्यात्वाऽऽपूपं जुहोति च ॥

होतव्यमतिरक्तायां तिलं सर्वामरप्रियम् ।
अन्यानि बहुरूपायां जुहुयान्मनसा स्मरन् ॥

समिद्धोमे स्थितो वह्निश्शेते च स घृताहुतौ ।
आसीनश्चरुहोमेषु तिलसर्षपसक्तुषु ॥

अन्यथाऽग्नौ हुतं यत्तत्सर्वं भवति निष्फलम् ।
चतुरङ्गुलिसंस्रावा ह्यविच्छिन्ना घृताहुतिः ॥

अङ्गुष्ठपर्वमात्रा तु गृहीताऽन्नाहुतिस्स्मृता ।
अन्नमक्षप्रमाणं स्याल्लाजं मुष्टिमितं भवेत् ॥
तिलसर्षपसक्तूनां शुक्तिमात्राऽऽहुतिर्भवेत्' ॥ इति ।

किञ्च — 'साङ्गुष्ठयाऽनामिकया समालिङ्ग्य स्रुवं तथा ।
प्रदेशिनीमध्यमे च स्रुवस्याधः प्रसार्य च ॥

वेदाङ्गुलप्रमाणञ्च यजेदाज्याहुतिं बुधः ।
अङ्गुष्ठानामिकामध्यैः समिधं जुहुयाच्चरु' मिति ॥

भृगुः — 'होमद्रव्याधिपान् वक्ष्ये भूमिं मृत्सिकतासु च ।
स्थण्डिलं सोमदेवत्यं कुण्डवेद्यां प्रजापतिः ॥

सभ्याब्जकुण्डाधोवेदिदेवः सोमो दलेषु वै ।
वसवः पञ्चभूताधिदेवत्यं करकं स्मृतम् ॥
लेखास्स्कन्दाधिदेवत्याः खननं पितृदैवतम् ।
हव्यवाडिन्धनाधीशो विहारो वायुदैवतम् ॥
कूर्चाग्रग्रन्थिमूलेषु ब्रह्मविष्ण्वीश्वराः क्रमात् ।
चत्वारो विष्णुदेवत्याः परिस्तरणकूर्चकाः ॥
परिधीनामुत्तरान्तं प्राग्विना पश्चिमादिकम् ।
गन्धर्वेन्द्रजलेशेशा ऋषयस्सप्त बर्हिषि ॥
तथोर्ध्वसमिधोर्देवः प्रजापतिरिति स्मृतः ।
स्रुवस्सोमाधिदेवत्यो जुह्वादिषु दिवाकरः ॥
ब्रह्मसोमौ तु सम्प्रोक्तौ तथा प्रणिधिपात्रयोः ।
आज्यस्याग्निश्चरोरीशस्सर्वे देवास्तथा क्रमात् ॥
तोयस्य वरुणो देवः अज्ञातानां पितामहः ।
समिधामेकविंशानां देवास्सर्वे इति स्मृताः ॥
पलाशबिल्वन्यग्रोधाः शमी चोदुम्बरः क्रमात् ।
अश्वत्थः खदिरश्चैव समिधः सप्त कीर्तिताः ।
अग्निश्श्रीर्यमवायू च सोमार्कौ पद्मजोऽऽधिपाः ॥
बुद्ध्वा तु दैवतं मन्त्री तत्तत्कर्माणि कारयेत् ।
यदि स्यादन्यथा नाशं कर्म कर्ता च नश्यति ॥

अतो दोषनिर्हरणार्थं तत्तदधिपान् स्मृत्वा पश्चात् तत्तत्कार्म समारभेत ।

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने तात्पर्यचिन्तामणौ पञ्चदशखण्डार्थविवरणं समाप्तम् ।

## अथ षोडशः खण्डः

—*०*—

अथ सामान्यतः क्रियाया होममन्त्राः ॥ १ ॥

'धाता ददातु नो रयिं' 'धाता प्रजाया' 'धाता ददातु नो रयिं प्राचीं' 'धाता ददातु दाशुषे' 'अनुनोऽद्यानुमतिः' 'अन्विदनुमते त्वम्' 'आमावाजस्य' 'समाववर्ति' 'अनुमन्यतां' 'यस्यामिदं' 'राकामहं' 'यास्ते राके' 'सिनीवालि' 'या सुपाणिः' 'कुहूमहं' 'कुहूर्देवानामिति' धातादि षोडश ॥ २ ॥

अथ—आघारानन्तरं सामान्यतः क्रियायाः निषेकादिक्रियायाः होममन्त्राः। क्रियाया इति जात्येकवचनम्। ऋगादिषु पादभेदस्य विद्यमानत्वात् यजुश्शाखानुसारेण कर्तव्यत्वज्ञापनार्थं मन्त्राणामादिग्रहणं क्रियते। व्रतादिषु धातादिपूर्वमित्युक्तेः मन्त्रचतुष्टयमेवेत्याशङ्क्य तद्व्यावृत्त्यर्थं षोडशेत्युक्तम्।

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने तात्पर्यचिन्तामणौ षोडशखण्डार्थविवरणं समाप्तम्।



## अथ सप्तदश खण्डः

—⁂०⁂—

'इमं मे वरुण' 'तत्त्वायामि' 'त्वं नो अग्ने' 'स त्वं नो अग्ने' 'त्वमग्ने अयास्ययासन्नि'ति पञ्च वारुणम् ॥ १ ॥

तृतीयादिषु मन्त्रेष्वग्निशब्दस्य विद्यमानत्वात् मन्त्रलिङ्गवशादाग्नेयमपि भवतीत्याशङ्क्य देवस्य वरुणस्येति वरुणस्य प्राधान्यावगमात् पञ्चवारुणमित्युक्तम् ।

'प्रजापते न त्वत्' 'प्रजापतिर्जयान्' इत्युपांशुयाजे प्राजापत्ये ॥ २ ॥

'चित्तञ्च चित्तिश्चाकूतञ्चाकूतिश्च विज्ञातञ्च विज्ञानञ्च मनश्च शक्करीश्च दर्शश्च पूर्णमासश्च बृहच्च रथन्तरञ्च स्वाहे'ति चित्तादि द्वादश जयाः ॥ ३ ॥

'अग्निर्भूतानामधिपतिस्समावत्विन्द्रो ज्येष्ठानां यमः पृथिव्याः वायुरन्तरिक्षस्य सूर्यो दिवश्चन्द्रमा नक्षत्राणां बृहस्पतिर्ब्रह्मणो मित्रस्सत्यानां वरुणोऽपां समुद्रः स्रोत्यानामन्नँसाम्राज्यानामधिपति तन्मावतु सोम ओषधीनाँ सविता प्रसवानाँ रुद्रः पशूनां त्वष्टा रूपाणां विष्णुः पर्वतानां मरुतो गणानामधिपयतयस्ते माऽवन्तु पितरः पितामहाः परेऽवर'इत्यष्टादशाग्निर्भूतादयोऽभ्याताना: ॥ ४ ॥

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ सप्तदशखण्डार्थविवरणं
समाप्तम् ।

---

## अथ अष्टादशः खण्डः

—※×※—

'ऋताषाडृतधामाग्निर्गन्धर्वस्तस्यौषधयोऽप्सरस ऊर्जो नामेति, 'सँहितो विश्वसामा सूर्यो गन्धर्वस्तस्य मरीचयोऽप्सरस आयुवो नामेति, 'सुषुम्नस्सूर्यरश्मिश्चन्द्रमा गन्धर्वस्तस्य नक्षत्राण्यप्सरसो बेकुरयो नामेति, 'भुज्युः सुपर्णो यज्ञो गन्धर्वस्तस्य दक्षिणा अप्सरसस्तवा नामेति, 'प्रजापतिर्विश्वकर्मा मनोगन्धर्वस्तस्यर्क्सामान्यप्सरसो वह्नयो नामेति 'इषिरो विश्वव्यचा वातो गन्धर्वस्तस्यापोऽप्सरसो मुदा नामेति, 'भुवनस्य पत इति 'परमेष्ठ्यधिपतिर्मृत्युर्गन्धर्वस्तस्य विश्वमप्सरसो भुवो नामेति, 'सुक्षितिस्सुभूतिर्भद्रकृत्सुवर्वान् पर्जन्यो गन्धर्वस्तस्य विद्युतोऽप्सरसो रुचो नामेति, 'दूरे हेतिरमृडयो मृत्युर्गन्धर्वस्तस्य प्रजा अप्सरसो भीरुवो नामेति, चारुः कृपणकाशी कामो गन्धर्वः तस्याधयोऽप्सरसः शोचयन्ती नाम इति 'सनो भुवनस्य पत' इति ऋताषाडृतादयः "भुवनस्य" "सनो" इति वर्जयित्वा प्रत्येकं ताभ्योऽन्ता राष्ट्रभृतो द्वादशेति ॥ १ ॥

ऋताषाडृतधामेत्यादि। प्रत्येकं ताभ्योऽन्ता राष्ट्रभृतो द्वादशेत्युक्तत्वात् द्वादशैवेति वदन्ति। तदसत्। ऋताषाडृतधामेत्यारभ्य 'तस्मै स्वाहेति पूर्वामाहुतिं जुहोति ताभ्यस्स्वाहेत्युत्तरा' मिति बोधायनवचनात् लिङ्गभेदेन विद्यमानत्वात मन्त्रेषु पठितत्वात् तस्मै स्वाहा ताभ्यस्स्वाहेति श्रुतौ श्रूयमाणत्वाच्च आहुतिद्वयं प्रतिमन्त्रं कर्तव्यमेव।

बभूव पैतृकयच्छान्ते व्याहृतिः ॥ २ ॥

प्राजापत्यादि मूलहोमः ॥ ३ ॥

प्रजापतिर्जयानिति मन्त्रे बभूवान्ते व्याहृतिः। प्राजापत्यादिमूलहोमः। 'देवा सुरास्संयत्ता आसन्त्स इन्द्रः प्रजापतिमुपाधावत्तस्मा एतान् जयान्

प्रायच्छत् तानजुहोत्ततो वै देवा असुरानजयन् यदजयन् तज्जयानां जयत्वँ स्पर्धमानेनैते होतव्या जयत्येव तां पृतना' मिति । तथा 'अभ्यातानैरेव भ्रातृव्यानभ्यातनुते' इति तथा 'राष्ट्रकामायां होतव्या' इत्यारभ्य 'राष्ट्रं प्रजा राष्ट्रं पशवो राष्ट्र' मित्यादिभिः 'गन्धर्वाप्सरसां स्तोमः' 'प्रजाकामो यजेतेत्यादिभिः श्रुतिभि' श्च अतिशयफलप्रदत्वस्यैतेषां श्रवणान्मूलहोमः इति संज्ञा मन्त्राणामेषां अर्थवती कृता ।

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने तात्पर्यचिन्तामणौ अष्टादशखण्डार्थविवरणं समाप्तम् ।



# अथ एकोनविंशः खण्डः

—⁂×⁂—

**अथान्ते होममन्त्राः ॥ १ ॥**

**'यदस्य -- अग्नये स्विष्टकृते — अग्नये — अग्नयेऽन्नादाय — अग्नयेऽन्नपतये—प्रजापतय—इन्द्राय—विश्वेभ्यो देवेभ्यः—सर्वाभ्यो देवताभ्यः—सर्वत्रव—अग्नये स्विष्टकृते—वास्तुपत' इति स्विष्टाकाराः ॥ २ ॥**

अथ सामान्यहोमानन्तरं अन्ते कर्मान्ते साद्गुण्यार्थं कर्तव्या होममन्त्रा उच्यन्ते। यदस्येत्यारभ्य वास्तुपत इत्यन्तं द्वादश स्विष्टकृतः। प्रतिष्ठासिद्ध्यर्थं स्विष्टकृद्धोम उक्तः। श्रुतिः। 'स्विष्टकृतं जुहोति। यज्ञस्य प्रतिष्ठित्या' इति। श्रुत्यन्तरे। 'स्विष्टकृतं यजति। प्रतिष्ठा वै स्विष्टकृत्। प्रतिष्ठायामेव तद्यज्ञमन्ततः प्रतिष्ठापयति' इति।

**'यन्म आत्मनः — पुनरग्निश्चक्षुरिति' मिन्दाहुती ॥ ३ ॥**

द्वे मिन्दाहुती।

**इष्टेभ्य इत्यादि दशान्ते व्याहृतिरिति ऋद्धिः ॥ ४ ॥**

श्रौते च ब्रह्मप्रतिष्ठेत्येषोऽनुवाक इति (?) अतिरिक्तमन्त्रकल्पनादोषप्रसङ्गात् यत इन्द्रः स्वस्तिदा विशस्पतिरिति मन्त्रद्वयेन सह दशान्ते व्याहृतिः।

**'आश्रावितं — ब्रह्म — यदकर्मेति कृतान्तम्। 'यत्प्रमत्तः—'मनोज्योतिः'—'अयाश्चाग्ने —' 'यदस्मिन्' — 'स्वस्तिनो' 'यत इन्द्र' इति विच्छिन्नम् ॥ ५ ॥**

कृताहुतिरेतु देवांस्स्वाहेत्यत्राहुतिः। आहृतिद्वयशङ्काव्यावृत्त्यर्थं कृतान्तमित्युक्तम्। विच्छिन्नमिति। छिन्नांशस्य सन्धिरित्यर्थः। तास्सन्दधामि इति मन्त्रलिंगात्।

**'एधोऽस्येधिषीमहि स्वाहा बैल्वं 'समिदसि तेजोऽसि तेजोमयि धेहि स्वाहा पालाशं 'यमस्य धीमहि मृत्योर्मे पाहि स्वाहा नैयग्रोधं**

**'सूर्यस्य धीमहि चक्षुर्मे पाहि स्वाहा आश्वत्थं 'सोमस्य धीमहि चित्तं मे पाहि स्वाहा औदुम्बरं 'वायोर्धीमहि प्राणान्मे पाहि इति शमीं ब्रह्मणो धीमहि बुद्धिं मे पाहि स्वाहा खादिरमिति सप्तसमिधः ॥ ६ ॥**

'तेजोवृद्ध्यर्थं बिल्वहोमः । श्रुतिः । 'बिल्वं ज्योतिरिति वा आचक्षते । ज्योतिस्स्वेषु भवति । श्रेष्ठः स्वानां भवति' इति । ब्रह्मवर्चस्वी भवति पलाशहोमेन । 'तेजो वै ब्रह्मवर्चसं पलाश' इति श्रुतिः । नैयग्रोधमिति । 'क्षत्रं वा एतद्वनस्पतीनां यन्न्यग्रोधः । क्षत्रं राजन्यो नितत इव हीह क्षत्रियो राष्ट्रे वसन् भवति' इति श्रुतिः । आश्वत्थमिति । 'एतद्ध वै मनुष्येषु सत्यं निहितं यच्चक्षुरिति' 'यदश्वत्थः साम्राज्यं वा एतद्वनस्पतीना' मिति श्रुतिः । औदुम्बरमिति । 'अथ यदौ'दुम्बराणि ऊर्जो वा एषोन्नाद्याद्वनस्पतिरजायत' इति श्रुतिः । शमीमिति । 'शमी शान्त्या' इति श्रुतिः । 'शमी शमयते पापं शमी शत्रुविनाशिनी' ति स्मृतिश्च । खादिरमिति । गायत्रीरसत्वात् खादिरमिति ।

**'सप्त ते अग्ने - 'ऋतुधान' इति पूर्णाहुती ॥ ७ ॥**

'पूर्णाहुतिमुत्तमां जुहोति । सर्वं वै पूर्णाहुति' रिति ।

**'अग्निर्भुक्त' मित्युपजुह्वामाज्यं गृहीत्वा 'अग्निर्जीर्णमिति जुह्वां चरुमवदाय हुत्वा 'समङ्क्तां बर्हि' रिति स्रावयन् जुहोति ॥ ८ ॥**

अग्निर्भुक्तमित्युपजुह्वाऽऽज्येन होमः । 'भुज—पालनाभ्यवहारयो' रित्यग्निपालितमिति भुक्तमिति वा । एवं वेद्यादीनाम् । अग्निर्जीर्णमिति जुह्वा चरुं हुत्वा यत्किञ्चिन्न्यूनातिरिक्तदोषादिकमग्निना जीर्णं भवत्विति । अग्निर्जीर्णं करोत्विति वा ।

**ततो वामेन स्रुवं गृहीत्वा दक्षिणेनाज्यपात्रं सङ्गृह्याग्नेरुपरि- धारयन्नाज्यशेष 'मिन्द्राय जुहोमि स्वा' हेति जुहुयात् ॥ ९ ॥**

ततोऽनन्तरं । वामेन स्रुवं गृहीत्वेति । आज्यशेषं स्थालीगतम् । 'समिष्टयजूंषि जुहोति यज्ञस्य समिष्ट्यै । यद्वै यज्ञस्य क्रूरं यद्विलिष्टं यदत्येति यन्नात्येति

यदतिकरोति यन्नाति करोति तदेव तैः प्रीणाति ' इति श्रुतिः । समिष्टयजुरिव स्रुवाज्यस्थानीयेनाज्यपात्रेण होम उच्यते । इन्द्रशब्देनात्र परमात्मा उच्यते । 'अग्निर्वै देवानामवमो विष्णुः परमस्तदन्तरेण सर्वा अन्या देवता ' इति ब्राह्मणम् । 'स ब्रह्मा स शिवस्सेन्द्रस्सोऽक्षरः परमस्स्वरा ' डिति श्रुतिः । यजुषि च । ' अग्निरवमो देवतानां विष्णुः परमो यदाग्नावैष्णवमेकादशकपालं निर्वपति देवता एवोभयतः परिगृह्य यजमानोऽवरुन्धे ' इति ।

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने तात्पर्यचिन्तामणौ एकोनविंशखण्डार्थविवरणं समाप्तम् ।



## अथ विंशः खण्डः

—**×**—

तत्पात्रेणाधावमादाय स्रुवेण अन्तरितं 'मग्निस्तृप्यत्वि' त्युपाग्नि, 'वेदिस्तृप्यत्विति' वेद्यां 'द्यौस्तृप्यत्वित्याकाशे' 'पृथिवी तृप्यत्विति भूमौ' 'ब्रह्माद्यास्तृप्यन्तामिति दक्षिणस्यां तर्पयति ॥ १ ॥

तत्पात्रेण — आज्यपात्रेण आधावं जलं स्रुवेणादाय अन्तरितं स्रुवान्तर्गतम्। उपाग्नि अग्निसमीपे। वेदिस्तृप्यत्विति पश्चिमवेद्याम्। दैवेनेति - दैवतीर्थेन। दक्षिणस्यां पितृस्थाने। तर्पयति। श्रुतिः। 'यदनायतने निनयेत्। अनायतनस्स्या' दिति।

प्रणीतायां दक्षिणस्यां दैवेनापो गृहीत्वा 'ओषधिवनस्पति-गन्धर्वाप्सरसश्चैव तृप्यन्ता' मित्युत्तरस्यां वेद्यां तर्पयति ॥ २ ॥

तथोत्तरस्यां प्रणीतायां सापसव्यमपो गृहीत्वा 'मे दक्षिणतः पितरः पितामहाः प्रपितामहाश्चाक्षय्यमस्तु तृप्यन्ता' मिति दक्षिणस्यां तर्पयति ॥ ३ ॥

प्रासावीरित्यन्तैश्चतुर्भिः प्रवाहणं कृत्वा दक्षिणादिप्रणिध्यो-रुपान्ताङ्गुष्ठानामिकाभिः पवित्रमक्षतं गृहीत्वा 'पवित्रमसि 'पूर्णमसि' 'सदसि 'सर्वमसी' ति पर्यायतो जुहोति ॥ ४ ॥

चतुर्भिः प्रवाहणं कृत्वेति। ननु — मन्त्रचतुष्टयेऽपि प्रासा-वीरित्यन्ते अनुक्तत्वात् कथमिदमुपपद्यत — इति चेद् सत्यम्। चतुर्भिर्मन्त्रैरेकं परिषेचनम्। मन्त्रान्ते उक्तत्वात्। सामान्याभिप्रायेण प्रासावीरित्यन्तैश्चतुर्भि-रित्युक्तम्। यद्वा — अदितेऽन्वमंस्था इत्यादिषु देवताभेदस्य विद्यमानत्वात् मन्त्रान्तरपरिषेचनान्तरशङ्काव्यावृत्त्यर्थमेकमेवेति [illegible]पयितुं प्रासावीरित्यन्तै-रित्युक्तम्। यद्वा — 'अदितेऽन्वमंस्था इति हो[illegible] चैव हुते सति। अग्नेः स्वास्थ्यविधानाय कृतमन्ते "विदुर्बुधा' इत्यग्निस्सर्वतोमुख इत्युक्तत्वाच्चतुर्भिः परिषेचनमुक्तम्। यद्वा — पूजायां बहुवचनमिति वा। प्रवाहणं परिषेचनम्। क्रियाधिकारे। 'मिन्दाहुतिश्च विच्छिन्नं हुत्वा कृत्वा प्रवाहण' मिति।

'विभूरसि प्रवाहण' मित्युक्तत्वादग्निरित्यवगम्यते प्रवाहणशब्दोक्तः । अग्निशब्दो वा परिषेचनशब्दो वाऽत्राध्याहर्तव्यः । दक्षिणादिप्रणिध्योरिति । 'सर्वास्वङ्गुष्ठमुपनिगृह्णाती' ति श्रुतिः । 'ग्रन्थिं विस्रँसयति । प्रजनयत्येव त' दिति । ग्रन्थिविस्रंसनार्थं वामहस्तापेक्षाया विद्यमानत्वात् बहुवचनम् ।

**'अक्षतमसीति प्रणिधिमुत्तरां चालयित्वा तदाधावेन 'प्राच्यां दिशि प्रतीच्यां दिश्युदीच्यां दिश्यूर्ध्वायां दिश्यधो धराधरै' रिति यथादिशं परिषिच्य 'माहं प्रजा' मिति गृहीत्वा दक्षिणप्रणिधौ स्वल्पमाधारं स्रावयित्वा 'स्वां योनि' मिति दक्षिणप्रणिध्यां स्थितं जलमुदकपात्रे स्रावयित्वा 'आपो हि ष्ठादिना तदद्भिः प्रोक्ष्य प्रणिधी विसर्जयति ॥ ५ ॥**

आपोहिष्ठादिना प्रोक्ष्येत्यादि । 'यत्पूर्णपात्रमन्तर्वेदि निनयती' त्यारभ्य 'प्राच्यां दिशि देवा ऋत्विजो मार्जयन्तामित्याह एष वै दर्शपूर्णमासयोरवभृथः' इति श्रुतिः ।

ननु — 'मण्डले च जले चैव कूर्चेवाथार्चयन् क्रमात् ।
समावाह्यार्चयित्वा तु पूजनान्ते विसर्जयेत् ॥'

इति भृगुवचनात् प्रणिधावावाहितानां देवानामुद्वासनं कर्तव्यमापततीति चेत् -- सत्यम् ।

'सर्वभूतमया ह्यापस्सर्वदेवमया यतः ।
सर्वकारणभूतत्वादप्सु नोद्वासनं मतम् ॥'

इति वचनान्नास्त्युद्वासनमत्रेत्यवगम्यते । किञ्च । 'आपो वा इदँ सर्वं' मित्यादिश्रुत्यनुसारेण 'यान्येवैनं भूतानि व्रतमुपयन्तमनूपयन्ति तैरेव सहावभृथमवैती' ति श्रुतेश्च अप्स्वावाहितानां प्रणिधावग्नावावाहितानाञ्च नोद्वासनम् । अत एवोद्वासनं नोक्तम् ।

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ विंशखण्डार्थविवरणं
समाप्तम् ।

---

## अथ एकविंशः खण्डः

—*०*—

**'पुनर्देवेभ्यो हव्यं वह' इत्यग्नेर्दर्शनेन स्रुवं विसृज्य 'वर्षिष्ठ गह्वरेष्ठोऽग्र' मिति वर्षिष्ठसमिधौ जुहुयात् ॥ १ ॥**

विसृज्येति—इदं कर्मान्तरयोग्यतासिद्ध्यर्थम् ।

**'ऊर्ध्वं यज्ञं नयत' मित्यूर्ध्वसमिधौ, ॥ २ ॥**

**'पश्चिमतः परिधिमपन ये' त्येवं दक्षिणत उत्तरतश्च परिधीन् ॥३**

श्रौते—"उत्तरस्याग्रं मध्यमस्यांगारेषु .... इति । दक्षिणस्याग्रं उपरि" इति । श्रुतिः—"परिधीन् प्रहरति यज्ञस्य समष्ट्या इति"—

**'पश्चिमतो विष्णोस्सदनमसि' इत्येवं दक्षिणत उत्तरतः प्राच्यः- मिति च परिस्तरणबर्हिषः सर्वान् परिसमूह्य 'आप्यायन्ता' मिति जुहोति ॥ ४ ॥**

**परिसमूह्य** एकीकृत्य । प्रस्तरसमानधर्मताज्ञापनार्थं 'आप्यायन्ता' मित्युक्तम् । ऋग्ब्राह्मणे । 'यजमानः प्रस्तरः' 'अग्निर्वै देवयोनिः सोऽग्निर्देव- योन्या आहुतीभ्यस्संभूय हिरण्यशरीर ऊर्ध्वं स्वर्गं लोकमेष्यती' ति । तथा 'आप्ययन्तामाप ओषधय इत्याह आप एवौषधीराप्याययति' इति ।

**'शुद्ध्यन्तां पितृषदनं- शुद्ध्यन्तां देवसदन' मित्यविच्छिन्न- मास्तीर्य नैरृत्ये दहेत् ॥ ५ ॥**

**अविच्छिन्नेन ब्रह्मवर्चसायेति ॥ ६ ॥**

**शुद्ध्यन्तामित्यादि** । ननु बर्हिषां प्रहरणमात्रेण देवसदनपितृसदनशुद्धिः कथमुपपद्यते इति चेत्-उच्यते । देवसदनपितृसदनशब्देन न बर्हिषदः स्थानमात्रम् । किन्तु 'यजमानः प्रस्तर' इति श्रुतेः, बर्हिषामपि प्रस्तरसमान- धर्मतामङ्गीकृत्य 'यावतीर्वै देवतास्तास्सर्वा वेदविदि ब्राह्मणे वसन्ति' 'ब्राह्मणो वै सर्वा देवताः' 'दक्षिणे देवानामदक्षिणे पितृणा' मित्यादिप्रमाणेभ्यः 'शुद्ध्यन्तां पितृषदनं-शुद्ध्यन्तां देवसदन' मित्यनेन यजमानस्य देहशुद्धिरुच्यते ॥

ननु—यदीन्द्राय जुहोमीत्यारभ्य बर्हिःप्रहरणान्तं क्रियते तर्हि परिस्तरणादीनां दाहादिदोषसम्भवे यजमानादीनां व्रतभ्रेषादिसम्भवे च 'हविर्वातदुत्पूत' मिति श्रुतेरुत्पूताज्यशेषासम्भवात् 'नाधिश्रितपक्वैराज्येन प्रचरेद्यातुधाना रक्षाँसि पिशाचा यज्ञं ग्राहयेयु' रिति बोधायनवचनात् अनुत्पूताज्येन कर्तव्यत्वासम्भवात् पूर्वपरिषेचनं विना होमान्तरस्य कर्तव्यत्वयोग्यताऽसम्भवात् 'मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह। स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुस्स्वरतोऽपराधात्' इति स्वरवर्णादिषु हीनादिदोषसम्भवे प्रायश्चित्तस्य परिध्यादीनां प्रहरणात्परं कर्तुमयुक्तत्वाच्च 'श्रुतिस्मृतिविरोधे तु श्रुतिरेव बलीयसी। अविरोधे सदा कार्यं स्मार्तं वैदिकवत्सदा' इति लौगाक्ष्यनुसारेण श्रौतोक्तप्रकारेण कर्तुमुचितत्वात् 'पाठक्रमादर्थक्रमो बलीया' निति न्यायाच्च एवमेव कर्तव्यमिति कथमिति चेत्—उच्यते—'समङ्क्ता' मित्यनन्तरं स्वरवर्णादिन्यूनातिरेकनिर्हरणार्थं अनाज्ञातादि कर्तव्यम्। श्रौते चोक्तम्। यदि वोपांश्वादिवाक्स्थानानां स्वराक्षरपदवृत्तभ्रेष आगच्छेत् 'आभिर्गीर्भि' रिति जुहुयादुपतिष्ठेत वा। 'अनाज्ञाते नाज्ञातं पुरुषसंमित' इत्येताभ्यां जुहुयात्। 'अनास्थादिकेषु कर्मसु यत्पाकत्रा मनसेति जुहुयात्' इति। वैष्णवं व्याहृतीश्च हुत्वा वर्षिष्ठा गह्वरेष्ठ इति वर्षिष्ठसमिधौ ऊर्ध्वं यज्ञं नयतमित्यूर्ध्वसमिधौ पश्चिमतः परिधिमपनयेत्यादिना परिधीन् पश्चिमतो विष्णोस्सदनमसि इत्यादिना बर्हींषि च हुत्वा अनन्तरमिन्द्राय जुहोमीत्यादिस्रुवविसर्जनान्तं कृत्वाऽनन्तरं भूतिधारणादि। यद्वा। श्रौतवत्परिध्यञ्जनानन्तरं पवित्रमसि पूर्णमसि सदसि सर्वमसीति पवित्राक्षतौ पर्यायतो हुत्वा वर्षिष्ठसमिधौ सूक्तवाकशंयुवाकवत्परिस्तरणबर्हींषि परिधीन् ऊर्ध्वसमिधौ च हुत्वा अनन्तरमिन्द्राय जुहोमीत्यारभ्य स्रुवविसर्जनान्तं कुर्यात्

**'भूतिस्स्मे' ति भस्म गृहीत्वा ललाटहृद्बाहुकंठादीन् 'आदित्यस्सोमो नम' इत्यूर्ध्वाग्रमालिप्य 'आपो हिष्ठा' इति प्रोक्ष्य 'ओश्च मे स्वर' इति 'बालकृतं वा' इति च अग्निं पूर्ववदादित्यञ्चोपस्थाय पुनर्वेदिमूलमासाद्य अग्निं वैश्वानरसूक्तेनोपस्थाय प्रणामं कुर्यात् इति क्रियान्ते होमः ॥ ७ ॥**

आपो हिष्ठा इति । श्रुतिः । 'यन्मार्जयते सोऽस्यावभृथः' इति । पूर्वोक्तं नैमित्तिकमवभृथम् । इदं नित्यम् । यद्वा पत्न्यर्थम् । पत्नीरहितस्य ब्रह्मचारिणः कथमिति–चेत् 'श्रद्धा पत्नी' इत्यस्ति श्रद्धा । **ओश्च मे स्वरः, बाल कृतं वेनि ।** चेति चकारेण 'याते अग्ने' इत्यादिभिश्चाग्निं पूर्ववत् 'उद्वय' मित्यादिभिरादित्यञ्चोपस्थाय । **वैश्वानरसूक्तेनोपस्थाय** अत्र केचित् 'वैश्वानरो न ऊत्या' इत्यादि वदन्ति । 'वैश्वानराय प्रतिवेदयाम' इत्यपरे । वैश्वनरेणोपतिष्ठे' इति मन्त्रलिंगात् मन्त्रसंहितायां तथा पठितत्वाच्च 'वैश्वानरस्य रूप' मिति सूक्तेनैवोपस्थानं युक्तम् ।

**'ओश्च मे स्वर' इति लौकिकाग्नेर्विसर्जनमिति विज्ञायते ॥ ८ ॥**

एवमाचाराद्यग्न्युपस्थानान्तमुक्तम् ।

**अथ निषेकाद्यथ चातुराश्रमिणामथापो नमस्कृत्याथाचम्य कौरुक्षेत्रमशक्तो नित्यमथ पुण्याहं देवा ऋषयोऽथाग्न्यायतनमथाघार-विधानं पात्रादाधावमादाय वायव्यामुत्तराग्रं भूस्स्रुचं दक्षिणप्रणिधौ गायत्र्या समिधः प्रोक्ष्य स्रुवेणाज्यं स्रात्रयन्नथ सामान्यतः क्रियायाः इमं मे वरुण ऋताषाडथान्ते होममन्त्रास्तत्पात्रेणाधावं पुनर्देवेभ्यो-हव्यं वहेत्येकविंशतिः ।**

**अथेति** । सूत्रस्य वेदतुल्यताज्ञापनार्थं खण्डानामादिग्रहणं प्रश्नपरिसमाप्तिश्च कृतेति सर्वमनवद्यम् ।

श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना । श्रीवेंकटेशपादाब्जसपर्यासुरतात्मना ॥
वेदान्ताचार्यवर्येण श्रीनिवासाख्ययज्वना । श्रुतिस्मृतिपुराणादिशास्त्रमार्गानुसारिणा ॥
वैखानसस्य सूत्रस्य व्याख्या सम्यक् निरूपिता ॥

## इत्येकविंशः खण्डः

प्रथमः प्रश्नस्समाप्तः ।

---

अत्र नृसिंहाग्निचिता अनुगृहीतसूत्रभाष्यादुद्धृता विषयाः प्रकरणानुगुण्येन समुच्चीयन्ते ॥—

प्रथमप्रश्ने प्रथमः पटलः (अथ प्रथमः खण्डः)

अष्टादशसंस्काराः । तत्तत्कालकर्तव्या नित्याश्च भवन्ति । यज्ञाश्च द्वाविँशत् । च शब्दोऽवधारणे - द्वाविंशत्संख्याका एवेति - इतरे एतद्विकारा एवेति च । ब्रह्मयज्ञः ब्रह्मणा वेदेन देवानां यजनं प्रीणनं ब्रह्मयज्ञः । अयं प्रात-र्होमात्पूर्वं पश्चाद्वा ब्रह्मचारिप्रभृतिभिः कर्तव्यः, न रात्र्याम् । वैश्वदेवकाले पक्वेनान्नादिना देवानां यजनं होमो देवयज्ञः । तथा बलिदानेन वा 'पितृभ्यः स्वधा नम' इति जलदानेन वा पितॄणां यजनं प्रीणनं पितृयज्ञः । तथा बलिना भूतानां यजनं प्रीणनं भूतयज्ञः । वैश्वदेवकाले स्वगृहमागतानामतिथीनां यजनं यथाशक्त्यन्नादिना प्रीणनं मनुष्ययज्ञः । एते मध्याह्ने तत्रासंभवे रात्र्यां पूर्वयामे वा गृहस्थादिभिः कार्याः । एषां पञ्चानां महायज्ञानामहरहः कर्तव्यानामनुष्ठानं करणमेको यज्ञः । 'एको यज्ञ' इति प्रायश्चित्ते वक्ष्यते । स्थालीपकमित्यादि । स्थलन्ति तण्डुलादयोऽस्यामिति स्थाली' तस्यां प्रतिपर्व पच्यते हविरिति स्थाली-पाकः । नवानां व्रीह्यादीनामग्रेण प्रथमपाकेन अयनं देवेभ्यः होमादिना प्रापण-माग्रयणम् । आकारव्यत्ययः छान्दसः । पितॄनुद्दिश्य अष्टौ पिंडा निर्वाप्यन्ते अस्यामित्यष्टका । पिण्डैः साध्यः पितॄणां यागः पिंडपितृयज्ञः । मासे मासे अपरपक्षे पितॄणां होमेनान्नादिना श्रद्धया तर्पणं मासिश्राद्धः । सस्यवृद्ध्यर्थं चैत्र्यां पौर्णमास्यां पाकेन विष्ण्वादीनां यजनं चैत्री । पशुवृद्ध्यर्थं आश्वयुज्यां पौर्णमास्यां पाकेन भवादीनां यागः आश्वयुजी । इत्येते सप्त तत्तत्काले कर्तव्याः नित्याः पाकयज्ञा भवन्ति । पाकेन अन्नादिना देवेभ्यः कर्तव्या यज्ञाः पाकयज्ञाः । संभारेष्वग्नीनां विधानेन निधानमग्न्याधेयम् । यजमानं नरकात् त्रायन्ते अग्नयोऽ-स्मादित्यग्निहोत्रम्, पयःप्रभृतिभिः द्रव्यैः हूयत इति वा अग्निहोत्रम् । दृश्यत इति दर्शः अमावास्या । पूर्णो मासोऽनेनेति पूर्णमासः, तयोः कर्तव्यौ यागौ दर्शपूर्णमासौ । आग्रयणार्थमिष्टिर्यागः आग्रयणेष्टिः । चतसृषु चतसृषु मासेषु कर्तव्यः चातुर्मास्यः । सोमाद्बहिर्भवतीति निरूढः, पशुः छागादिः बद्ध्यतेऽस्मि-

न्निति पशुबन्धः, स चायं निरूढपशुबन्धः । सुत्रामा इन्द्रः प्रधानो देवता अस्यामिति सौत्रामणी । एते यज्ञा यथाकालविहिता नित्याश्च भवन्ति । हविर्भिः पयोदध्यामिक्षावाजिनवसात्वङ्मांसलोहितपशुरसतण्डुलपिष्टफलीकरणपुरोडाशचरुयवागुपृथुकलाजधानासुरामधुसोमसमिच्छकलबर्हिःकरीरादिभिः यथार्हैः कर्तव्या यागा हविर्यज्ञाः । अग्निष्टोम इत्यादि । तृतीयसवने अग्नीनां स्तोमः स्तुतिर्भवतीत्यग्निष्टोमः, यद्वा - अग्निष्टोमाख्येन साम्ना संस्तुतत्वादग्निष्टोमः । 'अग्निष्टोमसाम भवती' ति श्रुतिः । तमेकेन द्वाभ्यां वा स्तोत्राभ्यामतिक्रमत इत्यत्यग्निष्टोमः । तृतीयसवने उकुथ्यग्रहो गृह्यतेऽत्रेत्युक्थ्यः उक्थ्याख्येन साम्ना संस्तुतत्वादुक्थ्यः । तृतीयसवने षोडशीग्रहोऽत्र गृह्यते इति, षोडशस्तोत्राण्यस्यास्सन्तीति वा षोडशी । वाजमन्नं सुरा पेयं सुराद्रव्यमस्मिन्निति वाजपेयः । रात्रिमतिक्रम्य वर्तत इत्यतिरात्रः । अपेतः सर्वकामेभ्यः सर्वान् कामानयं यच्छतीति वा अप्तोर्यामः, अप्तोर्यामाख्येन साम्ना संस्तुतत्वाद्वा अप्तोर्यामः । सोमेन सोमलतारसेन साध्या यागाः सोमयज्ञाः यथाकालकर्तव्या नित्याश्च भवन्ति । तत्र प्रथम मग्निष्टोमोऽतिरात्रो वा यष्टव्यः । 'अग्निष्टोमः प्रथमो यज्ञोऽतिरात्रमेके समामनन्ती' त्यापस्तंबवचनात् । अन्ये यागाः सति विभवे क्रमेण कर्तव्याः । नियमेनाग्निष्टोमः कर्तव्यः । 'जायमानो वै ब्राह्मणस्त्रिभिः ऋणवा जायते' इति श्रुतेः । इमे संस्काराश्चत्वारिंशत् निषेकाद्यप्तोर्यामान्ताः । ननु - निषेकमिति न पृथक् संस्कारः - 'ऋतौ संगमनं निषेकमित्याहुः' इति सूत्रादिति चेत् - सत्यम् । 'ऋतौ संगमनं निषेकमित्याहुरेके न वय' मिति सूत्रतात्पर्यम् । इदमत्र गमकम् । 'तदेवं त्रिरात्रं हविष्याशिनौ' इति निषेकतन्त्रप्रकारो वक्ष्यते । तस्य पृथक्गणन एव संस्काराणामष्टादशसंख्यात्वोपपत्तिः । न च पारायणव्रतबन्धविसर्गं द्विधा कुर्म इति वाच्यम्, तथा अनुपादानात् । वर्षवर्धनं मध्ये पठितं संस्कारत्वेन गृहीतु न शक्यते । दण्डके अपठितत्वात् । 'निषेकादाजातका' दिति पुनर्वचनाच्च निषेकः पृथक् संस्कार एव । निषेकादित्यादि । आजातकादित्यत्र आङ्मर्यादायाम् । निषेकादयः पट्क्षेत्रसंस्काराः तत्तत्कालविहिताः । निषेकादारभ्य आजातकात् संस्कृतायां असमानर्षिगोत्रजातायां ब्राह्मण्यां तथाविधात्

ब्राह्मणात् जातमात्रः पुत्रो 'मात्र' नामा भवति। मीयते आचारः अल्पीयतेऽस्येति मात्रः। अस्य शौचादिविचारोऽपि नास्ति। रजस्वलादिस्पर्शेऽपि प्रोक्षणमेव। 'उपनीत' इति। जातकादि चौलकान्तैः यथाकालविहितैः षड्भिः संस्कारैः संस्कृतः पश्चात् कृतोपनयनः सावित्र्यध्ययनात् ब्राह्मणः। 'वेदमधीत्ये' ति। कृतवेदोपाकर्मा क्रमेण प्राजापत्यादि वेदव्रतान्याचरन् सांगं वेदमधीत्य समावृत्तः कृतविवाहः शालीनवृत्तिः गृहस्थो भवति। पाणिग्रहणान्तैः संस्कृतः पाकयज्ञैरपि क्रमेण यजन् ब्राह्मणः श्रोत्रियः श्रुतवृत्तसम्पन्नो भवति। स्वाध्यायो वेदः तस्मिन् रतः श्रद्धालुः अग्नीनाधाय हविर्यज्ञैः यजन् यायावरो नाम गृही ब्राह्मणः। अनूचानः अभ्रष्टाचारः सांगवेदाध्ययनसम्पन्नो वा घोराचारिको नाम गृही भ्रूणो भवति। 'भ्रियन्ते यज्ञा अनेने' ति भ्रूणः। सोमयाजी। चत्वारिंशताः उक्तैः संस्कारैः तथा नियमयमाभ्यां स्नानादि सत्यादिदशसंख्याभ्यां वक्ष्यमाणलक्षणाभ्याञ्च अन्वितो ऋषिकल्पो भवति, ऋषितुल्यो भवति। तथाह धर्मे सूत्रकारः – 'स्नानशौचस्वाध्यायतपोदानेज्योपवासोपस्थनिग्रहव्रतमौनानीति नियमान् दशैतान् - सत्यानृशँस्यार्जवक्षमादमप्रीतिप्रसादमार्दवाहिंसा माधुर्याणीति यमान् दशामूंश्च समाचरति' इति। सांगेति। चतुर्भिर्वेदैः तपसा दुःखसहिष्णुत्वेन पूर्वोक्तलक्षणैश्च युक्तः ऋषिः। ऋच्छति तपसा मोक्षं गच्छतीति ऋषिः। अनेन वानप्रस्थो लक्ष्यते। नारायण एव परमुत्कृष्टमयनं प्राप्यस्थानं यस्य स नारायणपरायणः। निर्द्वन्द्वः पूर्वोक्तसमस्तलक्षणयुक्तश्च मुनिर्भवति। अनेन यतिनो लक्ष्यन्ते। विज्ञायते—श्रुतिष्ववगम्यते। इति प्रथमः पटलः। (इति प्रथमः खण्डः)।

(अथ द्वितीयः खण्डः)। अथ स्नानविधिरुच्यते। प्रातरुत्थाय ग्रामाद्बहिर्गत्वा धर्मे वक्ष्यमाणवत् दिवासंध्ययोरुदङ्मुखो रात्रौ दक्षिणामुखः निवीती दक्षिणकर्णे यज्ञोपवीतमासज्योत्कुटिकमासीनो मूत्रपुरीषौ तृणान्तरिते स्थले विसृज्य करेण वामेन शिश्नं गृहीत्वोत्थाय गोविप्राग्निवाय्वर्कतारेन्दूनपश्यन् दक्षिणेन पाणिना शौचार्थं मृद्ग्रहण्या दोषरहितां मृदं संगृह्य जलपार्श्वे तथाऽऽसीनो ब्रह्मचारी गृहस्थो वा शिश्ने द्विः हस्तयोश्च द्विर्द्विः यथोक्तं शौचं कुर्यात्। वनस्थस्य भिक्षोश्च एतद्द्विगुणं

शौचम् । एवं दिवा । रात्रावर्धम् । आतुरे तदर्धमध्वनि यथालभम् । रेतोविसर्गे मूत्रवत् शौचम् । रेतसस्त्रिरित्येके । सोपवीती प्राङ्मुखोऽन्यत्रासित्वा मृदाऽद्भिः दशकृत्वः पादौ प्रक्षाल्याचम्य दन्तधावनं यथोक्तविधिना कृत्वा आचम्य ततः स्नायात् । उक्तस्नानकरणे शक्तिहीनस्य गौणविधयश्चोच्यन्ते अभिषेक इत्यादि । अवगाहनमभिषेकः । दिवि भवो दिव्यः, वायुभवो वायव्यः, अग्निभव आग्नेयः, गुरोरनुज्ञा उपदेशः तद्भवः गुर्वनुज्ञः (?) पार्थिवविष्णुस्मरणाभ्यां सह सप्तधास्नानं केचिद्वदन्ति । विध्यर्थे तत्र लट् ग्राह्यः । छान्दसत्वात् सूत्राणाम् । 'तरति ब्रह्महत्या' मितिवत् । नदीत्यादि । नदीशब्देन देवखातादयः तटाकशब्देन दीर्घिकादयः कूपशब्देन क्षुद्रश्वभ्रघटादयो गृह्यन्ते । पूर्वस्य नद्यादेरसंभवे उत्तरमपरं तटाकं कूपं वा उपतिष्ठेत – स्नानार्थं गच्छेत् । जलस्थलेप्वाक्रम्य । जले चैकं स्थले चैकं पादमेवं पादौ विक्षिप्याऽसीनः–उत्कुटिकमुपविष्टः । पाणी आमणिबन्धं पादावाजानु दक्षिणादि क्रमेण पृथक् पृथक् प्रक्षाल्य । फेनः बुद्बुदः, अवस्राव इतस्ततश्च्युतिः, तौ न विद्येते यस्मिन् तदफेनाविस्रावम् । न विच्छिद्यते अंगुलिविवरैरित्यविच्छिन्नमद्रुतमशीघ्रमस्वनि यथा भवति तथा जलं गृहीत्वा, जान्वोर्बहिः हस्तौ न विद्येते यस्य तथा अवहिर्जानुस्सन् । हृदयं गच्छतीति हृदयंगमम् । गोकर्णमिव न्युब्जं पाणितलं कृत्वा । आचम्य अपः पीत्वा । प्रत्यंगमिति । अपश्चांगञ्च स्पृष्ट्वा । यत्रांग द्वन्द्वनिर्दिष्टं तत्र सकृदेवापस्स्पर्शनम् । इदमाचमनममन्त्रकम् । अतः समन्त्रमाचमनं वक्ष्यमाणः पूर्वोक्तप्रकारेण करप्रक्षालनं पादप्रक्षालनञ्चाह तथेति । पुनः मन्त्रेण । आचामतीति पाठे अयमेको मन्त्राचमनप्रकारः । संप्रति मतान्तरेणाचमनमाह । ऋग्वेदः प्रीणात्वित्यादिनेति । त्रिधा । द्विस्तिर्यगधश्चोक्तैर्मन्त्रैस्त्रिधा मार्ष्टि । मन्त्रावृत्त्या चक्षुषी श्रोत्रे नासिकापुटे भुजौ स्पृष्ट्वा । एवं भोजनस्याद्यन्तयोर्द्विः । स्नानखादनपाने च सकृदादौ द्विरन्ततः । दानप्रतिग्रहहोमसन्ध्याबलिकर्मस्वादौ द्विर्नान्ततः । वासोऽन्तरपरिधानस्वापरथ्याप्रसर्पणहविश्शेषभक्षणादावन्ते द्विः । अन्यत्र देवपूजादावाद्यन्तयोः सकृत् । अन्यत्र दक्षिणं श्रवणं स्पृशेत् । पूर्वोक्तममन्त्रकं समन्त्रकञ्चाचमनं नित्यमिदं नैमित्तिकमिति केचित् । (इति द्वितीयः खण्डः)

(अथ तृतीयः खण्डः)। सम्प्रत्यमन्त्रकं स्नानमाह अथेति। अथ - आचमनानन्तरम्। अवगाह्य—जलं प्रविश्य। यावदमनश्शंकं यावन्न विद्यते मनसि मालिन्यापनोदस्स्यात् न वेति विचारो यस्मिंस्तदमनश्शंकम्, तावत् अद्भिः मृदा तुलस्यादिपवित्रस्थलहृतया मृत्तिकया च सर्वांगमालिन्य गात्रशुद्धिं कृत्वा स्नात्वा तीरं गत्वा आचम्य शरीरमार्जनं केशधूननादि कृत्वा स्नानवस्त्रं विसृज्य धौत परिधाय वक्ष्यमाणवत् तर्पणान्तं कृत्वा वस्त्रं--स्नानवस्त्रं नेनेक्ति — निर्णेजति। प्रागग्रमुदगग्रं वा अञ्चलं यथा स्यात्तथा वस्त्रमास्तृणाति। शुद्धस्थले विशोषणार्थं क्षिपति। तयैव—गायत्र्यैव। ततः समन्त्रकस्नानमुच्यते 'इदमापः प्रवहते' ति। अभिगमनं समीपगमनम्। मन्त्रेणाभ्युक्षणं विगाहनञ्च। समन्त्रकं स्नानञ्च कृत्वा आचम्य धौतं परिधाय वक्ष्यमाणवत् तर्पणान्तं कृत्वा पूर्ववत् स्नानवस्त्रं नेनेक्ति। अमन्त्रकं समन्त्रकञ्च स्नानं नित्यम्। ततः नैमित्तिकं स्नानमुच्यते। पवित्र कुशादिकृतं चतुरंगुलग्रन्थि वलयमेकांगुलमेवं लक्षणं सौवर्णं राजतं वा अंगुलीयकं अनामिकायां निक्षिप्य। शुद्ध्यर्थं पुनराचमनम्। उपस्थानं तिष्ठन् तं दृष्ट्वाभिवन्दनम्। उपान्तः-अंगुष्ठः। आवर्त्य—परिभ्राम्य। शिरो—मूर्धानं मार्ष्टि। तथा समृदोदकेन स्वशरीरं हिरण्यपवमानैः प्रोक्षयति। अभिमन्त्र्य — मन्त्रेण स्पर्शनमभिमन्त्रणम्। कर्णावपिधाय — आच्छाद्य पाणिभ्याम्। अर्धं शरीरस्याधमधोभागं जलान्तर्गतं कृत्वा त्रिरावर्तयन् — त्रिवारं जपन् — अघमर्षणं — पापनिरसनं करोति। अनुपमृज्य वासः — स्नानवस्त्रनिष्पीडनमकुर्वन्। निष्पीडनं तर्पणान्ते विहितम् यदा स्नानं पारक्येषु तटाकादिषु, मृत्पिंडोद्धरणादिपूर्वकं स्नानं धर्मे वक्ष्यते। इदं नैमित्तिकं मृत्तिकास्नानम्। अतः सन्ध्योपासनं प्रातरित्यारभ्योच्यते। प्रातः — कालवाच्यव्ययम्। प्रागुदयात् स्नात्वा आचम्य पवित्रपाणिः धृतोर्ध्वपुंड्रः प्राणायामं कृत्वा 'प्रातः सन्ध्यामुपास्ये' इति संकल्प्य 'आपो हिष्ठे' त्याग्नेयेन तीर्थेनात्मानं प्रोक्ष्य। विक्षिप्य—उत्सृज्य। एवं त्रिःकुर्यात्। 'असावादित्यो ब्रह्मे' ति प्रदक्षिणमादित्यस्य करोति। सर्वत्र कर्मान्ते आचमनम्। एकवारं, ऊर्ध्वं यथाकामं, अष्टावरां तथा सावित्रीं प्रशस्य, अभ्यासः — आवर्त्य जपः। मित्रस्येत्यादिभिरिति। 'उत्तमे शिखर' इति सर्वत्र सन्ध्यासु पूर्वं जप्त्वा 'मित्रस्ये' त्याद्युपस्थानमन्त्रजपः

कार्यः । प्राङ्मुखः प्रातस्तिष्ठन् । सन्धिषु भवा सन्ध्या – सम्यक् ध्यायन्त्यत्रेति वा सन्ध्या । तामुपासीत । वक्ष्यमाणवत् प्रदक्षिणवशेन सन्ध्यादीन् नमस्कृत्य उपस्थानं कुर्वीत । ततो वक्ष्यमाणवत् तर्पणं ब्रह्मयज्ञमादित्योपस्थानं नित्यौपासनं होमं विष्ण्वर्चनञ्च कृत्वा माध्याह्निकस्नानादिकं धर्मे वक्ष्यमाणवत् कृत्वा मध्याह्न-काले पूर्ववत् प्राणानायम्य संकल्प्य आत्मानं प्रोक्ष्य 'आपः पुनन्त्वि' त्याचम्य प्रोक्षणमर्घ्यदानं प्रदक्षिणं च कृत्वा आचम्य सावित्रीं जप्त्वा यजुर्भिः तिष्ठन्नादित्य-मुपस्थाय तत्तदाश्रमार्हमनुष्ठानं वैश्वदेवादिभोजनान्तं करोति । सायमिति – कालवाच्यव्ययम् । सायंकाले प्रागस्तमयात् प्राणानायम्य संकल्प्य आत्मानं प्रोक्ष्य 'अग्निश्चे' त्यादिना आचम्य यथा प्रातस्तथा प्रोक्ष्य अर्घ्यदानं प्रदक्षिणञ्च कृत्वा आचम्य सावित्रीं जप्त्वा प्रत्यङ्मुख आसीनः सन्ध्यामुपास्य यथोत्तरत्र वक्ष्यति सायं होमादि शयनान्तं तथा करोति । 'उदितार्का' मिति प्रातः 'पश्चिमार्का' मिति सायम् । एवं सन्ध्ये द्वे भवतः न मध्यं दिनस्य, द्विवचनात् । मन्त्राभावाच्च । यथादिशं प्रातः इन्द्रादि सायं वरुणादि । तत्तन्मुखो भूत्वा प्रदक्षिणक्रमेणोपस्थानम् । दक्षिणाभिमुखस्सन् पित्रादीन् सापसव्यं, उपवीती ऊर्ध्वमुखो ब्रह्माणं उदङ्मुखो नारायणादीन् नमोऽन्तेन तन्नामादिना मन्त्रेणोप-तिष्ठेत । इति द्वितीयः पटलः । (इति तृतीयः खण्डः) ।

अथ तृतीयः पटलः । (अथ चतुर्थः खण्डः) हस्तेनेति । द्वयोरुपलक्षणम् । तलतीर्थेति । पाणितले यानि तीर्थान्युक्तानि तत्क्रमेण । ब्राह्मेण भूपत्यादीन् दैवेन नारायणादीन् कूप्यादींश्च आर्षेण विश्वामित्रादीन् पैतृकेण पित्रादींस्तर्प-यित्वेति धर्मे वक्ष्यति । पूर्वस्यां देवेभ्यः उत्तरस्यामृषिभ्यः दक्षिणस्यां पितृभ्य स्तर्पणम् । ग्रहान् अंगारकादीन् । सप्तर्षीन् कूप्यादीनुपवीती तर्पयति । 'यावन्त' इति पैतृकेणापो दक्षिणतः स्थले विक्षिप्य आचम्य ब्रह्मयज्ञं करोति । शुद्धे देश इति । केशतुषांगारलोष्टादिवर्जिते स्थले गायत्र्या प्रोक्ष्य दर्भान् प्रागग्रानुत्तरा-ग्रान्वा आस्तीर्य ब्राह्ममासनमास्थाय ऊरुद्वयं भूमावास्थाप्य वामजंघोपरि दक्षिण-पादमास्थाप्य आसीनः पवित्रपाणिः ब्रह्मांजलिं – मुकुलितहस्तं कृत्वा प्राङ्मुखस्सन् 'ब्रह्मयज्ञेन यक्ष्ये' इति संकल्प्य सावित्री – पूर्वं प्रथमं यथा तथा सावित्री

पूर्वं नित्यं प्रतिदिनमनध्यायदिनेषु च । 'इषे त्वो र्जेत्वा' इत्यादि यथाकामं यावदध्ययनं कर्तुमिष्टं तावत् यावदनुवाकान्वा । ब्रह्मयज्ञप्रकारश्च । संकल्प्य 'विद्युद' सीत्यप उपस्पृश्य 'ऋग्वेदः प्रीणा' त्वित्यादिभिराचम्य 'यदपा' मिति जलमभिमन्त्र्य 'अमृतोपस्तरणम' सीत्यात्मानं परिषिच्य 'आधमभिगृह्णा' मीति जलं गृहीत्वा 'अर्वाञ्चमिन्द्र' मित्युद्धृत्य 'ब्रह्म सन्धत्त' मित्यादि 'इन्द्राय सुतमाजुहोमि स्वाहा' इत्यन्तमुक्त्वा तज्जलं प्राश्य 'भू' रित्यादि जप्त्वा 'वृष्टिरसि' इत्यप उपस्पृश्य सावित्रीपूर्वं 'मिषेत्वोर्जे' त्वादि जपेत् । इति केचिदाचक्षिरे । नित्यमिदम् । नित्यब्रह्मयज्ञान्ते काण्डर्षितर्पणं कार्यम् । अथ नैमित्तिकब्रह्मयज्ञमाह 'ऋतञ्च' त्यादिना । प्रायश्चित्तादिनिमित्तसंबन्धि नैमित्तिकम् । 'ऋतञ्च' इत्यादि द्वादशसूक्तानामध्ययनं कुर्यात् । स्वाध्यायोऽयमुपनयनप्रभृति द्विजैः कर्तव्यः । सौरीभिः — सूर्यसंबन्धिनीभिः । द्वादशनमस्काराद्युपस्थानमुच्यते । (इति चतुर्थः खण्डः) ।

अथ पञ्चमः खण्डः । अशक्तविषयं स्नानमाह 'अशक्त' इति । अशक्तः— रोगादिभिः । वाशब्दः शक्यं प्रकारं नियमयति । पूर्ववदाचमनादीनि । आदिशब्देन सन्ध्योपासनसावित्रीजपतर्पणब्रह्मयज्ञादित्योपस्थाननित्यहोमादयो गृह्यन्ते । दिवश्च्युतैः—स्वर्गाद्गलितैः । आधावं पवित्रं जलम् । इदमपां गुह्यं नाम । 'एतद्वा अपां नामधेयं गुह्यम् । यदाधावः' इति श्रुतिः । तैराधावैः । तदभावे सातपैर्वर्षैर्वा सेचनमाप्लावनं दिव्यं स्नानं भवति । गवां पादोद्धतैः वायुना नीतैः रजोभिः स्पर्शनं वायव्यं स्नानम् । गोसावित्र्या गायत्र्या वा शरीरोद्धूलनं वायव्यमिति केचित् । अग्निहोत्राद्युद्धृतेन भस्मना आग्नेयेन मन्त्रेण सर्वांगमापादमस्तकमालेपनमाग्नेयं स्नानम् । गुर्वनुज्ञालब्धेन 'आपो हिष्ठा' इति मन्त्रेण आग्नेयेन तीर्थेनाभ्युक्षणं त्रिः कृत्वः प्रोक्षणं मान्त्रं स्नानम् । आग्नेयादितीर्थलक्षणमाह दक्षिणपाणेरित्यादि । तीर्थलक्षणोक्तौ प्रयोजनमाह दैवेनेत्यादि । इति तृतीयः पटलः । (इति पञ्चमः खण्डः)

अथ चतुर्थः पटलः । (अथ षष्ठः खण्डः) । अथ पुण्याहम् । इदं कर्मनाम । पञ्चसंख्याताऽहीनाः सदस्या भवन्ति । तान् स्वगृहमाहूया-

गतानभिपूजयति — गन्धपुष्पाक्षतैरर्चयति । आचार्यः — निषेकादिकृत् । करकमुदपात्रमद्भिरापूर्य कूर्चेन वक्ष्यमाणलक्षणेन पाणिना वाऽभिमन्त्र्य संस्पृश्य पुष्पादिभिः पुष्पगन्धाक्षतादिभिः सर्वतीर्थजलमिति तज्जलं स्मृत्वा आवाह्य करकस्यान्तः बाह्ये च परितोऽभ्यर्च्य । प्रतिवाचकान् प्राङ्मुखानुदङ्मुखान्वा स्थापयित्वा प्राङ्मुखं यजमानमासयित्वा आचार्य उदङ्मुख आसीनः कर्म कारयति । सर्वत्र कर्मस्वयमेवासनविधिः । यद्यद्धि मानसं वाचोच्चार्य संकल्पपूर्वमेव कर्म कर्तव्यमिति यावत् । संकल्पकर्ता यजमानः । सर्वकर्मस्वयं विधिः समानः । 'करिष्यामि, करिष्ये' इति वा संकल्पस्वरूपम् । 'कुरुष्व' इति प्रति वाचका वदेयुः । स्थानं पुण्याहप्रदेशः । प्रजापतिः प्रियतामिति यजमानेनोक्ते प्रतिवाचकाः अनुवदन्ति । 'शाम्यन्त्वि' त्यादि । त्रिरपः स्रावयति । करकादिशुद्धपात्रं मृन्मयं वा अभिस्रावजलधारणार्थं पुरतः संस्थाप्य तस्मिन् कुशाक्षतगन्धाश्वत्थपल्लवादीन् विन्यस्य करकमुद्धृत्य 'शाम्यन्तु घोराणि' इति मन्त्रावृत्त्या उत्तरान्तं यथा स्यात् तथा पात्राद्बहिर्भूम्याः त्रिःकृत्वः अपः स्रावयति । तथाऽन्ते 'शुभानि वर्धन्ता' मिति पात्रे अपस्स्रावयति । अत्र प्रथमं दैविके अतो देवाद्या मन्त्राः, तथा सूतके जातकाशौचनिवृत्त्यर्थे कर्मणि प्रथमं 'सन्त्वा सिञ्चामि' इति । तथा प्रेतके मृताशौचनिवृत्त्यर्थे कर्मणि 'शुची वो हव्ये' ति प्रथमं पठितव्यम् । अन्ये मन्त्राः पश्चात् पठितव्याः । 'द्रविणोदा' इत्याद्या ऋचः सर्वे प्रतिवाचकाः सदस्याः यजमानेन सह वदेयुः । तत्तन्मन्त्रान्ते यजमानस्य शिरस्यक्षतान् निक्षिपन्तो वदेयुः । यजमानः करकं धारयन्नपः प्रतिमन्त्रं पात्रे स्रावयति (इति षष्ठः खण्डः) ।

अथ सप्तमः खण्डः । देवा ऋषयः इत्यादि । सर्वाद्याः प्रियन्तामन्ताः। 'सर्वे देवाः प्रियन्ता' मित्यादि । यजमानेनोक्तं यथाक्तं प्रतिवदेयुः । एवं सर्वत्र । पुण्याहमस्त्विति यजमानेनोक्ते प्रतिवाचका पुण्याहमस्त्विति प्रतिब्रूयुः । तथा मन्त्रलिंगात् । 'शिवा ऋतवस्सन्त्वि' त्यादौ तथैव प्रतिवचनम् । वचनसाम्येन । यजमानस्येत्यादि । अयं प्रयोगः । 'आश्विनाय भारद्वाजाय यज्ञदत्तसुताय आत्रेयीनन्दनाय देवदत्तशर्मणे मह्यमस्मिन् कर्मणि ओं पुण्याहं भवन्तो ब्रुवन्तु' इति

यजमानस्याशासनम् । एव स्वस्ति ऋद्धिमिति च । यजमान एवं चतुर्थ्या षष्ठ्या वा स्वनाम वदति । तुभ्यं तवेति वा विपरिणमय्य तथैव प्रतिवाचका वदेयुः । पुण्याहफलमाह पुण्याहे कृत इति । यथाशक्ति शक्तिमनतिक्रम्य । त्वमग्ने इत्यादि । 'त्वमग्ने यज्ञानां होता' इति मन्त्रान्ते 'अग्नये हिरण्य' मित्यादि यथालिंग मन्त्रेणाददीरन् – प्रतिगृह्णीयुः । यत्रेति । श्रौते स्मार्ते वा कर्मणि – सर्वत्र दक्षिणाया दानं समर्पणमादानं प्रतिग्रहश्च दक्षिणादानादाने भवतः तत्र–तत्रैवमेव स्यात् भवेत् । इति चतुर्थः पटलः । (इति सप्तम खण्डः) ।

अथ पञ्चमः पटलः । (अथ अष्टमः खण्डः) अग्न्यायतनं अग्निस्थानम् । स्थण्डिलं सिकताभिः कार्यम् । सिकताभावे आपस्तंबादिमतेन भूम्यामेवाग्निप्रतिष्ठापनमिष्टम् । परिष्कृतभूमेः स्थण्डिलत्वव्यवहाराच्च । दर्भा उक्त लक्षणाः । कुशकाशादयो वा । यद्वा बोधायनादीनां मतेन स्थण्डिले बर्हिष एव भवन्ति । यथा स्थण्डिलस्य परिस्तरणबर्हिरायतत्वम् । परिणाहः स्थौल्यम् । व्रणः लतादिसंघर्षजातं किणं जन्तुकोटरादिजन्यं वा, वक्रमनृजुता ताभ्यां हीनाः व्रणवक्रहीनाः परिधयः । पालशाः खादिरा आश्वत्थाः अन्येऽपि यज्ञवृक्षीया भवन्ति । ग्रथितं दक्षिणावर्तग्रन्थियुतम् । परिस्तरणादीन् सर्वानेकीकृत्य-पुनर्बध्नाति । तत्प्रमाणाः पवित्रप्रमाणा याज्ञिका होमार्थाः. अन्तहोमोक्तवृक्षीयाश्च समिधः सत्वचः न स्वयं शुष्काः । पात्राणि – प्रणिध्यादयः स्रुवादयः जुहूप-जुहूदर्व्यादयः ते – पात्रस्रुवादयः । यज्ञे – यागसूत्रे पात्रप्रकरणे प्रोक्ताः । आशंसायां निष्ठाप्रयोगः; न पूर्वभावित्वं यज्ञसूत्रस्य । दर्भेष्विति । दर्भा-नास्तीर्य तेषु दर्भेषु द्वन्द्वं युग्मं आज्यस्थालीचरुस्थाल्यौ प्रणिधिपात्रे च दर्वी-स्रुवौ जुहूपजुहू तथा येनार्थस्तच्च । एवं पात्रादिसंभाराः ये तत्रोक्ताः कर्मांगत्वेन, तानपि दैविके कर्मण्युत्तरे स्थण्डिलस्य संभरति । प्रत्येकमेकमेकमेव पैतृके दक्षिणे संभरति । अग्निकुंडलक्षणमाह नित्यहोम इत्यादिना । औपासनं नित्य-होमः । संस्कारहोमो नैमित्तिकः । नित्यहोमे–प्राप्ते अग्निशालायां–अग्निस्थापनोचिते गृहभागे । उक्तलक्षणं कुंडं कृत्वा गृही औपासनमग्निं विधानेनाधाय नित्यं सायं प्रातः जुहोति । वनस्थस्य – तृतीयाश्रमिणः । श्रामणकाग्निकुंड

कुंडविधानं तल्लक्षणादिकञ्च धर्मे वक्ष्यामः। अयमग्निः विखनसैव दृष्टः। (इत्यष्टमः खण्डः)

(अथ नवमः खण्डः) अथाघारविधानम्। आघार इति एकदेश कर्मनाम। तत्प्रधानत्वात् प्रकरणं सर्वमाघारशब्देनोच्यते। ब्राह्मं प्राङ्मुखमासीनः। सर्वत्र आघारादिहोमकाले प्राङ्मुख एव यजमान आसीनः दर्भासनेषूपविष्टः पवित्रपाणिः धृतोर्ध्वपुण्ड्रः प्राणानायम्य 'इदं कर्म करिष्यामि' इति संकल्प्य कुरुष्वेति सदस्यैरनुज्ञातः अग्नेः नैर्ऋत्यां धान्योपरि जलपूर्णं करकं निधाय पूर्ववत् पुष्पाद्यैरभ्यर्च्य तस्मिन् प्रोक्षणकूर्चं निधाय वाग्यतः कर्मारभेत। एतोन्विन्द्रमिति। अग्न्यालय - स्थण्डिलं कुण्डं वा। प्रोक्ष्य - उत्तानेन हस्तेन सेचनं प्रोक्षणं, करतलमवाकृत्य प्रोक्षणमवोक्षणम्, ऊर्ध्वांगुष्ठेन मुष्टिना अभितः सेचनमभ्युक्षणं। चतुर्दिशम् - चतुर्दिक्षु प्रागाद्युत्तरान्तं प्रागग्रानुदगग्रांश्च चतुरश्चतुरो दर्भानुक्षयेत् - क्षिपेत्; मन्त्रलिंगात्। ननु - 'दक्षिणस्यामग्रमन्तश्च पैतृके, इति सूत्रात् इदमनुपपन्नम् - मैवम्। दक्षिणस्यामिति पश्चिमाग्राणामप्युपलक्षणम्। मध्येत्यादि। अग्न्यालयस्य प्रदेशान् खनति। नैर्ऋत्याद्यन्तमित्यत्रैव खनने मध्यभागस्य प्राथम्यं दैविके पैतृके च तुल्यं ज्ञेयम्। मध्यपूर्वापरेत्यादिसूत्रे उक्तः क्रमः पैतृकविषयः। दैविके तु वैपरीत्येन मध्यापरपूर्वयमनिर्ऋत्यग्निसोमरुद्रीशानानि क्रमेण खनति। बर्हिषा वक्रितेन युग्मेन दर्भेण खननम्। तथेति। यथा सर्वत्र मध्यादिखननं तथा मध्यदक्षिणोत्तरेषु पूर्वादिपश्चिमान्ताः तिस्रो लेखाः मध्यपूर्वापरेषु उत्तरादि दक्षिणान्ताः तिस्रो लेखा, पैतृके मध्ययमसोमेषु पश्चिमादिप्रागन्ताः तिस्रः, मध्यापरपूर्वेषु दक्षिणाद्युत्तरान्ताः तिस्रः एवं षड्लेखाः प्रादेशमात्राः लिखति। श्रौते प्रायश्चित्ते एवमेव सूत्रकारैर्वक्ष्यते। एवं लिखित्वा दर्भं नैर्ऋत्यां विसृजेत्। अप उप स्पृशति। 'राक्षसरौद्रनैर्ऋतपैतृकछेदनभेदनखननिरसनावघ्राणात्माभिमर्शनानि कृत्वा सर्वत्राप उपस्पृशेत्' इति सूत्रकारवचनात्। जातवेद इति। जातकाद्यग्निररण्यारोपितश्चेत् तामरणिं गृहीत्वा जातवेदो भुवनस्येति मथित्वा अग्निमादाय तस्मिन् कर्म करोति। यद्यात्मनि

समिधि वा आरोपितः तदा लौकिकमग्निमादाय तस्मिन् औपासनाग्निं 'उपावरोहे'त्यवरोप्य यद्यक्रतहोमी यजमानः तत्र हुत्वा अग्निमाहरेत्। इदमौपासनाग्निसंस्कारविषयम्। अनौपासनाग्निकर्मणि तु लौकिकारणिं गृहीत्वा मन्त्रेण मथित्वा तमग्निमादायात्र कर्म करोति। तदसंभवे पचनाग्निं वा आदायाहरेत्। अनरणिपक्षे जातवेदमन्त्रो लुप्यते। तमग्निं प्रज्वाल्य गोकरीषाद्यैरिन्धनैरुद्दीप्य प्रणम्य रेखामध्ये हिरण्यं व्रीहीन्वा विन्यस्य तत्राग्निं निधाय संस्थाप्य। अत्र पाणिना नित्यहोमं जुहुयात्। इन्धनैः प्रज्वाल्याग्निं बलवन्तं कृत्वा अभिवन्द्य करौ प्रक्षालयति। यत्वैकेन पाणिना अशक्य तत्रोभयप्राप्त्यर्थं उभयोः करयोः प्रक्षालनम्। अभिवन्द्य – अत्र 'चत्वारि शृंगे'त्यग्निध्यानं परितः पुष्पाक्षताद्यर्चनञ्च विहितम्। मन्त्रेण स्पर्शनमभिमन्त्रणम्। दक्षिणवेदिं नैर्ऋत्याद्यन्तमिति। नैर्ऋतिरेवादिरन्तश्च यथा तन्नैर्ऋत्याद्यन्तम्। दैविके नैर्ऋत्यादि, पैतृके नैर्ऋत्यन्तमित्युपदेशः, एकत्राद्यन्तयोरसम्भवात्। तथा पश्चिमवेदिं नैर्ऋत्याद्यन्तं तथोत्तरवेदिं वायव्याद्यन्तं तथा पूर्ववेदिश्चाग्नेयाद्यन्तं परिमृज्य संशोध्य। उक्तविधानमेव सर्वत्र दैविकपैतृकयोः भवति। ब्रह्मसोमावृत्विजौ द्वौ यजमानेन वरयित्वा। ब्रह्माणमग्नेर्दक्षिणतः उदङ्मुखं उत्तरतः सोमं दक्षिणमुखं दर्भेष्वासयित्वा गन्धपुष्पाक्षतैरभ्यर्च्य मन्त्राभ्यां तूष्णीं वा प्रत्येकं ब्रह्माणं सोमञ्च प्रेक्ष्य। प्रोक्षयति बर्हिषः। अत्र ब्रह्मसोमयोः ऋत्विजोरभावे दक्षिणोत्तरयोरग्नेः उद्दिष्टस्थाने कूर्चं प्रागग्रं निधाय प्रोक्षणादीनि प्रतिवचननिरपेक्षमेव कुर्यात्। इति पञ्चमः पटलः। इति नवमः खण्डः)

अथ षष्ठः पटलः (अथ दशमः खण्डः) उक्तप्रोक्षणप्रकारमाह पात्रादित्यादिना। पात्रात् करकात् प्रणिध्यामाधावं गृहीत्वा वेद्यामुत्तरस्यां बर्हिषः कूर्चान् सपवित्रान् स्थापयित्वा तान् बर्हिषः प्रोक्ष्य सकृन्मन्त्रेण द्विस्तूष्णीम्। वेदिः कुंडस्य स्थंडिलस्य वा पश्चिमतः परिष्कृता भूमिः। बर्हिषः स्रुवादीन्। स्रुव आदिर्येषां संभारेध्माबर्हिषां तान्वा, स्रुवादीनां पात्राणामाधारभूता ये बर्हिषः तान्वा। स्रुवादीन् बर्हिषः 'बर्हिरसि स्रुग्भ्य' इति प्रोक्ष्य। बर्हिषोऽग्रं मध्यं मूलञ्च प्रोक्षयति। प्रणिधिमुद्धृत्य। 'पोषाय'त्वेत्यपः प्रणिधिस्थाः। बर्हिषो ग्रन्थनं

बन्धनं तस्मिन् किञ्चित् संस्राव्य । मूलदूर्ध्वमिति । मूलादारभ्य ऊर्ध्वमग्रान्तम् । अभिमर्शनं पाणिना । दर्भैः परिस्तीर्य । यावदर्थमच्छिद्रं परिस्तीर्य । परिस्तरणं सर्वत्र अधोवेद्याम् । उत्तराग्रमित्यादि । इदं दैविके । पैतृके तु वैपरीत्येन भवति । दक्षिणपरिस्तरणस्याग्रं पश्चिमपरिस्तरणाग्रोपरि कुर्यात् । (इतिदशमः खण्डः)

(अथ एकादशः खण्डः) वायव्यामित्यादि । इदं दैविके । पैतृके तु वैपरीत्येन । दक्षिणाग्रनूर्ध्वं करोति । पश्चिमपरिधिं स्थविष्ठमितोऽणीयांसं दक्षिणपरिधिमभ्यभिमुखाग्रमितोऽणीयांसमुत्तरपरिधिमभ्यभिमुखं परिदधाति । 'सूर्यस्त्वे' ति प्राच्यामधोवेद्यां कूर्चेन परिषिच्य सूर्यमेव परिधिं परिकल्पयति । तत्परिध्यभावात् । 'परिधीन् परिदधाति । रक्षसामपहत्यै । न पुरस्तात्परिदधाति । आदित्यो ह्येवोद्यन्' इति श्रुतेः । 'उपरिष्टाद्देवा रक्षन्तु' इति तथोत्तरान्तनूर्ध्वमग्नेरुपरिष्ठभागं परिषिच्य देवैः परिदधाति । 'उपरिष्टाद्देवा' इति श्रुतेः । 'अधस्तान्नागा रक्षन्तु' इत्यग्नेरधोभागं परिषिच्य नागैरेवाधोभागं परिदधाति । 'अधस्तान्नागा' इति श्रुतेः । यद्वा तत्तद्देवान् स्मृत्वा अग्नेरेवाभिमन्त्रणं कुर्यात् । 'सूर्यस्त्वा पुरस्तात्पा'त्वित्याहवनीयमभिमन्त्रयेत्' इत्यापस्तंबवचनात् । समिधाविति । मन्त्रावृत्त्या तूष्णीमुत्तरां वा स्थापयति । ऐन्द्राद्यमित्यादि । प्रागाद्युत्तरान्तं यथा स्यात्तथा अपः संस्राव्य, दक्षिणादि—दक्षिणोत्तरयोः प्रागन्तं पश्चिमपूर्वयोरुत्तरान्तं च तथा परिषिच्य, यथा आग्नेयादीशानान्तं भवति तथा पूर्ववेदिं 'तारुणासी' ति परिषिच्य, यथा—प्रदक्षिणमाग्नेयमेवादिरन्तश्च भवति तथा आग्नेयान्तं परिषिञ्चति । प्रणिधी प्रक्षाल्य । दारव्यौ मन्त्रावृत्त्या प्रक्षाल्यति । यदि लोह्यौ मृन्मय्यौ वा तदा मन्त्रो लुप्यते । मन्त्रलिंगात् । जलपूरणपवित्रप्रक्षेपणोत्पवनप्रणयनजलसंस्रावणेषु मन्त्रावृत्तिः । त्रिरुत्पूय । त्रिर्निर्मन्त्रैः पूर्वान्तं पश्चिमान्तं पूर्वान्तञ्च । दक्षिणे । पाणिनाग्रमिति वचनात् उदगग्रमुत्क्षिप्तं पवित्रं दक्षिणाग्रं कृत्वोत्पूय यथापूर्वमुदगग्रं कृत्वा निदधाति । न व्यत्यस्तहस्तेन गृहीत्वोत्पवनम् । तथा निदधातीति वचनात् । 'को व' इति प्रणीय मन्त्रावृत्त्या ललाटान्तं नीत्वा प्रदक्षिणमग्निं प्रदक्षिणीकृत्य, वेद्यां दक्षिणस्यां ततः ब्रह्मणः पुरतः उत्तरस्यां सोमस्य पुरतः प्रणिधी पूर्ववन्निदधाति ।

ऋत्विजोरुभयोरेकस्याभावे ब्रह्माणमेकमेव वा वृत्वा तेनैव मन्त्रानुच्चारयित्वा अनुज्ञातः प्रोक्षणादि कुर्यात्। ब्रह्मणः सर्वमन्त्राधिकारित्वात्। श्रौते तथा दृष्टत्वात्। अध्वर्युरेव तत्तन्मन्त्रानुच्चार्य प्रोक्षणादीन् कुर्यात्। एवमेव स्मार्तप्रायश्चित्ते विखनसाप्युक्तम्। 'संविशन्ता'मित्यादि। मन्त्रावृत्त्या ब्राह्मेण तीर्थेन ब्रह्मप्रणिधौ, दैवेन सोमप्रणिधौ जलं संस्राव्य स्रुवादीनुत्तानानि कृत्वा गायत्र्या स्रुवं स्रुचश्च प्रोक्षयेत्। इति षष्ठः पटलः। (इति एकादशः खण्डः)

अथ सप्तमः पटलः। (अथ द्वादशः खण्डः) 'भूस्स्रुव' मित्यादि। स्रुवं स्रुचश्च। युगपदशक्यं चेत् मन्त्रावृत्त्या गृहीत्वा। वेद्यधस्तात् संश्लिष्टपरिस्तरणोपरि प्रागग्रे वर्षिष्ठसमिधौ न्यस्य—क्षिपति। अत्र न मन्त्रावृत्तिः, द्विवचनात्। अंगारम्। उपवेषेणांगारमग्नेरुद्दग्धमुल्मुकं व्यस्य विगतमाक्षिप्य। पूर्ववत्। पवित्रेण प्रोक्षण्युक्तवत् पुनराहारं त्रिरुत्पूय। बर्हिर्दग्ध्वा—दर्भं दग्ध्वा अंगारं—दर्भोल्कमाज्ये दर्शयति—प्रदीपयति। सर्वत्र आज्यादिहोम्यद्रव्याणामयं विधिः। गव्यस्याज्यस्यालाभे आज्यमाविकं तदलाभे माहिषं तदलाभे शुद्धं तैलमपि वा होमार्थं ग्राह्यम्। एवं श्रौते प्रोक्तम्। आज्यस्थालीमुदगुद्वास्य चरुस्थालीं पक्त्वा अभिघार्योत्तरत उद्वास्य, पैतृके तु दक्षिणतः। स्रुचां पश्चिमतः आज्यस्थालीं स्थापयति। ततः उत्पवनम्। व्यस्तावंगारावग्नौ निदध्यात्। उत्तरपश्चिमे वायव्यां वेद्यूर्ध्वे निधाय तूष्णीमद्भिः प्रोक्ष्यादाय पवित्रं जुहोति। पैतृके तु नैर्ऋत्याम्। वायव्येऽग्नौ पैतृके नैर्ऋत्याम्। होम्यं—आज्यम्। द्विधा द्विभागमाग्नेयं प्राजापत्यमिति स्मृत्वा 'देवस्य त्वे' ति मन्त्रान्ते घृतं विहरामीति विभजति। (इति द्वादशः खण्डः)

(अथ त्रयोदशः खण्डः) प्रजापतिपुरोगान्—प्रजापतिप्रथमान्। पैतृके कर्मणि औपासनयज्ञपदं विहाय तत्स्थाने वैश्वदेवपदमुक्त्वा विश्वान् देवानित्यन्तमावाहयेत्। अन्यत्पूर्ववत्। एवं तत्तत्कर्मदेवतावाहनमपि कुर्यात्। यथाऽऽवाहनमित्यादि। यथा दक्षिणोत्तरप्रणिध्योरावाहनं तथा आज्यस्थाल्यां पूर्वमेव विहृतयोः दक्षिणोत्तरभागयोः प्रत्येकं स्रुवेणाज्यं गृहीत्वा ऊर्ध्वं नीत्वा स्रुवमुद्धृत्य जुष्टं निर्वपामीति चतुर्थ्यन्तेन तत्तन्नाम्ना तत्तद्भागयोरेव निर्वापं प्रतिक्षेपं

करोति । द्विधा निरुप्तमाज्यं होम्यमुद्धृत्य तृप्यभिद्वयेन मन्त्राभ्यां । द्विप्रकारेणाग्नौ दक्षिणोत्तरभागयोः क्रमेण दर्शयित्वाऽधिश्रयति । मन्त्रलिङ्ग इतरथा मन्त्रद्वयविधानमनर्थकम् । एकेन पर्याप्तत्वाद्दर्शनस्य । तस्मात् द्विः अधिश्रित्याऽऽदाय पूर्वस्थाने निधाय अग्निर्ज्योतिर्द्वयेन समिदुल्केन पूर्वं वीनि मित्यग्नौ निक्षिप्तेन द्विधा दक्षिणोत्तरभागयोराज्यं दहति । अनुत्तानमधोबिलं कृत्वा – उत्तानं ऊर्ध्वबिलं स्रुवं कृत्वा, अभिमन्त्रणम् । संधाय – संन्ध संवपति – जुहोति । ( इति त्रयोदशः खण्डः ) ।

( अथ चतुर्दशः खण्डः ) एकविंशतिरित्यादि । एकविंशतिर्वा – उ तयोऽस्मिन् यावत्यः प्रधानाः तावत्संख्या वा करसंपूर्णाः – मुष्टिमिता वा स गृहीत्वा अक्षताज्यचरुभिरभ्यर्च्य । अत्र मन्त्रावृत्तिर्भवति । पैतृके त्वेतद्वै त्येन भवति । अग्रमध्यमूलानीति । आग्नेयाद्यन्तं सर्वतश्च प्रदक्षिणमग्नि पुनराग्नेयमेवादिरन्तश्च यथा स्यात् तथा सर्वतश्चतस्रो वेदीः प्रदक्षिणं परिषिञ्च पैतृके त्वेतदेव वैपरीत्येन भवति । प्राच्यां दक्षिणान्तमप्रदक्षिणेनेशानाद्यन्त विवेकः । संकुलः – इतस्ततोभावः अतथाविधान् । शरोऽगारे अग्नौ जाज्वल्य माने अग्नौ । यस्यै देवतायै इत्यादि । हविः समिदाज्यचर्वादिः । मनसा चि ध्यायन् निर्वपेत् – जुहुयात् । तत्तद्देवतां चतुर्थ्या विभक्त्योद्दिश्य ‘ इदं ममेति ’ वदेत् । यजमानेनैवोद्देशत्यागः कर्तव्यः । किमर्थं देवतास्मरणं उ हुते कथमुद्दिष्टदेवतामाहुतिर्गच्छतीति शंकायामाह ‘ यथा ह वा ’ इत्यादि तत्तद्देवताध्यानेन अग्नौ प्राप्ताऽऽहुतिः अग्निना द्वारेण बहुभिः प्रकारैरन्ततः त द्देवतां प्राप्नोतीति प्रदर्शितं भवति । ( इति चतुर्दशः खण्डः )

( अथ पञ्चदशः खण्डः ) स्रुवेणेत्यादि । स्रावयन् रेखाकारेण सिञ्चन् द्वावाघाराहुती । चक्षुषी आज्यभागाभिधौ द्वे आहुती अग्नेरुत्तरदक्षिण पार्श्वयोर्जुहोति । पूर्वार्धयोरिति केचित् । चतुष्कोणाकारेण ‘युक्तो वहे’त्या चतुराहुतिभिः कल्पिते अग्निस्थाने तन्मध्यप्रदेशं आस्यमिति ज्ञात्वा व्याहृतिहोमः उक्तः । तस्मात्कारणादिदं कर्म अग्निमुखमिति वेदविदो वदन्ति ‘सत्येने’ति । अभिमृश्य - प्रदक्षिणं स्रुवेणाभिमन्त्र्य । चतुरंगुलमविच्छि

माषमात्रप्रमाणं गृहीतेनाज्येन जुहोति । जुह्वा व्याहृतीर्जुहोति । पृथक्पृथक् गृहीत्वा अक्षमात्रं जुहोति । समृध्यै — मन्त्रतन्त्रपरिपूर्तये । पैतृके औपासनयज्ञपदं विहाय तत्स्थाने वैश्वदेवयज्ञपदं संयोज्य विश्वेभ्यो देवेभ्यः स्वाहेत्यन्तं हुत्वा ततः पक्कं चरुं व्याहृतीभिर्जुहुयात् । सर्वहोमानामित्यादि — दैविकपैतृकादिहोमानाम्, आदिः प्रथमः आघारो भवेत् । इति सप्तमः पटलः । (इति पञ्चदशः खण्डः) ।

अथ अष्टमः पटलः (अथ षोडशः खण्डः) अथ सामान्यतः इत्यादि । आघारं हुत्वा संकल्पितं कर्म कुर्यात् । तदुपयोगि सामान्यमन्त्रा उच्यन्ते । सर्वकर्मस्वेते उपयुज्यन्ते । क्रियायाः संस्काराणाम् होममन्त्राः होमादौ मन्त्राः । धातादयः षोडश । (इति षोडशः खण्डः) ।

(अथ सप्तदशः खण्डः) 'इमं मे' इत्यादि । पञ्चमन्त्राः वरुणो देवता येषां तत् वारुणमिति संज्ञा । 'इममित्यादि पञ्चमन्त्राणाम् । उपांशुयाजे । रहस्योच्चारणमुपांशु । प्राजापत्ये । चित्तादीनां जया इति संज्ञा । 'अग्निर्भूताना'मित्यष्टादशमन्त्राणामभ्यातानां इति संज्ञा । (इति सप्तदशः खण्डः) ।

(अथ अष्टादशः खण्डः) ऋताषाडित्यादि द्वादशमन्त्रा राष्ट्रभृत्संज्ञाः । तत्र 'भुवनस्य पते' यस्यते — सनो भुवनस्य पते; इति द्वौ मन्त्रौ मध्यपातिनौ वर्जयित्वा प्रत्येकं ताभ्योऽन्ता द्वादशमन्त्राः राष्ट्रभृतः । प्राजापत्यादिराष्ट्रभृद्रन्तो मूलहोमः । बभूवेत्यादि । 'स हि हव्यो बभूव' इति 'पितरः पितामहा' इति पैतृकः — क्षत्राय महि शर्म यच्छतु' इति त्रयाणां मन्त्राणामन्ते व्याहृतिः होतव्या । इत्यष्टमः पटलः (इत्यष्टादशः खण्डः) ।

अथ नवमः पटलः । (अथ एकोनविंशः खण्डः) अथान्ते होममन्त्राः इति । अन्ते तत्तत्संस्कारहोमपरिसमाप्तौ अंगभूताः प्रायश्चित्तरूपाश्च होममन्त्रा उच्यन्ते । यदस्यादीनां स्विष्टाकार इति संज्ञा एकादशमन्त्राणाम् । मिन्दाहुतिसंज्ञे द्वे । इष्टेभ्यः स्वाहेति दशानां ऋद्धिरिति संज्ञा । कृताहुतिरेतु देवान्त्स्वाहेति वाक्यमन्ते यस्य तत्कृतान्तम् । आश्रावितादित्रयं यत्प्रमत्त इत्यादि षट्कञ्च

विच्छिन्नसंज्ञम् । विच्छिद्यते न्यूनातिरेकमेभिरिति विच्छिन्नमाश्राविताादीनां नवानां मन्त्राणां संज्ञा भवति । घृताक्तास्सप्तसमिधस्तत्तन्मन्त्रैरग्नौ प्रहरति । सर्वेषामलाभे यथासंभवम् । अलब्धानां प्रतिनिधित्वेन पालाशीं जुहुयात् । आश्वत्थीं वा । पूर्यते याग आभ्यामिति पूर्णाहुती । उपजुह्वा जुह्वां प्रत्येकं (आज्यं) गृहीत्वा अग्निर्भुक्तमित्यादीन् हुत्वा जुह्वां प्रत्येकं चरुमवदाय अग्निर्जीर्णमित्यादिभिर्हुत्वा स्रावयन् वेद्यां विषिञ्चन् जुहोति । स्थाल्यैव आज्यशेषं जुहुयात् । (इति एकोनविंशः खण्डः)

(अथ विंशः खण्डः) तत्पात्रेणेत्यादि । आज्यस्थाल्या करकाज्जलमादाय तदपः प्रत्येकं स्रुवेण गृहीत्वा, अन्तरितं स्रुवान्तर्गतम्, उप—समीपे अग्नेः पश्चिमस्यां निनीय तथा वेद्याम्, आकाशे भूम्यां निनीय दक्षिणस्यां वेद्यां तर्पयति-निनयति । प्रणीतायां दक्षिणस्यामित्यादि । अनन्तरमप उपस्पृश्य । ततः प्रवाहणं—परिषेचनम् । पवित्रमक्षतं गृहीत्वा । पवित्रमिति जात्येकवचनम् । ग्रहणं तूष्णीम् । क्रमेण पर्यायतो मन्त्रैः होमः । दक्षिणप्रणिधिपवित्रमुत्तरप्रणिधिपवित्रं दक्षिणप्रणिध्यक्षतमुत्तरप्रणिध्यक्षतमिति । अयमेकः पक्षः । प्रथमं दक्षिणप्रणिधिपवित्रं ततः तत्रत्याक्षतं ततः उत्तरप्रणिधिपवित्रं ततस्तत्रत्याक्षतमिति अपरः पक्षः । उभयपक्षे होम्यग्रहणं तूष्णीमेव । उत्तरः पक्ष एव साधुः । तदद्भिः प्रोक्ष्य । यजमानस्यैव प्रोक्षणम् श्रौतवत् । न प्रणिध्योः—प्रयोजनाभावात् । प्रणिधी विसर्जयति । विसर्जनं पात्रपेटिकायां निधानम् । इति नवमः पटलः (इति विंशः खण्डः)

अथ दशमः पटलः (अथ एकविंशः खण्डः) 'पुनर्देवेभ्य' इत्यादि । अग्नेर्दर्शनेन प्रतपनेन । विसर्जनं पात्रपेटिकायां निधानम् । स्रुवादीनां धारणं विहितं यावज्जीवमाहिताग्नेः । 'स्रुवादीनि धेनुर्वहाणामित्याददीत' इति परिधानीये कर्मणि निर्दिष्टम् । वर्षिष्ठसमिधाविति । तूष्णीं गृहीत्वा मन्त्रेण होमः । पश्चिमतः परिधिमपनयेत्यादि । मन्त्रेण परिधीनामपनयनं, प्रत्येकं तूष्णीं होमः, नात्यग्रं प्रहृत्य मध्यपरिधेरधस्तादंगारेष्वपोहयेत् । पश्चिमत इत्यादि । सर्वान्—अन्यांश्च । कूर्चाश्चेत् ग्रन्थीन् विसृज्य प्रोक्ष्य नात्यग्रं, आप्यायन्त'मिति जुहोति ।

यत्र यत्र औपासनाग्नौ संस्कारहोमः तत्र तत्र वैश्वानरसूक्तेनोपस्थाय तमग्निं कुंडे अरण्यां समिध्यात्मनि वा समारोपयेत् । यत्र यत्र लौकिकाग्नौ संस्कारहोमः तत्र तत्र 'ओश्च मे स्वर — इत्युपस्थाय तमग्निं विसृजेत्। धारणस्य अप्रयोजकत्वात् । लौकिकाग्नेर्विसर्जनं त्यागः । (वीप्सा परिसमाप्तौ) इति दशमः पटलः (इत्येकविंशः खण्डः)



# अथ द्वितीयप्रश्ने — प्रथमः खण्डः

**अथ — शारीरेषु संस्कारेषु ऋतुसङ्गमनवर्जं नान्दीमुखं कुर्यात् ॥ १**

ननु सर्वसंस्काराणां मूलभूते ऋतुसङ्गमने निषिद्धय इतरसंस्कारेषु किमर्थं नान्दीमुखं प्रतिपाद्यते इति चेत् — उच्यते । तथा च

व्यासः — 'सूतकान्नमुदक्यान्नं सीमन्तान्नं तथैव च ।
यागान्नमशुभान्नञ्च भुक्त्वा चान्द्रायणं चरेत् ॥

चूडाहोमे निवृत्ते च प्राङ्नामकरणात्तथा ।
भुक्त्वा चरेत्सान्तपनं जातकर्मणि चैव हि ॥

अतोऽन्येषु च भुक्त्वान्नं संस्कारेषु द्विजोत्तमाः ।
नियोगादुपवासेन शुद्धयते निन्द्यभोजनात् ॥

ब्राह्मौदने च सोमे च सीमन्तोन्नयने तथा ।
जातश्राद्धे नवश्राद्धे भुक्त्वा चान्द्रायणं चरेत् ॥ इति

एवं दोषयुक्तान्नेन अभ्युदयश्राद्धस्य कर्तुमयुक्तत्वात् अत्र निषेध उक्तः । यद्यन्नदोषादेव निषेध उच्यते तर्हि समपठितसीमन्तोन्नयनस्यापि दोषदुष्टत्वात् तत्रापि निषेधः स्यात् इति चेत् — नैवम् । 'नास्या अन्नमद्यात् ब्रह्महत्यायैह्येषा वर्णं प्रतिमुच्यास्ते' इत्यादिषु श्रुतिषु अत्यन्तनिषेधश्रवणात् निषेध उपपद्यते इति । किञ्च सीमन्तादिषु कालज्ञानसंभवात् आर्तवे कालज्ञानाभावाच्च । तथा —

'सूतकाद्द्विगुणं शावं शावाद्द्विगुणमार्तवम्' इति दोषाधिक्यस्मरणात् ऋतुसङ्गमनवर्जमित्युक्तम् ।

श्रीविष्णुपुराणे :— 'कन्यापुत्रविवाहेषु प्रवेशे चैव वेश्मनः ।
नामकर्मणि बालानां चूडाकर्मादिके तथा ॥

सीमन्तोन्नयने चैव पुत्रादिमुखदर्शने ।
नान्दीमुखं पितृगणं पूजयेत्प्रयतो गृही ॥ इति

गर्गः – 'पुत्रोत्पत्तिप्रतिष्ठासु मौञ्जीत्यागे च बन्धने ।
चूडायाञ्च विवाहे च वृद्धिश्राद्धं विधीयते' ॥ इति
'निषेककाले सोमे च सीमन्तोन्नयने तथा ।
ज्ञेयं पुंसवने श्राद्धं क्रियांग वृद्धिकृत्कृतम्' ॥ इति ॥

सीमन्तादिषु नान्दीमुखकरणं दृश्यते ॥

**'श्वः कर्ताऽ'स्मीति गर्भाधानादिक्रियां यदहः करोति तदहर्नान्दी भवति ॥ २ ॥**

श्वः कर्तास्मीति क्रियां यदहः करोति—पूर्वेद्युः । साद्यस्कालिकेऽपि कर्तव्यताज्ञापनार्थं यदहः करोति तदहर्नान्दी भवतीत्युक्तम् ।

**तस्या मुखं सर्वदेवपितृदेवत्यं नान्दीमुखमभ्युदयश्राद्धं दैविकवत् करोति ॥ ३ ॥**

नान्द्या मुखं सर्वदेवत्यं पितृदेवत्यञ्च यत्कर्म तन्मुखं तत्प्रधानमित्यर्थः । नान्दीमुखमभ्युदयश्राद्धमिति पर्यायः । दैवेन तीर्थेनोपवीतिना कार्यमित्यर्थः । यद्वा दैविकवदिति सदैवतमिति ।

मनुः– 'दैवं हि पितृकार्यस्य पूर्वमाप्यायनं स्मृतम् ।
तेषामारक्षभूतन्तु पूर्वं दैवन्तु योजयेत् ॥
रक्षांसि विप्रलुम्पन्ति श्राद्धमारक्षवर्जितम्' ॥ इति

**पूर्वेद्युरेव पूर्वाह्णे युग्मान् ब्राह्मणान् सुप्रक्षालितपाणिपादान् श्रोत्रियानन्नेन परिविष्य अथेलामभ्युक्ष्य 'अथावनीद'मिति मण्डलान्युपलिप्य 'अस्त्वासन'मित्यासनानि सदर्भयवानि निधाय तेष्वासीनान् पुष्पाद्यैः यथोपपादमलङ्करोति ॥ ४ ॥**

एवकारेण पूर्वेद्युरेव कर्तव्यता ज्ञाप्यते । तथा

मनुः— 'दर्भाः पवित्रं पूर्वाह्णे हविष्याणि च सर्वशः ।
पवित्रं यच्च पूर्वोक्तं विज्ञेया हव्यसम्पदः ॥ इति ।

तथा – 'आमश्राद्धन्तु पूर्वाह्णे एकोद्दिष्टन्तु मध्यमे ।
पार्वणञ्चापराह्णे तु प्रातर्वृद्धिनिमित्तकम् ॥

इति स्मृत्यन्तरवचनाच्च पूर्वाह्णे एव कर्तव्यम् । युग्मान् ब्राह्मणान्–द्वौ विश्वेदेवौ चतुरः पितॄन् वृणीते इति श्रौतसूत्रे वक्ष्यते ।

ब्राह्मणानिति – 'देवो मुनिर्द्विजो राजा वैश्यः शूद्रो बिडालकः ।
पशुर्म्लेच्छश्च चण्डालो दश विप्राः प्रकीर्तिताः' ॥ इत्युक्ताः ।

तत्र परीक्ष्य उक्तलक्षणानेव वरयेत् । अन्नेनेत्युक्तत्वात् हिरण्यादौ नामन्त्रणम् । अथैलामभ्युक्ष्येति । तत्र बोधायनः ।

मन्त्रेण च द्विराचम्य गोमयेनोपलेपिते ।
भस्मना वारिणा वापि मण्डलं कारयेत्ततः ॥ इति

ननु मण्डलानीत्युक्तत्वात् वृत्ताकारेणेति चेत्–न

'विप्रस्य पुरतः कृत्वा मण्डलं चतुरश्रकम् ।

इति वचनात् दैविकवदित्युक्तत्वाच्च चतुरश्राण्येव ।

ब्रह्माण्डे — 'ब्रह्मा विष्णुश्च रुद्रश्च श्रीर्हुताशन एव च ।
मण्डलान्युपयुञ्जन्ति तस्मात् कुर्वीत मण्डल' मिति ॥

अकरणे दोषमाह अत्रिः

'यातुधानाः पिशाचाश्च क्रूराश्चैव तु राक्षसाः ।
हरन्ति रसमन्नस्य मण्डलेन विवर्जिते' ॥ इति

यवाः–तिलार्थाः आसनादिकल्पने उक्ताः ।

'हस्ते यदासनं दद्यात् ब्राह्मणो ज्ञानदुर्बलः ।
त्रयस्ते नरकं यान्ति दाता भोक्ता तथा पिता' ॥ इति

अलङ्करोति इति । अत्र विशेषः ।

'मातृश्राद्धन्तु पूर्वं स्यात्पितॄणां तदनन्तरम् ।
ततो मातामहानाञ्च वृद्धिश्राद्धेषु दातृभिः' ॥ इति

युग्मान् ब्राह्मणानित्युक्तत्वात् 'नान्दीमुखे वसुस्सत्य' इति द्वौ विश्वेदेवार्थं, मात्रर्थं द्वौ पित्रर्थं द्वौ मातामहार्थं द्वाविति युग्मत्वेन वरणम्।

'नैमित्तिके मृताहे च वृद्धिश्राद्धे तथैव च।
मात्रादीनां पृथक् श्राद्धमन्यत्र पितृभिस्सह' ॥

इति वचनाच्च मात्रादीनां पृथक् कर्तव्यम्। अष्टकावत् समन्त्रकमित्यभिप्रायः। नान्दीमुखाः पितरस्सानुगाः प्रियन्तामित्यर्घ्यप्रदाने द्विर्दद्यात्। आवाहनादिप्रकारस्त्वष्टकायां द्रष्टव्यः।

मनुः— 'पित्र्ये स्वदितमित्येव वाच्यं गोष्ठे च सूनृतम्।
सम्पन्नमित्यभ्युदये दैवे रोचत इत्यपि' ॥ इति

**शुक्लबलिः श्वेतसर्षपाः दधि तण्डुलमित्यामनन्ति चतुश्शुक्लम्॥ ५**

**शुक्लबलिः** श्वेतान्नं श्वेतसर्षपाः दधि तण्डुलञ्च चतुश्शुक्लमित्यामनन्ति।

**एतदादाय अग्नेर्दक्षिणतः 'अग्नये सोमाय प्रजेशाय विश्वेभ्यो देवेभ्यः ऋषिभ्यः पितृभ्यो भूतेभ्यः सर्वाभ्यो देवताभ्यो नमः' इत्यन्तेन तन्नाम्ना पुष्पादिभिरभ्यर्च्य बलिं ददाति॥ ६॥**

अग्नेर्दक्षिणत इत्युक्तत्वात् आघारानन्तरमित्यवगम्यते। केवलभूमौ कर्तुमयुक्तत्वात् व्रीह्यादिभिः स्थण्डिलं कृत्वा प्रत्येकं कूर्चं निधाय अग्निमावाहयामीत्यादिभिः अग्न्यादीनावाह्य 'होमे षड्विग्रहाः प्रोक्ताः। पुष्पादयस्ते षट्प्रोक्ता होमध्यानार्चनाय वै'॥ इति पुष्पगन्धधूपदीपार्घ्याचमनादिभिरभ्यर्च्य बलिं 'अग्नये चतुश्शुक्लबलिं निवेदयामी'त्यादिभिर्ददाति। मंगलद्रव्यत्वात् चतुश्शुक्लमित्युक्तम्॥

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ द्वितीयप्रश्ने प्रथमः खण्डः
समाप्तः।

---

## अथ द्वितीयः खण्डः

—*०*—

**चरुमपूपादि च निवेद्य उदकुंभं 'धारा' स्वित्यद्भिरापूर्य 'नमस्सुलोभी'ति पाप्मनोऽपहत्यै सपल्लवं निदधाति ॥ १ ॥**

**चरुमपूपादि च निवेद्य।** आदिशब्देन फलादीनि, चकारात् तांबूलादिकम्। 'पायसं कुसरं मांसमपूपानथशाप्कुलान्। अपचन्नात्मनोर्थाय वृथामांसानभक्षयन्' इति वचनात्, 'मधुधाम्नोश्चोदनायां तोयपिष्टौ प्रतिनिधी गृह्णीयात्' इत्युक्तत्वाच्च मांसार्थमपूपग्रहणम्। **उदकुंभं** तन्तुना वेष्टितं 'धारा' स्वित्यद्भिरापूर्य पाप्मनो हत्यै गर्भाधानादिषु बीजक्षेत्रगतपापनिवृत्त्यर्थम्।

'गार्भैर्होमैर्जातकर्मचूडामौंजीनिबन्धनैः।
बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते' ॥ इति वचनात्।

किंच — नास्य कर्म नियच्छन्ति किंचिदामौञ्जिबन्धनात्।
वृत्त्या शूद्रसमो ह्येष यावद्वेदेन जायते ॥

इति नामकरणादारभ्योपनयनपर्यन्तं शूद्रसमत्वोक्तेः तद्दोषनिवृत्त्यर्थमपि।

तथा — 'उदिते सवितर्यस्य क्रियायुक्तस्य धीमतः।
चतुर्वेदधरस्यापि देहे षड्वृषलास्स्मृताः ॥

कामः क्रोधश्च लोभश्च मोहश्च मद एव च।
महामोहश्च इत्येते देहे षड्वृषलाः स्मृताः ॥

इति उपनयनादारभ्य अरिषड्वर्गनिवृत्त्यर्थं प्रायश्चित्तादिषु तत्तत्पापनिवृत्त्यर्थमिति च। **सपल्लवमित्यादि।** व्रीह्यादिस्थण्डिलोपरि अहतवस्त्रयुक्तमश्वत्थादिपल्लवयुतं कूर्चं सुवर्णनारिकेलफलसमन्वितञ्च निदधातीत्यर्थः।

**श्रुतिः।** 'वरुणस्य वा अभिषिच्यमानस्याप इन्द्रियं वीर्यं निरघ्नन्। तत्सुवर्णं हिरण्यमभवत्। यद्रुक्ममन्तर्दधाति इन्द्रियस्य वीर्यस्यानिर्घाताय' इति। (आभरणमिति। स्वर्णाभरणम्।) 'पवित्रं वै हिरण्यम्। पुनात्येवैनम्'। इति

**प्रतिसरां कुतपस्य दुकूलस्य वा त्रिवृतां पुष्पाद्यपि संभृत्यादाय जुहुयात् ॥ २ ॥**

प्रतिसरामिति । कुतपस्य रत्नकंबलादेः दुकूलस्य सूक्ष्मतन्तोः । वा शब्दात् हस्तप्रमाणमात्रेण स्थूलतन्तोः । त्रिवृताम् । पुष्पादीति गन्धपुष्पतांबूलानि नारिकेलञ्च गृह्यते । अपिना तण्डुलादिकम् ॥

भृगुः — 'आचार्यः स्थापकैर्युक्तः पुण्याहमपि वाचयेत् ।
पृथक् पूर्वं न्यसेत्पात्रमाढकाहीनतण्डुलैः ॥
निष्कत्रयसुवर्णेन कृतं प्रतिसरं न्यसेत् ।
हस्तप्रमाणमात्रेण कौतपं तान्तवन्तु वा' ॥ इति

संभृत्येति । आधाय(?) उपसमाधाय । यद्वा । आघारं कृत्वा जुहुयात् वक्ष्यमाणैर्मन्त्रैः ।

**ऋचो अग्नेनयाद्यग्निदेवत्याः, सोमो धेन्वादि सोमदेवत्याः, ब्रह्मजज्ञानादि ब्रह्मदेवत्ये, रुद्रमन्यमित्यादि रुद्रदेवत्ये, अतो देवादि विष्णुदेवत्याः, आ नो विश्वादि विश्वेदेवदेवत्याः, यतस्त्वमासीदिति सप्तर्षिदेवत्याः, ये भूता इत्यादि भूतदेवत्याः, व्याहृतीः, 'अग्नये कव्यवाहनाय' 'सोमाय पितृमते' यमाय चाङ्गिरस्पतये' 'एते य इह पितरः' 'उशन्तस्त्वा' 'सा नो ददा' त्यृचः पितृदेवत्याः । पृथिवीगतेभ्यः पितृभ्यः अन्तरिक्षगतेभ्यः पितामहेभ्यः दिविगतेभ्यः प्रपितामहेभ्यः स्वधा नमस्स्वाहे' ति पितृभ्यः पैतृकमुपवीती हुत्वा व्याहृतीस्समान्यतो देवताभ्यस्ताभ्योऽष्टाभ्यो जुहोति । ३ ॥**

**पात्रेष्वाज्यभागं स्रुवेणाभिघार्य द्विर्देवतारूपं पितृभ्यः प्रागन्तं क्षिप्त्वा तदङ्गुष्ठेन तच्चरुं स्पर्शयति ॥ ४ ॥**

पात्रेष्वाज्यभागमित्यादि । आज्यभागमाज्यशेषम् । बलिशेषनिवृत्त्यर्थमिदं वचनम् । चरुः–हविः । तथा

मनुः— 'मुन्यन्नानि पयस्सोमो मांसं यच्चानुपस्कृतम् ।
अक्षारलवणञ्चैव प्रकृत्या हविरुच्यते' ॥ इति

तदंगुष्ठेनेति । तस्य—प्रतिगृहीतुः अंगुष्ठेन ।

बोधायनः— 'यच्च दत्तमनंगुष्ठं यच्चापि प्रतिगृह्यते ।
आचामयति यत्तिष्ठन् न च तेन स ऋद्ध्यते' ॥ इति

स्पर्शयतीति । दानार्थं स्पर्श उक्तः । 'देवसवितुः प्रसुव' इत्यारभ्य 'पृथिवी ते पात्र' मित्यादि 'पितृभ्यस्स्वधा नम' इत्यन्तं कुर्यादित्यभिप्रायः ।

**ततो नमस्कृत्य 'आसत्येन रज' सेति क्षीरेण दध्ना वा श्वेतमन्नं ब्राह्मणान् भोजयेत् ॥ ५ ॥**

वा शब्दश्चार्थः, सूपादिव्यञ्जनपरः । यद्वा—यथालाभद्रव्येण । श्वेतमन्नमिति । कृष्णव्रीह्यादितण्डुलान्ननिषेधः ॥

**अनुत्थितेभ्यः समूह्योच्छिष्टं शोधयित्वाऽऽचान्तांस्ताननुमान्य पुण्याहं वाचयित्वा स्वस्तिसूक्तेनाभिमृश्य 'स्वस्तिदा विशस्पति' रिति प्रतिसरां बध्नाति ॥ ६ ॥**

अनुत्थितेभ्यः इत्यादि । आचान्तान्—उत्थानानन्तरम् कृताचमनान् । अनुमान्येति । 'मया कृतमिदं सर्वं क्षमध्व' मिति याचनमनुमानम् । अनुमानात् पूर्वं तांबूलं दक्षिणाश्च दद्यात् । पुण्याहमिति । पुण्याहजलेन प्रतिसरां कर्तारञ्च प्रोक्ष्य । बध्नातीति । प्रतिसरां दक्षिणकरे पुरुषस्य, स्त्रीणां वामकरे । 'देवस्य दक्षिणे हस्ते देव्योश्चैव तु वामतः' इति भृग्वादिभिर्देवविषये उक्तत्वात् सर्वैरपि तथैवानुष्ठेयमिति भावः ।

**'नान्दीमुखेभ्यः पितृभ्यः स्वधा नमः' 'नान्दीमुखेभ्यः पितामहेभ्यः स्वधा नमः' 'नान्दीमुखेभ्यः प्रपितामहेभ्यः स्वधा नमः' इत्युक्ते 'स्वधाऽस्त्विति प्रतिवदतो देवान्तं विसर्जयति ॥ ७ ॥**

**तेनोदकुंभेनापरेद्युः स्नायात् ॥ ८ ॥**

साद्यस्कालिके तु तदानीमेव स्नानम्। यथा श्रौते। 'तदानीमुदकुंभाद्भिः या सुगन्धा रसाः' इति यजमानमभिषिच्य पुण्याहं वाचये' दिति।

**नान्दीमुखमिति विज्ञायते ॥ ९ ॥**

होमब्राह्मणभोजनाद्युदकुंभजलस्नानान्तं नान्दीमुखम्।

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ द्वितीयप्रश्ने द्वितीयः खण्डः
समाप्तः।



## अथ तृतीयः खण्डः

अथ गर्भाधानादिवर्षे पञ्चमे ब्रह्मवर्चसकामम् आयुष्काममष्टमे नवमे वा श्रीकामं वसन्ते ब्राह्मणमुपनयीत ॥ १ ॥

अनन्तरमुपनयनविधिं विवक्षुर्वर्णानुरूप्येणोपनयनकालमाह अथ गर्भाधानादीत्यादिना । उच्यते च

'पञ्चमे ज्ञानवृद्धिश्च षष्ठे ब्रह्मत्वमाप्नुयात् ।
औपनायनिके कार्ये शुकेन परिभाषितम्' ॥ इति

ब्रह्मवर्चसकामस्येत्यादि । अत्र बालस्य कामनाऽसम्भवात् विभक्ति व्यत्ययः । ब्रह्मवर्चसकामः (पित्रादिः) इत्यर्थः । नवमे वेति–वा शब्दात षोडशवर्षपर्यन्तग्रहणम् ।

मनुः— 'ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे ।
राज्ञो बलार्थिनः षष्ठे वैश्यस्यार्थार्थिनोऽष्टमे' ॥ इति

भृगुः— 'पितैवोपनयेदेनं पञ्चमादौ यथाविधि ।
सप्तमे चाष्टमे चैव क्षत्रियस्य विशः क्रमात्' ॥ इति ।

पैठीनसिः— 'गर्भसंवत्सरादब्दे अष्टमे ब्राह्मणं शिशुम् ।
पितैवोपनयेदेनं पञ्चमादिष्वपीष्यते ॥
सप्तमे चाष्टमे चैव क्षत्रियस्य विशः क्रमात्' ॥ इति

बौधायनः—'अथातो गर्भाष्टमे ब्राह्मणमुपनयीत' इत्यारभ्य 'अथापि काम्यानि भवन्ति सप्तमे ब्रह्मवर्चसकाममष्टमे आयुष्कामं नवमे तेजस्कामं दशमेऽन्नाद्यकाममेकादशे इन्द्रियकामं द्वादशे पशुकामं त्रयोदशे मेधाकामं चतुर्दशे पुष्टिकामं पञ्चदशे भ्रातृव्यवन्तं षोडशे सर्वकाम'मिति वसन्ते–वसन्ततौं । ब्राह्मणम् मात्रब्राह्मणमित्यर्थः ।

एकादशे ग्रीष्मे राजन्यम् ॥ २ ॥

**द्वादशे शरदि वैश्यम् ॥ ३ ॥**

**अत्र मनुः**— 'गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम् ।
गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः' ॥ इति

उक्तकालनियमे उपपत्तिमाह **बृहस्पतिः**

'अशुभाब्दे ग्रहास्सर्वे शुभगोचरगा अपि ।
शान्त्यभावाच्छमं नैव यान्त्यब्देऽकालमृत्युवत् ॥
तस्मात् ग्रहेभ्यः कालस्स्यात् बली संवत्सरः स्मृतः' ॥ इति

अत्र—अब्दसंख्यानियमस्यायमभिप्रायः । ब्रह्म—क्षत्र—विशां गायत्री-त्रिष्टुप्जगतीछन्दोभिस्सह उत्पत्तिः श्रूयते । यथा—'गायत्री छन्दो रथन्तराणाँ रथन्तरँ साम ब्राह्मणो मनुष्याणामाजः पशूनां तस्मात्ते मुखतो ह्यसृज्यन्त' इति—त्रिष्टुप् छन्दो बृहत्साम राजन्यो मनुष्याणामविः पशूनामिति—जगती छन्दो वैरूपँ साम वैश्यो मनुष्याणां गावः पशूना'मिति। गायत्र्यादिभिरेषामुपनयनञ्च स्मर्यते।

**वासिष्ठे**—'गायत्र्या ब्राह्मणमुपनयीत त्रिष्टुभा राजन्यं जगत्या वैश्य मिति । ततश्च उपनयनाब्दा अपि स्वस्वछन्दोक्षरसमसंख्याका भवितुमर्हन्तीति ज्ञेयम् । छन्दसामक्षरसंख्या च श्रूयते । 'अष्टाक्षरा गायत्री एकादशाक्षरा त्रिष्टुप् द्वादशाक्षरा जगती' ति ।

**हारीतः**—'छन्दस्तु पादाक्षरसमुदायवत् अब्दसमूहे उपनयन'मिति। गायत्र्या-दीनामक्षरवत्त्वादिकं यजुषि श्रूयते । 'कद्रूश्च वै सुपर्णी चात्मरूपयोरस्पर्धेतां सा कद्रूः सुपर्णीमजयत् साऽब्रवीत्तृतीयस्यामितो दिवि सोमस्तमाहर तेनात्मानं निष्क्रीणीष्व' इत्यारभ्य 'जगत्युदपतत् चतुर्दशाक्षरा सती सा प्राप्य न्यवर्तत तस्यै द्वे अक्षरे अमीयेता' मित्यादिना जगतीछन्दसः अक्षरद्वयहीनतां पश्वादिलाभञ्चां प्रतिपाद्य त्रिष्टुगुदपतत् त्रयोदशाक्षरा सती सा प्राप्य न्यवर्तत तस्यै द्वे अक्षरे अमीयेता' मित्यादिना त्रिष्टुपछन्दसोऽक्षरद्वयहीनतां दक्षिणादिलाभञ्च प्रतिपाद्य 'गायत्र्युदपतत् चतुरक्षरा सत्यजया ज्योतिषा तमस्या अजाऽभ्यरुन्धत् तदजाया अजत्वं सा सोमञ्चाहरत् चत्वारि चाक्षराणि साऽष्टाक्षरा समपद्यत' इति गायत्र्या

अष्टाक्षरत्वादिकं प्रतिपादितम् । किञ्च छन्दोगब्राह्मणे । 'प्रजापतिरकामयत बहुस्य प्रजायेय' इत्यारभ्य 'यज्ञं सृजेयेति । स मुखत एव त्रिवृतमसृजत । तं गायत्री छन्दोऽन्वसृज्यत । अग्निर्देवता ब्राह्मणो वसन्त ऋतुः तस्मात् त्रिवृत्स्तोमानां गायत्री छन्दसामग्निर्देवानां ब्राह्मणो मुखेन वीर्यं करोति । मुखतो हि सृष्टः मुखेन वीर्यम् । य एवं वेद स उरस्त एव बाहुभ्यां पञ्चदशमसृजत । तं त्रिष्टुप् छन्दोऽन्वसृज्यत । इन्द्रो देवता राजन्यो मनुष्यो ग्रीष्म ऋतुः तस्माद्राजन्यस्य पञ्चदशः स्तोमः त्रिष्टुप् छन्दः इन्द्रो देवता ग्रीष्मऋतुः तस्मादु बाहुवीर्यो बाहुभ्यां हि सृष्टः करोति बाहुभ्यां वीर्यं य एवं वेद समृद्ध्यत एव प्रजननात् सप्तदशमस्य जगतः जगती छन्दोऽन्वसृज्यत । विश्वे देवता वैश्यो मनुष्यो वर्षा ऋतुः तस्माद्वैश्यो द्यमानो न क्षीयते प्रजननाद्धिसृष्टः तस्मादु बहुपशुर्वैश्वदेवो हि' इति । अत एव च वसन्तादयो ऋतवश्च उक्ताः ।

**आषोडशाद्ब्राह्मणमाद्वाविंशात् क्षत्रियमाचतुर्विंशाद्वैश्यमिति वा ॥ ४**

'अकाले कृतमकृत' मित्यादिशंकाव्यावृत्त्यर्थं आषोडशादित्याद्युच्यते । वाशब्दो विकल्पार्थः । मुख्यकाले गौणकाले वेति ।

**अतीते सावित्रीपतिता भवन्ति ॥ ५ ॥**

गौणकालस्याप्यतिक्रमे दोषमाह सावित्रीपतिता भवन्ति इति । तत्र

मनुः— 'आषोडशाद्ब्राह्मणस्य सावित्री नातिवर्तते ।
आद्वाविंशात् क्षत्रबन्धोराचतुर्विंशतेर्विशः ॥
अत ऊर्ध्वं त्रयोऽप्येते यथाकालमसंस्कृताः ।
सावित्रीपतिता व्रात्या भवन्त्यार्यविगर्हिताः ॥
नैतैरपूतैर्विधिवदापद्यपि कदाचन ।
ब्राह्मान् यौनांश्च संबन्धानाचरेद्ब्राह्मणस्सह' ॥ इति

तथा— 'एकशय्याऽऽसनं पङ्क्तिः भाण्ड पक्वान्नमिश्रणम् ।
याजनाध्यापने यानं तथैव सहभोजनम् ॥
नवधा सङ्करः प्रोक्तः न कर्तव्योऽधमैः सह' ॥ इति च

**तेषामुद्दालकप्रायश्चित्तम् ॥ ६ ॥**

उद्दालकप्रायश्चित्तमिति । उद्दालकेन महर्षिणा दृष्टं व्रतम् । यद्वा उद्दालकेनाऽचरितम् ।

**द्वौ मासौ यावकेन, मासं क्षीरेण, आमिक्षयाऽर्धमासम्, अष्टरात्रं घृतेन, अयाचितेन षड्रात्रं, त्रिरात्रमुदकेन, उपवासमहोरात्रं वर्तेत इत्येतदुद्दालकम् । अनेन वा अश्वमेधावभृथस्नानेन वा व्रात्यस्तोमेन वेष्ट्वा पुनः गर्भाधानादिसंस्कारान् करोति । शुद्धा उपनेयाः सावित्री-पतिता भवन्तीति विज्ञायते ॥ ७ ॥**

उद्दालकप्रायश्चित्ताचरणप्रकारमाह द्वौ मासावित्यादिना । अत्रोक्तो मासश्चान्द्रः । यथा

'श्रौतस्मार्तानि कर्माणि मासोक्तानि व्रतानि च ।
तिलदानादिदानानि चान्द्रमासे वदन्ति हि' ॥ इति स्मृतिः

**यावकं** यवान्नम् ।

'योऽश्नीयाद्यावकं नित्यं गोमूत्रैस्सशकृद्द्रवैः ।
सदधि क्षीरसर्पिर्भ्यां मुच्यते सोंऽहसः क्षणात् ॥

**बोधायनः**—"अथ कर्मभिरात्मकृतैः गुरुमिवात्मानं मन्येत आत्मार्थे प्रसृतं यावकं श्रपयेत् । उदितेषु नक्षत्रेषु न ततोऽग्नौ जुहुयात् । न चात्र बलिकर्म । अश्रृतं श्रप्यमाणं श्रृतञ्चाभिमन्त्रयेत ।

'यवोऽसि धान्यराजो वा वारुणो मधुसंयुतः ।
निर्णोदस्सर्वपापानां पवित्रमृषिभिस्स्मृतम् ॥

घृतं यवा मधु यवा आपो यवा अमृतं यवाः ।
सर्वं पुनथ मे पापं यन्मया दुष्कृतं कृतम् ॥

वाचा कृतं कायकृतं मनसा दुर्विचिन्तितम् ।
अलक्ष्मीं कालरात्रिञ्च सर्वं पुनथ मे यवाः ॥

श्वसूकरावधूतं यत् काकोच्छिष्टहतञ्च यत् ।
मातापित्रोरशुश्रूषां सर्वं पुनथ मे यवाः ॥

महापातकसंयुक्तं दारुणं राजकिल्बिषम् ।
बालवृत्तमधर्मञ्च सर्वं पुनथ मे यवाः ॥

सुवर्णस्तैन्यमव्रत्यमयाज्यस्य च याजनम् ।
ब्राह्मणानां परीवादः सर्वं पुनथ मे यवाः ॥

गणान्नं गणिकान्नञ्च शूद्रान्नं श्राद्धसूतकम् ।
चोरस्यान्नं नवश्राद्धं सर्वं पुनथ मे यवाः ॥

इति श्रप्यमाणे रक्षां कुर्यात् । 'नमो रुद्राय भूताधिपतये—द्यौश्शान्ता—कृणुष्व-पाजः' इत्यनुवाकैः 'ये देवाः पुरस्सदो—अग्निनेत्रा—रक्षोहण' इति पञ्चभिः पर्यायैः 'मानस्तोके—'ब्रह्मा देवाना' मिति द्वाभ्यां शृतञ्च लध्वश्नीयात् । प्रयतः पात्रे निषिच्य 'ये देवा मनोजातास्तेभ्यस्स्वाहे'ति आत्मनि जुहुयात् त्रिरात्रम् । मेधार्थी षड्रात्रं पीत्वा पापकृत् शुद्धो भवति । सप्तरात्रं पीत्वा भ्रूणहननं गुरुतल्पगमनं सुवर्णस्तैन्यंसुरापानमिति च पुनाति । एकादशवारं पीत्वा पूर्वपुरुषकृतमपि पापं निर्णुदति । अपिवा गोनिष्क्रान्तानां यवानामेकविंशतिरात्रं पीत्वा गणान् पश्यति गणाधिपतिं पश्यति विद्यां पश्यति विद्याधिपतिं पश्यतीत्याह भगवान् बोधायनः" । इति । **मासं क्षीरेण** चतुर्थकाले इति भावः । 'चतुर्थ-कालपानभक्तस्स्या'दिति श्रुतिः **आमिक्षयाऽर्धमासं** आमिक्षा क्षीरस्याम्लादिना संयोगकृतविकारान्तारपत्तिः । **घृतेनाष्टरात्रं** । **छन्दोगब्राह्मणे** । घृतव्रतो भवति । देवव्रतं वै घृतव्रतम् । देवव्रतनैव व्रतानप्येति' इति देवव्रतत्वात् घृतव्रतमुक्तम् । **अयाचितेन षड्रात्रं**

'भिक्षाशनसमुद्योगात् प्राक्केणापि निमन्त्रितः ।
अयाचितं हि तद्भैक्षं भोक्तव्यं मनुरब्रवीत्' ॥ इति

अयाचिते कालनियमोऽपि नास्तीति स्मर्यते । यथा —

'भोज्यद्रव्यं परेभ्यश्च यत्प्रयत्नेन दीयते ।
अयाचितन्तु तत्प्रोक्तं न कालनियमः स्मृतः' ॥ इति

**त्रिरात्रमुदकेन** । 'अपोऽश्नात्यन्तरत एव मेध्यो भवतीति' श्रुतिः। **उपवासमहोरात्रं** । अनशनमुपवासः । यद्वा

'विष्णोः कर्माणि यो विप्रः कीर्तयेच्छृणुयादपि ।
वासं यत्सगुणैरेव समीपे परमात्मनः ।
सोपवास इति प्रोक्तो ब्रह्मणा परमेष्ठिना' ॥ इत्युक्तः

**एतदुद्दालकम्** । **वा**शब्दो विकल्पार्थः । अश्वमेधस्य युगान्तरविषयत्वात् **व्रात्यस्तोमेन** वेत्युक्तम् ।

ननु—व्रात्यस्तोमो नाम क्रतुविशेषः अनुपनीतस्य कथमुपपद्यते इति चेत्—सत्यम् । व्रात्यस्तोमो द्विविधः । व्रतभ्रष्टानामाहिताग्न्यादीनां क्रतुरूपो व्रात्यस्तोमः एकः । सावित्रीपतितानान्तु व्रात्यस्तोमः सूत्रे प्रतिपादितोऽन्यः । तद्यथा—'तस्य पिता चान्द्रायणं पुत्रः प्राजापत्यं चरित्वा तस्य जातकाग्निमाधायाऽघारं हुत्वा मिन्दाहुतिपूर्णाहुती ब्राह्मं वैष्णवञ्चाष्टशतमावर्त्य हुत्वा पूर्ववदुपनयनं कुर्या' दिति । क्रतुसाम्यमस्तीति ज्ञापनार्थमिष्ट्वेत्युक्तम् । **पुनः** पश्चात् । **गर्भाधानादिसंस्कारान्** जुहोति इति भावः ।

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ द्वितीयप्रश्ने तृतीयः खण्डः
समाप्तः ।



## अथ चतुर्थः खण्डः

—⁂×⁂—

**ब्राह्मणस्य पालाशो बैल्वो वा केशान्तो निर्व्रणोऽनुन्मृष्टोऽनुद्वेजनो यूपवदवक्रो दण्डः कृष्णमृगस्याजिनं मौञ्जी मेखला ॥ १ ॥**

ब्रह्मवर्चसार्थं पालाशबैल्वौ। वाशब्दो विकल्पार्थः। 'यजमानसम्मितौदुम्बरी भवति। यावानेव यजमानस्तावतीमेवास्मिन्नूर्जं दधा' तीति श्रुतेः **केशान्त** इत्युक्तम्। **निर्व्रणः**—व्रणरहितः। **अनुन्मृष्टः** शस्त्रादिक्षतिरहितः। **अनुद्वेजनः** कम्परहितः अभयङ्करः। **अवक्रः** वक्ररहितः। 'गोपुच्छवदानुपूर्व्येणाग्रतोऽणीयांस' मिति श्रौतोक्तयूपलक्षणयुक्। व्रणरहितः। 'बहुपर्णं बहुशाख' मित्यादि तु न भवति। कृष्णमृगस्याजिनं **कृष्णाजिनम्**। 'ब्रह्मण एतद्रूपं यत्कृष्णाजिन' मित्यादि **श्रुतिः**।

**क्षत्रियस्य नैयग्रोधो ललाटान्तो दण्डो रौरवमजिनं मौर्वी मेखला॥**

**क्षत्रियस्य**। 'क्षतत्राणं करोति यः। चातुर्वर्ण्यबहिष्ठोपि स एव क्षत्रियः स्मृतः' इति महाभारतवचनात् अन्यस्य न भवति। 'रूढिर्योगमपहन्ती' ति न्यायात्। अतो बाहुजस्यैवोपनयनं युक्तम्। **ललाटान्तः**—पूर्वोक्तोपपत्तिः। **मौर्वी** धनुर्ज्या—मेखला।

**वैश्यस्यौदुम्बरो नासिकान्तो दण्डो बास्त (व) मजिनं शाणी मेखला ॥ ३ ॥**

**ओदुम्बरः** दण्डः। 'ऊर्जो वा एषोऽन्नाद्यो वनस्पतिरजायत। 'ऊर्क् पशवः' इति **श्रुतिः**। **बास्तमजिनं** 'पुष्ट्यै वा एतद्रूपं यदजा' इति **श्रुतिः**। **शाणी** शणतन्तुर्मेखला।

**मनुः**—

'ब्राह्मणो बैल्वपालाशौ क्षत्रियो वटखादिरौ।
बादरोदुम्बरौ वैश्यः दण्डानर्हन्ति धर्मतः॥
केशान्तिको ब्राह्मणस्य दण्डः कार्यो विधानतः।
ललाटसम्मितो राज्ञस्स्यात्तु नासान्तिको विशः॥

ऋजवस्ते तु सर्वे स्युरव्रणास्सौम्यदर्शनाः ।
अनुद्वेगकरा नृणां सत्वचोऽनग्निदूषिताः ॥
कार्ष्णरौरवबास्तानि चर्माणि ब्रह्मचारिणः ।
वसीरन्नानुपूर्व्येण शाणक्षौमाविकानि च ॥
मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्या विप्रस्य मेखला ।
क्षत्रियस्य तु मौर्वी ज्या वैश्यस्य शणतान्तवी ॥
मुञ्जालाभे तु कर्तव्या कुशाश्मन्तकबल्वजैः ।
त्रिवृता ग्रन्थिनैकेन त्रिभिः पञ्चभिरेव वा ॥ इति ।

'ओं भूर्भुवस्सुवस्तत्सवितु' रिति सावित्री 'ओं भूर्भुवस्सुवस्तत्सवितुरापो ज्योतीरसः' इति प्राणायामः 'ओं भूर्भुवस्सुवस्स्वाहा' इति व्याहृतिः 'अग्नये समिध' मिति, द्वे 'अग्नये समिधाविति, चत्वारि 'अग्नये समिधः' इति समिदाधानम्, एतानि ब्राह्मणस्य ॥ ४ ॥

'ओं भूर्भुवस्तत्सवितु' रिति सावित्री – ओं भूर्भुवस्तत्सवितुः तेजो ज्योती रसः' इति प्राणायामः – ओं भूर्भुवस्स्वाहा' इति व्याहृतिः – 'अग्नये समिध' मिति – द्वे 'अग्नये समिधा' विति समिदाधानम्, इति क्षत्रियस्य ॥ ५ ॥

'ओं भूस्तत्सवितुरिति' सावित्री – 'ओं भूवस्तत्सवितुः अग्निर्ज्योती रसः' इति प्राणायामः – 'ओं भूस्स्वाहा' इति व्याहृतिः – 'अग्नये समिध' मिति समिदाधानम्, एतानि वैश्यस्य भवन्ति ॥ ६ ॥

सावित्रीं प्राणायामं व्याहृतिं समिदाधानञ्च ब्राह्मणादीनां उच्चावचमुपपादयति – ओं भूर्भुवस्सुव' रित्यादिना ॥

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ द्वितीयप्रश्ने चतुर्थः खण्डः समाप्तः ।

---

## अथ पञ्चमः खण्डः



**प्रोष्ठपदहस्तावश्विन्यनूराधे उत्तरपुनर्वसू मृगशिरो वा यावन्ति पुन्नामानि नक्षत्राणि ॥ १ ॥**

एवं नैमित्तिकसमिदाधानपर्यन्त(?)मुक्त्वा उपनयनयोग्यानि नक्षत्राण्युपपादयति **प्रोष्ठपदे**त्यादिना । प्रोष्ठपदः उत्तरप्रोष्ठपात् । **उत्तरः**—उत्तरफल्गुनी । **वा** शब्दो विकल्पार्थः । यद्वा समुच्चयार्थः । तेन लग्नादयो लक्ष्यन्ते । **पुन्नामानी**त्यादि ।

**बृहस्पतिः**— 'सार्पं चतुष्कं रौद्रञ्च याम्यं त्वाष्ट्रत्रिकं जलम् ।
वैश्वेन्द्रौ वासवं पौष्णं स्त्रीलिंगास्समुदाहृताः ॥
सौम्यवारुणमूलानि नपुंसकदिनानि तु ।
शेषाः पुंलिंगतां याताः तारास्सर्वाः शचीपते ॥ इति

**वटुके**— 'हस्तादित्यश्रवणमभिजित्तिष्यमैत्राश्विनीकं
पुन्नामे(?)तन्नवकमथ च प्रोष्ठपादञ्च .... ।
मूलं सौम्यं शतभिषगिति त्रीणि नापुंसकानि
शेषास्तारास्त्विह निगदिता योषितो ज्यौतिषज्ञैः ॥

इति नक्षत्राणां पुंस्त्वादिसंज्ञा उक्ता । ग्राह्यनक्षत्रोक्तौ त्याज्यनक्षत्रस्वरूपमपि ज्ञेयम् । किञ्च—

**ज्यौतिषे**— 'उपनीतौ त्यजेन्मूलत्रिकं श्रोणादिमध्यमम् ॥ इति
'कर्णवेधे पुंसवने नामविद्योपनीतिषु ।
अष्टमस्था ग्रहा नेष्टा नान्दीश्राद्धे व्ययायगाः ॥ इति

**अन्यत्र**— 'कर्णवेधे पुंसवने विद्यायामुपनायने ।
नाम्नि राजाभिषेके च देवग्रामप्रतिष्ठयोः ॥
अष्टमस्था ग्रहा नेष्टा गृहारम्भप्रवेशयोः ॥ इति

'शुद्धे लग्ने निषेकः स्याद्द्वितीये धनसंग्रहः ।
तृतीये मित्रसंबन्धः चतुर्थे शत्रुदर्शनम् ॥
प्रयाणं पञ्चमे चैव षष्ठे छेदनभेषजे ।
सप्तमे तु विवाहः स्यान्नामादिस्थापनाष्टमे ॥
नवमे जननं शस्तं दशमे चान्नभोजनम् ।
शुद्धे चैकादशे श्राद्धं द्वादशे वास्तुनामिनी ॥ इति

लग्नशुद्धियुक्ते शुभग्रहदृष्टियुक्ते चोपनयनं युक्तम् । तथाहि ।

बृहस्पतिः — 'मृगकुंभगते भानौ मध्यमं मीनमेषयोः ।
उत्तमं गोयमस्थेऽर्के ह्यधमन्तूपनायनम् ॥ इति

किञ्च । 'वर्जनीयाः प्रयत्नेन विपत्प्रत्यरनैधनाः ।' इति वचनस्य प्रति प्रसव उच्यते ।

'विवाहे प्रत्यरः श्रेष्ठो मौञ्जी विपदि शोभना ॥ इति

वसिष्ठः — 'सप्तपञ्चमचन्द्राष्टसप्तविंशतिभेषु च ।
वैनाशिके त्रिजन्मर्क्षे नेष्टं भेषूपनायनम् ॥' इति

अत्र च प्रतिप्रसवः ।

'पट्टबन्धनचौलान्नप्राशने चोपनायने ।
शुभदं जन्मनक्षत्रमशुभन्त्वन्यकर्मणि ॥' इति

'सप्तविंशतिनक्षत्रमेकराशिसमन्वितम् ।
सर्वेषु शुभदं प्रोक्तं विवाहोपनयादिषु ॥
भूषणं तुरगारोहं लवनं धान्यसंग्रहः ॥' इति

संग्रहे — 'देवप्रतिष्ठा भैषज्यं नवान्नं बालभोजनम् ।
सीमन्तं विष्णुपूजा च प्रवेशः कृषिकर्म च ।
बीजावापं व्रतं स्नानमन्त्यर्क्षे कारयेद्बुधः ॥' इति

ताराषु व्यवस्थामाह ।

'विपदि प्रथमः पादः प्रत्यरे तु चतुर्थकम् ।
वधाख्ये तु तृतीयांशो वर्ज्याः शेषास्शुभावहाः' ॥

'शुभकर्मरतश्चन्द्रो बलवान् शुभवीक्षितः ।
विपत्प्रत्यरनैधर्क्षतिजन्मर्क्षोत्थदोषहा' ॥

वैनाशिकांशं नक्षत्रेत्वष्टाशीत्यंशकं विना ।
शिष्टांशास्शुभदास्सर्वे जन्मनीन्दुगतांशके ॥

जन्मकर्मर्क्षपत्योस्तु मैत्रस्थे नातिदोषदः ।
जन्माष्टमेशयोर्मैत्रेऽप्यष्टमस्थश्शशी तथा' ॥ इति

अत्रिः— 'रिक्ताष्टम्यौ प्रतिपदौ पौर्णमासी च निन्दिताः ।
कृष्णेऽन्त्याः पञ्च तिथयो ह्यत्रान्यास्तिथयश्शुभाः ॥

'सिते चतुर्दशी शस्ता कुमारे वयसाऽधिके ।
कृष्णे च प्रथमा पूज्या कदाचिच्छुभगे तिथौ' ॥

बृहस्पतिः— 'पापग्रहाणां वारास्स्युर्न शुभाश्चन्द्रवारकः ।
सिते पक्षे प्रशस्तं स्यात् कृष्णे वर्ज्यं विधोर्दिनम् ॥

बुधवारः शुभः प्रोक्तो बुधेऽनस्तमिते सदा ।
पापैस्सार्धं न याते च समीपे च द्रयोर्गतः' ॥ इति

वसिष्ठः— 'सूर्यांशे संस्थितश्चन्द्रः कुरुते शस्त्रजीविकाम् ।
स्वांशकस्थो निशानाथो जातिभ्रंशं करिष्यति' ॥

अत्रिः— 'स्वांशस्थो दोषदः कृष्णे चन्द्रस्स्वोच्चस्थिते शुभः' ॥ इति

बृहस्पतिः— 'भौमांशकगते चन्द्रे वटुर्भवति पातकी ।
मातृहीनो वनं गच्छेत् शत्रुभिर्मरणं व्रजेत् ॥

द्रव्यविद्यान्वितं चन्द्रः कुर्याद्गुर्वंशके स्थितः ।
चन्द्रश्शुक्रांशकगतो विद्यायुक्तं करिष्यति ।
मन्दांशकाश्रितश्चन्द्रः करोति निधनं तनोः' ॥ इति

वसिष्ठः — 'मेषे भवति वाक्शुद्धिः वित्तविद्यान्वितो वृषे ।
मिथुने वेदसंदंशी कर्क्यां नित्यं षडङ्गवित् ॥

शिल्पकर्मरतस्सिंहे षष्ठे भवति पंडितः ।
तुलायान्तु वणिग्वृत्तिः काण्डपृष्ठस्तु वृश्चिके ॥

सर्वैस्संपूज्यते चापे शूद्रवृत्तिर्मृगे तथा ।
राजन्यप्रेष्यकः कुंभे मीने शास्त्रार्थपारगः' ॥ इति

बृहस्पतिः — 'उपनीतौ रविर्लग्ने हन्यते नृपते रुषा ।
चन्द्रदृष्टग्रहे लग्ने बहुरोगी भवेद्द्विजः ॥

अर्कात्मजोदये दोषैरभिशस्तोऽतिपातकैः ।
भूमिसूनूदये सद्यो मृत्युस्स्याच्च ततो वृथा ॥

बुधोदये महाप्राज्ञः समसंपदि चोच्छ्रितः ।
जीवोदये तु यज्वा स्यात् दीर्घायुर्धनवान्महान् ॥

सितोदये महाप्राज्ञो वित्तवानायुषा गुणी ।
राहूदये स्याद्धीनांगो महाकुलविनाशनः ।
केतूदये तु कुष्ठी स्यात् राशेः ग्रहवशात् फलम्' ॥ इति

राहुकेतूदयस्य क्वचिदपवादो दृश्यते । यथा ।

'चौलोपनयसीमन्तविवाहादिषु कर्मसु ।
लग्ने जामित्रके चापि राहुः केतुर्न दोषभाक् ॥

'विवाहेषु च देवानां प्रतिष्ठासूपनायने ।
छायाग्रहौ तु विज्ञेयौ राहुकेतू न दोषदौ ॥

पापग्रहेक्षिते लग्ने जीवितार्थी न कारयेत् ।
चन्द्रश्च पापदृष्टश्चेन्मूढत्वं संप्रयच्छति' ॥ इति

'अर्कोऽर्थबन्धुस्त्रीपुण्ये पुत्रार्थव्ययगः कुजः ।
षष्ठे सितज्ञौ रविजः त्रिबन्ध्वाज्ञार्थपुण्यगः ।
पुत्राज्ञाव्ययगौ पातो वर्ज्यास्स्युरुपनायने' ॥ इति

वसिष्ठः — 'विशोषान्नैधनस्थाने ग्रहान्नेच्छन्ति सर्वदा ।
आचार्यन्तु शुभा घ्नन्ति घ्नन्ति शिष्यं शुभेतराः' ॥ इति

दोषपञ्चकम् । (पञ्चार्कदोषः)

'कूजितं हन्ति तद्वंशं स्फूर्जितं मातृनाशनम् ।
द्रव्यनाशं रन्ध्रदोषः समग्रं हन्ति बालकम् ॥

रुदितं पितरं हन्यात् व्रतबन्धनकर्मणि ।
स्फूर्जितं चन्द्रकेन्द्रं स्यात भौमकेन्द्रन्तु कूजितम् ॥

शनिकेन्द्रं भवेद्रन्ध्रं समग्रं राहुकेन्द्रकम् ।
रुदितं केतुकेन्द्रं स्यान्नामतः पञ्च कल्पितम् ॥

अत्रापवादः — 'अनिष्टस्थानगोऽप्यत्र ग्रहः कोऽपि न दोषकृत् ।
शुभदृष्टिगतः प्रायः सौम्यवर्गस्थितो यदि ॥

अन्यच्च — 'विद्यां प्राप्तां विनाशयेते मन्दभौमौ द्वितीयगौ ।
अन्योन्यमथवा दृष्ट्वा द्वादशस्थौ तु बन्धकौ ॥

* * * * * ।
दिवा स्यान्नवदेशातिवीजातापनसंस्क्रियाः ॥

वर्ज्यकालानाह बृहस्पतिः —

'ऋतुमासोडुतिथ्यन्ते षडशीतिमुखे तथा ।
विषुवादिषु विष्ट्याञ्च व्यतीपातेऽग्निधूमतः ॥

वेधितर्क्षे ग्रहेणापि पीडिते मासि शून्यके ।
ग्रहरश्मियुते (?) चैव पञ्चाविष्टग्रहस्थिते ॥

कालकर्णीति विख्याते कलौ च बहुदोषदाः ।
महादोषे विशेषेण शूले कण्टकभे तथा ॥

महाशूले महाख्ये च कण्टकेऽथ विशेषतः ।
महाकण्टकसंज्ञे च रक्तस्थूणगते तथा ॥

एवमादिभिरन्यैश्च प्रोक्तदोषसमन्विते ।
काले नैवोपनेयस्स्यात् शिशुरस्मिन् कृते शिशोः ।
आयुरारोग्यनाशाय लक्ष्मीनाशाय तद्भवेत्' ॥

**माधवीये** — 'नष्टचन्द्रेऽष्टमे चैके निरंशे चैव भास्करे ।
कर्तव्यं नोपनयनं नानध्याये गलग्रहे ॥

राशिप्रथमभागस्थो निरंशस्सूर्य उच्यते ।
चतुर्थीसप्तनवमीत्रयोदश्योर्गलग्रहः' ॥ इति

**वसिष्ठः** — 'द्वादशस्थो रविर्भौमः पश्यन्नाचार्यमन्धयेत्' ॥ इति

**बृहस्पतिः** — 'अर्के लग्नाद्व्ययर्क्षस्थं यदि भौमो हि पश्यति ।
बलवानचिरादन्धो गुरुस्स्यात् दुर्बलश्चिरात् ॥

व्ययस्थं रविमर्की वा सुदृष्टो यदि पश्यति ।
शिष्यं विद्यां हरेत्प्राणं विबलो रोगदः शिशोः' ॥

'रौद्रस्सार्पस्तथा मैत्रः पैत्रो वासव एव च ।
देवा विश्वेऽथवा ब्रह्मप्रजेशैन्द्राग्नयोऽपि वा ॥

ऐन्द्रश्च नैरृतश्चैव वारुणार्यमसंज्ञकाः ।
भाग्योऽग्निः क्रमशो ज्ञेयाः मुहूर्ता दश पञ्च च ॥

शङ्करश्चाजपादश्च तथाऽहिर्बुध्नमैत्रकौ ।
आश्विनौ याम्यवाह्नेयौ वैधात्रश्चान्द्र एव च ॥

आतिथेयोऽथ जैवश्च वैष्णवस्सौर एव च ।
ब्राह्मो नाभस्वतश्चैव मुहूर्ताः क्रमशो निशि' ॥ इति

'वर्षान्ते वर्जयेत्नक्षं ग्रहणात्सप्तसप्तकम् ।
सौराब्दान्ते त्यजेत्पक्षं चान्द्रे तु नवमं त्यजेत् ॥

सावनान्तेऽष्टभं त्याज्यमृक्षान्ते पौष्णभं त्र्यहम् ।
ऋक्षान्ते पुत्रनाशस्स्यात् मासान्ते तु धनक्षयम् ।
वर्षान्ते वंशनाशस्स्यात् ग्रहणात्सर्वनाशनम् ॥

फाल्गुने चैत्रमासे च उद्वाहे चोपनयायने ।
भेदमब्दस्य कुर्वीत नर्तुत्रयविलम्बनम् ॥

अन्नप्राशनमुद्वाहः चौलकर्मोपनायनम् ।
जन्ममासे तु वर्ज्यं स्यात् कलिंगे मगधे तथा ॥

गौतमः— 'गृहप्रवेशनं चौलमन्नप्राशनमौञ्जिके ।
जन्ममासे तु वर्ज्यं स्यात् नर्मदातीर उत्तरे ॥

भृगुः— 'जन्ममासे तथा जन्मदिने जन्मत्रयेऽपि वा ।
हूणे वंगे त्यजेत्सर्वमन्यदेशे शुभावहम् ॥

शौनकः— 'नर्मदादक्षिणे भागे विवाहादिषु मङ्गलम् ।
जन्ममासे शुभं प्रोक्तं बहूनां सम्मतं त्विदम् ॥

जन्मत्रयं विवर्ज्यं स्यान्मासानां शुभकर्मणि ।
नर्मदोत्तरभागेषु दशार्णेषु त्रयं विना ? ॥

वसिष्ठः— 'उद्वाहं मेखलाबन्धं जन्ममासे विवर्जयेत् ।
विशेषाज्जन्मपक्षन्तु वसिष्ठाद्यैरुदाहृतम् ॥

बृहस्पतिः— 'यात्रायां कर्मभं श्रेष्ठमुपनीतौ विपच्छुभम् ।
प्रत्यरश्च प्रतिष्ठायां शुभमुद्वाहकेऽन्त्यभम् ॥

यात्रारोपणभैषज्यविद्यारंभार्भकाशनम् ।
आधानर्क्षे सदा कुर्यात् कर्मभेऽथ विपद्यपि ॥

दशसप्ताष्टसंख्यास्तु त्रिजन्मन्यशुभावहाः ।
शेषाश्शुभावहाः प्रोक्तास्सदा शोभनकर्मसु ॥ इति

किञ्च — 'या चैत्रवैशाखसिता तृतीया माघेऽर्कसप्तम्यपि फाल्गुनस्य ।
कृष्णद्वितीयोपनये प्रशस्ताः प्रोक्ताः भरद्वाजमुनीन्द्रमुख्यैः ॥

'माघे शुक्ले सप्तमी द्वादशी च फाल्गुन्यां वै कृष्णपक्षे तृतीया ।
वैशाखे वै शुक्लपक्षे तृतीया नानध्याया मौञ्जिबन्धे प्रशस्ताः ॥

इत्यादीनि वचनानि व्यवस्थासापेक्षानि । ग्रन्थविस्तरभियात्र न प्रपञ्च्यते । अरिष्टसामान्यपरिहारप्रकाराश्च उच्यन्ते । यथा —

'शुभः केन्द्रत्रिकोणस्थः त्रिषडायगतोऽपरः ।
तद्योगो बलवानेकोऽप्यदृश्यांशादिदोषहा ॥

आत्तोपग्रहचण्डीशचन्द्रजामित्रसंभवान् ।
तान् केन्द्रगो गुरुर्हन्ति सुपर्णः पन्नगानिव ॥

चन्द्रदोषा लग्नदोषाः पापग्रहकृताश्च ये ।
ते सर्वे नाशमायान्ति केन्द्रसंस्थे शुभग्रहे ॥

एकोऽपि मित्रराशिस्थः शुभो वा यदि लग्नगः ।
हन्ति दोषान् हरिदिने चोपवासव्रतं यथा ॥

गुरुस्सर्वगुणोपेतो लग्नकेन्द्रत्रिकोणगः ।
दोषाणां लक्षकं हन्यात् लग्नस्थस्सर्वदोषहा ॥

तथा :— 'ज्ञो द्यूनमुत्सृज्य सहस्रदोषान् निहन्ति केन्द्रोपगतो बलीयान् ।
दोषायुतं दानवराजमन्त्री गीर्वाणमन्त्री खलु लक्षदोषान् ॥

गुरुः स्थितो वा लग्नस्थः प्रबलस्सर्वदोषहा ।
राहुदोषं बुधो हन्यात् उभयोस्तु शनैश्चरः ॥

त्रयं भूमिसुतो हन्ति चतुरस्तु भृगोस्सुतः ।
पञ्चदोषान् देवमन्त्री षण्णां दोषांस्तु चन्द्रमाः ॥

सप्तदोषान् रविर्हन्यात् विशेषादुत्तरायणे ।
दिवा सूर्ये निशा चन्द्रे लग्नस्यैकादशे स्थिते ॥
कोटिदोषा विनश्यन्ति गर्गस्य वचनं यथा ।
न तिथिर्न च नक्षत्रं न ग्रहो न च चन्द्रमाः ।
सर्वमेव शुभं कार्यं रवावेकादशे स्थिते ॥
'रविर्नृपविलोकने सुरगुरुर्विवाहोत्सवे
रणे धरणिनन्दनो भृगुसुतः प्रयाणे बली ।
शनिश्च खल्दक्षणे (?) निखिलशास्त्रबोधे बुधः
शशी सकलकर्मणां सुहृदुदाहृतस्सूरिभिः ॥ इत्यादि ।

तत्राग्नेर्वायव्यामुपवीताजिनमेखलाहतवस्त्रदण्डशरावाश्मसमिद्-र्भादिसंभारान् दर्भेषु संभृत्य 'सश्च त्वे जग्मु' रिति प्रोक्षयति ॥ २ ॥

तत्रेति । उक्तगुणविशिष्टे पुन्नाम्नि नक्षत्रे – यद्वा अग्नेर्वायव्याम् । द्वितीयजन्मत्वादुपनयनस्य प्राणाधीनं जन्मेति वायव्यामित्युक्तम् । तत्साधनभूता उपवीतादिसंभारा उच्यन्ते उपवीतेत्यादिना । उपवीतलक्षणं मन्वादिभिरुक्तम्–

मनुः — कार्पासमुपवीतं स्यात् विप्रस्योर्द्ध्वं त्रिवृत्कृतम् ।
शाणीसूत्रमयं राज्ञः वैश्यस्याविकसूत्रकम् ॥

देवलः — कार्पासक्षौमगोवालशणवल्कतृणादिकम् ।
सदा सम्भवता कार्यं उपवीतं द्विजातिभिः ॥
'यज्ञोपवीतं कुर्वीत सूत्रेण नवतन्तुकम् ॥' इति

श्रुतिरपि — 'नव वै त्रिवृत्' इति ।

कात्यायनश्च — 'त्रिवृदूर्ध्वं वृतं कार्यं तन्तुत्रयमधोवृतम् ॥' इति

बृहस्पतिः — 'कार्पासकं सदा दद्याच्छुचिक्षेत्रविशोधितम् ।
जीवभर्तृकया नार्या ब्राह्मण्या सूत्रकं कृतम् ॥' इति

चन्द्रिकायाम् — 'ग्रामान्निष्क्रम्य संख्याय षण्णवत्यंगुलीषु तत् ।
तावत्त्रिगुणितं सूत्रं प्रक्षाल्याब्लिंगकैः त्रिभिः ॥
देवागारेऽथवा गोष्ठे नद्यां वाऽप्यथ वा शुचौ ।
सावित्र्या त्रिवृतं कुर्यान्नवसूत्रन्तु तद्भवेत् ॥
ओंकारः प्रथमस्तन्तुः द्वितीयोऽग्निस्तथैव च ।
तृतीयो भगदेवत्यश्चतुर्थस्सोमदेवतः ॥
पञ्चमः पितृदेवत्यः षष्ठश्चैव प्रजापतिः ।
सप्तमो वसुदेवत्यो धर्मश्चाष्टम एव च ।
नवमस्सर्वदेवत्य इत्येते नव कीर्तिताः ॥' इति

पितामहः — 'य एतन्न विजानाति यज्ञसूत्रसमुद्भवम् ।
वेदोक्तं निष्फलं तस्य स्नानदानजपादिकम् ॥
'ब्राह्मणो यो न जानाति उपवीतस्य संस्थितिम् ।
मोहात्मा वहते भारं पशुर्गौरिव सर्वदा' ॥ इति

उपनिषदि — 'यज्ञाख्यः परमात्मा य उच्यते चतुर्होतृभिः ।
उपवीतं ततो ह्यस्य तस्माद्यज्ञोपवीतक' मिति ॥

वसिष्ठः — 'नाभेरूर्ध्वमनायुष्यमधोनाभि तपःक्षयः ।
तस्मान्नाभिसमं कुर्यादुपवीतं विचक्षणः ॥ इति

देवलः — 'त्रिवृतञ्चोपवीतं स्यात्तस्यैको ग्रन्थिरिष्यते ।
पृष्ठवंशे च नाभ्याञ्च धृतं यद्विन्दते कलौ ॥
तस्येदमुपवीतं स्यान्नातिलम्बं न चोच्छ्रितम् ।
स्तनादूर्ध्वमधो नाभेः न कर्तव्यं कदाचन' ॥ इति

**अजिनमेखले – प्रसिद्धे । अहतवस्त्रम् —**

पुलस्त्यः — 'ईषद्धौतं नवं श्वेतं सदशं यन्न धारितम् ।
अहतं तद्विजानीयात् सर्वकर्मसु पावन' मिति ।

दण्डः—पलाशदण्डः। शरावाश्मसमिद्दर्भादीति – दर्भाः —

'विवाहे पुरुषाः दर्भाः, स्त्रीदर्भाः पुंसवेषु संभार्याः। आदिशब्देन फलपुष्पचन्दनतांबूलाक्षतादि। दर्भेषु संभृत्येत्यादि। वीर्यवत्त्वसंपादनाय।

**अथाऽऽज्येनाघारं हुत्वा आचान्तं मंगलयुक्तं कुमारं अग्नेर्नैर्ऋत्यां आसयित्वा मस्तके दर्भौ प्रागुत्तराग्रौ विन्यस्य मरोनाणं दर्भं 'इन्द्र-शस्त्र' मिति चतुर्भिः प्रदक्षिणं चतुर्दिशं छित्वा 'येनावपत् यत् क्षुरे' णेति सर्वशो वपति। नाधो जत्रोः ॥ ३ ॥**

अथ – अनन्तरम्। आघारम् – कृत्स्नमाघारान्तम्। समानतन्त्रे तु आघारमात्रम्। आचमनममन्त्रकम्। मंगलयुक्तं वस्त्राभरणादियुक्तम्। मन्त्रैः छेदः आयुष्याभिवृद्ध्यर्थम्। 'मास्यायुः प्रमोषी' रिति मन्त्रलिंगात्। तथा मेध्यत्वाय च। श्रुतिः। 'केशश्मश्रु वपते। नखानि निकृन्तते। मृता वा एषा त्वगमेध्या। यत्केशश्मश्रु। मृतामेव त्वचममेध्यामपहत्य यज्ञियो भूत्वा मेधमुपैति' इति। 'नाधो जत्रो' रिति सर्वांगनिषेधः।

**गोशकृद्युक्ते शरावे केशान् गृह्णीयात् ॥ ४ ॥**

आनुशासनिके गोशकृतः लक्ष्मीनिवासत्वेनोक्तत्वात् तद्युक्तशराव ग्रहणम्।

**यत्र मौण्ड्यं शिखाभ्रूवर्जमानखं वपति ॥ ५ ॥**

यत्र कर्मणि प्रायश्चित्तादौ वा मौण्ड्यं विधीयते तत्र आनखम्— नखपर्यन्तम्। कृत्तकेशान् 'उदुंबरदर्भयोर्मूले गोष्ठे वा गूहये' दित्युत्तरत्र वक्ष्यमाणत्वात् तथा निदध्यात्. 'इदमहममु' ष्येत्यादिमन्त्रः॥

**स्नात्वा आचान्तं पुण्याहं वाचयित्वा भुक्तवन्तमासयति दक्षिणे कुमारम् ॥ ६ ॥**

दीक्षाभोजनवत् कुमारभोजनमुच्यते। दक्षिणे आचार्यस्य दक्षिणभागे।

**अथ परिस्तीर्य 'आयुर्दा अग्ने – 'आयुर्दा देव' इति प्रधानं पञ्चवारुणं व्याहृतिपर्यन्तं जुहोति ॥ ७ ॥**

प्रधानहोमत्वात् कर्मान्तरव्यवहितत्वाद्वा परिस्तरणम्। प्रधानम्– उपनयनस्य प्रधानभूतम्।

**'आति' ष्ठेति वायव्यामश्म पादाङ्गुष्ठेन दक्षिणेन स्पर्शयति॥ ८**

ब्रह्मचर्यस्थैर्यार्थमिदमिति मन्त्रलिंगादवगम्यते।

**'या अकृन्त'न्निति वस्त्रं 'इयं दुरुक्ता'दिति मेखलां 'परीद' मित्युत्तरीयं 'यज्ञोपवीत'मित्युपवीतं 'मित्रस्य चक्षु'रिति कृष्णाजिनं तस्मै ददाति॥ ९॥**

वस्त्रमहतं वासः पूर्वोक्तम्। 'अहतं वासः परिधत्ते पाप्मनोऽपहत्या' इति श्रुतिः। नाभेरधस्तादमेध्यमिति तत्परिहाराय मेखला उच्यते। 'ऊर्ध्वं वै पुरुषस्य नाभ्यै मेध्यमवाचीनममेध्यं यन्मध्यतः सन्नह्यति मेध्यञ्चैवामेध्यञ्च व्यावर्तयति' इति। परीदमित्युत्तरीयं दीक्षितस्येवोल्बस्थानीयमुक्तम्। यजुषि– 'उल्बं वासः प्रोर्णुते तस्माद्गर्भाः प्रावृता जायन्ते' इति। ऋग्ब्राह्मणे–'वाससा प्रोर्णुवन्ति। उल्बं वा एतद्यद्दीक्षितस्य। यद्वासः। उल्बेनैवैनं तत्प्रोर्णुवन्ति' इति। उपवीतमिति–'उपवीतं देवानामुपन्ययते। देवलक्ष्ममेव तत्कुरुते' इति श्रुतिः। कृष्णाजिनमिति। ऋग्ब्राह्मणे–'कृष्णाजिनमुत्तरं भवति। उत्तरं वा उल्बाज्जरायु। जरायुणैवैनं तत्प्रोर्णुवन्ति' इति।

ननु–'तस्मै ददाति' इति आचार्यकर्तृकत्वेनोक्तत्वात् मन्त्रोच्चारणमाचार्यकृत्यं, न शिष्यस्येति चेत्–न

'यज्ञोपवीतमन्त्रेण व्याहृत्या वाऽथ धारयेत्।

इति देवलस्मरणात् 'यज्ञोपवीतं प्रतिमुञ्चन् वाचयति' इति बोधायनस्मरणाच्च आचार्यशिष्याभ्यामुभाभ्यामपि मन्त्रोच्चारणं कर्तव्यमिति सिद्धेः॥

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने तात्पर्यचिन्तामणौ द्वितीयप्रश्ने पञ्चमः खण्डः समाप्तः।

---

## अथ षष्ठः खण्डः

—※×※—

**ततो विधिवदाचमनं कारयित्वा सदस्याननुज्ञाप्य 'देवस्य' इति बाहू आलभ्य उत्तरे प्राङ्मुखमुपनयीत ॥ १ ॥**

**विधिवदाचमनं**—समन्त्रकम् । उपनयनयोग्यतासिद्ध्यर्थं सदस्यानुज्ञापनम् । सदस्यविषये —

**बोधायनः** — 'नाचतुर्वेदकल्पी च अंगविद्धर्मपालकः ।
आश्रमस्थास्त्रयो विप्राः पर्षदेषा दशावरा ।
प्रतिवक्ता तु धर्मस्य नेतरे तु सहस्रशः' ॥ इति

**याज्ञवल्क्यः** — 'चत्वारो वेदधर्मज्ञा पर्षत्त्रैविद्यमेव वा ।
सा ब्रूते यं स धर्मस्स्यादेकोऽप्यध्यात्मवित्तमः' ॥ इति

**अन्यत्र** — 'अव्रतानामतन्त्राणां जातिमात्रोपजीविनाम् ।
सहस्रशस्समेतानां परिषत्त्वं न विद्यते' ॥ इति

सदस्यैरनुज्ञातः आचार्यः शिष्यस्योत्तरे प्राङ्मुखस्सन् प्राङ्मुखं शिष्यमुपनयीतेत्यर्थः ।

**'आयुष्टे विश्वत' इति दक्षिणं पाणिं गृहीत्वोद्धरति ॥ २ ॥**

**'अग्निष्टे हस्तमग्रभीत्' इति विसर्जयति ॥ ३ ॥**

एतदुपनयनम् ।

**असौ 'अपोशा' नेत्याचारम् ॥ ५ ॥**

शिक्षयतीति शेषः ।

'उपनीय गुरुः शिष्यं शिक्षयेच्छौचमादितः ।
आचारमग्निकार्यञ्च सन्ध्योपासनमेव च' ॥

इति मनुस्मरणादाचारशिक्षा उच्यते । असाविति नामनिर्देशः संबुद्ध्या । विष्णुशर्मन् इत्यादि । 'बाढ' मिति शिष्यः प्रतिवदति ।

**'मम हृदय' इति तस्य हृदयस्पर्शनं कृत्वा 'भूर्भुवस्सुवः सुप्रजा' इति प्रशंसति ॥ ५ ॥**

**'भूर्ऋक्षु त्वा' इति 'भुवो यजुष्षु त्वा' इति 'सुवस्साम त्वा' इति 'इष्णुतस्ते' इति 'अनलस्यते' इति 'इदं वत्स्याव' इति षड्भिः कर्णे जपित्वा नाम शर्मान्तं कुर्यात् ॥ ६ ॥**

'भूर्ऋक्षु' त्वेति मन्त्रान्ते 'विष्णुशर्म' न्निति संबोधनम्। एवमेव त्रिषु। प्रधानमन्त्रत्वात् कर्णे जपः।

**'अग्निरायुष्मा' नित्यादिकैः पञ्चभिः दक्षिणहस्ते कनिष्ठाद्यङ्गुल्यग्राणि पर्यायेण विसृजेत् ॥ ७ ॥**

अमन्त्रकत्वेन गृहीतदक्षिणहस्तस्य कनिष्ठाद्यंगुष्ठपर्यन्तान्यंगुल्यग्राणि 'अग्निरायुष्मा' नित्यादिभिर्मन्त्रैः पर्यायेणैकैकशो विसृजेत्। 'मुष्टीकरोति'—'मुष्टिं कृत्वा गर्भोऽन्तः शेते' 'मुष्टिं कृत्वा कुमारो जायते। यज्ञं चैव तत्सर्वाश्च देवता मुष्ट्योः कुरुते' इति ऋग्वेदे श्रूयमाणत्वात्। अत्रापि जननसमयत्वात् मुष्टीकरणार्थमिदमुक्तम्। यजुषि—'अग्निरायुष्मानिति हस्तं गृह्णात्येते वै देवा आयुष्मन्तस्त एवास्मिन्नायुर्दधति सर्वमायुरे' तीति।

**'आयुर्दा' इति दक्षिणे कर्णे, 'प्रतिष्ठ वाया' विति वामे च जपति ॥ ८ ॥**

आयुष्याभिवृद्ध्यर्थं दक्षिणे, स्वस्त्यर्थं वामे च—मन्त्रलिंगात्।

**'स्वस्ति दे' वेत्यग्निं प्रदक्षिणं कारयित्वा दक्षिणे निवेश्य 'राष्ट्रभृद' सीति कूर्चं दत्वा 'शन्नो देवी' रिति प्रोक्ष्य मूलहोमं व्याहृतिपर्यन्तं जुहोति ॥ ९ ॥**

सूर्यप्रदक्षिणार्थमग्निप्रदक्षिणम्। यद्वा 'अग्निः सर्वा देवता' इति श्रुतेः सर्वेषां वा। ब्रह्मवर्चसादिधारणार्थं कूर्चधारणम्। यद्वा 'अपां वा एष ओषधीनां रसो यद्दर्भाः सरसमेव ब्रह्म कुरुते' इति श्रुतेः अध्येष्यमाणस्य

विद्यार्थम् । 'व्याहृतिपर्यन्तं जुहोती'ति । व्याहृतिपर्यन्तमित्युक्तत्वात् मूलहोमान्ते व्याहृतिर्नेति केचित् ।

**'अदितिस्ते कक्ष्या' मिति हुतशेषं भोजयित्वा 'योगे योगे तवस्तर' मित्याचमनं ददाति ॥ १० ॥**

मेधाजननार्थं हुतशेषभोजनम् । छन्दोगब्राह्मणे । 'योगे योगे तवस्तरं सौमेय' (?) मिति ।

**'शतमिन्नु शरद' इत्यादित्यं नमस्कृत्य 'आगन्त्रा समगन्महि' इति प्रदक्षिणं कारयित्वा 'शकाय त्वा' इत्युत्तमांगमभिमृश्य 'अधीहि भो' इति शिष्यमनुशास्ति । अथ 'सावित्रीं भो अनुब्रू' हीति तेन प्रार्थितो गुरुः 'गणानां त्वा' इति गणमुख्यं 'ओजोऽसी' ति सावित्रीं 'ओमास' इति गायत्रीं 'पावकानस्सरस्वती' मिति सरस्वतीं च प्रणम्य यथोक्तां सावित्रीं पच्छोऽर्धर्चशः व्यस्तां समस्तामध्यापयेत् ॥ ११ ॥**

**प्रदक्षिणं कारयित्वे**ति । प्रदक्षिणमग्नेः । विशिष्यानुक्तत्वादात्मानं वा । '**शकाय त्वे**' त्यादि । शरीरगतदोषनिर्हरणार्थं देवताभ्यो दानम् । ब्रह्मोपदेशयोग्यतासिद्ध्यर्थं '**अधीहि भो**' इति वटुं प्रत्युक्तिः । **गणानामित्यादि** । **गणमुख्यम्**—आचार्यम्—यद्वा गणपतिम् । अध्ययनप्रकारमाह **मनुः**—

'अध्येष्यमाणस्त्वाचान्तो यथाशास्त्रमुदङ्मुखः ।
ब्रह्माञ्जलिकृतोऽध्याप्यो लघुवासा जितेन्द्रियः ॥

ब्रह्मारंभेऽवसाने च पादौ ग्राह्यौ गुरोस्सदा ।
संहत्य हस्तावध्येयं स हि ब्रह्माञ्जलिस्स्मृतः ॥

व्यत्यस्तपाणिना कार्यमुपसंग्रहणं गुरोः ।
सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन तु दक्षिणः ॥

अध्येष्यमाणस्तु गुरुं नित्य कालमतन्द्रितः ।
अधीहि भो इति ब्रूयाद्विरामेऽस्त्विति चारमेत् ॥

ब्राह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा ।
स्रवत्यनोंकृतः पूर्वं परस्ताच्च विशीर्यते ॥

प्राक्कूलात्पर्युपासीनः पवित्रैऽब्देवपालितः ।
प्राणायामैः त्रिभिः पूतः तत ओंकारमर्हति '॥ इति

**मार्कण्डेयः** — ' प्राङ्मुखो गुरुरासीनः वारुणाभिमुखं शिशुम् ।
अध्यापयीत **प्रथमं** द्विजाशीर्भिः सुपूजितः ' ॥ इति

उदङ्मुखं प्रत्यङ्मुखं वा शिष्यमासयति । **यथोक्तं** वक्ष्यमाण प्रकारेण । **सावित्रीं** सवितृदेवत्याम् । **पच्छः** — पादशः, **अर्धर्चशः**, **व्यस्तां**— विभक्तां, **समस्तां** — सर्वाम् । पादादावेकैकां व्याहृतिं अर्धर्चादौ व्याहृतिद्वयं समस्तादौ व्याहृतित्रयञ्चाध्यापयेत् । एवं वक्तुमशक्तं यथाशक्त्यध्यापयेत् । अध्ययनलक्षणमाह **आश्वलायनः** — ' सावित्रीमन्वहं पच्छोऽर्धर्चशः समस्तां सर्वां यथा शक्ति वाचयि ' त्वेति । प्राणायामपूर्वकमोमित्येकाक्षरमित्यादि ऋषिच्छन्दो-देवताध्यानपुरस्सरमेवाध्यापयेदिति भावः । एतदध्ययनाद्द्विजो भवेत् । ' आचार्यः पिता सावित्री मातेति ताभ्यां द्विजो भव ' तीत्युत्तरत्र वक्ष्यमाणत्वात् ॥

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ द्वितीयप्रश्ने षष्ठः खण्डः
समाप्तः ।



## अथ सप्तमः खण्डः



**धातादिपूर्वं सवित्रे काण्डर्षये – सदसस्पतिं – आदेवो यातु – अभीवृतं – सघानो – विजनान् – छयात्रा – विसुपर्णो – भगन्धियं' इति सावित्रव्रतसूक्तं 'अग्ने – वायो – इन्द्र – आदित्य – व्रतानां इति सावित्रव्रतबन्धं पञ्चभिः व्याहृत्यन्तं जुहोति ॥ १ ॥**

शिष्येणान्वारब्धो गुरुः माणवकं सावित्रव्रतबन्धेन कर्मणा संस्करिष्यामीति संकल्प्य उक्तं सावित्रव्रतसूक्तं हुत्वा शिष्येण च 'अग्ने व्रतपते' इत्यादिभिर्मन्त्रैः समिद्धोमं तैरेवोपस्थानञ्च कारयेत् । श्रौते । 'अग्ने व्रतपत' इति पञ्चभिराहवनीये समिधोऽभ्यादधाति । समुद्रं मनसा ध्यायेत् । अग्ने व्रतपते व्रतं चरिष्यामीति पञ्चभिर्यथालिंगं देवता उपतिष्ठमानो व्रतमुपैति' इति । होम एव व्रतबन्धः ।

**पुराणे च** — 'गर्गाद्यदुकुलाचार्यात् गायत्रं व्रतमास्थितः' ॥ इति

**'अग्नये समिध' मिति द्वे 'अग्नये समिधा' विति चत्वारि अग्नये समिध' इति सप्त पालाशांकुराणि घृताक्तानि जुहोति ॥ २ ॥**

**पालाशांकुराणीत्यादि** । ननु–अंकुराणीत्युक्तत्वादंकुराण्येव होम्यानि न समिध इति चेत् सत्यम् । 'श्रुतिलिंगवाक्यप्रकरणस्थानसमाख्यानां परस्परं समवाये पारदौर्बल्यमर्थविपकर्षा' दिति श्रुत्यपेक्षया लिंगस्य दौर्बल्यात् 'समिधा समिध्यस' इति विशिष्योक्तत्वात् समित्प्रकरणत्वाच्च साग्रास्समिध एवोद्दिश्यन्ते । यद्यपि 'न प्रकृतावूहो विद्यते' अथाप्यत्र विकृतिमन्त्रत्वादूहः । नैमित्तिकत्वाच्च ॥

**'सूर्य एष ते पुत्र' इत्यादित्यं दर्शयति ॥ ३ ॥**

**अष्टाभिस्समिद्भिः होमकर्मणि शिष्यं योजयेत् ॥ ४ ॥**

**'यथा' हेति दक्षिणादि प्रदक्षिणं वेदिं परिमृज्य पूर्ववत् परिस्तृणाति ॥ ५ ॥**

**यथाहेत्यादि** । वेदिं सजलेन पाणिना कूर्चेन वा परिमृज्य । **पूर्ववत्** उपनयनवत् — तूष्णीमित्यर्थः ।

**व्याहृतीः 'एषा ते – मेधां म इन्द्रो ददातु – अप्सरासु – आमां मेधा' इत्यष्टौ जुहोति ॥ ६ ॥**

'चतस्रश्चतस्रो व्याहृतयः' इति श्रुतेश्चतस्रो व्याहृतयः । अत एव **अष्टौ जुहोति** इत्युक्तम् ।

**'यथा' हेति तथा परिमृज्य 'प्रासावी' रित्यन्तैश्चतुर्भिः प्रवाहणं कृत्वा 'भूतिस्स्मे' ति भस्मालिप्य 'आपो हिष्ठे' ति प्रोक्ष्य 'यत्ते अग्ने तेजस्ते' नेत्यग्निं 'उद्वयं तमस' इत्यादित्यञ्चोपतिष्ठेत ॥ ७ ॥**

**तथा**—पूर्ववत् । **भूतिस्स्मेति** । 'भस्म गृहीत्वा ललाटहिक्कबाहुकंठादीन्' इत्युक्तरीत्या हिक्का—हृदयम्, आदिशब्देन कुक्षिः शिरश्च, । 'आदित्यस्सोमो नम' इति सर्वत्र लेपनम् । यद्वा श्रौतवत् 'आपो हिष्ठे' ति प्रोक्षणानन्तरं भूतिधारणम् । 'मार्जयित्वोपतिष्ठन्ते' — 'अवभृथस्यैव रूपमक' रिति श्रुतेः अवभृथार्थं मार्जनम् । 'यत्ते अग्न' इत्यादि । **बोधायनः** । 'यत्ते अग्न' इति तिसृभिः पर्यायैः 'मयि मेधां मयि प्रजा' मिति तिसृभिः । 'षोढा विहितो वै पुरुष' इति ब्राह्मणा' दिति । ननु — 'आदित्यो वा अस्माल्लोकादमुं लोकमै' दित्यारभ्य 'सोऽग्निमस्तौत् स एनं स्तुतस्सुवर्गं लोकमगमयच्' इत्यादिषु आदित्येनाप्यग्न्युपस्थानं कृतमिति श्रूयते । तदा आदित्योपस्थानं किमर्थमिति चेत्—सत्यम् । 'अग्निं वावाऽऽदित्यः सायं प्रविशति – उद्यन्तं वा वाऽऽदित्यमग्निरनुसमारोहति' इत्यादिश्रुतिभिरग्न्यादित्ययोरुपस्थानं कर्तव्यत्वेन विधीयते । अग्न्युपस्थानं मृत्युभयनिवारकं स्वर्गादिफलप्रदञ्चेति ज्ञापयितुमादित्येनापि कृतमिति श्रूयते । आदित्यमहिमा 'असावादित्यो ब्रह्मे' त्यादिश्रुतिषु द्रष्टव्यः । अत एवोभयोरप्युपस्थानमुक्तम् । **श्रुतिरपि** । 'अभि वा एषोऽग्नी आरोहति य एनावुपतिष्ठत' इत्यादि । उपस्थानप्रकारः **श्रूयते** । 'योऽहरह-

रुपतिष्ठत इति यो वा अग्निं प्रत्यङ्ङुपतिष्ठते प्रत्येनमोषति यः पराङ्ङ्विष्वङ् प्रजया पशुभिरेति कवा तिर्यङ्ङिवोपतिष्ठेत नैनं प्रत्योषति न विष्वङ् प्रजया पशुभिरेति' इति । सर्वत्राप्येवमेवोपस्थानम् ।

**नित्यं सायं प्रातरेवं जुहुयात् ॥ ८ ॥**

**यतो ब्रह्मदत्तमिदमिज्यमग्निहोत्रमेतन्मूलास्तदग्नय इति ब्रह्मवादिनो वदन्ति ॥ ९ ॥**

**यत** इत्यादि । यस्मात्कारणात् ब्रह्मणा दत्तमुच्यते । तथा बोधायनः । 'ब्रह्म वै मृत्यवे प्रजाः प्रायच्छत् तस्मै ब्रह्मचारिणमेव न प्रायच्छत् सोऽब्रवीत् अस्तु मह्यमप्येतस्मिन् भाग इति यामेव रात्रिं समिधं नाहरता इति तस्माद्ब्रह्मचारी यां रात्रिं समिधं नाहरति आयुष एव तामवदाय वसति । तस्माद्ब्रह्मचारी समिधमाहरेन्नेदायुषोऽवदाय वसानीति' 'दीर्घसत्रं ह वा एष उपैति यो ब्रह्मचर्यमुपैति स यामुपयन् समिधमादधाति सा प्रायणीया अथ यां स्नास्यन् सोदयनीया अथ या अन्तरेण सत्र्या एव स्युः ताः ब्राह्मणो वै ब्रह्मचर्यमुपयंश्चतुर्धा भूतानि प्रविशति अग्निं पदा मृत्युं पदा आचार्यं पदा आत्मन्येव चतुर्थः पादः परिशिष्यते स यदग्नौ समिधमादधाति य एवास्याग्नौ पादस्तमेव तेन परिक्रीणाति, तं संस्कृत्यात्मन् धत्ते स एनमाविशति अथ यदात्मानं दरिद्रीकृत्वा ह्रीर्भूत्वा भिक्षते ब्रह्मचर्यं चरति य एवास्य मृत्यौ पादस्तमेव तेन परिक्रीणाति तं संस्कृत्यात्मन् धत्ते स एनमाविशति अथ यदाचार्यवचः करोति य एवास्याऽचार्ये पादस्तमेव तेन परिक्रीणाति तं संस्कृत्यात्मन् धत्ते स एनमाविशति अथ यत्स्वाध्यायमधीते य एवास्यात्मनि पादस्तमेव तेन परिक्रीणाति तं संस्कृत्यात्मन् धत्ते स एनमाविशति न ह वै स्नात्वा भिक्षेत' इति । एवं समिदाधानादीनां कारणमुक्तम् । किञ्च । सन्ध्योपासनात्पूर्वमेव प्रतिपादिते समिदाधाने शङ्का च परिहृता । **इदमिज्यमिति** । यावत्समावर्तनं तावत्पर्यन्तं नित्यत्वेन यजनीयमग्निहोत्रम् ।

भृगुः — 'होम इत्येव हविषा (?) विषादो दुःखमुच्यते ।
दुःखं तापत्रयं प्रोक्तं तापं हि नरकं स्मृतम् ॥

तस्मात्तु नरकान्नित्यं यस्मिन्नग्नौ हुतं सदा ।
त्रायते यजमानं तदग्निहोत्रमिति स्मृतम्' ॥ इति ।

'उपनायनादिरग्निस्तमौपासनमित्याचक्षते । पाणिग्रहणादिरित्येक' इति **बोधायनवचनाच्च** अग्निहोत्रमित्युक्तम् । **एतन्मूलास्तदग्नय** इति । उपनयनाग्निमूला औपासनाद्या गार्हपत्याद्याश्च । औपासनाद्या यथा तथा गार्हपत्यादय इति वा । **ब्रह्मवादिनो वदन्ति** इति । **बोधायनः**–'यस्मिन्नग्नावुपनयति तस्मिन् ब्रह्मचर्यं तस्मिन् व्रतचर्या तस्मिन् समावर्तनं तस्मिन् पाणिग्रहणं तस्मिन् गृह्याणि कर्माणि क्रियन्ते तस्मिन् काम्यानि तस्मिन् प्रजासंस्कारा इत्येके' इति । यद्वा परिषेचनादिकमित्यवगम्यते तथाशब्दात् (?) ॥

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ द्वितीयप्रश्ने सप्तमः खण्डः
समाप्तः ।



# अथ अष्टमः खण्डः



**'अग्निष्ट आयु'रिति दण्डं 'इन्द्रो मरुद्भि'रिति शरावं कठिनं वा भैक्षपात्रं दद्यात् ॥ १ ॥**

दण्डं पालाशमीप्सितमन्यद्वा ।

मनुः— 'प्रतिगृह्येप्सितं दण्डमुपस्थाय च भास्करम् ।
प्रदक्षिणं परीत्याग्निं चरेद्भैक्षं यथाविधि' ॥ इति

अन्यत्र—'शरावं कठिनं लोहमयं दारुमयं वा वेणुपात्रेण कृतं वा अरिक्तं पात्रं दद्यात्' इति ।

बोधायनः—'अथास्मा अरिक्तं पात्रं प्रयच्छन्नाह 'मातरमग्रे भिक्ष'स्वेति; स मातरमेवाग्रे भिक्षेत' इति ॥

मनुः— 'मातरं वा स्वसारं वा मातुर्वा भगिनीं निजाम् ।
भिक्षेत प्रथमां भिक्षां या चैनं न विमानयेत्' ॥ इति

**'भवति भिक्षां देहि' इति ब्राह्मणो ब्रूयात् ॥ २ ॥**
**क्षत्रियो 'भिक्षां भवति देहि' इति ॥ ३ ॥**
**वैश्यो 'भिक्षां देहि भवति' इति ॥ ४ ॥**

तत्तद्वर्णानुरूप्येण भिक्षाचरणमाह **'भवति भिक्षा'**मित्यादि ।

मनुः— 'भवत्पूर्वं चरेद्भैक्षमुपनीतो द्विजोत्तमः ।
भवन्मध्यन्तु राजन्यो वैश्यस्तु भवदुत्तरम्' ॥ इति

स एव— 'वेदयज्ञैरहीनानां प्रशस्तानां स्वकर्मसु ।
ब्रह्मचार्याहरेद्भैक्षं गृहेभ्यः प्रयतोऽन्वहम् ॥

गुरोः कुले न भिक्षेत न ज्ञातिकुलबन्धुषु ।
अलाभे त्वन्यगेहानां पूर्वं पूर्वं विवर्जयेत् ।
सर्वं वापि चरेद्भैक्षं पूर्वोक्तानामसंभवे' ॥ इति

अन्यत्र — 'आहारमात्रादधिकं न किञ्चिद्भैक्षमाचरेत् ।
हस्तदत्तान्तु यो भिक्षां लवणं व्यञ्जनानि च ॥
भुक्त्वाऽप्यशुचितां याति दाता स्वर्गं न गच्छति' ॥ इति

**मौनव्रतेन ब्राह्मणेभ्यो भैक्षं आममितरेभ्यो गृह्णीयात् ॥ ५ ॥**

**मौनव्रतेनेत्यादि** । 'नियम्य प्रयतो वाचमभिशस्तांश्च वर्जयेत्' इति स्मरणात् । क्षत्रियादिभ्यस्तंडुलम् ।

**'यस्य ते' इति गुरुर्भैक्षमादाय 'सुश्रव' इति प्रोक्ष्य हविषा अपूपलाजसमायुतेन मिन्दाहुती जुहोति ॥ ६ ॥**

**अन्तहोमो हूयते ॥ ७ ॥**

'निवेद्य गुरवेऽश्नीयात् आचम्य प्राङ्मुखश्शुचिः ।
ब्रह्मचारी उतैकाहमुच्छिष्टन्तु न सन्त्यजेत् ।
अशक्तो निखनेद्भूमौ अप्सु वाप: प्रवेशयेत्' (?) ॥ इति

पराशरः — 'गुर्वन्नं मातुलादेश्च श्वशुराणां तथैव च ।
पितुः पुत्रस्य यच्चान्नं न परान्नमिति स्मृतम्' ॥ इति

ननु — 'अन्नं न प्रतिगृह्णीयात् प्राणैः कण्ठगतैरपि' इति वचनात् भिक्षाचरणस्यान्नप्रतिग्रहत्वात् तन्न कर्तव्यमिति चेत् — सत्यम् ।

'भिक्षाहारो निराहारो भिक्षा नैव प्रतिग्रहः' इति वचनात् भिक्षायाः प्रतिग्रहे न दोषः ।

किञ्च — 'भैक्षेण वर्तयेन्नित्यं नैकान्नाशी भवेद्व्रती ।
भैक्षेण व्रतिनो वृत्तिरुपवाससमा स्मृता' ॥ इति मनुस्मरणाच्च

आपस्तम्बः — 'सवर्णानां स्वधर्मे वर्तमानानां भोक्तव्यम् शूद्रवर्जमित्येके' इति । हविषा — भिक्षान्नेन, यद्वा — 'अक्षारलवणञ्चैव प्रकृत्या हविरुच्यते' इति भिक्षान्नव्यतिरिक्तान्नेन । मिन्दाहुती हुत्वाऽन्तहोमः ॥

**मौनव्रतेन आसन्ध्यागमात्तिष्ठति ॥ ८ ॥**

बृहस्पतिः — 'सावित्रीं गुरुणा लब्ध्वा तिष्ठेदस्तमयावधि ।
सायं सन्ध्यामुपास्यैव भोजयेद्ब्राह्मणान् गुरून् ।
शेषान्नं सखिभिस्सार्धं भोजयेत् क्षारवर्जितम् ।
प्राप्य देवीन्तु गायत्रीं गुरोश्चैवानुशासनात् ।
सन्ध्यात्रयं तु कर्तव्यं सायमादि यथाविधि' ॥ इति

पराशरः — 'ब्रह्मयज्ञे च सावित्रीं जपेत्तद्व्रतकर्मणि ।
प्राजापत्येऽप्यृचोऽर्धं वा यावत्तावज्जपेदमूम्' ॥ इति

तस्मिन् दिने माध्याह्निकं केचिन्नेच्छन्ति । मौनव्रतेनेत्युक्तत्वात् ।

'आरभेद्ब्रह्मयज्ञन्तु मध्याह्नात्तु परेऽहनि ।
वेदस्थाने तु सावित्री वेदमाता हि सा स्मृता' ॥ इति

**तस्मा आश्रमधर्माण्याचक्षीत ॥ ९ ॥**

मनुः — 'सेवेतेमांस्तु नियमान् ब्रह्मचारी गुरौ वसन् ।
सन्नियम्येन्द्रियग्रामं तपोवृद्ध्यर्थमात्मनः ॥
नित्यं स्नात्वा द्विजः कुर्यात् देवर्षिपितृतर्पणम् ।
देवताभ्यर्चनञ्चैव समिदाधानमेव च ॥
वर्जयेन्मधुमांसञ्च गन्धमाल्यं रसान् स्त्रियः ।
शुक्तानि चैव सर्वाणि प्राणिनाञ्चैव हिंसनम् ॥
अभ्यंगमञ्जनञ्चाक्ष्णोरुपानच्छत्रधारणम् ।
कामं क्रोधञ्च लोभञ्च नर्तनं गीतवादनम् ॥
द्यूतञ्च जनवादञ्च परिवादं तथाऽनृतम् ।
स्त्रीणाञ्च प्रेक्षणं लंभमुपघातं परस्य च' ॥ इत्यादि

**चोदितातिक्रमे दण्डेन न हन्यात् ॥ १० ॥**

दण्डेन रज्जुना वा न हन्यात् ।

श्रीभारते — 'यदि पुत्रश्च यच्छिष्यं गुरुस्सन्ताडयेद्बहु ।
अकारणात्कामकारः सोऽपि हिंस्रः प्रजायते' ॥ इति

**दुष्टवाक्यः न शपति ॥ ११ ॥**

'शप्यमानस्य यत्पापं शपन्तमनुगच्छति' इति स्मृतेः ।

**अतिक्रमानुरूपं कृच्छ्रमादिशति ॥ १२ ॥**

शङ्खः — 'सन्ध्यादिनित्यलोपे तु दिनमेकमभोजनम् ।
दिनद्वये त्रिरात्रं स्यात् कृच्छ्रार्धन्तु दिनत्रये ॥
दशाहे कृच्छ्रमेकं स्यादूर्ध्वं चान्द्रायणं भवेत् ।
चान्द्रायणं पराकश्च मासादूर्ध्वं विधीयते ॥
ततोऽप्येवं प्रकल्प्यं स्यात् व्यासस्य वचनं यथा ।
गायत्र्यष्टशतश्चैव प्राणायामत्रयं तथा ॥
प्रायश्चित्तमिदं प्रोक्तं नियमातिक्रमे सति' ॥ इति

स्मृत्यन्तरे — 'सन्ध्योपासनहीने तु नित्यस्नानं विलोप्य च ।
होमश्च नित्यके शुद्ध्येत् गायत्र्यष्टसहस्रतः' ॥ इति

सूत्रे च — 'नित्यस्नानविहीने पूर्ववत् स्नात्वा 'जुंबकाय स्वाहे'त्यादि, सन्ध्योपासनविहीने स्नात्वा दशप्राणायामान् कृत्वा अष्टशतं सावित्रीमधीत्य' इत्यादि, तर्पणे हीने द्विगुणं तर्पयति, ब्रह्मयज्ञविहीने पुरुषसूक्तपूर्वमिति, प्रातस्समिद्धोमे हीने सायं द्विगुण'मित्यादि वक्ष्यते। **एवमतिक्रमानुरूपं कृच्छ्रं** — प्रायश्चित्तम् — **आदिशति** अनुशास्ति ।

स्मत्यन्तरे — 'त्रियहात्पूर्वमग्नौ तु उपनीते गते सति ।
अन्यमग्निं प्रतिष्ठाप्य व्याहृतीश्च हुनेत् घृतम् ॥
बद्ध्वा शिरसि बध्नीयात् विरूढान् ग्रथितांसवान् (?) ।
आश्मदा (?) समिदाधाने न स्वाहाकार इष्यते ॥
आयुषेत्यथ मन्त्रान्ते वटुमाध वयेद्गुरुः (?) ।
आतिष्ठमन्त्रमेवाग्रे भिक्षेतान्नं यथाविधि ॥

परीदमन्त्रवद्वासः (?) त्र्यहमध्यापयेत्ततः ।
धृत्वाऽन्यत्तद्गुरोर्दद्यात् चतुर्थेऽहनि मन्त्रतः ' ॥ इति

**गुरुणा शिष्यो रक्षितव्यो यस्माच्छिष्यकृतं दुरितं प्राप्नोति ॥ १३ ॥**

**गुरुणेत्यादि** । अरक्षणे दोषमाह — यस्मान्मम हृदये हृदयं ते अस्त्वित्यादि मन्त्रेष्वैक्यप्रतिपादनम् — तस्मात् । यद्वा । आचार्यः पिता माता सावित्री ताभ्यां द्विजो भवति ' इति वचनात् ।

'जनिता चोपनेता च यश्च विद्यां प्रयच्छति ।
अन्नदाता भयत्राता पञ्चैते पितरः स्मृताः ' ॥ इति वचनाच्च

शिष्यकृतं दुरितमाचार्यः प्राप्नोति ॥

**अवश्यमकुर्वन्तं शिष्यं त्यजति ॥ १४ ॥**

**अवश्यम्** — स्वतन्त्रम् । **अकुर्वन्तम्** — उक्तप्रकोरण शौचादिकमकुर्वन्तम् । शिष्यं त्यजति ।

**अन्यथा त्यागे पत्नीपुत्रशिष्याणां पतति ॥ १५ ॥**

पत्नीपुत्रशिष्याणां त्यागे अन्यथाकृते आचार्यः पतति ॥

यथा — 'अकुर्वन्तोऽपि पापानि शुचयः पापसंश्रयात् ।
परपापात् प्रणश्यन्ति मत्स्या नागहृदे यथा ' ॥ इति

किञ्च — 'एकशय्यासनं पंक्तिः भाण्डं पक्वान्नमिश्रणम् ।
याजनाध्यापने यौनं तथैव सहभोजनम् ।
नवधा संकरः प्रोक्तो न कर्तव्योऽधमैः सह ' ॥ इति मनुः

पत्नीरक्षणे विशेषः **श्रीभारते** —

'सूक्ष्मेभ्योऽपि प्रसंगेभ्यः स्त्रियो रक्षया विशेषतः ।
द्वयोर्हि कुलयोश्शोकमावहेयुररक्षिताः ॥

स्वां प्रसूतिञ्च गोत्रञ्च कुलमात्मानमेव च ।
स्वधर्मञ्च प्रजाश्चैव जायां रक्षन् हि रक्षति ' ॥ इति

**काषायाजिनयोरन्यतरवासाः जटी शिखी वा मेखली दंडी सूत्राजिनधारी ब्रह्मचारी शुचिरक्षारलवणाशी यथोक्तेषु वर्षेषु धर्माण्यनुतिष्ठतीति विज्ञायते ॥ १६ ॥**

ब्रह्मचारिधर्मानाह **काषायाजिनयोरित्यादिना**। काषायं वस्त्रमजिनं वासः। सूत्रवदजिनधारी। **काषायाजिनयोरिति** पूर्वमुक्त्वा पुनरप्यजिनधारीत्युक्तत्वात् यज्ञोपवीतवत् धार्यमित्यर्थः। **ब्रह्मचारीति**। अनेन स्रक्चन्दनतांबूलवनितादिनिषेधः। यद्वा — ब्रह्म चरतीति ब्रह्मचारी — वेदाध्ययनपरः। **शुचिः** 'शौचं संकरवर्जित' मिति। यद्वा —

'स्त्रीशुद्धिरर्थशुद्धिश्च यस्य नास्त्यपि धर्मवान्।
स नरो नरकं याति शिरश्छेदे कुतो भिषक् ॥

इति दोषगौरवाभिप्रायेण स्त्रीसंगपरिहारार्थं शुचिशब्दः। **अक्षारलवणाशी**। अत्र **विष्णुः**। 'कृतकलवणं ब्रह्मचारी वर्जये' दिति। कृतकलवणमूषरलवणं, क्षारलवणम्। यद्वा — क्षारलवणं राजसद्रव्यत्वात् परिह्रियते।

**श्रीगीतायम्** — 'कट्वाम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः' ॥ इति

**यमः** — 'मेखलामजिनं दंडमुपवीतं कमंडलुम्।
कौपीनं ब्रह्मसूत्रञ्च ब्रह्मचारी तु धारयेत्' ॥ इति

**प्रचेताः** — 'तांबूलाभ्यञ्जनञ्चैव रौप्यपात्रे च भोजनम्।
ब्रह्मचारी यतिश्चैव विधवा च विवर्जयेत्' ॥ इति

**यथोक्तेषु वर्षेष्विति**।

**मनुः** — 'षट्त्रिंशदाब्दिकं चर्यं गुरौ त्रैविद्यकं व्रतम्।
तदर्धकं पादकं वा ग्रहणान्तिकमेव वा' ॥ इति

एतमग्निं त्रिदिनमजस्रं धारयेत्। तथा **बोधायनोऽपि** 'जातकाग्निश्चेत् व्रतोत्सर्जनान्ते अरण्योर्वा समारोपयेत्। प्राजापत्यादिषु मथित्वा कुर्यात्। लौकिकश्चेद्विसृजेत्' इति। 'अपवृत्ते कर्मणि लौकिकस्संपद्यते' **इत्यापस्तंबः**। देवर्षिपितृतर्पणानन्तरं गायत्रीं सावित्रीं सरस्वतीं छन्दांसि सवितारं काण्डर्षिं

तर्पयेत् । अस्य उपाकर्मणः पूर्वं सन्ध्योपासनसमिदाधानमन्त्रादन्यं नाध्यापयीत । गायत्र्या ब्रह्मयज्ञश्च भवेत् । बधिरादीनां विषये विशेष उच्यते —

मनुः — 'बधिरोन्मत्तमूकानां न वर्षस्तु विधीयते ।
पुण्यर्क्षे विधिवन्मन्त्रमुक्त्वाऽऽचार्यस्समाचरेत् ॥
पश्चाद्ब्रह्मादि तूष्णीं वा सर्वं कृत्वा स्वयं हुनेत् ।
आयुर्देति त्यजेद्वह्निं सन्ध्यादींस्तन्त्रयेद्द्विजः ।
व्रतेषु मन्त्रयेत्किञ्चित् कर्णे जप्त्वैव बन्धयेत्' ॥ इति

एकोदरजातानां विषये च ।

'एकलग्ने द्वयोश्चेत्तु वेद्याचार्यौ पृथङ्मतौ ।
सहोदराणां वेद्येका तन्त्रैक्यं यमयोः परे (?) ॥
लौकिकोऽग्निर्भवेन्मुख्य आपद्येष विधिः स्मृतः ।
बधिरोन्मत्तमूकानामेकलग्ने द्वयोः कृते ॥
एकमातृप्रसूतानामेकस्मिन् वत्सरे यदि ।
विवाहो नैव कर्तव्यो निर्गते तु ऋतुत्रये ।
ग्रामान्तरे तु कर्तव्यः कर्तव्यो नैकवेश्मनि ॥
उद्वाह्य पुत्रीं न पिता विदध्यात् पुत्र्यन्तरस्योद्वहनं न जातु ।
यावच्चतुर्थीदिनमंगलस्य समापनं तावदधो विदध्यात् ॥
यच्छोभनं नैकगृहेऽपि नेष्टं शुभञ्च पश्चान्नवभिर्दिनैस्स्यात् ।
आवर्तने शोभन उत्सुको वा अन्योऽथवाऽऽचार्यविभेदको वा ।
'एक एव पिता कुर्यात्पुत्रयोर्व्रतबन्धनम् ।
कालातिक्रमकार्ये तु कुर्यादाचार्यभेदतः' ॥
'एकमातृप्रसूतानां कन्यकापुत्रयोर्द्व[illegible]ः ।
सहोद्वाहो न कर्तव्यस्तथा चैवोप[illegible]यनम्' ॥
चौलोपनयनोद्वाहा नैकाब्दे सहजन्मनाम् ।
ज्येष्ठे मासि विशेषेण सर्वज्येष्ठस्य चैवहि ॥

उपनीतस्य पुत्रस्य जडत्वं मृत्युरेवहि ।
एकोदराणां पुंसां स्याद्विवाहो नैकवत्सरे ॥

'पुत्रीपरिणयात्पूर्वं यावद्दिनचतुष्टयम् ।
पुत्र्युन्तरस्य कुर्वीत नोद्वाहमिति सूरयः ॥

पुत्रोपनयनात्पूर्वं षण्मासाभ्यन्तरे पिता ।
पुत्र्युद्वाहं न कुर्वीत विवाहं व्रतबन्धनम् ॥

आद्यगर्भद्वयोः ज्येष्ठमासे नोद्वाहमाचरेत् ।
दंपत्योर्ज्येष्ठ एकश्चेत् शुभं ज्येष्ठे न तु द्वये ॥

स्वसृयुग्मे भ्रातृयुग्मे स्वसृभ्रातृयुगे तथा ।
न जातु मंगलं कुर्यादेकस्मिन् मण्डपे यदि ॥

कुर्याच्चेन्मण्डपं भिन्नं शुभं वेदिद्वयेऽपि वा ।
एकोदराणां वैकाब्दे विवाहव्रतचौलकाः ।
महानदीशैलरोधे कुर्यादेवैकवासरे ॥

एकोदये करतलग्रहणं यदि स्यात्
एकोदरस्थदरयोः? कुलनाशहेतुः ।
एकाब्दिके तु विधवा भवतीति कन्या
नद्यन्तरे तु शुभदं मुनयो वदन्ति ॥

'मण्डनान्मुण्डनं कार्यं मुण्डनान्न तु मण्डनम्' ।
'एकमातृजमातृभ्यः कन्या नैकाय नैकजाः ।
न च प्रतिविवाहाय ज्येष्ठयोश्च परस्परम्' (?) ॥ इति

इत्यादि प्रसंगादुक्तम् ।

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने तात्पर्यचिन्तामणौ द्वितीयप्रश्ने अष्टमः खण्डः समाप्तः ।

---

## अथ नवमः खण्डः

—*०*—

**अथ पारायणव्रतानि ॥ १ ॥**

अथोपनयनानन्तरं **पारायणव्रतानि** । आत्मनि पतितपापस्य निष्क्रियार्थं वेदपारायणाङ्गानि व्रतानि उपदिश्यन्ते ।

**चतुर्थे पञ्चमे सप्तमे वा पुण्ये पुन्नाम्नि नक्षत्रे शिष्यमाचान्तं पुण्याहं वाचयित्वा अग्निं परिस्तीर्य प्राङ्मुखमुपवेशयति ॥ २ ॥**

सावित्रीव्रतोत्सर्जनकालमाह **चतुर्थे पञ्चम** इत्यादिना । उपनयनदिनादारभ्य चतुर्थे पञ्चमे वेत्यवगन्तव्यम् । वा शब्दो विकल्पार्थः । यद्वा कालान्तरपरः ।

'हस्तत्रये पुष्यधनिष्ठयोश्च पौष्णादिसौम्यादितिविष्णुभेषु ।
शस्ते तिथौ चन्द्रबलेन युक्ते कार्यौ द्विजानां व्रतबन्धमोक्षौ ' ॥ इति

'जन्मराशौ शुभं प्राहुर्यात्रोद्वाहप्रवेशनम् ।
सीमन्तस्नानभैषज्यव्रतारम्भसमापनम् ' ॥

इत्युक्तकाले कुर्यात् । **शिष्यमित्यादि** ।

गोत्रं शर्माणं सावित्रीव्रतोत्सर्जनकर्मणा संस्करिष्यामि इति सङ्कल्प्य, अन्तहोमस्य पूर्वमेव कृतत्वात् कालान्तरत्वाच्च, आघारं हुत्वा पुनरपि परिस्तीर्य प्राङ्मुखमुपवेशयति ।

**तस्योत्तरे माता ब्रह्मचारी वा समासीत ॥ ३ ॥**

व्रतादौ क्षौरस्य कर्तव्यताज्ञापनार्थं केशधारणार्थञ्च । उभयोरसम्भवे अन्यो वा ।

**धातादिपूर्वं सावित्रव्रतसूक्तं 'अग्ने–वायो–इन्द्र–आदित्य-व्रतानां' इत्यूहित्वा 'अचारिषं–विसर्जयामीति' सावित्रव्रतविसर्गं**

हुत्वा पूर्वाणि सूत्रदण्डादीन्यप्सु विसृज्य स्नाताय नवान्युपवीतादीनि पूर्ववद्दत्वा तमद्भिरभ्युक्ष्य दक्षिणे निवेश्य धातादिपूर्वं 'प्रजापतये काण्डर्षये, सदसस्पतिं—प्रजापते न त्वत्—रयीणां पतिं—प्रजापते त्वं निधिपाः—तवेमे लोकाः—प्रजापतिं प्रथमं—यो राय' इत्यग्न्यादिषु पञ्चसु 'प्राजापत्य' मित्युभयत्रोहित्वा वार्षिकं प्राजापत्यव्रतबन्धं हुत्वा शिष्यस्य शिष्येण व्रतं बन्धयति ॥ ४ ॥

पूर्वाणि सूत्रदण्डादीनीत्यत्र 'श्रुत्यर्थपठनस्थानमुख्यप्रावृत्तिकाः क्रमाः' इति न्यायेन स्नाताय नवान्युपवीतानि पूर्ववद्दत्वा पूर्वाणि सूत्रदण्डादीन्यप्सु विसृज्येत्यन्वयो वक्तव्यः । अन्यथा दोषस्मृतेः ।

अत्रिः — 'ब्रह्मसूत्रं त्रिदेवत्यं ब्रह्मविष्णुशिवात्मकम् ।
परित्यजन्ति ये विप्रा मोहात्ते कोपजीविनः ॥
स्वर्गापवर्गमार्गाभ्यां प्रच्युतास्ते न संशयः ।
त्यक्त्वा यज्ञोपवीतन्तु षट्कृच्छ्राणि समाचरेत्' ॥ इति

विष्णुः— 'उपवीतं शिखाबन्धमूर्ध्वपुण्ड्रं विना कृतम् ।
अपवित्रकरं कर्म विप्रस्य विफलं भवेत्' ॥ इति

भृगुः— विना यज्ञोपवीतेन विना धौतेन वाससा ।
मुक्त्वा शिखां वा चान्तेन कृतस्यैव पुनः क्रिया ॥'

स एव — 'मन्त्रपूतं स्थितं काये यस्य यज्ञोपवीतकम् ।
नोद्धरेच्च ततः प्राज्ञो य इच्छेच्छ्रेय आत्मनः ॥
सकृच्चाधारणात्तस्य प्रायश्चित्तीयते द्विजः'

इत्यादिस्मृतिभ्यः यज्ञोपवीतं विना दण्डादीन्यप्सु विसृज्य स्नानात्परं पूर्ववन्मेखलादीनि दत्वा पूर्वधृतं यज्ञोपवीतं त्यजेत् । उत्तरीयमाचार्यो गृह्णाति । अत्र बोधायनः । 'अथास्य वास आदत्ते यस्य ते प्रथमवास्य' मिति । तं स्नातमद्भिरभ्युक्ष्य स्वदक्षिणे निवेश्य आषाढोपाकर्म कुर्यात् ।

उपाकर्माकरणे प्राजापत्यादिव्रताधिकाराभावात् । अन्यथाऽप्येवमध्यापयितुकामो हुत्वाध्यापये' दित्युत्तरत्र वक्ष्यमाणत्वाच्च । तदाचरणप्रकार उत्तरत्र वक्ष्यते। प्रकृतमनुसरामः ।

धातादिपूर्वमित्यादि । शिष्येण पञ्च समिधो हावयित्वा उपस्थानञ्च कारयित्वा व्रतं बन्धयति । 'सवित्राणि जुहोति प्रसूत्यै' 'वायव्यँ श्वेत' मित्यादिकाण्डाध्ययनं कारयेत् । काण्डर्षितर्पणे 'सवितारं काण्डर्षिं प्रजापतिं सदसस्पति' मिति । ब्रह्मयज्ञे च 'ऋतञ्च सत्यञ्च–देवकृतस्य–यन्मे गर्भे–तरत्समन्दी' ति जपेत् ।

**वर्षे वर्षे तथैव व्रतविसर्गं हुत्वा तत्तद्व्रतं विसृज्य अन्यद्व्रत बध्नाति ॥ ५ ॥**

वर्षे वर्षे तथैव व्रतबन्धवद्विसर्गः । इदं ब्राह्मविषयम् । गायत्रप्रजापत्य-नैष्ठिकानां 'आसावित्रव्रतसमाप्तेरन्यत्र व्रतचारी' 'प्राजापत्ये त्रिसंवत्सरादूर्ध्वं न तिष्ठेत्' 'नैष्ठिकस्य यावज्जीव' मित्युत्तरत्र वक्ष्यमाणत्वात् । 'शिष्यस्य शिष्येण व्रतं बन्धयति' इत्यनेन शिष्यस्य 'अग्ने व्रतपतं' इत्यादिभिः समिद्धोममुपस्थानञ्च दर्शितम् । सौम्यव्रतादीनामप्येवमेव कर्तव्यताज्ञापनार्थं ब्राह्मविषये तत्तद्व्रतं विसृज्यान्यद्व्रतं बध्नातीत्युच्यते । (वर्षान्ते संवत्सरान्ते) ॥

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ द्वितीयप्रश्ने नवमः खण्डः
समाप्तः ।

## अथ दशमः खण्डः

—※०※—

**'सोमाय काण्डर्षये—ससदस्पतिं—सोमो धेनुं—अषाढं—त्वं सोम क्रतुभिः—याते धामानि हविषा—त्वमिमा ओषधीः—याते धामानि दिवि' इति सूक्तं सौम्यव्रतस्य ॥ १ ॥**

धातादिपूर्वमिति पूर्वमुक्तधातादि हुत्वा 'सोमाये' त्याद्युक्तानि—सूक्तं सौम्यव्रतस्य हुत्वा पूर्ववद्व्रतबन्धमुपस्थानञ्च कुर्यात्। 'प्राचीनवँश करोति'त्यादि-सौम्यकाण्डमधीयीत। तर्पणे सोमं काण्डर्षिमिति विशेषः। 'वसोः पवित्र' मिति ब्रह्मयज्ञे जपति। संवत्सरे पूर्णे तद्विसर्जनं कृत्वा आग्नेयव्रतं बन्धयति।

**'अग्नये काण्डर्षये—सदसस्पतिं—अग्ने नय—प्रवः शुक्राय-अच्छा गिरः—अग्ने त्वमस्मत्—अग्ने त्वं पारय—प्रकारवो मनना:' इति सूक्तमाग्नेयव्रतस्य ॥ २ ॥**

पूर्ववद्धातादिपूर्वं आग्नेयव्रतस्योक्तं सूक्तं हुत्वा पूर्ववद्व्रतबन्धमुपस्थानञ्च। 'प्रजननं ज्योति' रित्याग्नेयव्रतकाण्डमधीयीत। 'जातवेदसे' इति ब्रह्मयज्ञे विशेषः। 'अग्निं काण्डर्षि'मिति तर्पणे विशेषः।

**'विश्वेभ्यो देवेभ्यः काण्डर्षिभ्यः—सदसस्पति—आनो विश्वे—शन्नो देवाः—ये सवितुः—अग्ने याहि—द्यौः पितः—विश्वे देवाश्शृणुत' इति सूक्तं वैश्वदेवव्रतस्य ॥ ३ ॥**

संवत्सरे पूर्णे व्रतोत्सर्जनं कृत्वा सूत्रदण्डादीनि पूर्ववत् त्यक्त्वा अद्भि-रभ्युक्ष्य दक्षिणे निवेश्य धातादिपूर्वं हुत्वा 'विश्वेभ्यो देवेभ्यः काण्डर्षिभ्यः' इत्याद्युक्तं वैश्वदेवव्रतस्य सूक्तं हुत्वा पूर्ववद्व्रतबन्धमुपस्थानञ्च कुर्यात्। तद्व्रतमाचरन् 'प्रजापतिरकामयत' इत्यादिवैश्वदेवकाण्डमधीयीत। 'विष्णोर्नुकं—

सहस्रशीर्षा पुरुषः – आत्वा, हार्ष' मिति ब्रह्मयज्ञे विश्वान् देवान् काण्डर्षी' निति तर्पणे च विशेषः ।

**'ब्रह्मणे काण्डर्षये – सदसस्पतिं – ब्रह्म जज्ञानं – पिता विराजां – ब्रह्म देवानजनयत् – अन्तरस्मिन् – ब्रह्मन् देवास्त्रयस्त्रिँशत् – चतस्र आशा' इति सूक्तं ब्राह्मव्रतस्य ॥ ४ ॥**

संवत्सरे पूर्णे धातादिपूर्वं तद्व्रतोत्सर्जनं कृत्वा धातादि पूर्वं ब्रह्मणे काण्डर्षये सदसस्पतिमारभ्य सूक्तं ब्राह्मव्रतस्य हुत्वा पूर्ववद्व्रतबन्धमुपस्थानञ्च कृत्वा तद्व्रतमाचरन् 'युञ्जानः प्रथमं मनः – ब्रह्मसन्धन्त' मित्यादि ब्राह्मकाण्डमधीयीत । 'एकाक्षरन्त्वक्षरि' तेति ब्रह्मयज्ञे 'ब्रह्माणं काण्डर्षि' मिति तर्पणे च विशेषः ।

**'ऋतञ्च सत्यञ्च – देवकृतस्य – यन्मे गर्भे – तरत्समन्दी' इति प्राजापत्ये ॥ ५ ॥**

**'वसोः पवित्रं – पवस्व विश्वचर्षणे' इति सौम्ये ॥ ६ ॥**

**'जातवेदस' इत्याग्नेये ॥ ७ ॥**

**विष्णोर्नुकम्, सहस्रशीर्षा, त्वमग्ने रुद्र, आत्वाहर्षं, इति वैश्वदेवे ॥ ८ ॥**

**'एकाक्षरन्त्वक्षरिते' ति ब्राह्मे ॥ ९ ॥**

**तत्तद्व्रतदेवत्यं स्वाध्यायसूक्तं तत्तत्काण्डञ्चाधीयीत ॥ १० ॥**

तत्तद्व्रताचरणकाले ब्रह्मयज्ञे विशेषमाह '**ऋतञ्च सत्यञ्च**' त्यादिना ।

ननु -- वायो व्रतपते—इन्द्र व्रतपते—इत्यादि व्रतबन्धे उक्तम् । प्राधान्येन वाय्विन्द्रादेर्व्रतमत्र न प्रतिपाद्यते । किमर्थमेतेषां मन्त्रः प्रयुज्यत इति चेत्—सत्यम् । आत्मनि पतितपापस्य निष्क्रियार्थमित्युच्यते । 'सविता प्रसवानामीशे – प्राजापत्यो वै पुरुषः – सौम्यो वै देवतया पुरुषः – आग्नेयो वै

ब्राह्मणः – वैश्वदेव्यो वै प्रजाः – अन्तः प्रविष्टश्शास्ता जननाँ सर्वात्मा' इत्यादिश्रुतिभिः 'प्रधानक्षेत्रज्ञपतिर्गुणेशः' – इति। परमात्मनः सर्वात्मकत्वाच्च एतन्मन्त्रानुष्ठानेन आत्मानि पतितपापनिष्क्रिया क्रियते।

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने तात्पर्यचिन्तामणौ द्वितीयप्रश्ने दशमः खण्डः समाप्तः।



## अथ एकादशः खण्डः

तथैव धातादि व्रतविसर्गं हुत्वा ब्राह्मव्रतं विसृज्य स्नाताय नवान्युपवीतानि पूर्ववद्दत्वा तमद्भिरभ्युक्ष्य दक्षिणे निवेश्य धातादिपूर्वं 'शुक्रियाय काण्डर्षये – सदसस्पतिं – प्रवर्ग्यदेवताभ्यः कल्पयामि – साम्राज्याय कल्पयामि – महावीराय कल्पयामि – पृथिव्यै कल्पयामि स्वाहा' इत्युत्तरे; 'सोमाय कल्पयामि – पितृभ्यः कल्पयामि – पितृभ्यो मन्त्रपितृभ्यः कल्पयामि – रुद्राय कल्पयामि – रुद्राय रुद्रहोत्रे कल्पयामि स्वाहा' इति दक्षिणे च; आहुतीरेता हुत्वा 'अग्ने व्रतपते शुक्रियव्रतं बन्धयामी'ति शुक्रियव्रतं षाण्मासिकं त्रैमासिकं वा बध्नीयात् ॥ १ ॥

स्नानमैन्द्रव्रतम् । यद्वा 'प्रवर्ग्यदेवताभ्य' इत्युक्तत्वात् इन्द्रदीनां तत्रान्तर्भावः । 'शुक्रं सोमात्मक' मित्युक्तेः । द्विजराजत्वाच्च सोमस्य सौम्यव्रतानन्तरमाग्नेयव्रतमुक्तम् । 'दीर्घसत्रं वा एष उपैती'ति पूर्वमुक्तम् सत्ररूपेण निरूपितप्रवर्ग्यस्थाने शुक्रियव्रतमिति ज्ञापयितुमौपनिषदव्रतत्वज्ञापनार्थञ्च तथैवेत्यत्रोच्यते । तथा सावित्रव्रतबन्धवत् धातादिपूर्वं ब्राह्मव्रतोत्सर्जनहोमं हुत्वा ब्राह्मव्रतं विसृज्य पूर्ववदुपस्थानान्तं कृत्वा नवान्युपवीतादीनि पूर्ववद्दद्यात् । पूर्ववदित्यनेन प्राजापत्यादिष्वपीति द्योतितम् ।

मनुः – 'यद्यस्य विहितं कर्म यत्सूत्रं या च मेखला ।
यो दण्डो यच्च वसनं तत्तदन्यव्रतेष्वपि' ॥ इति

धातादिपूर्वं 'अरुणेभ्यः काण्डर्षिभ्यः–सदसस्पति' मित्यादिहोमः । अग्ने व्रतपते 'शुक्रियव्रतं चरिष्यामी'त्यादिभिः व्रतबन्धः । षाण्मासिकमित्यादि । अशक्यत्वादल्पकालसाध्यतामनुमनुते षाण्मासिकमित्यादिना ।

'चितस्स्थ परिचितस्स्थ' इत्यादिना अनुवाकेन शिरोऽहतेन वाससा वेष्टयेत् ॥ २ ॥

**यथैनमहस्सूर्यो नाभितपेन्मुखमस्य ॥ ३ ॥**

**यथैन**मित्यत्र यावद्व्रतोत्सर्जनपर्यन्तमह्नि सूर्यो नाभितपेदित्यर्थो न भवति। किन्तु तदहनीत्येव।

**बोधायनः** – 'पुरा नक्षत्रोदयाद्व्रजमभिपद्यते। नैनमेतदहरादित्योऽभितपेत्। तदहश्च स्नातानां मुखं वा एष एतत्तेजसा यशसा तपति। अन्तर्लोम्ना चर्मणा व्रतमभिनिघ्नन्ति' इति।

**सत्याषाढः**–'पुरोदयादादित्यस्य व्रतमभिपद्यते नैनमेतदहरादित्योऽभितपतीत्येकेषाम्। स्नातानां वा एष तेजसा तपति, तस्मात्स्नातकस्य मुखं रेफायति वाऽहरन्ते इति।(?) **आपस्तम्बः** – 'प्रागुदयाद्व्रजमभिप्रविश्यान्तर्लोम्ना चर्मणा द्वारमपिधायास्ते। नैनमेतदहरादित्योऽभितपेन्मध्यन्दिन' इति।

**तस्माद्रेफायति ॥ ४ ॥**

'रेफ हिंसाया' मिति केचिद्व्याकुर्वन्ति। शोभायतीत्यापस्तम्बः। **श्रुतिः** 'चतुर्धा विहितं वै शिरः प्राणश्चक्षुः श्रोत्रं वागि' ति। वाससा मुखञ्च वेष्टयेत्।

**स्त्रीशूद्राभ्यामनभिभाष्य शुक्रियब्राह्मणारुणनारायणाद्यारण्यकाण्डम(ऽरण्ये)धीयीत ॥ ५ ॥**

**इति व्रतपारायणं विज्ञायते ॥ ६ ॥**

तेजोरक्षणार्थं शुक्रियाव्रतमत्र प्रतिपादितम्।

'अविद्वांसमलं लोके विद्वांसमपि वा पुनः।
प्रमदा ह्युत्पथं नेतुं कामक्रोधवशानुगम्' ॥

इति स्मरणात्, नैयत्येन ब्राह्मणादिष्वरिषड्वर्गस्य विद्यमानत्वात् स्त्रीसम्भाषणं निषिध्यते। 'पद्युवा एतच्छ्मशानं यत् शूद्रः' 'असतो वा एष सम्भूतः यच्छूद्रः' 'तस्मात् स्त्रियो निरिन्द्रियाः' इत्यादिवचनैः स्त्रीशूद्रयोः सम्भाषणं निषिध्यते। **शुक्रियब्राह्मणे**त्यादि–'नमो वाचे'–'देवा वै सत्र' मित्यादि

शुक्रियब्राह्मणम् । 'भद्रं कर्णेभिः – शन्नो मित्रः – अम्भस्य पारे' इत्याद्यरुण-नारायणमारण्यकाण्डसंज्ञितमेतत्सर्वमधीयीत । एतदारण्यकाण्डमरण्येऽधीयीत ।

श्रुतिः । 'अरुणाः काण्डर्षयः अरण्येऽधीयीरन्' 'तपस्वी पुण्यो भवति तपस्वी पुण्यो भव' तीति । अरुणान् काण्डर्षीन् इति काण्डर्षितर्पणञ्च कृत्वा अध्ययनान्ते विसर्जनञ्च कुर्यात् ।

याज्ञवल्क्यः– 'पौषमासस्य रोहिण्यामष्टकायामथापि वा ।
जलान्ते छन्दसां कुर्यादुत्सर्गं विधिवद्बहिः ॥

अध्यायानामुपाकर्म कुर्यात्कालेऽपराह्णके ।
पूर्वाह्णे तु विसर्गस्स्यादिति वेदविदो विदुः ॥

पुष्ये तु छन्दसां कुर्याद्बहिरुत्सर्जनं द्विजः ।
माघशुक्लस्य चाप्राप्ते पूर्वाह्णे प्रथमेऽहनि' ॥ इति

गृह्यपरिशिष्टे – 'पुष्ये माघे सिताष्टम्यां वेदोत्सर्जनमाचरेत् ।
नान्दीमुखञ्च पुण्याहं हुत्वोपाकर्मवद्बहिः ॥

त्यजेद्वेदमविसृष्टे(?)त्वनध्यायो ह्यहं द्विजः ।
उपाकर्मणि वेदान्ते सद्यो वा विसृजेत्सह' ॥ इति

इदं प्राजापत्यादिव्रतबन्धविसर्जनानाञ्च समानम् । शुक्रियव्रतविसर्जनञ्चात्र कुर्यात् । आषाढोपाकर्मणः प्राजापत्यव्रतबन्धस्य चान्योन्यसापेक्षत्वज्ञापनार्थं व्रत-विसर्जनस्यात्र कर्तव्यताज्ञापनार्थमङ्गत्वज्ञापनार्थञ्च शुक्रियव्रतान्ते प्रतिपादितम् । उपाकृतिश्च व्युत्क्रमेण प्रतिपादिता ।

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ द्वितीयप्रश्ने एकादशः खण्डः

समाप्तः ।

———

## अथ द्वादशः खण्डः

**अथाषाढोपाकर्म कुर्यात् ॥ १ ॥**

आचार्योच्चारणानुच्चारणरूपं वेदस्वीकरणं कर्तुमुपाकर्म विधीयते । ननु लिखितपुस्तकपाठादिनाप्यध्ययनं कर्तुं शक्यते । किमर्थं गुरुमुखादिति चेत् सत्यम् । गुरुमुखाद्विना प्रकारान्तरेणाधीतानां प्रसन्नता नास्तीत्यवगम्यते । **आरण्यपर्वणि** इन्द्र—यवक्रीतसंवादे—

**यवक्रीतः**— 'स्वाध्यायार्थे समारम्भो ममायं पाकशासन! ।
तपसा ज्ञातुमिच्छामि सर्वज्ञानानि कौशिक ॥

कालेन महता वेदाः शक्या गुरुमुखाद्विभो ।
प्राप्तुं तस्मादयं यत्नः परमो मे समास्थितः ॥

**इन्द्रः**— 'अमार्ग एष ब्रह्मर्षे येन त्वं ज्ञातुमिच्छसि ।
किं प्रयत्नेन ब्रह्मर्षे गच्छाधीहि गुरोर्मुखात् ॥

द्विजानामनधीता वै वेदास्सुरगणार्चिताः ।
प्रतिभान्ति न तप्येऽहमिदं परमकं तपः' ॥ इति

**छान्दोग्ये** । 'आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापत्' इति । अत उपाकर्म कार्यम् ।

**आपूर्यमाणपक्षे रिक्तापर्वणी वर्जयित्वा बुधवारे तिथिं गृह्णाति ॥ २**

आपूर्यमाणेति । श्रुतिः । 'प्रजापतिरकामयत प्रजायेयेति । स तपोऽतप्यत । स त्रिवृतं सोममसृजत । तं पञ्चदशस्तोमो मध्यत उदतृणत् । तौ पूर्वपक्षश्चापरपक्षश्चाभवताम् । पूर्वपक्षं देवा अन्वसृज्यन्त । अपरपक्षमन्वसुराः । ततो देवा अभवन् । परा असुराः । यं कामयेत वसीयान् स्यादिति । तं पूर्वपक्षे याजयेत् । वसीयानेव भवति । यं कामयेत पापीयान् स्यादिति । तमपरपक्षे याजयेत् । पापीयानेव भवति । तस्मात्पूर्वपक्षोऽपरपक्षात् करुण्यतरः' ॥ इति

**रिक्तेत्यादि** ।

'उपाकर्मणि शुक्रज्ञगुरुसूर्येन्दुवासराः ।
शुभास्स्युः शुभनक्षत्रं रिक्तापर्वाष्टमी विना' ॥ इति

**आथर्वणे** । 'मासो वै प्रजापतिः । तस्य कृष्णपक्ष एव रूपम् । शुक्लः प्राणः' इति । **बुधवारे** इति । बुधवारे तिथिनक्षत्रादिकं लभ्यते चेत् सारस्वतयोग इति ज्योतिषे उक्तम् ।

'स्ववारेषु स्वहोरायां लग्नेऽत्युच्चगतो ग्रहः ।
* * * * *
एतेऽष्टौ ज्ञानदा योगाः बुधे सारस्वतप्रदाः' ॥ इति

मनुः — 'श्रावण्यां प्रोष्ठपद्यां वा उपाकृत्य यथाविधि ।
युक्तश्छन्दांस्यधीयीत मासान् विप्रोऽर्धपञ्चमान्' ॥ इति

**बोधायनः** । 'श्रावण्यां पौर्णमास्यामथवा आषाढ्यामपि' इति ।

संहितासारे — 'आषाढे श्रावणे वापि प्रोष्ठपद्यामथापि वा ।
यत्र निर्दोषकालस्स्यात्तत्र कुर्यादुपाकृतिम् ॥
गुरुभार्गवयोर्मौढ्ये बाल्ये वा वार्धकेऽपि वा ।
तथाऽधिमाससंसर्पमलमासादिषु त्रिषु ॥
प्रथमोपाकृतिर्न स्याद्यदि कुर्याद्द्विर्नश्यति ।
चण्डांशोर्मण्डलं प्राप्तौ यदि शुक्रबृहस्पती ॥
श्रावण्यस्य तु नित्यत्वात्कर्तव्यं नित्यकर्मवत्' ॥ इति

'श्रावणी पूर्णिमा यत्र ग्रहसङ्क्रान्तिदूषिता ।
स्वाध्यायस्य प्रधानत्वात् नित्यत्वाच्छ्रावणस्य तु ।
अञ्जसा श्रावणे श्रेष्ठैः कर्तव्यं नित्यकर्मवत्' ॥ इति

दोषापवादः **सङ्ग्रहे** ।

'अर्धरात्रादधस्ताच्चेत्सङ्क्रान्तिर्ग्रहणन्तु वा ।
उपाकर्म न कुर्वीत परतश्चेन्न दोषकृत् ॥

उपरागयुते पर्वण्युपाकर्म करोति यः ।
स वै माणवको नश्येदाचार्यस्तदनन्तरम् ॥
एको मूढो भवेदन्यस्स्वोच्चमित्रांशगो यदि ।
अन्यस्यास्तमये काले कुर्याच्छ्रावणमञ्जसा ॥
प्रथमोपाकृतिश्चापि कुर्यादेवाविचारयन् ।
ऋग्यजुस्समाथर्वेशा जीवशुक्रकुजेन्दुजाः ॥
शाखाधीशे शक्तियुते तच्छाखाध्ययनं शुभम् ।
मलमासत्रये मौढ्ये मन्त्रिणो ग्रहसङ्क्रमे ॥
एतैर्दुष्टे तु सिंहेऽर्के कन्यकार्के तु कारयेत् ।
मासद्वयन्तु दुष्टश्चेत् कर्कटेऽर्के तु कारयेत् ॥
मासत्रयन्तु दुष्टश्चेत् सिंहार्के नित्यवत्सदा' ॥ इति

गार्ग्यः — 'श्रावणे न कृते कर्मण्युत्तराषाढसंयुते ।
संवत्सरकृतोऽध्यायः तत्क्षणादेव नश्यति' ॥ इति

दक्षः — 'यद्यर्धरात्रादर्वाक्तु सङ्क्रान्तिर्ग्रहणं तथा ।
उपाकर्म न कुर्वीत परतश्चेन्न दोषकृत्' ॥ इति

गर्गः — 'कुलीरस्थे न कर्तव्यं कर्तव्यं सिंहयुक्तके' ॥ इति

वसिष्ठः — 'अनुप्तबीजे नृपतौ विनष्टे सूते मृतौ राष्ट्रसमाकुले च ।
उत्सर्जनोपाकरणे न कुर्यात् ग्रस्तेन्दुसूर्ये गुरुणोऽस्तयाने' ॥ इ

देवलः — 'कुलीरस्थे यदासूर्ये उपाकुर्यात्तु दक्षिणे ।
नर्मदोत्तरदेशे तु कर्तव्यं सिंहयुक्तके' ॥ इति

कालादर्शे — 'अध्यायानामुपाकर्म श्रावण्यां तैत्तिरीयकाः ।
बह्वृचाः श्रवणे कुर्युस्सिंहस्थोऽर्को भवेद्यदि' ॥ इति

ज्योतिषे — 'सङ्गवात् प्राक् श्रवणभं तदूर्ध्वं वसुभं यदि ।
अमृतं योगमित्युक्तं ग्रहणं स्यान्न दोषकृत् ॥

वारुणं भौमवारेण युक्तं मरणदं भवेत् ।
तस्मात्तं वर्जयेद्धीमान् मृत्युयोग उदीरितः ॥

श्रावण्यां वारुणं शस्तं पौर्णमास्यां विशेषतः ।
वर्जयेत्प्रोष्ठपद्यां तत् श्रावण्यान्तु न दोषकृत् ॥

मन्दवारं भौमवारं प्रोष्ठपद्यामथापि वा ।
पौर्णमास्यां संयुतश्चेदुपाकर्म न कारयेत्' ॥

श्रावण्यां मन्दभौमवारयोगे न दोषः । प्रोष्ठपद्यामिति विशेषोक्तेः ।

ज्योतिषे — 'तारवारतिथिजा गुणागुणा नात्र सूलविधिवैभवादतः ।
लग्नमात्रमनुकूलमुज्ज्वलं यत्तदेव विमृशेदुपाकृतौ' ॥ इति

ननु — 'वेदोपाकरणे प्राप्ते कुलीरस्थे दिवाकरे ।
उपाकर्म न कर्तव्यं कर्तव्यं सिंहयुक्तके' ॥

इति कर्कटे निषिद्ध्यत इति चेत्—सत्यम् ।

'नर्मदोत्तरतीरेषु कर्तव्यं सिंहयुक्तके ।
कुलीरेऽर्केऽपि कर्तव्यं नर्मदायास्तु दक्षिणे' ॥ इति

विषयप्रकाशिकायाम् 'कुलीरे रविसंयुक्ते उपाकुर्यात्तु दक्षिणे ।
नर्मदोत्तरतीरे तु कर्तव्यं सिंहगे रवौ ॥

श्रवणे श्रावणे मासि पौर्णमासी यदा भवेत् ।
उपाकर्म तदा कुर्यात् ब्रह्मतेजोऽभिवृद्धये ॥

पौर्णमास्याश्च नित्यत्वादापस्तम्बस्य शासनात् ।
मुक्त्वा भाद्रपदाषाढौ श्रावण्यामेव कारयेत् ॥

असिंहेऽर्के प्रोष्ठपद्यां श्रावणे ः व्यवस्थया ।
उपाकर्म तु कुर्वीत ग्रहणे च ःसूर्ययोः ॥

प्राधान्येन विधानाच्च मनुनाऽध्यायकर्मणि ।
प्रथमोपाकृतिश्चैव कर्तव्येत्याह गौतमः ॥

'श्रावण्यां प्रोष्ठपद्यां वे' ति मनूक्तवचनं श्रावण्यां दुष्टत्वे प्रोष्ठपद्यां प्रथमोपाकृतिविषयम्'।

यद्वा श्रावण्यामसम्भवे सर्वेषां प्रोष्ठपदि ग्रहणपरम्।

ज्योतिषे — 'सौरचन्द्रनभसोस्तु पूर्णिमा विश्वविष्णुवसुभेषु सङ्गता।
शस्यते यजुरुपाकृतौ न चेत् वारुणीत्रिकयुता नभस्ययोः'॥ इति

अयमर्थः। रवेः राश्यन्तरसङ्क्रमो मेषादिस्सौरो मासः। मेषादिषु दर्शान्तश्चैत्रादिश्चान्द्रः। एतदुभयनिबन्धना मधुमाधवादयः। अतो नभश्शब्दः कर्कटसिंहश्रावणपरः। सिंहकन्याभाद्रपदपरो नभस्यशब्दः। अतः कर्कटके सिंहे वा श्रावण्यामेवोपाकर्म कार्यम्। तत्रासम्भवे प्रोष्ठपद्यामिति। श्रावणी च श्रवण-श्रविष्ठानक्षत्रयोरन्यतरेण युक्ता।

ज्योतिषे — 'चित्रादितारकाद्वन्द्वैः पौर्णमासीसमन्वितैः।
मासाश्चैत्रादयो ज्ञेयाः त्रिभिष्षष्ठान्त्यसप्तमैः'॥ इति

एतत्प्रोष्ठपदग्रहणं ओषधिप्रादुर्भावाभावपरं केचित् व्याचक्षते—तच्चिन्त्यम्। तदभावेऽप्युपाकर्मणो नित्यत्येन सन्ध्यावन्दनवदावश्यकत्वेन कर्तव्यत्वात्। सिंहे सवितृस्थित्यभावविषयमित्यन्ये। तदसत्—देशान्तरविषयत्वात् सिंहार्कोपाकर्मणः। अतः श्रावण्यामेव ऋग्यजुरुपाकर्म कर्तव्यम्।

आत्रेये — 'गुरुभार्गवयोः मौढ्ये बाल्ये वा वार्धकेऽपि वा।
तथाऽधिमाससंसर्पमलमासादिषु त्रिषु॥
प्रथमोपाकृतिर्न स्याद्यदि कुर्याद्विनश्यति'॥ इति

अतः प्रथमेतरोपाकरणे न दोषगन्धः।

वसिष्ठः — 'अनुप्तबीजे नृपतौ विनष्टे
सूते मृतौ राष्ट्रसमाकुले च।
उत्सर्जनोपकरणे न कुर्यात्
ग्रस्तेन्दुसूर्ये गुरुणोऽस्तयाने'॥ इति

कालनिर्णये — ‘उपाकर्म च हव्यञ्च कव्यं पर्वोत्सवं तथा ।
उत्तरे नियतं कुर्यान्मलमासे विवर्जयेत्’ ॥ इति

काठकगृह्ये — ‘सोमयागादिकर्माणि, इत्यारभ्य,
महालयाष्टकश्राद्धे उपाकर्मादि कर्म यत् ।
स्पष्टमानविशेषाभ्यां विशेषाद्वर्जयेन्मले’ ॥ इति

हारीतः — ‘उपाकर्म तथोत्सर्गं काम्यमुत्सवमष्टकाः ।
मासवृद्धौ पराः कार्या वर्जयित्वा तु पैतृकम्’ ॥

इत्यादिवचनानि मौढ्यादिदोषदुष्टत्वे प्रथमोपाकृतिविषयाणीति केचित् । अथ तत्तच्छाखानुसारेण काल उच्यते ।

आत्रेयः — ‘बह्वृचां श्रावणे मासि श्रोण्यां शस्तमुपाकृतौ ।
पूर्णा विष्णौ वसौ विश्वे याजुषां स्यादुपाकृतिः ॥
पूर्णा विष्णौ प्रोष्ठपद्यां साम्नां दर्शे सहास्तभे ।
ऋक्सामोपाकृतिः हस्ते पञ्चम्यां श्रावणे शुभम्’ ॥ इति

श्रीधरीये — ‘श्रावण्यां पौर्णमास्यां स्याद्वेदोपाकरणक्रिया ।
‘पर्वण्यौदयिके कुर्युः श्रावण्यां तैत्तिरीयकाः ।
बह्वृचाः श्रवणे कुर्युः हस्तर्क्षे सामवेदिनः’ ॥ इति

गर्गः — ‘पर्वण्यौदयिके कुर्युः श्रावण्यां तैत्तिरीयकाः ।
बह्वृचाः श्रवणे कुर्युः ग्रहसङ्क्रान्तिवर्जिते’ ॥ इति

ग्रहः—ग्रहणम् । इदं प्रथमोपाकृतिविषयमिति वदन्ति ।

ज्योतिषे — ‘अर्धरात्रादधस्ताच्चेत्सङ्क्रान्तिर्ग्रहणन्तु वा ।
उपाकर्म न कुर्वीत परतश्चेन्न दोषकृत्’ ॥ इति
औदयिकशब्दं विवृण्वानाः स्मरन्ति ।
‘श्रावणी पूर्णमासी तु सङ्गवस्पृग्यदा भवेत् ।
तदेवौदयिकं ज्ञेयं नान्यदौदयिकं विदुः ॥’

श्रावणी पूर्णमासी तु सङ्गवात्परतो यदि ।
तदा त्वौदयिकं ज्ञेयं नान्यदौदयिकं भवेत् ॥

विधाने — 'सन्धिः सङ्गवतः प्राक् स्यात् पूर्वस्मिन् पर्वणि क्रिया ।
श्वोभूते समिदाधानमिति श्रावणिको विधिः' ॥

परेऽह्नि सङ्गवादूर्ध्वं पूर्णिमा श्रावणव्रते ।
सङ्गवस्पर्शने वापि हीना पूर्णा शुभावहा' ॥

निगमे — 'श्रावण्यां प्रोष्ठपद्यां वा प्रतिपत् षण्मुहूर्तकैः ।
विद्धा स्यात् छन्दसां कुर्यात्तत्रोपाकर्मसंज्ञितम् ॥

दिनद्वयं समाश्रित्य पौर्णमासी यदा भवेत् ।
परेद्युः सङ्गमं प्राप्य स्थिता सा कर्मणोऽर्हति' ॥ इति

'सन्धिस्सङ्गवतः पश्चात् अर्वाङ्मध्यन्दिनाद्यदि ।
तस्मिन्नुपाकृतिं कुर्यात्सद्यस्समिध आहुतीः' ॥ इति

'यस्मिन् देशे य आचारो न्यायदृष्टस्तु कल्पितः ।
स तस्मिन्नेव कर्तव्यो देशाचारस्स्मृतो भृगोः ॥

यस्मिन् देशे पुरे ग्रामे त्रैविद्ये नगरेऽपि वा ।
यो यत्र विहितो धर्मस्तं धर्मं न विचालयेन्' ॥ इति

आपस्तम्बः — 'येषां परम्पराप्राप्ताः पूर्वजैरप्यनुष्ठिताः ।
तत्र तान् नावमन्येत आचारैर्नैतरः पुनः' ॥ इति

देवलः — 'येषु देशेषु ये देवा येषु देशेषु ये द्विजाः ।
येषु देशेषु यच्छौचं यत्र यत्रैव मृत्तिकाः ॥

येषु देशेषु ये धर्माः धर्माचारस्तु यादृशः ।
तत्र तान् नावमन्येत देशाचारस्तु तादृशः' ॥ इति

**तत्राऽऽघारं हुत्वा अग्निं परिस्तीर्य शिष्यं वापयित्वा स्नातं पुण्याहं वाचयति ॥ ३ ॥**

अध्ययनयोग्यतासिद्ध्यर्थं आषाढोपाकर्मणा संस्करिष्यामि इति सङ्कल्प्य उपनयनाग्नौ लौकिकाग्नौ वा आघारं हुत्वा जलोरूर्ध्वं नापितेन वापयित्वा स्नातं पुण्याहं वाचयित्वा —

**प्रोक्षणैः प्रोक्ष्य अग्निं प्रदक्षिणं कारयित्वा कूर्चं ददाति ॥ ४ ॥**

**प्रोक्षणैः** आपो–हिरण्य–पवमानैः । 'राष्ट्रभृदि'ति कूर्चं ददाति ।

**आसयित्वा दक्षिणे 'शन्नोदेवी' रिति प्रोक्ष्य प्रधानाः पञ्चाशदाहुतीः आज्यचरुभ्यामक्षतधानाभ्यां वा जुहोति ॥ ५ ॥**

**अक्षताः** — क्षतिरहिताः पूर्णतण्डुलाः । भर्जिततण्डुलाः **धानाः** । वाशब्दो विकल्पार्थः ।

**'अग्नये पृथिव्यै ऋग्वेदाय यजुर्वेदाय सामवेदाय अथर्ववेदाय वायवे अन्तरिक्षाय दिवसाय सूर्याय दिग्भ्यः चन्द्रमसे अध्यायाय अनध्यायाय अध्यायदेवतायै अनध्यायदेवतायै श्रद्धायै मेधायै धारणायै आचार्याय छन्दसे ऋषिभ्यः सप्तर्षिभ्यः मुनिभ्यः गुरुभ्यः अहोरात्रेभ्यः अर्धमासेभ्यः मासेभ्यः ऋतुभ्यः संवत्सरेभ्यः परिवत्सरेभ्यः इदावत्सरेभ्यः इदुवत्सरेभ्यः ब्रह्मणे सावित्र्यै प्रजापतये उशनसे च्यवनाय बृहस्पतये सोमाय अङ्गिरसे दर्भाय शङ्खाय लिखिताय स्थूलशिरसे वैनतेयाय शिखिने ईश्वराय अधिकृताधिदेवताभ्यः – 'सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यं सनिमेधामयासिषं स्वाहे' ति पूर्ववत्प्राजापत्यव्रतबन्धं धातादिपञ्चवारुणं मूलहोमं स्विष्टाकारञ्च हुत्वा हुतशेषं 'अदितिस्ते कक्ष्या' मिति भोजयित्वा 'योगे योगे तवस्तर' मित्याचमनं ददाति ॥ ६ ॥**

**संवत्सरेभ्यः** इत्यादि । तिथ्यादियोगभेदेन संवत्सरभेदमाह **वृद्धगर्गः** ।

'यदा माघस्य शुक्लस्य प्रतिपच्चोत्तरायणम् ।
सहोदये प्रतिष्ठां हि सोमार्कौ प्रतिपद्यतः ॥

प्रथमे सोऽग्निदेवत्यो नाम्ना संवत्सरः स्मृतः ।
यदा माघस्य शुक्लस्य त्रयोदश्यामुदग्रविः ॥
युक्ते चन्द्रमसा रौद्रे वासवं प्रतिपद्यते ।
द्वितीयस्सोमदेवत्यः प्रोच्यते परिवत्सरः ॥
कृष्णे माघस्य दशमी वासवारौ दिवाकरौ ।
तदा तृतीयं सम्प्राहुरिदावत्सरकं जनाः ॥
सप्तमी माघशुक्लस्य वासवारौ दिवाकरौ ।
चतुर्थमिन्द्रदेवत्यं तमाहुरनुवत्सरम् ॥
यदुत्तरायणं कृष्णे चतुर्थ्यां तपसो भवेत् ।
इद्वत्सरस्स विज्ञेयः पञ्चमो मृत्युदेवतः ॥
नियतं पञ्चमस्यान्ते तदैव स्यात्सहोदयम्' ॥ इति

अत्र **पूर्ववद्व्रतबन्धमि**त्यादि । पूर्ववत् प्राजापत्यवत् । प्राजापत्यात् पूर्वमेव कर्तव्यताज्ञापनार्थं पूर्ववद्व्रतबन्धमित्युक्तम् । व्रतबन्धस्य प्राजापत्ये विद्यमानत्वात् अन्यत्रानुक्तत्वात् 'अन्तराप्येव मध्यापयितुकामो हुत्वाऽध्यापये' दिति सूत्रे उक्तत्वाच्च पूर्वमेव कर्तव्यम् ।

**अथ प्राङ्मुखमुदङ्मुखं वा ब्रह्माञ्जलिं कारयित्वा दक्षिण-मध्यासीनं वेदान् वेदौ वेदं वा सूत्रसहितमध्यापयति ॥ ७ ॥**

**प्राङ्मुखमुदङ्मुखं वा** । वाशब्देन प्रत्यङ्मुखं गृह्यते ।

'ब्रह्माञ्जलिकृतोऽध्याप्यो लघुवासा जितेन्द्रियः ।
संहत्य हस्तावध्येयं स हि ब्रह्माञ्जलिस्स्मृतः' ॥ इति **मनुः**

'**वेदान् वेदा**वित्यादि ।

'एकं त्रींश्चतुरो वेदान् वेदादावनुवाककान् ।
आद्यन्तयोः प्रणवयुतमुपाकर्मणि संपठेत्' ॥ इति

बोधायनः — 'त्रीनादितोऽनुवाकानधीयीरन्, काण्डादीन्वा सर्वानिति। शक्तश्चेत् द्वौ त्रयं वा सूत्रसहितमध्यापयेत्। अशक्तश्चेत् किञ्चिद्वा अधीयीत। मासम् नास्तिको भवेदिति वचनात्।

स्मृतिः — 'यस्य वेदश्च वेदी च विच्छिद्येते त्रिपूरुषम्।
स वै दुर्ब्राह्मणो नाम सर्वकर्मबहिष्कृतः'॥ इति

**अन्तराऽप्येवमध्यापयितुकामो हुत्वाऽध्यापयेत्॥ ८॥**

**अन्तराप्येवमिति**—आगाम्याषाढात्प्रागेव शिष्यमध्यापयितुकामः यस्मिन् कस्मिंश्चिन्मासे सुमुहूर्ते एवमाषाढोपाकर्महोमं हुत्वा अध्यापयेत्।

**अर्धपञ्चमानर्धषष्ठान्वा मासानध्यायानुपाकुर्वीत॥ ९॥**

**अत ऊर्ध्वं शुक्लेषु॥ १०॥**

**कामन्तु वेदाङ्गानि॥ ११॥**

**इति वेदोपाकरणम्॥ १२॥**

अर्धाधिकचतुरो वा अर्धाधिकपञ्च वा मासान् अध्ययनं कारयेत्। ततः परमुत्सर्जनं कुर्यात्।

बोधायनः – 'बलिहरणानुकृतिरुत्सर्गः। तैष्यां पौर्णमास्यां क्रियते। अपि वा माघ्याम्। सहान्तेवासिभिः ग्रामात् प्राचीमुदीचीं'मिति। प्रसङ्गादनध्ययनकाला उच्यन्ते।

स्मृत्यन्तरे — 'द्विधाऽनध्यायकालस्तु नित्यनैमित्तिकात्मकः।
भूताष्टप्रतिपद्दर्शपौर्णमास्यस्त्रयोदशी॥
चतुर्थी सप्तमी चास्तादूर्ध्वमर्वाङ्निशी तथा।
द्वियामात्मा निथिर्द्रेऽथ(?) रवेरस्तमयादथ॥
नवनाडिष्वथावूर्ध्वं चतुर्थी दृश्यते यदि।
पूर्वभागमनध्यायं रात्रेः कुर्यात्तु सप्तमीम्॥
त्रयोदशी तत्र भागे तं च कुर्यात्तथाविधम्।
महानिशाप्युभे सन्ध्ये नित्यानाहुर्महर्षयः'॥

आशौचे यावदाशौचं वेदानध्ययनं विदुः ।
शिष्यर्त्विग्गुरुबन्धुस्वशाखा श्रोत्रियसंस्थितौ ॥

ग्रस्तास्तमयसापिण्ड्यश्राद्धैकोद्दिष्टभोजने ।
उपाकर्मणि वेदानामनध्यायस्त्र्यहं भवेत् ॥

उत्सर्गे वाद्याध्ययने द्वितीये पक्षिणी दिनम् ।
आरण्यकस्य वेदस्य समाप्तौ तु त्र्यहं भवेत्' ॥ इति

**बोधायनः**—'मासप्रदोषे च नाधीयीरन् । सायंप्रातस्सन्ध्ययोश्च नाधीय महानिशि चेति ।

**वृद्धगार्ग्यः**— 'रात्रौ यामद्वयादर्वाक् सप्तमी वा त्रयोदशी ।
प्रदोषस्स तु विज्ञेयस्सर्वविद्याविगर्हितः ॥

प्रागस्तात्पञ्च वृद्धौ तु क्षये तिस्रस्समे चतुः ।
पञ्च वा चतुरो विद्धा स्वाध्यायस्योदयादनु (?) ॥

चतुर्दश्यां यदा पर्व प्रागस्तात् दृश्यते रवेः ।
अनध्यायं प्रकुर्वीत त्रयोदश्यान्तु धर्मवित् ॥

अभितश्चेदनध्यायस्तत्राप्येके प्रकुर्वते ।
सदैकेऽपि त्वनध्यायं मन्यन्ते तद्विदो जनाः' ॥

**कालनिर्णये**— 'काण्डप्रश्नानुवाकानां समाप्तौ काल इष्यते ।
दशाष्टमासस्तन्त्राणामनध्यायस्त्र्यहं भवेत् ॥

तन्त्राणि—संहिताशाखारण्यकानि ।

**मनुः**— 'उत्सर्गे प्रथमेऽध्यायेऽनध्यायस्त्र्यहं भवेत् ।
धारणाध्ययनादौ तु पक्षिणी दिनमेव वा ॥

चतुर्दश्यां यदा पर्व प्रागस्तात् दृश्यते रवेः ।
अनध्यायं प्रकुर्वीत त्रयोदश्यान्तु धर्मवित् ॥

अभितश्चेदनध्यायस्तत्राप्येके प्रकुर्वते ।
सदैकेपि त्वनध्याये मन्यन्ते तद्विदो जनाः' ॥ इति

प्रजापतिः — 'षष्ठी च द्वादशी चैव अर्धरात्रौ सनाडिका ।
प्रदोषे न त्वधीयीत तृतीये नवनाडिकाः ॥

भीष्मः — 'चातुर्मास्यद्वितीयासु मन्वादिषु युगादिषु ।
विषुवायनयोर्द्वन्द्वे शयने बोधने तथा ॥

पक्षादिके त्रयोदश्यां तस्यामेवोत्तरा तिथिः ।
दर्शस्पृक् चेद्दिवैव स्यादनध्यायः श्रुतावपि' ॥ इति

श्रुतौ — श्रवणद्वादश्यां पक्षद्वादशी स्वाध्यायदिनानि (?)। अधिका चेत् सा त्रयोदश्यनध्यायः । उत्तरा तिथिः—चतुर्दशी दिवाऽमावास्या चेत् त्रयोदश्यनध्यायः ।

शुचावूर्जे तपस्ये च या द्वितीया विधुक्षये ।
चातुर्मास्यद्वितीयास्स्युः प्रवदन्ति महर्षयः ॥

नभस्यद्वादशी शुक्लानध्यायाश्विनियुक् यदा ।
शक्रध्वजस्यचोत्ताना‌ऽवरोहणदिने शुभे' ॥ इति

मत्स्यपुराणे — 'आश्वयुक् शुक्लनवमी कार्तिकी द्वादशी तथा ।
तृतीया चैत्रमासस्य तथा भाद्रपदस्य च ॥

फाल्गुनस्याप्यमावास्या पुष्यस्यैकादशी सिता ।
आषाढस्यापि दशमी माघमासस्य पञ्चमी ॥

श्रावणस्याष्टमी कृष्णा आषाढस्यापि पूर्णिमा ।
कार्तिकी फाल्गुनी चैत्री ज्यैष्ठी पाञ्चदशी सिता ॥

मन्वन्तरादयश्चैते मुनिभिः परिकीर्तिताः ।
कार्तिके शुक्लनवमी द्वितीया माधवे सिता ॥

माघमासे पौर्णमासी नभस्ये च त्रयोदशी ।
एते युगादयः प्रोक्ता युगादिक्रमशो बुधैः ॥

मार्गशीर्षे च माघे च मासे प्रोष्ठे च फाल्गुने ।
इति तिस्रोऽष्टकास्तासु श्राद्धं कुर्वीत पार्वणम् ॥

कृष्णपक्षे तु पूर्वेद्युरन्वष्टक्यस्तथाऽष्टमी ।
उत्तरन्त्वयनं मेषः (नक्रः?)कटकं दक्षिणायनम् ।
विषुवे तु तुलामेषे गोलमध्ये तथाऽपरा ॥

गोलं — वलनम् ।

'पूर्वश्चोर्ध्वमनध्यायमहःसङ्क्रमणं निशि ।
दिवा पूर्वोत्तरा रात्रिरिति वेदविदो विदुः ॥

गजव्याघ्रान्तरे .... .... करिराजशशान्तरे ।
तदर्धं पशुमण्डूकनकुलाहिशुनां पुनः ॥

काकमूषिकमार्जारकुक्कुटक्रोष्टृपक्षिणाम् ।
ग्रामान्त्यरासभग्रामक्रोडानामन्तरे दिनम् ॥

.... .... कटोलूकध्वरासभमहाध्वना (?) ।
वेणुगीतमृदङ्गानां स्वने नाध्ययनं तथा ॥

'देशेऽशुचावात्मनि च विद्युद्गर्जितसम्भ्रमे ।
शिष्टे गृहागते चातिवाते वारं ततोऽन्विते ॥

पूति वाते च नीहारे सामबाणार्तिनिस्स्वने ।
.... .... .... अन्त्यपतितानाञ्च सन्निधौ ॥

नाधीयीताव्रतो हुत्वा जलान्तश्शकटान्तिके ।
अन्त्यवाटे ग्राममध्ये क्षेत्रे ग्रामस्य सीमनि ।
कृषिं कुर्वन् बहिर्ग्रामाद्रात्रावारुह्य पादपम्' ॥ इति

**बोधायनः** — 'यद्यनध्ययनमात्रेऽपि स्वाध्यायदिने द्विमुहूर्तादुपरि दृश्येत तन्निमित्तविषयेऽपि विषयः तमप्यनध्यायदिनं प्राहुरिति मैत्रेयसूत्रे पठ्यते ।
'यद्यध्ययनवर्जितः सन्ध्यायां नाधीयीत' ॥ इति

वृद्धमनुः — 'रात्रौ यामद्वयादर्वाग्यदि पश्येत्त्रयोदशीम् ।
सा रात्रिः सर्वकर्मघ्नी शङ्कराराधनं विना' ॥

वृद्धगार्ग्यः — 'त्रयोदशी यदा रात्रौ यामस्तत्र निशामुखे ।
प्रदोष इति विज्ञेयो ज्ञानार्थी मौनमाचरेत्' ॥

'भोजनं मैथुनं यानमभ्यङ्गं हरिदर्शनम् ।
अन्यानि शुभकार्याणि प्रदोषे नैव कारयेत्' ॥

स्कान्दे — 'त्रिमुहूर्तं प्रदोषस्स्याद्रवावस्तङ्गते ततः ।
मितसन्ध्यस्त्रयोदश्यां न सरेच्चात्मनोऽहितम्' ॥

'अह्नोऽष्टमांशसंयुक्तं रात्र्यर्धं मौनमाचरेत् ।
त्रयोदशी कलामात्रा दृष्टा यदि निशामुखे' ॥

'न प्रदोषे हरिं पश्येत् त्रयोदश्यामतत्क्रिया ।
यदि पश्येत्प्रमादेन द्वादशाब्दं न रक्षति' ॥ इति

इदं वचनं पाशुपतादिमतान्तरनिष्ठविषयम् ।

स्मृत्यन्तरे — 'अर्चकान् परिचारांश्च वैष्णवान् ज्ञानिनो यतीन् ।
दासीदासादिकांश्चैव प्रदोषो नैव बाधते' ॥ इति

वासाधिकारे — 'प्रदोषोक्तेषु दोषेषु पापं नैवेति शासनम् ।
असिते च सिते पक्षे प्रदोषो यदि सम्भवेत् ॥

श्रौतवद्देवमभ्यर्च्य वन्दनादीनि कारयेत् ।
आयुश्श्रीपुष्टिकामी च शत्रुसंहारमीयिवान् ॥

पुत्रक्षेत्रादिकामी च उदयास्तमयं चरेत् ।
स्त्रीभिश्च पुरुषैर्वापि भक्तियुक्तैस्सुखार्थिभिः ॥

यथाविधि च निर्वर्त्याः स्नानदानादिकाः क्रियाः ।
कालोऽस्ति दाने कालोऽस्ति यज्ञे कालोऽस्ति सज्जये' ॥

सर्वेशभजने कालं वीक्षमाणस्तु वञ्चितः ।
मौनं वाचो निवृत्तिस्स्यान्नान्यभाषा न संस्कृतम् ॥
नान्यदेवेरणं विष्णुं सदा ध्यायेच्च कीर्तयेत्' ॥ इति

मनुः — 'नैत्यके नास्त्यनध्यायो ब्रह्मसत्रं हि तत् स्मृतम् ।
ब्रह्माहुतिहुतं पुण्यं स्वाध्यायश्च वषट्कृतम्' ॥

'वेदोपाकरणे चैव स्वाध्याये चैव नैत्यके ।
नानुरोधोऽस्त्यनध्याये होममन्त्रेषु चैव हि ॥

रत्नावल्याम् — 'देवतार्चनमन्त्राणां नानध्यायस्सदा स्मृतः' ।
सङ्कल्पितानां मन्त्राणां वैदिकानां महामते! ।
नानध्यायनिरोधोऽस्ति जपकर्मणि सर्वदा ॥

नित्ये जपे च काम्ये च क्रतौ पारायणे तथा ।
नानध्यायोऽस्ति वेदानां ग्रहणे ग्रहणं स्मृतम्' ॥

स्मृत्यर्थसारे विशेषः — 'चतुर्दश्यष्टमीपर्वप्रतिपद्वर्जितेषु तु ।
वेदाङ्गन्यायमीमांसाधर्मशास्त्राणि चाभ्यसेत्' ॥

'अनध्यायस्तु नाङ्गेषु नेतिहासपुराणयोः ।
न धर्मशास्त्रेष्वन्येषु पर्वण्येतानि वर्जयेत्' ॥

'सौराणां राष्ट्रमन्त्राणां पैतृकाणाञ्च नैत्यके ।
जपहोमादिकार्येषु नानध्यायो न काम्यके' ॥

'प्रणवव्याहृतीनाञ्च गायत्र्याः शिरसस्तथा ।
नित्ये नैमित्तिके काम्ये व्रते यज्ञे क्रतौ तथा ॥

प्रवृत्ते काम्यकार्ये च नानध्यायस्स्मृतस्सदा ।
नानध्याये जपेद्विद्वान् रुद्रांश्चैव विशेषतः ॥
पौरुषं पावमानञ्च गृहीतनियमाद्दते' ॥ इत्यादि

**अथ श्रावणे पौर्णमास्यामग्निं परिस्तीर्य शिष्यं वापयित्वा पुण्याहं वाचयति ॥ १३ ॥**

**अथ** – उपाकर्मानन्तरम् । **श्रावणे पौर्णमास्यामित्यादि** ।

**स्मृत्यन्तरे** — 'उपाकर्मापराह्णे स्यादुत्सर्गः प्रातरेव तु ।
उपाकर्मणि चोत्सर्गे पूज्या दर्भमयर्षयः' ॥ इति

अध्यायोपाकर्म करिष्यामीति सङ्कल्प्य समिदाधानं कारयित्वा आघारं हुत्वा अग्निं परिस्तीर्य पुण्याहं वाचयित्वा ऋषिपूजां कुर्यात् ।

'स्नात्वा शिलामयमुनीन् पूजयेत् सोपवीतकः ।
पृथक्काण्डऋषीन् वेदान् छन्दांसि तर्पणे हुतौ' ॥

इति तर्पणे होमे च सवितारं काण्डर्षिमित्यारभ्य नाराशंसीरित्यन्तं कुर्यात् । होमं नेति केचित् । जलसमीपे अध्ययनोपक्रमः ।

**बोधायनः** — 'गौतमादिमुनीन् सप्त कृत्वा दर्भमयान् पुनः ।
पूजयित्वा यथाशक्ति तर्पयेद्वंशमुद्धरेत्' ॥ इति

अत्र तु तर्पणात्पूर्वमेव मेखलादिधारणम् ।

**स्मृत्यन्तरे** — 'उपाकर्मणि सन्धार्यमुपवीतादिकं नवम् ।
अनवं वा नवं वापि पुरातनमिह त्यजेत् ॥
पुरातनं क्षिपेत्तोये 'समुद्रं गच्छे'ति मन्त्रतः' ॥ इति

**स्मृत्यन्तरे** — 'मौञ्जीयज्ञोपवीतादीन् नवानेव तु धारयेत् ।
कटिसूत्रं नवञ्चैव नववस्त्रमुपाकृतौ ॥

तर्पणान्ते समिदाधानाग्नौ आघारं हुत्वा —

**पूर्ववदत्र व्रतबन्धं धातादिपञ्चवारुणं मूलहोमं स्विष्टकारञ्च जुहोति ॥ १४ ॥**

अन्तहोमश्च । यद्व्रतानुष्ठानावसरः तद्व्रतबन्धः ।

बहुशिष्यविषये गृह्यः —

'बहूनामपि शिष्याणां सहतन्त्रेण कारयेत् ।
व्रताहुतीर्न कुर्याद्वा तथा काण्डऋषीन् हुनेत् ॥
प्रत्यब्दं तद्बहिः कुर्यात् तद्व्रताहुतिभिर्विना' ॥ इति

समिदाधानाग्नावेव परेद्युः परिस्तरणादिकं कृत्वा सावित्र्या सहस्रसमिद्धोमं जुहुयात् ।

**अध्ययनपारायणायेति श्रावणम् ॥ १५ ॥**

अयं श्रावणहोमः अध्ययनपारायणार्थमुपक्रमार्थश्च । 'श्रावण्यां प्रोष्ठपद्यां वे'ति मनुस्मरणात् ।

**तथैव नैष्ठिको यावज्जीवमाश्रमधर्माण्यनुतिष्ठेत ॥ १६ ॥**

**तथा**—श्रावणहोमकर्म, यद्वा 'तर्पयेद्वंशमुद्धरे'दिति वचनात् तर्पणं वा नैष्ठिकः यावज्जीवमनुतिष्ठेत । **एवं** उक्तप्रकारेण आश्रमधर्मानपि । (सूत्रे एवमिति पाठ इति ज्ञायते)

**उपाकुर्वाणो वेदमधीत्य स्नायादिति विज्ञायते ॥ १७ ॥**

गायत्रब्राह्मप्राजापत्यानामुपाकुर्वाण इति व्यवहारः ।

हारीतः—'द्विविध एव ब्रह्मचारी भवति उपाकुर्वाणो नैष्ठिकश्चेति' ॥

अशक्तविषये स्मृतिः ।

'अप्यशक्तावेकदिने समाप्यानुक्रमेण वै ।
व्रतानि तन्त्रयित्वैव स्नातव्यमिति हि स्मृतिः' ॥

'पुरोदयादादित्यस्ये'त्यादिना सूत्रकारेण उत्तरत्र वक्ष्यते ।

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ द्वितीयप्रश्ने द्वादशः खण्डः समाप्तः ।



## अथ त्रयोदशः खण्डः

—*०*—

अथ समावर्तनं व्याख्यास्यामः ॥ १ ॥

अथेति । अथ – गुरुकुलवासानन्तरं, यद्वा – शुक्रियव्रतानन्तरम् । समावर्तनमित्यादि । ब्रह्मचर्यान्निवृत्तस्य विवाहयोग्यतासिद्ध्यर्थं समावर्तनसंस्कारं व्याख्यास्याम इत्यर्थः ।

हारीतकात्यायनौ — 'त्रयस्स्नातका भवन्ति विद्यास्नातको व्रतस्नातको विद्याव्रतस्नातकश्च' इति । यस्समाप्य वेदमसमाप्य व्रतानि समावर्तते स विद्यास्नातकः । यस्समाप्य व्रतानि असमाप्य वेदं समावर्तते स व्रतस्नातकः । उभयं समाप्य यस्समावर्तते स विद्याव्रतस्नातकः इति । अत एवोक्तं 'अशक्तावेकदिने' इत्यादि ।

उदगयने आपूर्यमाणपक्षे तिष्योत्तरेषु चित्राविशाखयोः हस्तरोहिण्योः मृगशिरसि वा नक्षत्रे यत्राऽपस्तत्रागारे गोष्ठे वा आघारं हुत्वा अग्निं परिस्तीर्य तथैव धातादिव्रतविसर्गं हुत्वा 'वयः सुपर्णा' इति वस्त्रावकुण्ठनं मोचयित्वा शुक्रियव्रतं विसर्जयति ॥ २ ॥

उदगयन इति । 'दक्षिणं त्वयनं रात्रिः देवानामुत्तरं त्वहः' इति । आपूर्यमाणपक्षे इति – पूर्वमुक्तम् ।

गृह्यः — 'विवाहपूर्वदिवसे स्नायाद्वा दक्षिणायने' । 'विवाहपूर्वदिवसे ऋक्षादीनविचार्य स्नायात्' इति चोक्तत्वात् शुभदिने दक्षिणायने वेति कैश्चिद्व्याख्यातम् । पूर्वेद्युः नान्दीमुखं कृत्वा यत्र जलान्तं तत्र गच्छेत् । नक्षत्राण्युपपादयति तिष्येत्यादिना । अत्र बोधायनः । 'वेदमधीत्य स्नास्यन्नि' त्यारभ्य 'रोहिण्यां स्नायादित्येकम् प्राजापत्यं वा एतन्नक्षत्रं तदस्य प्राजापत्य एव नक्षत्रे स्नातं भवत्यथो सर्वान् रोहान् रोह' तीति, तिष्ये स्नायादित्येकं बार्हस्पत्यं वा एतन्नक्षत्रं तदस्य बार्हस्पत्य एव नक्षत्रे स्नातं भवत्यथो भाग्योऽस्नानीति, हस्ते स्नायादित्येकं

सावित्रं वा एतन्नक्षत्रं तदत्र सावित्र एव नक्षत्रे स्नातं भवत्यथो सवितृप्रसूतोऽसानीति, चित्रायां स्नायादित्येकं ऐन्द्रं वा एतन्नक्षत्रं तदस्यैन्द्र एव नक्षत्रे स्नातं भवत्यथो चित्रोऽसानीति, विशाखयोश्च स्नायादित्येकं ऐन्द्राग्नं वा एतन्नक्षत्रं तदस्यैन्द्राग्न एव नक्षत्रे स्नातं भवत्यथो विशाखोऽसानीति, प्रजया पशुभिरित्येकेषामेतस्मिन्नापूर्यमाणपक्ष' इति ।

नववस्त्रञ्चोत्तरीयोपवीताजिनमेखलाः ।
सौवर्णे कुण्डले कण्ठाभरणञ्चाङ्गुलीयकम् ॥

गन्धपुष्पाञ्जनालेपान् मुकुरं छत्रमुत्तमम् ।
उपानहौ वेणुदण्डं वाहनं कर्षणाश्म च ॥

क्षुरं शरावं सशकृत् स्नानोद्वर्तनवस्तु च ।
मध्वाज्ये दधि च क्षीरं कांस्यं कूर्चञ्च विष्टरम् ॥
सम्भारान् मधुपर्कस्य युग्मदर्भेषु योजयेत् ॥

आघारमित्यादि—जातकाग्नावुपनयनाग्नौ लौकिकाग्नौ वा आघारं हुत्वा धातादिपूर्वं 'अरुणेभ्यः काण्डर्षिभ्यः सदसस्पतिं प्रवर्ग्यदेवताभ्य' इत्यादि हुत्वा ।

**'इमँस्तोम—त्र्यायुषं जमदग्नेः' इति प्रधानं पञ्चवारुणं मूलहोमान्तं हुत्वा 'उद्वयं तमसः—उदुत्यं' इत्येताभ्यामादित्यमुपस्थाय 'उदुत्तम' मित्युत्तरीयम् । 'अथात्वय' मिति सूत्रदण्डादीन्यप्सु विसृज्य 'शिवो नामासी' ति क्षुरमुपलेन कर्षयित्वा साक्षतैराधावैः 'शिवा न' इति शिरोऽञ्जयित्वा 'गोदानं—आप उन्दन्तु—ओषधे त्रायस्व—यत् क्षुरेण' इति चतुर्दिशं 'येनावप' दिति सर्वतो नखान्तं वपति ॥ ३ ॥**

अत्र सूत्रशब्दः कटिसूत्रपरः । यज्ञोपवीतत्यागस्य अयुक्तत्वात् । कर्षणं तीक्ष्णीकरणाय । 'शिवा न' इति साक्षतैराधावैः शिरोऽञ्जयित्वा 'गोदानमुनक्त्विति' गवादिदक्षिणाकरणमित्युत्तरत्र वक्ष्यते । 'ओषधे त्रायस्वैन' मिति साक्षतदर्भौ

प्रागुत्तराग्रौ मस्तके स्थापयित्वा 'स्वधिते मैनं हिंसी' रिति क्षुरं निधाय 'गोदान' मित्यादिभिः चतुर्भिर्मन्त्रैः यथाक्रमं चतसृषु दिक्षु सरोमाणं दर्भं छित्वा 'येनावप' दिति सर्वतस्समन्त्रकं कृत्वा नापिताय क्षुरं प्रयच्छति। सोऽपि शिखाभ्रूवर्जमानखं वपनं कुर्यात्।

**शगवे सानडुहशकृति (माता ब्रह्मचारी वा) केशादीन्गादाय 'इदमहममुष्य' इत्युदुम्बरदर्भयोर्मूले गोष्ठे वा गूहयेत् ॥ ४ ॥**

इदमहमित्यादि। 'अहं गोत्रस्य शर्मणः पाप्मानमुपगूहामि उत्तरोऽसौ-द्विषद्भ्यः' इति मन्त्र ऊह्यः। आयुष्याभिवृद्ध्यर्थं माता ब्रह्मचारी वेत्युक्तम्। अन्नादिसिद्ध्यर्थमुदुम्बरदर्भयोरित्युक्तम्। अत्र वपनप्रकारः श्रुतौ। 'तेऽसुरा ऊर्ध्वं पृष्ठेभ्यो नापश्यन्। ते केशानग्रेऽवपन्त। अथ श्मश्रूणि। अथोपपक्षौ। ततस्तेऽवाञ्च आयन्। पराभवन्। यस्यैवं वपन्ति। अवाङेति। अथो परैव भवति। अथ देवा ऊर्ध्वं पृष्ठेभ्योऽपश्यन्। त उपपक्षावग्रेऽवपन्त। अथ श्मश्रूणि। अथ केशान्। ततस्तेऽभवन्। स्वर्गं लोकमायन्। यस्यैवं वपन्ति। भवत्यात्मना। अथो सुवर्गं लोकमेति। अथैतन्मनुर्वप्त्रे मिथुनमपश्यत्। स श्मश्रूण्यग्रेऽवपत। अथोपपक्षौ। अथ केशान्। ततो वै स प्राजायत। प्रजया पशुभिः। यस्यैवं वपन्ति। प्रप्रजया पशुभिर्मिथुनैर्जायते' इत्यादि। 'केशश्मश्रु वपते, नखानि निकृन्तते, मृता वा एषा त्वगमेध्या यत्केशश्मश्रु, मृतामेव त्वचममेध्यामपहत्य यज्ञियो भूत्वा मेधमुपैती' ति च।

**श्रौते च**–'श्मश्रूण्यग्रे वपते अथोपपक्षावथ केशान् अभ्यन्तरं नखानि निकृन्तते। प्रथमं दक्षिणहस्तस्याङ्गुष्ठप्रभृति तथा सव्यस्य तथा पद्यानी' ति।

**स्मृत्यन्तरे**— 'नृपाज्ञया ब्राह्मणसम्मतेश्च बन्धस्य मोक्षे क्रतुदीक्षणे वा।
विवाहकाले मृतसूतके च सर्वेषु शस्तं क्षुरकर्म तेषु' ॥ इति।

'प्राङ्मुखः श्मश्रुकर्माणि कारयेत्तु समाहितः।
उदङ्मुखस्तु कुर्याद्वै तथाऽऽयुर्विन्दते महत् ॥
'पञ्चाशद्वत्सरादूर्ध्वं वपनं न विधीयते' ॥ इति केचित्

गार्ग्यः — ‘विना यज्ञं विना तीर्थं मातापित्रोर्मृतिं विना ।
य: कुर्यात्केशवपनं भवेत्स पितृघातुकः’ ॥

अनिच्छावपनं प्रोक्तं पञ्चाशद्वर्षतः परम् ।
पञ्चाशद्वर्षतः पूर्वमाधानादिनिमित्तकम् ॥

कक्षश्मश्रुशिरोरोम्णां वपनं दैवमूर्ध्वतः ।
अधस्ताद्राक्षसं चैषां श्मश्रुकक्षादि मानुषम् ॥

दैवतं देवतानाञ्च राक्षसं क्रूरकर्मणाम् ।
मानुषन्तु मनुष्याणां वपनं स्यात्त्रिधा मतम्’ ॥ इति

बोधायनः — ‘श्मश्रूण्येवाग्रे वपते । अथोपपक्षावथ केशान्, यथोपपादमितराण्यङ्गानि । एतद्ध्येषा जरसा पूर्वं आयुषि प्रयान्ति । पूर्वं आयुष्यन्नादा भवन्ति । य एवं विद्वांसो लोमानि वापयन्ते’ इति ।

**‘अन्नाद्याय व्यूहध्व’ मिति दन्तधावनमौदुम्बरेण काष्ठेन करोति ॥ ५ ॥**

**शीतोष्णाभिरद्भिः ‘आपोहिष्ठा’ इत्यादिभिः ऋग्भिः तिसृभिः स्नापयित्वा हिरण्यपवमानाभ्यां प्रोक्षयति ॥ ६ ॥**

शीतोष्णाभिरित्यादि । दैवमानुषयोर्व्यावृत्त्यर्थं शीतोष्णाभिरित्युक्तम् । बोधायनः । ‘उष्णासु शीता आनयति देवमानुषस्य व्यावृत्त्या’ इतीति । मसूरादिपिष्टैरङ्गपरिवर्तनं कारयित्वा आमलकाद्यैः शिरः प्रक्षाल्य हरिद्रामालिप्य शीतासूष्णा अपो निषिच्य एताभिः शीतोष्णाभिरद्भिः स्नापयति, धौतं परीधाप्य शीतोष्णाभिरद्भिः प्रोक्षयति । अत्रैतत् प्रधानं कर्म । अङ्गोद्वर्तनत्वादेः पूर्वमयुक्तत्वात् ।

**पूर्वं तथा प्रधानान् हुत्वा पुरोदयादादित्यस्य ब्राह्मव्रतं विसृज्य शुक्रियव्रतस्य ग्रहणविसर्गावित्येके ॥ ७ ॥**

अत्र यथोक्तप्रकारेण शुक्रियव्रतानुष्ठानं कर्तुमशक्तस्य पक्षान्तरमाह **पूर्वमित्या**दि । यथा प्राजापत्यादिषु, तथा शुक्रियव्रतस्य धातादिपूर्वमरुणेभ्यः काण्डर्षिभ्यः इत्यादिप्रधानान् हुत्वेत्यर्थः । **पुरोदया**दित्यादि–सूर्योदयात्पूर्वं शुक्रियव्रतस्य ग्रहणविसर्गौ । **एके** इति । सूत्रान्तरसंवादान्मुख्यत्वं ग्राह्यम्–एके मुख्यान्यकेवलाः इति निघण्टुः । अनेन शुक्रियव्रतस्य उदयात्पूर्वमेव कर्तव्यता ज्ञापिता । यद्वा–समानतन्त्रेण कर्तव्यता, एकदिनसाध्यता च ज्ञापिता भवति । 'वेदमधीत्य स्नास्यन्' 'प्रागुदयाद्वनं प्रविश्य' इत्यादिसूत्रान्तरेष्वपि ज्ञापितत्वात् ।

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने तात्पर्यचिन्तामणौ द्वितीयप्रश्ने त्रयोदशः खण्डः समाप्तः ।



## अथ चतुर्दशः खण्डः

'दिवि श्रय' स्वेत्यहते वाससी गन्धाभरणादीनि च प्रोक्ष्य 'नमो ग्रहाये' ति गन्धं गृहीत्वा प्राचीनमञ्जलिं कृत्वा 'अप्सरस्स्व' ति गात्राण्यनुलेपयेत् ॥ १ ॥

अनुलेपयेदिति । पश्चाद्भागेऽपि लेपयेत् इत्यर्थः ।

420

'तेजो वत्स्याव' इति वस्त्रं परिधाय 'सोमस्य तनूर' सीत्युत्तरीयं गृह्णाति ॥ २ ॥

वस्त्रधारणानन्तरं गन्धलेपो न्याय्यः । पाठ्यक्रमादर्थक्रमस्य बलीयस्त्वात् ।

पूर्ववन्मेखलादीन्याददीत ॥ ३ ॥

इदं द्वितीययज्ञोपवीतद्योतकमित्यवगम्यते । यज्ञोपवीतं विना कर्म कर्तुमयुक्तत्वात्, अत्र यज्ञोपवीतविधानाच्च ।

**बोधायनः**— 'अथ स्नातकस्यान्तर्वासः उत्तरीयं वैणवं दण्डं धारयेत् सोदकञ्च कमण्डलुं द्वितीययज्ञोपवीतमुष्णीषमजिन' मिति ।

**देवलः**— 'ब्रह्मचारिण एकः स्यात्स्नातस्य द्वे बहूनि वा ।
तृतीयमुत्तरीयं स्याद्वस्त्रालाभे तदिष्यते' ॥ इति

**व्यासः**— 'यज्ञोपवीतद्वितयं सोदकञ्च कमण्डलुम् ।
छत्रञ्चोष्णीषममलं पादुके चाप्युपानहौ ॥
कौपीनमहतं धार्यं खण्डं वा वस्त्रपार्श्वयुक् ।
यज्ञोपवीतमजिनं मौञ्जीं दण्डञ्च धारयेत्' ॥ इति

आभरणकुण्डलमणीन् बदरेण सुवर्णेन (वा) कृतानाच्छाद्य दर्भेण बध्नीयात् ॥ ४ ॥

• **बदरेणेत्यादि** । अत्र बदरबीजेन दारुणा सुवर्णप्रमाणेन—सुवर्णविकृतान् इत्यर्थः ।

सुवर्णप्रमाणञ्च —

'यवाष्टतुलितं माषं माषाष्टतुलितं कणम् ।
कणाष्टतुलितं मानं मानैस्स्वर्णं तथाऽष्टभिः ॥
पणं सुवर्णैर्विंशद्भिः निष्कं त्रिंशत्पणं स्मृतम्' ॥

इति लक्षितम् ।

**बोधायनः** — 'अथैतं बादरं मणिं सुवर्णोपधानं सूत्रे प्रोत्य' इति । किञ्च—'इन्द्रस्य सुषुवाणस्य दशधेन्द्रियं वीर्यं परापतत् । स यत्प्रथमं निरष्ठीवत् । तत्कलमभवत् । यद्द्वितीयं तद्बदरम्' इति श्रुतिर्बदरमहत्त्वं वदति । तथा—'यद्धिरण्यमाबध्नाति । ज्योतिर्वै हिरण्यम् । ज्योतिरेवास्मिन् ददाति । अथो तेजो वै हिरण्यम् । तेज एवात्मन् धत्ते' इति । 'अथो अपां वा एतत्तेजो वर्चः । यद्दर्भाः' इत्यादि श्रुतय हिरण्यदर्भयोः महत्त्वं च प्रतिपादयन्ति । तस्मादेव **आच्छाद्य दर्भेणेत्याद्युक्तम्** । दर्भेणाच्छाद्य पुनर्दर्भेण बध्नीयादित्यर्थः ।

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ द्वितीयप्रश्ने चतुर्दशः खण्डः
समाप्तः ।



## अथ पञ्चदशः खण्डः

तदग्नावुपरि धारयन् 'आयुष्यं वर्चस्यं - उच्चैर्वादि - शुनमहं - प्रियं मा - इयमोषधि' इति पञ्चभिर्जुहुयात् ॥ १ ॥

दर्भबन्धं स्पृष्ट्वा जुहुयात् ।

'सम्राजञ्च विराजञ्चे'त्यु(प?)दकपात्र परिप्लाव्य 'ऋतुभिरिष्ट्वार्तवैः - इयमोषधि' इति ताभ्यां कुण्डलाभ्यां दक्षिणादिकर्णयोरलङ्करोति ॥ २ ॥

मणिहोमानन्तरं बर्हिर्बन्धं विसृज्य, सम्राजञ्च विराजञ्चेत्युपपात्रे पात्रान्तरे परिप्लाव्य प्रक्षाल्येत्यर्थः ।

'शुभिके' इति मणिना कण्ठमामुच्य 'इदं ब्रह्म पुनीमह' इत्यङ्गुलीयकं गृहीत्वा 'यदाञ्जन'मिति दक्षिणं चक्षुः 'यन्मे मन' इति वामञ्चाञ्जनेनाञ्जयित्वा 'इमास्सुमनस' इति स्रजमादाय 'देवस्य त्वे'त्यादर्शमवेक्षेत ॥ ३ ॥

मणिनेत्यादि । मौक्तिकसुवर्णबदरमाल्या वा अवबद्ध्य । 'इदं ब्रह्म पुनीमहे' इति पवित्रं गृहीत्वा 'ब्रह्म पुना'त्वित्यङ्गुल्यां निक्षिपति । सुवर्णं पवित्रमिति श्रूयते । तथा 'दुर्वर्णोऽस्य भ्रातृव्यः । तस्मात्सुवर्णं हिरण्यं भार्यम् । सुवर्ण एव भवति । एनं प्रियं गच्छति । नाप्रिय' मिति च ।

स्मृत्यन्तरे — 'कौशं पवित्रं ताम्रं वा राजतं हैममेव वा ।
बिभृयाद्दक्षिणे पाणौ पवित्रञ्चोत्तरोत्तरम् ॥
अनामिकावृतं हेम तर्जन्या रौप्यमेव च ।
कनिष्ठिकावृतं खड्गं तेन पूतो भवेन्नरः' ॥ इति

'न रूप्यं केवलं धार्यं दैवे पित्र्ये च कर्मणि ।
अनामिकावृतं हेम तर्जन्यां धारयेच्च तदि'ति ॥

अञ्जने श्रुतिः -- 'इन्द्रो वृत्रमहन् तस्य कनीनिकाऽपतत्' इत्यारभ्य 'यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते। दक्षिणं पूर्वमाङ्क्ते सव्यं हि पूर्वं' मित्यादि। स्राजमादाय शिरसि धारयेदिति केचित्। 'शीर्ष्णस्स्रज' मिति मन्त्रलिङ्गात्।

स्मृतिरत्नावल्याम्–'शुभमिच्छन्नरः प्राज्ञः कण्ठे मालां न धारयेत्।
धारयेत्तां शिरस्येव सुगन्धां प्रियदर्शना' मिति ॥

छन्दोगब्राह्मणे। 'प्रजापतिः प्रजा असृजत। ता अस्मै श्रैष्ठ्याय नातिष्ठन्त, स आसां दिशः प्रजानाञ्च रसं प्रवृह्य स्रजं कृत्वा प्रत्यमुञ्चत्, ततोऽस्मै प्रजाः श्रैष्ठ्यायातिष्ठन्त। तेऽस्मै समानां श्रैष्ठ्याय य एवं वेद। सोऽकामयत इन्द्रो मे प्रजायां श्रैष्ठ्यस्स्यादिति तामस्मै प्रजां प्रत्यमुञ्चत। ततो वा इन्द्राय प्रजाश्श्रैष्ठ्यायातिष्ठन्त' इति।

स्मृतिः — 'स्वहस्तरचितां मालां स्वयं घृष्टञ्च चन्दनम्।
नापितस्य गृहे क्षौरं शक्रस्यापि श्रियं हरेत्' ॥ इति

स्कान्दे — सेतुमाहात्म्ये

'ततो वरस्य कण्ठे सा मालां चम्पकनिर्मिताम्।
निवेशयमास तदा जनमध्ये मनोरमाम्' ॥

इति कक्षीवतो मनोरमायाश्च पाणिग्रहणे एवमुक्तम्। अतः 'स्कन्धे मालां न धारये' दिति वचनं भगवत्प्रसादपाणिग्रहणादिशोभनव्यतिरिक्तकालान्तरविषयम्। किञ्च —

श्रीभागवते — 'त्वयोपभुक्तस्रग्गन्धवासोऽलङ्कारचर्चिताः।
उच्छिष्टभोजिनो दासास्तव मायां तरेमहि' ॥ इति

**तेनैव वैणवं दण्डमृजुं गृह्णीयात् ॥ ४ ॥**

तेनैव 'देवस्य त्वे' ति मन्त्रेण। 'तेजो वै वेणु' रिति श्रुतेः वैणवो दण्ड उक्तः। दण्डलक्षणञ्च —

'षडष्टपर्वं सलिलावगाहं मूलात्तु पुच्छं द्विगुणप्रमाणम् ।
कल्माषपुच्छं न च काकपृष्ठं एवंविधं दण्डमुशन्ति धार्यम्' ॥ इति

**'इन्द्रस्य वज्रोऽसि' इति 'वेगवेज' मिति त्रिरुन्मार्ष्टि ॥ ५ ॥**

**'उपानहा' वित्युपानहावारुह्य 'प्रजापतेः शरणं – भुवः पुनातु' इति द्वाभ्यां छत्रं गृह्णीयात् ॥ ६ ॥**

**'यो मे दण्डः' इति पुनर्दण्डं प्रमादे नष्टे आहरेत् ॥ ७ ॥**

प्रमादे – नाशे । पूर्वं गृहीतदण्डस्येत्यर्थः ।

**ततो वाहनं पूजयित्वा 'प्रतिष्ठेस्थो देवताना' मित्यभिमृश्य 'रथन्तरम' सीति रथं – 'अश्वोऽसि हयोऽसी' त्यश्वं – 'इन्द्रस्य त्वा वज्रेण' इति हस्तिनं वा आरुह्यावतरेत् ॥ ८ ॥**

देवरूपत्वादश्वादीनां पूजा । छन्दोरूपत्वाद्रथस्यैवमुक्तिः । वाजिविषये श्रुतिः । 'अर्वासि सप्तिरसि वाज्यसीत्याह । अग्निर्वा अर्वा । वायुस्सप्तिः । आदित्यो वै वाजी । एताभिरेवास्मै देवताभिर्देवरथं युनक्ति' इति । गजप्रशंसामाह स्मृतिः । यथा –

'सूर्यस्याण्डकपाले द्वे समानीय प्रजापतिः ।
हस्ताभ्यां परिगृह्याथ सप्तसामान्यगायत ॥
गायतो ब्रह्मणो यस्मात् समुत्पेतुर्मतङ्गजाः' ॥ इति

लब्धस्य वाहनादेर्मन्त्रः । अभावे गृह्यः —

'अभावे वाहनं भूमौ लिखित्वाऽऽरुह्य मन्त्रतः ।
अवरुह्यात्र जगतः तीर्थागमनवारण' मिति ॥

**(अथ) अभ्यागतमुत्तमं वरं 'कन्याप्रदः संस्रवन्त्वि' ति निरीक्ष्य 'यशोऽसि' इत्यावसथे विष्टरं कूर्चं पाद्यमर्घ्यमाचमनं मधुपर्कञ्च सङ्कल्पयति ॥ ९ ॥**

अथ तीर्थगमननिवारणानन्तरम् – **अभ्यागतमुत्तमं** – **मधुपर्कार्हम्** । मधुपर्कार्हाः —

**स्मृतौ** — ‘पितृव्यस्स्नातको राजा आचार्यश्श्वशुरो द्विजः ।
मातुला मधुपर्कार्हाः वत्सरादूर्ध्वमागताः’ ।। इति

विद्याव्रतस्नातक **एवोत्तमशब्देन** ग्राह्य इति केचित् । **आवसथः**– निवासार्थगृहम् । **विष्टरं** दर्भैः क्लृप्तमासनम् । **पाद्यम्**–पादप्रक्षालनार्थं जलम् । **अर्घ्यम्**–यथार्हद्रव्यसहितम् । वस्त्रोत्तरीयादि च सङ्कल्पयति । उक्तान् सम्भारान् सम्पाद्येत्यर्थः ।

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ द्वितीयप्रश्ने पञ्चदशः खण्डः
समाप्तः ।



## अथ षोडशः खण्डः



**तत्रोपवेश्य 'राष्ट्रभृदसी' ति कूर्चं दत्वा 'आपः पादा' विति पादौ सव्यादि प्रक्षालयति ॥ १ ॥**

तत्रेत्यादि । विष्टरे वरमासयित्वा । सव्यादीति । 'सव्यं दक्षिण-वामयो' रित्युक्तेः इह दक्षिणमित्यर्थः । तथा च बोधायनः । 'दक्षिणं पादं पूर्वं ब्राह्मणाय प्रसारयति सव्यं शूद्राय, पुमानभिषिञ्चति स्त्री प्रक्षालयति विपरीत-मित्येके' इति ।

**स धौतपादः 'विराज' इति स्वहस्तेन तद्धस्तं परिमृश्य तेनात्मनो हृदयमभिमृशति ॥ २ ॥**

सः — वरः । तद्धस्तम् — कन्याप्रदस्य हस्तम् । अत्र अप उपस्पृश्य अनन्तरं वस्त्रोत्तरीयादीनि दद्यात् ।

**ततो 'मयि तेज' इत्यर्घ्यमाचमनीयञ्चाऽऽददीत ॥ ३ ॥**

तत्र मन्त्रावृत्तिः । आददीत स्नातकः ।

**'आमागन् यशसा' इति मधुपर्कं दद्यात् ॥ ४ ॥**

कन्याप्रदः पयोदधिघृतमित्यादि संसृज्य कांस्यादिपात्रे गृहीत्वा स्नातकाय दद्यात् ।

**'देवस्य त्वे' ति प्रतिगृह्य 'यन्मधुनो मधव्य' मिति प्राश्नी-यात् ॥ ५ ॥**

**प्रतिगृह्य** — वर इति भावः ।

**'योगे योगे तवस्तर' मित्याचम्याऽऽचामेत् ॥ ६ ॥**

तूष्णीं दत्तमाचमनं मयि तेज इत्यादाय योगे योगे तवस्तरमित्याचामे-दिति केचित् ॥

**अमृतापिधानम' सीति धेनुं बद्ध्वा 'गौर्धेनुः' इति तृणमुष्टिं प्रदाय 'गौरस्यपह' तेति संस्पृश्य 'तत्सुभूत' मिति विसर्जयति ॥ ७**

धेनुं बध्द्वा—प्रमुखे स्थापयित्वा। विसर्जयतीति। तत्र **बोधायनः**। 'तदङ्गुष्ठेन महानाम्न्या चोपसङ्गृह्य इमां दिशं निरस्यति' इति। महानाम्न्या—मध्यमाङ्गुल्या। इमां दिशं—प्राचीम्। 'गौरस्यपहतेति—मम चामुष्य' चेति मन्त्रयोरूहं केचिद्वदन्ति।

**'विराज' इति पाद्यदानं 'आमागन् यश' सेत्याचमनं 'अमृतोपस्तरणमसी' ति मधुपर्कदानं 'पृथिवी' इति तस्यान्नसङ्कल्पनं 'अमृतापिधानम' सीति मुखवासदानमिति विशेषः इत्येके ॥ ८ ॥**

पक्षान्तरेण मधुपर्कदानप्रयोगमाह **'विराज'** इत्यादिना। अन्यत् सर्वं पूर्ववदित्यर्थः।

ननु— 'एका गौर्न प्रतिग्राह्या न द्वितीया कदाचन।
सा चेद्विक्रयमापन्ना दहत्यासप्तम कुलम्' ॥

इत्यादिप्रमाणैः गोप्रतिग्रहनिषेधः श्रूयते। कथमत्र प्रतिग्रह उच्यते इति चेत्—सत्यम्।

'हिरण्यं भूमिमश्वं गामन्नं वासस्तिलान् घृतम्।
अविद्वान् प्रतिगृह्णानो भस्मीभवति दारुवत्' ॥

इति विदुषो ग्रहणमङ्गीक्रियते ॥

**श्रूयते च**—'तस्य वा अग्नेर्हिरण्यं प्रतिजग्रहुषः। अर्धमिन्द्रियस्यापाक्रामत्। तदेतेनैव प्रत्यगृह्णात्। तेन वै सोऽर्धमिन्द्रियस्यात्मन्नुपाधत्त। अर्धमिन्द्रियस्यात्मन्नुपाधत्ते। य एवं विद्वान् हिरण्यं प्रतिगृह्णति। अथ योऽविद्वान् प्रतिगृह्णाति। अर्धमस्येन्द्रियस्यापक्रामति। तस्य वै सोमस्य वासः प्रतिजग्रहुषः। तृतीयमिन्द्रियस्यापाक्रामत्। तदेतेनैव प्रत्यगृह्णात्। तेन वै स तृतीयमिन्द्रियस्यात्मन्नुपाधत्त। य एवं विद्वान् वासः प्रतिगृह्णाति। अथ योऽविद्वान् प्रतिगृह्णाति। तृतीयमस्येन्द्रियस्यापक्रामति। तस्य वै रुद्रस्य गां प्रतिजग्रहुषः।

चतुर्थमिन्द्रियस्यापाक्रामत । तामेतेनैव प्रत्यगृह्णात् । तेन वै स चतुर्थमिन्द्रियस्यात्मन्नुपाधत्त । चतुर्थमिन्द्रियस्यात्मन्नुपाधत्ते । य एवं विद्वान् गां प्रतिगृह्णाति । अथ योऽविद्वान् प्रतिगृह्णाति । चतुर्थमस्येन्द्रियस्यापक्रामति । तस्य वै वरुणस्याश्वं प्रतिजग्रहुषः । पञ्चममिन्द्रियस्यापाक्रामत् । तमेतेनैव प्रत्यगृह्णात् । तेन वै स पञ्चममिन्द्रियस्यात्मन्नुपाधत्त । य एवं पञ्चममिन्द्रियस्यात्मन्नुपाधत्ते । य एवं विद्वानश्वं प्रतिगृह्णाति । अथ योऽविद्वान् प्रतिगृह्णाति । पञ्चममस्येन्द्रियस्यापक्रामति । तस्य वै प्रजापतेः पुरुषं प्रति जग्रहुषः । षष्ठमिन्द्रियस्यापाक्रामत् । तमेतेनैव प्रत्यगृह्णात् । तेन वै षष्ठमिन्द्रियस्यात्मन्नुपाधत्त । षष्ठमिन्द्रियस्यात्मन्नुपाधत्ते । य एवं विद्वान् पुरुषं प्रतिगृह्णाति । अथ योऽविद्वान् प्रतिगृह्णाति । षष्ठमस्येन्द्रियस्यापक्रामति । तस्य वै मनोस्तल्पं प्रतिजग्रहुषः । सप्तममिन्द्रियस्यापाक्रामत् । तमेतेनैव प्रत्यगृह्णात् । तेन वै स सप्तममिन्द्रियस्यात्मन्नुपाधत्त । सप्तममिन्द्रियस्यात्मन्नुपाधत्ते । य एवं विद्वाँस्तल्पं प्रतिगृह्णाति । अथ योऽविद्वान् प्रतिगृह्णाति । सप्तममस्येन्द्रियस्यापक्रामति । तस्य वा उत्तानस्याङ्गीरसस्यत् प्राण प्रतिजग्रहुषः । अष्टममिन्द्रियस्यापाक्रामत् । तदेतेनैव प्रत्यगृह्णात् । तेन वै सोऽष्टममिन्द्रियस्यात्मन्नुपाधत्त । अष्टममिन्द्रियस्यात्मन्नुपाधत्ते । य एवं विद्वानप्राणत् प्रतिगृह्णाति । अथ योऽविद्वान् प्रतिगृह्णाति । अष्टममस्येन्द्रियस्यापक्रामति । यद्वा इदं किञ्च । तत्सर्वमुत्तानस्त्वाङ्गीरसः प्रत्यगृह्णात् । तदेनं प्रतिगृहीतं नाहिनत् । यत्किञ्च प्रतिगृह्णीयात् । तत्सर्वमुत्तानस्त्वाङ्गीरसः प्रतिगृह्णात्वित्येव प्रतिगृह्णीयात् । इयं वा उत्तान आङ्गीरसः । अनयैवैनत्प्रतिगृह्णाति । नैनँ हिनस्ती' ति । किञ्च । 'यस्त्वामविद्वान् प्रतिगृह्णाति तां प्रतिगृह्णीयादेकासि न सहस्रमेकां त्वा भूतां प्रतिगृह्णामि न सहस्रमेका मा भूता विश मा सहस्रमित्येकामेवैनां भूतां प्रतिगृह्णाति न सहस्रं य एवं वेद स्योनासि सुषदा सुशेवा स्योनामाविश सुषदामाविश सुशेवामाविशेत्याह स्योनेनैनँ सुषदा सुशेवा भूता विशति नैनँ हिनस्ति' इति ।

'मन्त्रार्थज्ञो जपन् जुह्वन् तथैवाध्यापयन् द्विजः ।<br>स्वर्गलोकमवाप्नोति नरकञ्च विपर्ययेत्' ॥

इति मन्त्रार्थज्ञस्य दोषलाघवमुच्यते ।

'सान्तानिकं यक्ष्यमाणमध्वगं सार्ववेदसम् ।
गुर्वर्थं पितृमात्रर्थं स्वाध्यायाद्युपपादिनम् ॥
नवैतान् स्नातकान् विद्यात् ब्राह्मणान् धर्मभिक्षुकान्' ॥ इति

**बोधायनः**—अथास्यातिथयो भवन्ति गुरोस्समानवृत्तिः वैखानसो गतश्रीः स्नातको राजा वा धर्मयुक्तस्तेषामभ्युत्थायासनं पाद्यमर्हणमर्घ्यं वा प्रयुञ्जीत । यास्त-स्त्वौषधयस्सन्ति ता देयाः । अन्यां वा प्रतिक्रियां कुर्वीत' इति । मधुपर्कप्रदानस्य कालान्तरेष्वपि कर्तव्यतावश्यकत्वस्य सत्त्वात् प्रकरणादिहोपन्यासः कृतः ।

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ द्वितीयप्रश्ने षोडशः खण्डः
समाप्तः ।



## अथ सप्तदशः खण्डः

--*०*--

**'द्यौस्त्वा ददा' त्विति ब्राह्मणान् भोजयित्वा 'इन्द्राणी वर्चः' इत्येषां प्रणाम कुर्यात् ॥ १ ॥**

**पुण्याहं वाचयित्वा आज्येन व्याहृतीर्हुत्वा बान्धवैस्सह भुञ्जीत ॥ २ ॥**

**मधुधाम्नोश्चोदनायां तोयपिष्टौ प्रतिनिधी गृह्णीयात् ॥ ३ ॥**

यज्ञशिष्टमांसव्यतिरिक्तमांसस्य कलौ निषिद्धत्वात् मधुधामनी गृह्णीयादित्युक्तम् । मद्ये दोषबाहुल्यमाह मनुः ।

'सुरा वै मलमन्नानां पाप्मा च मलमुच्यते ।
तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न पिबेत्सुराम् ॥

गौडी माध्वी च पैष्टी च विज्ञेया त्रिविधा सुरा ।
यथैवैका न पातव्या तथा सर्वा द्विजोत्तमैः ॥

यक्षरक्षःपिशाचानां मद्यं मांसं सुराऽऽसवम् ।
तद्ब्राह्मणेन नात्तव्यं देवानामश्नतां हविः ॥

अमेध्यञ्चापतेन्मत्तो वैदिकं वाप्युदाहरेत् ।
अकार्यमन्यत्कुर्वाणो ब्राह्मणो मदमोहितः ॥

तस्य कायगतं ब्रह्म मद्येनाप्लाव्यते सकृत् ।
तस्य व्यपैति तद्ब्रह्म शूद्रत्वञ्च निगच्छति' ॥ इति

पिष्टशब्दोऽपूपार्थः ।

**यस्मात् 'आपो वेद्यर्थं सम्भारार्थं पृथिवी वनस्पतयः पश्वर्थमोषधय' इति वेदानुशासनं भवति ॥ ४ ॥**

'आपो वै सर्वा देवताः सर्वार्थसाधकाः' 'आपो वा इदं सर्वं' मित्याद्याः श्रुतयः ॥ वेद्यभावे पृथिवी प्रतिनिधिः । यत्र वेद्यां विहितं कर्म तदलाभे पृथिव्यामेव कुर्यात् । विहितसम्भाराभावे वनस्पतयः । यत्राष्टकादौ पशुर्विहितः तत्रौषधयः । ओषधीपिष्टकृतापूपादय इत्यर्थः ॥

स्मृतिः — 'वेद्यर्थं पृथिवी सृष्टा सम्भारार्थं वनस्पतिः ।
पश्वर्थमोषधिर्ग्राह्या इति वेदानुशासनम्' ॥ इति

'काम्ये प्रतिनिधिर्नास्ति नित्यनैमित्तिके तु सः ।
काम्ये व्यतिक्रमादूर्ध्वं नित्ये प्रतिनिधिं विदुः ॥

न च प्रतिनिधिं देशकालयोरित्यथापरे ।
न भावस्य प्रतिनिधिर्न भावान्तरमिष्यते' ॥ इति

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने तात्पर्यचिन्तामणौ द्वितीयप्रश्ने सप्तदशः खण्डः

समाप्तः ।



## अथ अष्टादशः खण्डः

अथ प्राणाग्निहोत्रविधानम् ॥ १ ॥

स्वयंज्योतिरात्मा यजमानो बुद्धिः पत्नी हृदयपुण्डरीकं वेदिः रोमाणि दर्भाः प्राणो गार्हपत्योऽपान आहवनीयो व्यानोऽन्वाहार्य उदानस्सभ्यस्समान आवसत्थ्य इति पञ्चाग्नयो भवन्ति । जिह्वादीन्द्रियाणि यज्ञपात्राणि रसादयो विषयाः हवींष्यस्य फलमोमित्यर्थावाप्तिः । तदेवमेकाध्वर्युः आत्मयज्ञं संकल्प्य 'अमृतोपस्तरणम' सीत्यन्नं प्रोक्ष्य अन्नसूक्तेनाभिमृश्य 'ऊर्जस्कर' मित्याधावं पीत्वा अङ्गुष्ठानामिकामध्यमैरादायान्नं 'प्राणाय स्वाहा—अपानाय स्वाहा—व्यानाय स्वाहा — उदानाय स्वाहा — समानाय स्वाहा' इति पञ्चाहुतीः पात्रं स्पृशन्नेव हुत्वा 'ऊर्जस्कर' मिति पुनश्चाऽधावं पीत्वाऽश्नीयात् ॥ २

स्वशरीरस्थेषु प्राणादिरूपेण स्थितेष्वग्निषु अन्नादिद्रव्यहोमविधौ अग्निहोत्रसाम्यं दर्शयितुं यजमानादिकल्पनमाह स्वयं ज्योतिरित्यादिना । स्वयंज्योतिः स्वयंप्रकाशः परमात्मा—यजमानः । 'एष एव साधु कर्म कारयति तम् । यमेभ्यो लोकेभ्य उन्निनीषति' इत्यादि ।

'स्मृतिरतीतविषया मतिरागामिसंज्ञिता ।
यस्तु कर्तारमात्मानं मन्यते साध्वसाधुनोः ।
तस्य दोषवती प्रज्ञा न तत्त्वज्ञेति मे मतिः' ॥ इति

यद्वा — 'परमात्मशरीरभूतः प्रत्यगात्मा सोऽग्निहोत्रस्य यजमान इति ध्यातव्य'मिति । अनेन जीवात्मनः कर्तृत्वाभिमाननिरास उच्यते । पत्नी — बुद्धिः । 'प्रज्ञा त्रैकालिकी ज्ञेया बुद्धिस्तात्कालिकी मता' इति स्मृतिः । तात्कालिकमनोव्यापाररूपा बुद्धिः । बुद्धेः पत्नीत्वपरिकल्पनं जीवात्मनः करणाधिपत्वश्रवणादुच्यते । 'स कारणं करणाधिपाधिपः' इति श्रुतिः । हृदय-

पुण्डरीकं हृदयकमलं वेदिः। पञ्चाग्नयो भवन्तीति। सर्वतृप्तिप्रदत्वादग्नित्वेन परिकल्पनम्। छान्दोग्ये यथा—'तद्यद्भक्तं प्रथममागच्छेत् तद्धोमीयं स यां प्रथमामाहुतिं जुहुयात् प्राणाय स्वाहेति प्राणस्तृप्यति, प्राणे तृप्यति चक्षुस्तृप्यति चक्षुषि तृप्यत्यादित्यस्तृप्यति आदित्ये तृप्यति द्यौस्तृप्यति दिवि तृप्यन्त्यां यत्किञ्चित् द्यौश्चादित्यश्चाधितिष्ठतस्तत्तृप्यति, तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेन इति। अथ यां द्वितीयां जुहुयात्तां जुहुयाद्व्यानाय स्वाहेति व्यानस्तृप्यति, व्याने तृप्यति श्रोत्रं तृप्यति श्रोत्रे तृप्यति चन्द्रमास्तृप्यति चन्द्रमसि तृप्यति दिशस्तृप्यन्ति दिक्षु तृप्यन्तीषु यत्किञ्च दिशश्च चन्द्रमाश्चाधितिष्ठन्ति तत्तृप्यति, तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति। अथ यां तृतीयां जुहुयात् तां जुहुयादपानाय स्वाहेत्यपानस्तृप्यति अपाने तृप्यति वाक् तृप्यति वाचि तृप्यन्त्यामग्निस्तृप्यत्यग्नौ तृप्यति पृथिवी तृप्यति पृथिव्यां तृप्यन्त्यां यत्किञ्च पृथिवी चाग्निश्चाधितिष्ठतस्तत्तृप्यति तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति। अथ यां चतुर्थीं जुहुयात्तां जुहुयात्समानाय स्वाहेति समानस्तृप्यति समाने तृप्यति मनस्तृप्यति मनसि तृप्यति पर्जन्यस्तृप्यति पर्जन्ये तृप्यति विद्युत्तृप्यति विद्युति तृप्यन्त्यां यत्किञ्च विद्युच्च पर्जन्यश्चाधितिष्ठतस्तत्तृप्यति तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति। अथ यां पञ्चमीं जुहुयात्तां जुहुयादुदानाय स्वाहेत्युदानस्तृप्यति उदाने तृप्यति त्वक् तृप्यति त्वचि तृप्यन्त्यां वायुस्तृप्यति वायौ तृप्यत्याकाशस्तृप्यात्याकाशे तृप्यति यत्किञ्च वायुश्चादित्यश्चाधितिष्ठतः तत्तृप्यति तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति। स य इदमविद्वानग्निहोत्रं जुहुयात् यथाऽङ्गारानपोह्य भस्मनि जुहुयात्तादृक् तत्स्यात्। अथ य एतदेवं विद्वानग्निहोत्रं जुहोति तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु हुतं भवति। तद्यथेषीकातूलमग्नौ प्रोतं प्र दूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते' इति। एवं सर्वेषां प्रतिपाद्याविदुषो भस्मनि हुताहुतिवद्वैफल्यमुक्त्वा विदुषस्तु इषीकातूलदृष्टान्तमुखेन शुष्कार्द्रपापानां विनाशश्च प्रतिपाद्यते। अतः उपनयनादारभ्य प्राणाग्निहोत्रं कर्तव्यम्।

छान्दोग्ये — 'यथेह क्षुधिता बाला मातरं पर्युपासते ।
एवं सर्वाणि भूतानि अग्निहोत्रमुपासते' ॥ इति

**यज्ञपात्राणि** — स्रुवादयः । **रसादयः** — षड्रसाः लवणाम्लकटुतिक्तमधुरकषायाः । यद्वा 'रस्यास्स्निग्धाः स्थिरा हृद्या' इत्युक्ताः । **विषयाः** शब्दस्पर्शरूपरसगन्धाः हवींषि — **छान्दोग्ये** पञ्चाग्निविद्यायामुक्ताः । यथा — 'योषा वा व गौतमाग्निः तस्या उपस्थ एव समित् यदुपमन्त्रयते स धूमो योनिरर्चिः यदन्तःकरोति तेऽङ्गाराः अभिनन्दा विस्फुलिङ्गाः तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति तस्या आहुतेर्गर्भस्सम्भव'तीति । तत्रैव—'स यदशिशिषति यत्पिपासति यन्न रमते ता अस्य दीक्षाः । अथ यदश्नाति यत्पिबति यद्रमते तदुपसदैरेति । अथ यद्धसति यज्जक्षति यन्मैथुनं चरति स्तुतशस्त्रैव तदेति । अथ यत्तपोदानमार्जवमहिंसा सत्यवचनमिति ता अस्य दक्षिणाः' इति । पुरुषविद्यावात् 'तस्यैवं विदुषो यज्ञस्यात्मा यजमानश्श्रद्धा पत्नी' त्यादि श्रुत्यर्था अत्रानुसन्धेयाः ।

एवम्भूतस्याग्निहोत्रस्य फलमोमित्यर्थावाप्तिः । 'ओमिति ब्रह्मे' ति **श्रुतिः** । 'ओमितीदं सर्वे' मिति सर्वव्याप्तिर्वा । **तदेवं** — ब्रह्मप्राप्तिकारणत्वात् एकेनैव यजमानेन कर्तुं शक्यम् । **आत्मयज्ञम्** — अन्तर्यामिणः परमात्मनः समाराधनमिति सङ्कल्प्य, **अन्नसूक्तेन** — 'अहमस्मी' त्यभिमृश्य । अन्नाभिमन्त्रणं परिषेचनानन्तरम् । अत्र परिषेचनमनुक्तमिति न शङ्क्यम् । प्राणस्य नग्नत्वनिवृत्त्यर्थं परिषेचनं श्रूयते । **छान्दोग्ये** । 'स होवाच किं मे वासो भविष्यतीत्याप इति होचुः तस्माद्वा एतदशिष्यन्तः अध(पुर)स्ताच्चोपरिष्टाच्चाद्भिः परिदधति, लम्भुको ह वासो भवत्यनग्नो ह भवति' इति । **यजुषि** — 'ऋतन्त्वा सत्येन परिषिञ्चामीति सायं परिषिञ्चति, सत्यन्त्वर्तेन परिषिञ्चामीति प्रातः' इति परिषेचनं विधीयते । स्मृतौ च 'सायं प्रातर्द्विजातीनामशनं विधिचोदितम् । नान्तरा भोजनं कुर्यादग्निहोत्रसमो विधिः' इति । **पुनश्चाधावं पीत्वे**त्यादि । 'तस्मादशिष्यन्नाचामेदशित्वाऽऽचामेदेतदेव । तदन्नमनग्नं कुरुते' इति **श्रुतिः** ॥

वृद्धशातातपः — 'परिधानमपोशानं पूर्वमाच्छादनं परम् ।
भवत्यन्नमनग्नं हि सोत्तरीयं तथाऽमृत' मिति ॥

भोजनकाले आसनादिनियमे मनुः ।

'भोजने मूर्तिहोमे च कुर्यादुत्कुटिकासनम्' । इति

तथा — 'आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः ।
श्रियं प्रत्यङ्मुखो भुङ्क्ते मृतं भुङ्क्ते उदङ्मुखः' ॥ इति

तथा व्यासः — 'पञ्चार्द्रो भोजनं कुर्यात्प्राङ्मुखो मौनमास्थितः ।
हस्तौ पादौ तथैवास्यमेषु पञ्चार्द्रता मता' ॥ इति

बोधायनः — 'मन्त्रेण च द्विराचम्य गोमयेनोपलेपिते ।
भस्मना वारिणा वापि मण्डलं कारयेत्ततः ॥

चतुरश्रं त्रिकोणं वा वर्तुलञ्चार्धचन्द्रकम् ।
कर्तव्यमानुपूर्व्येण ब्राह्मणादिषु मण्डलम् ॥
पात्रावस्थानतो न्यूनमधिकं वा न कारयेत्' ॥ इति

स्मृत्यन्तरे — 'पलाशपद्मिनीचूतमधूककदलीदलैः ।
एतेष्वनिन्दितैः पत्रैः भोक्तव्यं तुल्यजातिभिः' ॥ इति

अत्रिः — 'कदलीगर्भपत्रे च पद्मपत्रे जलास्पृशि ।
वल्लीपलाशपत्रे च भुक्त्वा चान्द्रायणं चरेत्' ॥ इति

व्यासः — 'वटार्काश्वत्थपर्णेषु कुम्भितिन्दुकपर्णयोः ।
कोविदारकरञ्जेषु भुक्त्वा चान्द्रायणं चरेत्' ॥ इति

प्रचेताः — 'मृण्मये पर्णपृष्ठे वा कार्पासे तान्तवेऽश्मनि ।
नाश्नीयान्न पिबेच्चैव न करे न तथाऽञ्जलौ ॥

एक एव तु यो भुङ्क्ते विमले कांस्यभाजने ।
पलान्विंशतिकादर्वागत ऊर्ध्वं यथेच्छया ॥

सौवर्णे राजते कांस्ये पात्रे भस्माम्बुशोधिते ।
कदल्यादौ सुपात्रे वा भुञ्जीयात्प्रयतो नरः' ॥ इति

व्यासः — 'अन्नं दृष्ट्वा प्रणम्यादौ प्राञ्जलिः कथयेत्ततः ।
अस्माकं नित्यमस्त्वेतदिति भुक्त्वाऽभिवन्दयेत्' ॥ इति

गृह्यः — 'अन्नं प्रोक्ष्यामृतोऽपीति अभिमृश्यान्नसूक्ततः ।
अभिघार्य च गायत्र्या प्रोक्ष्यान्नं परिषिञ्चति' ॥ इति

'सत्यन्त्वर्तेनेति प्रातस्सायमेवामृतादिना ।
अमृतोपस्तरणमसीत्यूर्जस्करमिति ब्रुवन् ॥

जलं पिबेत्करगतमिदमाचमनं स्मृतम् ।
सोदकं दक्षिणं पाणिं कुर्यादन्नं प्रदक्षिणम् ॥

अपेयं तद्भवेदापः पीत्वा चान्द्रायणं चरेत् ।
आपोशनं करे कृत्वा कृत्वा पात्रे तिलोदकम् ॥

श्वानमूत्रेण तत्तुल्यं पुनः पूरयते यदि ।
अकृत्वाऽऽपोशनं भुक्त्वा गायत्र्यष्टशतं जपेत्' ॥ इति

अत्रिः — 'भूमौ पादौ प्रतिष्ठाप्य यो भुङ्क्ते वाग्यतः शुचिः ।
भोजने भोजने विप्रस्त्रिरात्रफलमश्नुते' ॥ इति

व्यासः — 'स्वयं प्रक्षाल्य पात्राणि दत्तमन्नन्तु भार्यया ।
भोक्तव्यं सघृतं सोष्णं हितं पथ्यं मितं तथा' ॥ इति

श्रीमहाभारते — 'हृदि ध्यायन् हरिं तस्मै निवेद्यान्नं समाहितः ।
मध्यमानामिकाङ्गुष्ठैः गृहीत्वाऽन्नमिदं पुनः ॥

प्राणाय चेत्यपानाय व्यानाय च ततः परम् ।
उदानाय समानाय स्वाहेति जुहुयात्क्रमात्' ॥ इति

भारद्वाजः — 'निवेद्य हृदि तद्भयः परिषेकादिपूर्वकम् ।
जुहुयादाहुतीर्विष्णौ प्राणापानादिसंज्ञके' ॥ इति

नुः —

'पूजयेदशनं नित्यमद्याच्चैतदकुत्सयन् ।
दृष्ट्वा हृष्येत्प्रसीदेच्च प्रतिनन्देच्च सर्वशः ॥
पूजितं ह्यशनं नित्यं बलमूर्जं प्रयच्छति ।
अपूजितन्त तद्भुक्तमुभयन्तु हिनस्ति तत्' ॥

मध्यमा च तृतीयका ।
वि प्रशस्ताः पात्रधारणे' ॥ इति

ाति जिह्वा प्रणाहुतीर्द्विजः ।
कुर्यात्प्राणाहुतिमतन्द्रितः' ॥ इति

ह्मश्च नमो नारायणेति यः ।
भुङ्क्ते स याति परमां गतिम्' ॥

नं कुटुम्बाश्रमवासिनाम् ।
यो भुञ्जतां सह भोजने' ॥ इति

हुंकारेणापि नश्यति ।
दोषस्तस्मात्तां नियतश्चरेत्' ॥ इति

ऽमौनी प्रहृष्टस्संयतेन्द्रियः ।
प्रो न चोच्छिष्टानि चावपेत् ॥

त्र नासौ मौनं समाचरेत् ।
ीन्तु सर्वत्रैवमभोजने ॥
न्ति सन्ततिश्चाचिराद् ध्रुवम्' ॥ इति

य ब्राह्मणा ये तु भुञ्जते ।
न तुल्यं गोमांसभक्षणम्' ॥

त्र ग्रसेदेकैकशः पुनः ।
पिण्डः आत्मोच्छिष्टस्स उच्यते ॥

मुखनिस्सृतमेव च ।
ोयाद्भुक्त्वा चान्द्रायणं चरेत्' ॥ इति

शौनकः — 'जिह्वयैव ग्रसेदन्नं रदनेन न संस्पृशेत् ।
एवं प्राणाहुतिं हुत्वाऽऽश्नीयादूर्जस्करन्त्विति ॥

अष्टौ ग्रासा मुनेर्भक्ष्या षोडशारण्यवासिनः ।
द्वात्रिंशत्तु गृहस्थस्य अमितं ब्रह्मचारिणः ॥

प्राग्द्रवं पुरुषोऽश्नीयान्मध्ये तु कठिनाशनः ।
अन्ते पुनर्द्रवाशी तु बलारोग्यान्नमुञ्चति' ॥ इति

स्मृत्यन्तरे — 'भुञ्जीत प्राङ्मुखो भूत्वा पूर्वन्तु मधुरं रसम् ।
लवणाम्लौ तथा मध्ये कटुतिक्तौ ततः परम् ॥

काले प्रीणयते भुक्तं साम्यमन्नं न बाधते ।
लघु प्राक् जीर्यते क्षिप्रं स्निग्धोष्णं बलवर्धनम् ॥

क्षिप्रभुक्तं तथा चान्नं धातुसाम्यं करोति हि ।
मात्रशस्सर्वकालं स्यान्माले ह्यन्नाः प्रवर्तिताः ॥

द्वौ भागौ पूरयेदन्नैः जलेनैकं प्रपूरयेत् ।
मारुतस्य प्रचारार्थं चतुर्थमवशेषयेत्' ॥ इति

वर्ज्यानाह पराशरः — 'लशुनं गृञ्जनञ्चैव पलाण्डुकवकानि च ।
वृन्ताकनालिकेराम्बुलवणान्युष्कराणि (?) च ॥

निर्यासप्रभवास्सर्वा हिङ्गुद्रव्यं विनैव तु ।
भूस्तृणं शिग्रुकञ्चैव तथा शाकमुदुम्बरम्' ॥ इ

सुमन्तुः — 'कूश्माण्डं बृहतीञ्चैव तरुणीमूलकं तथा ।
श्रीफलञ्च कलिङ्गञ्च धात्रीं प्रतिपदादिषु ॥

* शिरः कपालमार्द्रञ्च नखचर्म तिलानि च ।
आम्लमामलकञ्चैव अष्टम्यादिषु वर्जयेत् ॥

---

* शिरो—नरिकेलम् । कपालम् - अलाबु – आर्द्र – कलञ्जिकाय । पटोल
गोरुचिक्कुडु । चर्म – चम्पककाय । (इति आन्ध्रभाषायाम्).

उदुम्बरफलञ्चैव तिलानपि तथैव च ।
यदिच्छेत्स्वर्गगमनमष्टम्यादिषु वर्जयेत्' ॥

धात्रीफलं भानुवारे श्रीफलं शुक्रवासरे ।
शमीफलं मन्दवारे श्रीकामः परिवर्जयेत्' ॥ इति

विष्णुः — 'वर्जयेच्छ्वेतवृन्ताकमलाबुं वर्तुलं तथा ।
छत्राकं लशुनञ्चैव उद्भिदञ्चासुरीं तथा' ॥ इति

देवलः — 'वार्ताककतकालिङ्गबिंबोदुम्बरभिस्सटाः ।
भक्षयन् पतितस्तु स्यादपि वेदान्तगो द्विजः' ॥ इति

पैठीनसिः — 'वृन्ताकनालिकापोतीकुसुम्बाश्मन्तकानि च ।
उपोतकं तथा वल्लीं रक्तशिग्रुञ्च वर्जयेत् ॥

अवलीढं श्वमार्जारवान्तकुक्कुटमूषिकैः ।
गोघ्रातं शकुनोच्छिष्टं दन्तकाष्ठञ्च कामतः ॥

पिशुनानृतिनाञ्चैव केशकीटसमन्वितम् ।
एकेन पाणिना दत्तं शूद्रदत्तं न भक्षयेत् ॥
घृतं तैलञ्च लवणं पानीयं पायसं तथा' ॥ इति

शङ्खः — 'दधि भक्ष्यञ्च शुक्तेषु सर्वञ्च दधिसम्भवम् ।
[1] ऋजीषपक्वं भक्ष्यं स्यात्सर्पियुक्तमिति स्थितिः' ॥

अपूपाश्च करम्भाश्च धाना [2] वाटकसक्तवः ।
शाकं स्निग्धमपूपञ्च सूपं कृसरमेव च ॥

यवागूं पायसञ्चैव यच्चान्यत्स्नेहसंयुतम् ।
सर्वं पर्युषितं भोज्यं शुक्तञ्चेत्परिवर्जयेत् ॥

---

1. ऋजीषपक्वम् - ऊष्मपक्वम् । पिष्टकरम्भाः - दधिमिश्रसक्तवः ।
2. वटका मापभेदः ।

अन्नं पर्युषितं भोज्यं स्नेहाक्तं चिरसंस्थितम् ।
अस्नेहा अपि गोधूमयवगोरसविक्रियाः ' ॥ इति

शङ्खः — 'अपूपास्सक्तवो धानाः तक्रं दधि घृतं मधु ।
एतत्पण्येषु भोक्तव्यं भाण्डलेपं न चेद्भवेत् ' ॥ इति

'अन्तर्दशाहे गोक्षीरं विवत्सायाश्च गोः पयः ।
'घृतात्फेनं घृतान्मण्डं पीयूषमथवार्द्रगोः ।
सगुडश्च मरीच्यक्तं तथा पर्युषितं दधि ' ॥ इति

'अवालुकगतं तोयमस्नेहासिक्तमोदनम् ।
असूत्रग्रथितं पुष्पं त्रयं पर्युषितं स्मृतम् ' ॥ इति

व्यासः — 'यस्तु पाणितले भुंक्ते यस्तु फूत्कारसंयुतम् ।
शयनस्थो न भुञ्जीत न पाणिस्थं न चासने ॥

नार्द्रवासा नार्द्रशिरा न चायज्ञोपवीतवान् ।
न प्रसारितपादस्तु पादारोपितपाणिमान् ॥

न बाहुसव्यसन्धिश्च न च पर्यङ्कमास्थितः ।
न वेष्टितशिराश्चापि नोत्सङ्गकृतभाजनः ॥

नैकवस्त्रो दुष्टमध्ये सोपानत्कस्सपादुकः ।
न चर्मोपरिसंस्थश्च चर्मावेष्टितपार्श्ववान् ' ॥

'ग्रासशेषं न चाश्नीयत् पीतशेषं पिबेन्न च ।
शाकमूलफलेक्षूणि दन्तभेदैर्न भक्षयेत् ॥

'वृथा न विकिरेदन्नं नोच्छिष्टः कुत्रचिद्व्रजेत् ।
शूद्रभुक्तावशिष्टन्तु नाद्याद्भाण्डस्थितन्तु वा ॥

न भिन्नकांस्ये सन्ध्यायां श्राद्धान्नं शिशुभिस्सह ।
दम्पत्योर्भुक्तशेषन्तु भुक्त्वा चान्द्रयणं चरेत् ॥

बृहस्पतिः — 'नृणां भोजनकाले तु यदि दीपो विनश्यति ।
पाणिभ्यां पात्रमादाय भास्करं मनसा स्मरन् ॥

पुनश्च दीपिकां दृष्ट्वा तच्छेषं भोजयेन्नरः ।
पुनः पुनर्न भोक्तव्यं भुक्त्वा पापैः विलिप्यते' ॥

नान्धकारे न चाकाशे न च देवालयादिषु ।
शून्यालये देवगृहे विहायसि जलाशये' ॥ इति

वृद्धमनुः — 'न पिबेन्न च भुञ्जीत नरस्सव्येन पाणिना' ॥ इति

अत्रिः — 'पयः करनखाग्रेषु निस्सृतं न पिबेद्द्विजः ।
उद्धृत्य वामहस्तेन पयःपानं सुरासमम् ॥

व्यासः — 'शब्देनापः पयः पीत्वा शब्देन घृतपायसम् ।
शब्देनापोशनं पीत्वा सुरापानसमं भवेत् ॥
आस्येन न पिबेत्तोयं करेणैव पिबेच्च तत्' ॥ इति

शातातपः — 'अग्रासनोपविष्टस्तु यो भुङ्क्ते प्रथमं द्विजः ।
बहूनां पश्यतां सोऽज्ञः पङ्क्त्या हरति किल्बिषम्' ॥ इति

गोभिलः — 'एकपङ्क्त्युपविष्टानां विप्राणां सहभोजने ।
यद्यकोऽपि त्यजेत्पात्रं नाश्नीयुरितरे त्वनु ॥
मोहात्तु भुङ्क्ते यस्तत्र स सान्तपनमाचरेत्' ॥ इति

पैठीनसिः — 'लवणं व्यञ्जनञ्चैव घृतं तैलं तथैव च ।
लेह्यं पेयञ्च शोष्यञ्च हस्तदत्तं न भक्षयेत्' ॥ इति

आपस्तम्भः — 'घृतं तैलञ्च लवणं पानीयं पायसं तथा ।
भिक्षा च हस्तदत्ता च न ग्राह्या यत्र कुत्रचित् ॥

तस्मादन्तर्हितान्नं हि पर्णेन च तृणेन च ।
प्रदद्यान्न तु हस्तेन नायसेन कदाचन ॥
अपक्वं स्नेहपक्वञ्च हस्तेनैव प्रदापयेत्' ॥ इति

व्यासः — 'उदक्यामपि चण्डालं श्वानं कुक्कुटमेव च ।
भुञ्जानो यदि पश्येत्तु तदन्नन्तु परित्यजेत्' ॥ इति

कात्यायनः — 'चण्डालपतितोदक्यावाक्यं श्रुत्वा न भोजयेत् ।

गौतमः — 'एकपङ्क्त्युपविष्टानां दुष्कृतं यद्दुरात्मनाम् ।
सर्वेषां तत्समं तावद्यावत्पङ्क्तिर्न भिद्यते ॥

अग्निना भस्मना चैव स्तम्बेन सलिलेन वा ।
द्वारेण चैव मार्गेण पङ्क्तिभेदस्तृणेन च' ॥ इति

वृद्धमनुः — 'पीत्वाऽपोशनमश्नीयात्पात्रदत्तमगर्हितम् ।
भार्याभृतकदासेभ्यः उच्छिष्टं शेषयेत्ततः ॥

व्यासः — 'नाद्यात्सूर्यग्रहात्पूर्वमह्नि सायं शशिग्रहात् ।
ग्रहकाले तु नाश्नीयात् स्नात्वाऽश्नीयाच्च मुक्तयोः ॥

मुक्ते शशिनि भुञ्जीत यदि न स्यान्महानिशा ।
अमुक्तयोरस्तगयोर्यदि दृष्ट्वा परेऽहनि' ॥ इति

वसिष्ठः — *'ग्रस्तोदये विधोः पूर्वं योऽहर्भोजनमाचरेत् ।
सूर्यग्रहे तु नाश्नीयात्पूर्वं यामचतुष्टयम् ॥
चन्द्रग्रहे तु यामांस्त्रीन् बालवृद्धातुरैर्विना' ॥ इति

व्यासः — 'अपराह्णे न मध्याह्ने मध्याह्ने न तु सङ्गवे ।
भुञ्जीत सङ्गवे चेत्स्यात् न पूर्वं भुजिमाचरेत् ॥

अर्कद्विपर्वरात्रौ च चतुर्दश्यष्टमी दिवा ।
एकादश्यामहोरात्रं भुक्त्वा चान्द्रायणं चरेत् ॥

विष्णुधर्मे — 'अहोरात्रं न भुञ्जीत चन्द्रसूर्यौ ग्रहास्तगौ ।
मुक्तिं दृष्ट्वा तु भोक्तव्यं स्नानं कृत्वा ततः परम् ॥

---

* ग्रस्तोदये तथा सूर्ये न रात्रौ भोजनं चरेत् ।

'रवेस्त्रीणि पवित्राणि रविस्सङ्क्रान्तिसप्तमी (?) ।
त्रिषु मध्ये द्वयं ग्राह्यं न वारव्रतिको भवेत्' ॥

वृद्धगार्ग्यः — 'सन्ध्याकाले यदा राहुर्ग्रसते शशिभास्करौ ।
तदहर्नैव भुञ्जीत रात्रावपि कदाचन ॥

आरनालञ्च तक्रञ्च पाथेयं घृतपाचितम् ।
उदकञ्च कुशैश्छन्नं न दुष्येद्राहुसूतके' ॥ इति

एकादशीविषये —

वसिष्ठः — 'परमापद्गतो वापि न भुञ्जीत हरेर्दिने ।
न तिर्यग्धारयेत्पुण्ड्रं नान्यं देवं प्रपूजयेत् ॥

न भोक्तव्यं न भोक्तव्यं सम्प्राप्ते हरिवासरे ।
एकादशेन्द्रियैः पापं यत्कृतं भवति प्रिये! ॥

एकादश्युपवासेन तत्सर्वं विलयं व्रजेत् ।
स ब्रह्महा स गोघ्नश्च स्तेयी च गुरुतल्पगः ॥

एकादश्यान्तु यो भुङ्क्ते पक्षयोरुभयोरपि ।
एकादशीव्रतं तच्च नित्यं काम्यमिति द्विधा ॥

नित्यं सदा यावदायुर्न कदाचिदतिक्रमेत् ।
फलाश्रुतेर्विस्पृहया तन्नित्यमिति कीर्तितम् ॥

सायुज्यादिफलश्रुत्या तच्च काम्यमितीरितम् ।
शुद्धा चैवापि विद्धा च द्विविधा परिकीर्तिता' ॥

द्धा — शुद्धा — अधिकैकादशी — अधिकद्वादशीति

ा नन्दा वर्जिता श्रवणान्विता ।
र्वेविद्धां सऋक्षां वा परित्यजेत्' ॥ इति

वेधलक्षणम् ब्रह्माण्डे 'वेधश्चैवातिवेधश्च महावेधस्तथैव च ।
योगवेधश्च चत्वार उपवासस्य दूषकाः ॥

प्रभासन्दर्शनात्पूर्वं सार्धन्तु घटिकात्रयम् ।
एकादश्यन्वितं प्राक्तु वेध इत्युच्यते बुधैः ॥

उदयात् प्राक् द्विघटिका एकादश्यन्विता भवेत् ।
पूर्वन्तु दशमी व्याप्तमतिवेधस्स उच्यते ॥

सूर्यस्य दर्शनादर्वाक् घटिकार्धेन दृश्यते ।
महावेधन्तु तं विद्यात्सूर्यमण्डलदर्शने ।
दशमी दृश्यते या तु योग इत्युच्यते बुधैः' ॥ इति

अरुणोदयः — 'उदयात् प्राक् चतस्रस्तु घटिका अरुणोदयः' ।

गोभिलः — 'अरुणोदयवेलायां दशमी यदि सङ्गता ।
सम्पृक्तैकादशीं तां तु मोहिन्यै दत्तवान् विभुः ॥

माधवीये — 'उदयात्प्राक् त्रिघटिका व्यापिन्यैकादशी यदा ।
सम्पृक्तैकादशी नाम त्यजेद्धर्मविवृद्धये ॥

यदि सूर्योदयादर्वाक् दृश्यते दशमी कला ।
सा दुष्टैकादशी नाम त्यजेद्विष्णुपरायणः ॥

आदित्योदयवेलायामारभ्याषष्टिनाडिकाः ।
सङ्कीर्णैकादशी नाम त्याज्या धर्मफलेप्सुभिः ॥

राज्यपुत्रसमृद्ध्यर्थं द्वादश्यामुपवासयेत् ।
तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणम्' ॥ इति

गारुडे — 'अर्धरात्रात्परं यत्र दशमी विद्यते कला ।
कपालवेध इत्याहुराचार्या ये हरिप्रियाः ॥

हरिप्रियाः वैखानसा इति पूर्वमेव निरूपितम् ।

अर्धरात्रात्परं यत्र दशमी विद्यते कला ।
वैखानसविदो विप्रा मद्भक्तास्तमुपोषणम् ॥

न कुर्युरिति सम्बन्धः । कपालवेधस्य अरुणोदयवेधस्य च भेदाभावात् ॥

नारदः — 'अर्धरात्रात्परे विद्धा विद्धा वाप्यरुणोदये ।
अपि षड्घटिभिर्युक्ता सदा तां परिवर्जयेत् ॥

सुराबिन्दुसमायुक्तं गङ्गातोयं यथा तथा ।
सुरा वै गन्धमात्रेण दूरतः परिवर्जिता ॥

तथैव दशमीविद्धाप्यर्धरात्रेऽरुणोदये ।
यद्वाऽरुणोदये न स्याद्दशमी तु कलापरा ॥
सा शुद्धैकादशी प्रोक्ता यदि न स्यात्परेऽहनि' ॥ इति

शौनकः — 'अर्धरात्रे तु केषाञ्चित् दशम्या वेध इष्यते ।
अरुणोदयवेलायां नावकाशो विचारणे ॥

कपालवेध इत्याहुराचार्या ये हरिप्रियाः ।
न तत्र मम मतं यस्मात्त्रियामा रात्रिरिष्यते' ॥ इति

इदं वचनमरुणोदयवेधस्य नियमेन परिहरणीयत्वद्योतकम् ।

भविष्यपुराणे — 'दशमी तु कला काष्ठा अर्धरात्रेऽरुणोदये ।
विद्धा त्याज्या वैष्णवेन शुद्धाप्याधिक्यसम्भवे ॥

स्कान्दे — 'अरुणोदयकाले तु दशमी यदि दृश्यते ।
वैष्णवैः प्रतिहर्तव्यं तद्दिनैकादशीव्रतम् ॥

'अरुणोदयकाले तु दशमी यदि दृश्यते ।
न तत्रैकादशी कार्या धर्मकामार्थनाशिनी ॥

दशमीशेषसंयुक्तो यदि स्यादरुणोदयः ।
नैवोपोष्यं वैष्णवेन तस्मिन्नेकादशी व्रतम् ॥

नारदः — 'दशमीशेषसंयुक्ता गान्धार्या समुपोषिता ।
तस्याः पुत्रशतं नष्टं तस्मात्तां परिवर्जयेत् ॥

'अतिवेधमहावेधौ ये चान्यतिथिषु स्मृताः ।
सर्वेऽप्यवेधा विज्ञेया वेधस्सूर्योदये मतः ॥

सूर्यसिद्धान्ते — 'सर्वाश्चैताश्च तिथयः उदयादेव याः स्थिताः ।
शुद्धा इति हि विज्ञेया षष्टिर्नाड्यो हि वै तिथिः ॥

नारदीये — 'आदित्योदयवेलायामारभ्याषष्टिनाडिकाः ।
या तिथिस्सा तु शुद्धा स्यात् सर्वतिथ्या अयं विधिः ॥

आदित्योदयमारभ्य पुनस्तस्योदयावधि ।
एकादशी सा विशुद्धा विद्धा स्याद्दशमीयुता ।
सर्वास्वपि तिथिष्वेव शुद्धाविद्धात्वनिश्चयः ॥

इति योगवेधस्य त्याज्यता स्मर्यते । एवं सामन्येनोक्तत्वाद्योगवेध एव परिहर्त
इति चेत् — तदसत् ॥

'प्रतिपत्प्रभृतयस्सर्वा उदयादोदयं रवेः ।
सम्पूर्णा इति विज्ञेया हरिवासरवर्जिताः' ॥

इति स्कान्दवचनात्,

'अरुणोदयं यदा शुद्धं दशमीगन्धवर्जितम् ।
सर्वपापविनिर्मुक्तमुपोष्यं तद्दिनं हरेः' ॥

इति भविष्यपुराणवचनाच्च एकादशीव्यतिरिक्तविषयत्वागतेर्योगवेधस्य ।

'मोहिन्यास्तु वचश्श्रुत्वा सुरास्सर्वे महीपते ।
सश्चिन्त्य सुचिरं कालं दिगम्बरपुरोगमाः ॥

यमस्य दर्शनार्थाय वैकुण्ठव्यसनाय च ।
पाषण्डिनां विवृद्ध्यर्थं पापसञ्जननाय च ॥

ऊचुस्ते मोहिनीं देवा लोकसम्मोहनाय च ।
दत्तं मोहिनि! ते स्थानं प्रत्यूषे दशमी यदि ।
दुष्टं हरिदिनोपेतं दशम्याः प्रान्तमेव हि ' ॥ इति

पाद्मे च — 'दशम्याः प्रान्तविद्धं हि दत्तं जम्भासुराय तु ।
ब्रह्मणा परितुष्टेन धूर्जटेर्वचनेन च ॥

न प्रार्थयेयमुदयं न चैव हरिवासरम् ।
वैनतेयोदयं मह्यं दीयतां विबुधेश्वराः ॥

सूर्योदये विहीनन्तु दशम्याः प्रान्ततः स्थितम् ।
पद्मनाभदिनासन्नं तत्र यत्स्यात् फलं तव ' ॥

नारदीये — 'कलान्वये तु विप्रेन्द्राः! दशम्येकादशीं त्यजेत् ।
सुरया बिन्दुना स्पृष्टं गङ्गाम्भ इव निर्मलम् ॥

चन्द्रिकायाम् — 'सम्पूर्णैकादशी यत्र प्रभाते पुनरेव सा ।
लुप्यते द्वादशी तत्र उपवासः कथं भवेत् ॥

उपोष्ये द्वे तिथी तत्र विष्णुप्रीणनतत्परैः ।
सकामैर्गृहिभिः पूर्वा निष्कामैर्यतिभिः परा ॥

स्कान्दे — 'प्रथमेऽहनि सम्पूर्णा दृश्यते चेत्परेऽहनि ।
द्वादशी सकलाकाष्ठा यदि न स्यात्परेऽहनि ।
पूर्वा कार्या गृहस्थैश्च यतिभिश्चोत्तरा तिथिः ॥

गारुडे — 'एकादशी भवेत्पूर्णा दोषगन्धो न दृश्यते ।
कला काष्ठा च घटिका दृश्यते चेत्परेऽहनि ॥

तत्रोपवासो विहितश्चतुर्थाश्रमवासिनाम् ।
विधवायाश्च तत्रैव परतो द्वादशी न चेत् ।
सकामानां गृहस्थानां पूर्वत्रोपोषणं भवेत् ' ॥

स्कान्दे — 'सम्पूर्णैकादशी यत्र प्रभाते पुनरेव सा ।
तत्रोपवासो विहितो वनस्थस्य यतेस्तथा ॥
विधवायाश्च तत्रैव परतो द्वादशी न चेत् ।
पूर्वत्रैव गृहस्थानां नारीणां ब्रह्मचारिणाम्' ॥

वह्निपुराणे — 'एकादशी तु सम्पूर्णा प्रभाते पुनरेव सा ।
पूर्वामुपवसेत्कामी निष्कामस्तूत्तरां सदा ।
पूर्वं क्रतुशतं तत्र त्रयोदश्यान्तु पारणम्' ॥ इति

शुद्धालक्षणम् यथा —

गारुडे — 'उदयात् प्राक् यदा विप्र मुहूर्तद्वयसंयुता ।
सम्पूर्णैकादेशी ज्ञेया तत्रैवोपवसेद्गृही' ॥

भविष्यपुराणे — 'आदित्योदयवेलायाः प्राक् मुहूर्तद्वयसंयुता ।
एकादशी सा हि शुद्धा विद्धान्या परिकीर्तिता' ॥ इति

शुद्धैकादश्यधिकद्वादशीं प्रस्तुत्य नारदः ।

'एकादशी भवेच्छुद्धा परतोऽपि न वर्धते ।
द्वादशी वर्धते वापि एकादश्यामुपोषयेत् ॥
न चेदेकादशी विद्धा द्वादशी परतः स्थिता ।
उपोष्यैकादशी तत्र यदीच्छेत्परमं पदम् ॥

पद्मपुराणे — 'एकादशी भवेच्छुद्दा परतोऽपि न वर्धते ।
उपोष्यैकादशी शुद्धा द्वादश्यप्यधिकापि च ॥

स्कन्दे — 'एकादशी भवेत्पूर्णा द्वादश्यां नास्ति चेत्कला ।
द्वादशी च त्रयोदश्यां कला काष्ठापि विद्यते ।
उपोष्यैकादशी शुद्धा द्वादश्यामेव पारणम्' ॥

व्यासः — 'एकादशी तु सम्पूर्णा अपरेऽहनि वर्धते ।
द्वादशी वर्धते वापि एकादश्यामुपोषयेत्' ॥

शुद्धायामप्यधिकद्वादशीविषये गारुडे ।

'सम्पूर्णैकादशी यत्र प्रभाते पुनरेव सा ।
तत्रोपोष्या परा पुण्या परतो द्वादशी यदि ॥

वाराहे — 'एकादशी विष्णुना चेद्द्वादशी परतः स्थिता ।
उपोष्या द्वादशी तत्र यदीच्छेत्परमं पदम् ॥

सम्पूर्णैकादशी यत्र प्रभाते पुनरेव सा ।
वैष्णवी चेत्त्रयोदश्यां घटिकैकापि दृश्यते ।
गृहस्थोऽपि परां कुर्यात् पूर्वां नोपवसेत्तदा' ॥

पद्मपुराणे — 'पूर्णाऽप्येकादशी त्याज्या वर्धते द्वितयं यदि' ।

स्कान्दे — 'एकादशी भवेत्पूर्णा परतो द्वादशी यदि ।
तथाऽप्येकादशीं त्यक्त्वा द्वादशीं समुपोषयेत्' ॥

गारुडे — 'पूर्णा भवेद्यदा नन्दा भद्रा चैव न वर्धते ।
तदोपोष्या तु भद्रा स्यात्तिथिवृद्धिः प्रशस्यते ॥

कालिकापुराणे — 'एकादशी भवेत्पूर्णा परतो द्वादशी भवेत् ।
उपोष्या द्वादशी तत्र तिथिवृद्धिः प्रशस्यते ॥

दशमीमिश्रिता पूर्वा समा वृद्धिं गता परा ।
उपोष्या द्वादशी तत्र न दशम्या युता क्वचित् ॥

एकादशीमुपोष्येत द्वादशीमथवापि च ।
विमिश्रां वापि कुर्वीत न दशम्या युता क्वचित्' ॥

दिनत्रयविषये ।

'द्वादशीसङ्गता यत्र भवत्ये[का]दशी तिथिः ।
दिनक्षयेऽपि सा पुण्या न [द]शम्या युता क्वचित्' ॥

कौर्मे — 'एकादशी द्वादशी च रात्रिशेषे त्रयोदशी ।
तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणम्' ॥

एकादशी द्वादशी च रात्रिशेषे त्रयोदशी ।
त्रिभिर्या सा तिथिः कार्या सर्वपापहरा स्मृता ॥

समुच्चये — 'द्विस्पृगेकादशी यत्र तत्र सन्निहितो हरिः ।
पुण्यं क्रतुशतस्योक्तं त्रयोदश्यान्तु पारणम् ॥

स्कान्दे — 'द्वादशीसङ्गता यत्र भवत्येकादशी तिथिः ।
दिनक्षयेऽपि सा पुण्या न च त्याज्या कदाचन ॥

चन्द्रिकायाम् — 'एकादशी द्वादशी च रात्रिशेषे त्रयोदशी ।
त्रिस्पृशी नाम सा प्रोक्ता ब्रह्महत्यां व्यपोहति ।
तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणम्' ॥

'एकादशी द्वादशी च रात्रिशेषे त्रयोदशी ।

यत्तु —
त्रिहस्पृगहोरात्रं सोपोष्यं तत्सुतार्थिभिः ॥
एकादशी द्वादशी च रात्रिशेषेत्रयोदशी ।
उपवासं न कुर्वीत पुत्रपौत्रसमन्वितः' ॥

इति वचनम्, तत् तिथित्रयप्रयुक्तोपवासनिषेधपरम् । नैकादशीविषयम् । तदुपवासस्य नित्यत्वेनावश्यकर्तव्यत्वात् ।

स्कान्दे — 'शुद्धं हरिदिनं न स्याद्द्वादशीं ग्राहयेत्तदा ।
द्वादश्यामुपवासोऽत्र त्रयोदश्यान्तु पारणम् ।
अन्यथा कुरुते यस्तु स याति नरकं ध्रुवम् ॥

कात्यायनः — 'दशम्यनुगता हन्ति द्वादशद्वादशीफलम् ।
.... .... त्रयोदश्यान्तु पारणम्' ॥

तत्प्रयुक्तोपवासस्य निषेधोऽयमुदाहृतः ।
प्रयुक्त्यन्तरयुक्तस्य न विधिर्न निषेधनम्' ॥

**तत्प्रयुक्तं**—सङ्क्रांत्यादिप्रयुक्तम् । **प्रयुक्त्यन्तरयुक्तस्य**—नित्यैकादश्युपवासविधेः ।

जैमिनिः — ‘तन्निमित्तोपवासस्य निषेधोऽयमुदाहृतः ।
अनुषङ्गस्ततो ग्राह्यो यतो नित्यमुपोषणम्’ ॥

**अनुषङ्गः** – तिथित्रयसङ्क्रान्त्यादिः । एकादशीसम्बद्धसङ्क्रान्त्यादिषु न (दोषः .... ) ।

अनुषङ्गनिषेधमाह **गौतमः** ।

‘आदित्येऽहनि सङ्क्रान्त्यामसितैकादशीषु च ।
व्यतीपाते कृते श्राद्धे पुत्री नोपवसेद्गृही’ ॥

मात्स्ये — ‘दिनक्षये च सङ्क्रान्त्यां ग्रहणे चन्द्रसूर्ययोः ।
उपवासं न कुर्वीत पुत्रपौत्रसमन्वितः’ ॥

जैमिनिः — ‘आदित्येऽहनि सङ्क्रान्त्यां व्यतीपाते दिनक्षये ।
पारणञ्चोपवासञ्च न कुर्यात्पुत्रवान् गृही’ ॥

इत्ययं काम्यविषयस्य निषेध इति केचित् ।

पाद्मे — ‘एकादशी वार्कदिने भरण्यां वा यदा भवेत् ।
उपोष्यैकादशीं तां तु ब्रह्महत्यां व्यपोहति’ ॥

अतो दशमीद्वादशीसंयुक्तं दिनत्रयं नोपोष्यम् ।

गोभिलः — ‘एकादशी यदा ब्रह्मन्! दिनक्षयतिथिर्भवेत् ।
तथाऽप्येकादशीं त्यक्त्वा द्वादशीं समुपोषयेत् ।
तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणम्’ ॥

ऋष्यशृङ्गः — ‘एकादशी यदा वत्स! दिनक्षयतिथिर्भवेत् ।
तत्रोपोष्या द्वादशी तु त्रयोदश्यान्तु पारणम् ॥

एकादशीमुपोष्याथ दशमीदोषवर्जिताम् ।
द्वादशीमप्युपवसेदन्यथा किल्बिषी भवेत् ॥

द्वादश्यामतिरिक्तायां यो भुङ्क्ते पूर्ववासरे ।
द्वादशद्वादशीर्हन्ति द्वादशी चातिलङ्घिता ॥

एकादशीमुपोष्याथ द्वादशीमप्युपोषयेत् ।
अन्यथा नरकं याति यावदिन्द्राश्चतुर्दश ।
न तत्र विधिलोपस्स्यादुभयोर्देवता हरिः ' ॥ इति

श्रवणद्वादशीविषये नारदः ॥

' शुक्ला वा यदि वा कृष्णा द्वादशी श्रवणान्विता ।
तयोरेवोपवासस्स्यात् त्रयोदश्यान्तु पारणम् ॥

पाद्मे — ' एकादश्यामविद्धायां सम्प्राप्तं श्रवणं तथा ।
उपोष्या द्वादशी तत्र सर्वपापक्षयावहा ' ॥

' यदा ह्येकादशी शुद्धा द्वादशी श्रवणान्विता ।
शुद्धामेकादशीं त्यक्त्वा द्वादशीं समुपोषयेत् ' ॥

मात्स्ये — ' द्वादश्यां शुक्लपक्षस्य नक्षत्रं श्रवणं यदि ।
उपोष्या द्वादशी तत्र हरिमभ्यर्चयेन्नरः ' ॥

स्मृतिसारसमुच्चये — ' द्वादशीं श्रवणोपेतां यो नोपोष्यति दुर्मतिः ।
पञ्चसंवत्सरकृतं पुण्यं तस्य विनश्यति ' ॥

स्कान्दे — ' यदि स्याद्दशमीविद्धा श्रवणर्क्षसमन्विता ।
शुद्धामेकादशीं त्यक्त्वा विद्धां तामुपवासयेत् ' ॥
श्रवणेन युता सा चेद्द्वादशी केवला अपि ।
एकादशीं तदा त्यक्त्वा द्वादशीमुपवासयेत् ' ॥

पाद्मे — ' द्वादशी तु प्रकर्तव्या एकादश्यन्विता विभो ।
सदा कार्या तु विधिवद्विष्णुभक्तैश्च मानवैः ॥
भाद्रे तु द्वादशी शुक्ला श्रवणर्क्षसमन्विता ।
महती सा तु विज्ञेया तस्यामुत्तिष्ठते हरिः ॥
उपोषितो नरस्तत्र कुर्यान्मासाधिकोत्सवम् ।
तिथिनक्षत्रयोर्योगो योगश्चैव नराधिप! ॥
द्विकलो यदि लभ्येत स योगोऽप्यष्टधा मतः ' ॥

स्कान्दे नागरखण्डे ॥

'योगव्रतेषु सर्वेषु योगकालश्शुभावहः ।
उपवासादिकार्येषु घटिकैकाऽथ शस्यते ॥

श्रीविष्णुपुराणे — 'याः काश्च तिथयः प्रोक्ताः पुण्यनक्षत्रयोगतः ।
तास्वेव तद्व्रतं कुर्यात् श्रवणद्वादशीं विना ॥

मात्स्ये — 'द्वादशी श्रवणे युक्ता कृत्स्ना पुण्यतमा तिथिः ।
न तु सा तेन संयुक्ता तावत्येव प्रशस्यते ॥

स्कान्दे — 'द्वादशी श्रवणे युक्ता द्विधा भूता यदा भवेत् ।
उपोषणं परेऽह्नि स्यात्स्नानं वा देवतार्चनम्' ॥

भविष्यपुराणे 'एकादशी यदा शुद्धा द्वादशी श्रवणान्विता ।
उपवासद्वयं कुर्यादशक्तौ द्वाद्वशीमिति' ॥

एकादशीमुपोष्यैव द्वादशीं समुपोषयेत् ।
न चात्र विधिलोपोऽस्ति उभयोर्देवता हरिः ॥

ब्राह्मे — 'एकादशी भवेच्छुद्धा द्वादशी श्रवणान्विता ।
उपवासद्वयं कुर्यात्पूर्वपक्षे भवेद्यदि ॥

उपोष्य द्वादशीं वापि विष्ण्वर्क्षेण समन्विताम् ।
एकादश्युद्भवं पुण्यं सद्यः प्राप्नोत्यसंशयम् ॥

विष्णुधर्मे — 'एकादशी द्वादशी च नक्षत्रं श्रवणं यदि ।
सा विष्णुशृङ्खला नाम सर्वपापप्रणाशिनी ॥

स्कान्दे — 'द्वादशी श्रवणर्क्षञ्च स्पृशेदेकादशीं यदि ।
सा विष्णुशृङ्खला नाम सायुज्यफलदा स्मृता ॥

तस्यां तीर्थेषु च स्नानं जपं वा देवतार्चनम् ।
दानञ्च महदल्पं वा श्राद्धं वा द्विजभोजनम् ॥

कोटिकोटिगुणं प्राहुर्मुनयो ब्रह्मवादिनः ।

कूर्मे — 'सङ्क्रान्त्यां कृष्णपक्षे च रविसङ्क्रमणे तथा ।
एकादश्यां न कुर्वीत उपवासञ्च पारणम्' ॥

…गे — 'सङ्क्रान्त्यामुपवासेन पारणेन युधिष्ठिर! ।
एकादश्याञ्च कृष्णायां ज्येष्ठपुत्रो विनश्यति ॥

इन्दुक्षये च सङ्क्रान्त्यामेकादश्यसिते रवौ ।
उपवासं न कुर्वीत यदिच्छेत्सन्ततिं द्विजः' ॥

भविष्यपुराणे — 'अमायाञ्चैव सङ्क्रान्त्यां भानुवारे शुभेऽहनि ।
व्यतीपाते श्राद्धदिने पुत्री नोपवसेद्गृही' ॥

व्यासः — 'शयनीबोधनीमध्ये या कृष्णैकादशी भवेत् ।
सैवोपोष्या गृहस्थेन नान्या कृष्णा कदाचन' ॥

बोधायनः — 'कार्तिकाषाढयोर्मध्ये एकादश्यौ सितासितौ ।
उपवसन्तु कर्तव्यौ भानुवारयुतावपि ॥

मार्कण्डेयः — 'विष्णोश्शयनमारभ्य यावदुत्थापनं दिनम् ।
उपवासन्तु कर्तव्यौ गृहस्थैस्तु सितासितौ' ॥

स्कान्दे — 'कार्तिकाषाढयोर्मध्ये एकादश्यौ सितासितौ ।
भानुवारेण संयुक्तौ पातसङ्क्रान्तिसंयुतौ ॥

एकादशी सदोपोष्या सर्वसम्पत्करी तु सा ।
जन्मर्क्षतिथिसंयुक्ता शुभकर्मसमन्विता ।
नवषष्टिनाडिकायुक्ता भोजयेन्न तु वासयेत्' ॥

बोधायनः — 'उपवासेत्वशक्तानामशीतेरूर्ध्वजीविनाम् ।
एकभक्तादिकं कार्यमाह बोधायनो मुनिः' ॥

कूर्मे — 'एकभक्तेन नक्तेन क्षीणवृद्धातुरः क्षिपेत् ।
नातिक्रामेद्द्वादशीञ्च यथाकालं द्विजोत्तमः' ॥

व्यासः — 'एकभक्तेन नक्तेन बालवृद्धातुरः क्षिपेत् ।
उपवासं विना वापि न निर्द्वादशिको भवेत्' ॥

भविष्यपुराणे — 'एकादश्यामुपवसेन्नक्तं वापि समाचरेत् ।
पयोमूलफलो वापि न निर्द्वादशिको भवेत् ॥

'अशक्तौ यश्च नक्तेन युक्त्वा दानान्यनुक्रमात् ।
कुर्यात्तथाप्यशक्तस्तु ब्राह्मणं विनियोजयेत् ॥

पितृमातृपतिभ्रातृस्वसृगुर्वादिभूभुजाम् ।
अदृष्टार्थमुपोष्यापि स्वयञ्च फलभाग्भवेत्' ॥

वराहे — 'आभकासितपक्षेषु मैत्रश्रवणरेवती ।
आदिमध्यावसानेषु भवेयुर्द्वादशीषु चेत् ।
ते पावनाह्वया योगाः मुनिभिः परिकीर्तिताः' ॥

मात्स्ये — 'शेते विष्णुस्सदाऽऽषाढे भाद्रे च परिवर्तते ।
कार्तिके च प्रबुद्ध्येत शुक्लपक्षे हरेर्दिने' ॥

भगवान् — 'शयने भोजने चैव मदङ्गपरिवर्तने ।
उपवासमकुर्वाणो हृदि शल्यं ममार्पयेत्' ॥

नारदः — 'अष्टवर्षाधिको विप्रस्त्वपूर्णाशीतिहायनः ।
एकादश्यामुपवसेत्पक्षयोरुभयोरपि' ॥

यानि चात्र —

'आहिताग्निरनड्वांश्च ब्रह्मचारी च ते त्रयः ।
अश्नन्त एव सिद्ध्यन्ति न च सिद्धिरनश्नताम्' ॥

चन्द्रिकायाम् — 'गृहस्थो ब्रह्मचारी च आहिताग्निस्तथैव च ।
एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि' ॥

इत्यादीनि परस्परविरुद्धानि वचनानि, तानि वर्तमानाग्निहोत्रगायत्रब्राह्मप्राजापत्य वृद्धातुरादिविषयकत्वेन तद्व्यतिरिक्तविषयकत्वेन च व्यवस्थापनीयानि ।

यथा —

'प्राणाग्निहोत्रमन्त्रांस्तु निरुद्धे भोजने जपेत् ।
वर्तमानेऽग्निहोत्रे तु नोपवासः कदाचन ॥

ब्रह्मचारी गृहस्थो वा योऽनश्नंस्तु तपश्चरेत् ।
प्राणाग्निहोत्रलोपेन ह्यवकीर्णी भवेत्तु सः ॥

एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।
वनस्थयतिधर्मोऽयं शुक्लामेव सदा गृही' ॥

स्कान्दे — 'एकादश्यामुपवसेत्पक्षयोरुभयोरपि ।
वनस्थयतिधर्मोऽयं शुक्लामेव सदा गृही' ॥

वाराहे — 'एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।
ब्रह्मचारी च नारी च नोपोष्याः पुत्रवान् गृही' ॥

ब्रह्मवैवर्ते — 'उन्मीलनी वञ्जुला च त्रिस्पृशी पक्षवर्धिनी ।
जया च विजया चैव जयन्ती पापनाशिनी ।
द्वादश्योऽष्टौ महापुण्याः सर्वपापहराः स्मृताः ॥ इति

तिथियोगेन जायन्ते चतस्रश्च परास्तथा ।
नक्षत्रयोगात् प्रबलं पापं प्रशमयन्ति ताः ॥

उन्मीलनी भृगुश्रेष्ठ! कथिता पापनाशिनी ।
द्वादश्यामुपवासस्तु द्वादश्यामेव पारणम् ॥

एकादशी तु सम्पूर्णा द्वादशी वृद्धिगामिनी ।
वञ्जुला नाम सा प्रोक्ता हत्यायुतविनाशिनी ॥

अरुणोदय आद्या स्याद्द्वादशी सकलं दिनम् ।
अत्र त्रयोदशी भद्रा त्रिस्पृशा सा हरेः प्रिया ॥

कुहूराके यदा वृद्धिं प्रयाते पक्षवर्धिनी ।
विहायैकादशीं तत्र द्वादशीं समुपोषयेत् ॥

पुष्यश्रवणपुष्याद्याः (?) रोहिणीसंयुताः कृताः ।
उपोषिता महापुण्याः द्वादश्योऽष्टौ पृथक् पृथक् ॥

ब्रह्मघ्नमपि सा पूर्वा विशोधयति भार्गव! ।
वाञ्जुलेति द्वितीया सा हत्यायुतविनाशिनी ॥

महापापानि चत्वारि शोषयेत्तिस्पृशा कृता ।
कुरुतेऽशेषकलुषशमनं पक्षवर्धिनी ॥

जया जयन्ती विजया प्रेतमोक्षं तथा परा ।
जयन्ती नरकच्छेदा अपि दुष्कृतकारिणाम् ॥

अष्टम्यान्तु भृगुश्रेष्ठ! महापातकनाशिनी ।
करिष्यन्ति न ये लोभाद्द्वादश्योऽष्टौ महाफलाः ।
तेषां यमपुरे वासः यावदाभूतसम्प्लवम्' ॥

स्मृत्यन्तरे — 'तिथयः प्रतिपन्मुख्याः पक्षयोरुभयोरपि ।
पूर्वया परया तिथ्या विद्धा ह्येते मुहूर्तकैः ॥

चतुर्दशी पञ्चमी च तिथिष्षड्भिर्मुहूर्तकैः ।
दशमी कलयाप्याह नाधस्सप्तमुहूर्तकैः ॥

क्षयगायां तिथौ पूर्वा वृद्धिगायां परा स्मृता ।
समायामपि नैव स्यादेतद्धीश्वरभाषितम् ॥

अवदापूर्णिमा .... .... भूतोऽष्टम्यसिते तिथौ ।
षष्ठी रम्भातृतीयैकादशी कृष्णत्रयोदशी ॥

चतुर्थी त्वपरा युग्मेत्येताः पूर्वाः परान्विताः ।
प्रतिपत्पञ्चमी कृष्णाऽष्टमी भूता च सप्तमी ॥

नवमी दशमी शुक्लत्रयोदश्यः श्रुतिर्हरेः ।
हरित्यमा पौर्णमासी चतुर्थी गुणसंयुता ।
रम्भातृतीया चेत्येताः उपोष्याः पूर्वसंयुताः' ॥

'युग्माग्नियुगभूतानि षण्मुनी वसुरन्ध्रके ।
रुद्रेण द्वादशीयुक्ता चतुर्दश्या च पूर्णिमा ॥

प्रतिपद्याप्यमावास्या त्रयोदश्या चतुर्दशी ।
एतद्युग्मं महापुण्यं प्रवदन्ति मनीषिणः ।
व्यस्तमेतन्महादोषो हन्ति पुण्यं पुरातनम्' ॥

नं द्वितीया—अग्निस्तृतीया—युगं चतुर्थी—भूतम् पञ्चमी—षट्
: सप्तमी—वसुरष्टमी—रन्ध्रं नवमी—रुद्रः एकादशी—द्वादशी
ी—एतद्युग्मं—तिथिद्वयं, व्रतोपवासादिषु पूज्यम् । व्यस्तं वियुक्तं
पद्युक्ता—तृतीयायुक्ता चतुर्थीत्येवं पृथक्तिथियुक्ता पुण्यविनाशिनी—
शीयुक्तैव श्रवणद्वादश्युपोष्या, न तु त्रयोदशीयुक्ता । 'हन्ति पुण्यं
ति स्मृतेः ।

'नागविद्धा तु षष्ठी या रुद्रविद्धो दिवाकरः ।
कामविद्धो भवेद्विष्णुः न ग्राह्यास्ते तु वासराः' ॥

ाः पञ्चमी—रुद्रः एकादशी—दिवाकरः द्वादशी—कामस्त्रयोदशी?—
णद्वादशी ।

नियममाह पैठीनसिः—

'पक्षद्वयेऽपि तिथयस्तिथिं पूर्वां तथोत्तराम् ।
त्रिभिर्मुहूर्तैः विद्धयन्ति सामान्योऽयं विधिस्स्मृतः' ॥

र्थः—उदयानन्तरं पूर्वा तिथिः त्रिमुहूर्ता चेत्सा परां विद्धयति ।
ागुत्तरा त्रिमुहूर्ता चेत् सा पूर्वां तिथिं विद्धयति इति ।

त्सङ्गृहीतं कालनिर्णये ।

'उदये पूर्वया तिथ्या विद्धयते त्रिमुहूर्तकैः ।
सायं तूत्तरया तद्वत्, न्यूनया तु न विद्धयते' ॥ इति

श्रीविष्णुपुराणे — 'याः काश्च तिथयः पुण्याः प्रोक्ता नक्षत्रयोगतः ।
तास्वेव तद्व्रतं कुर्याच्छ्रवणद्वादशीं विना' ॥

श्रीविष्णुधर्मे — 'उपावृत्तस्तु पापेभ्यो यस्तु वासो गुणैस्सह ।
उपवासस्स विज्ञेयस्सर्वभोगविवर्जितः ॥

विष्णुमभ्यर्चयेद्भक्त्या रात्रौ जागरणादिकम् ।
तत्तज्जप्यं जपन् ध्यायन् तत्कथाश्रवणादिकम् ॥

तदर्चनञ्च तन्नामकीर्तनं श्रवणादयः ।
उपवासकृतामेते गुणाः प्रोक्ता मनीषिभिः ॥

असम्भाष्यान् समाभाष्य तुलस्यतसिकादलम् ।
आमलक्याः फलं वाऽपि पारणे प्राश्य शुद्ध्यति' ॥

श्रीविष्णुपुराणे — 'तस्मात्पाषण्डिभिः पापैरालापस्पर्शने त्यजेत् ।
विशेषतः क्रियाकाले यज्ञादावपि दीक्षितः ॥

स्पर्शने तु बुधः स्नात्वा शुचिरादित्यदर्शनात् ।
सम्भाष्य तान् शुचिषदं चिन्तयेदच्युतं बुधः ।
तेषामालोकने सूर्यं पश्येत मतिमान्नरः' ॥

कौर्मे — 'बहिर्ग्रामान्त्यजान् सूतिं पतितञ्च रजस्वलाम् ।
न स्पृशेन्नाभिभाषेत नेक्षेत व्रतवासरे ॥

**बहिरन्त्यजाः** – चण्डालादयः । **ग्रामान्त्यजाः** – रजकादयः ।

कात्यायनः — 'मिथ्यावादे दिवास्वापे बहुशोऽम्बुनिषेवने ।
अष्टाक्षरं व्रती जप्त्वा शतमष्टोत्तरं शुचिः' ॥

व्यासः — 'असकृज्जलपानाच्च सकृत्ताम्बूलभक्षणात् ।
उपवासः प्रणश्येत्तु दिवास्वापाच्च मैथुनात् ॥

स्त्रीणान्तु प्रेक्षणात् स्पर्शात् ताभिस्सङ्कथनादपि ।
निवृत्तं ब्रह्मचर्यं स्यात् न दारेष्वृतुसङ्गमात्' ॥

सुमङ्गलीविषये मनुः ।

'पुष्पालङ्कारवस्त्रादि पुष्पगन्धानुलेपनम् ।
उपवासे न दुष्यन्ति दन्तधावनवर्जनम्' ॥

बहुनाऽत्र किमुक्तेन सन्देहो जायते यदि ।
एकादशीं परित्यज्य द्वादशीं समुपोषयेत्' ॥ इति

नारदः — 'एकादश्याः कलाप्येका द्वादश्यास्तु कलाद्वयम् ।
द्वादश द्वादशीर्हन्ति त्रयोदश्यान्तु पारणम् ॥

कलाद्वयं त्रयं वापि द्वादशीं नत्वतिक्रमेत् ।
पारणे मरणे नृणां तिथिस्तात्कालिकी स्मृता ॥

पित्र्येऽस्तमयवेलायां स्पृष्टा पूर्णा निगद्यते ।
द्वादश्यामाद्यपादस्तु कीर्तितो हरिवासरः ।
न तत्र पारणं कुर्यात्साऽपि ह्येकादशीसमा' ॥

पाद्मे — 'अल्पायामपि विप्रेन्द्र! द्वादश्यामरुणोदये ।
स्नात्वा च न क्रियाः कार्या दानहोमादिसंयुताः ।
एतस्मात्कारणाद्विप्रः प्रत्यूषे स्नानमाचरेत् ॥

'द्वादशी तु कला काष्ठा पितृतर्पणसंयुता ।
ब्रह्मयज्ञविधिं कृत्वा पारणं न तु लङ्घयेत् ॥

महाहानिकरी ह्येषा द्वादशी लङ्घिता नृणाम् ।
करोति धर्महरणमस्नातेव सरस्वती' ॥

गारुडे — 'यदाऽत्यल्पा द्वादशी स्यात् अपकर्षो भुजेर्भवेत् ।
प्रातर्माध्याह्निकस्यापि तत्र स्यादपकर्षणम्' ॥

स्कान्दे — 'यदा भवेदतीवाल्पा द्वादशी पारणे दिने ।
उषःकाले द्वयं कुर्यात्प्रातर्माध्याह्निकं तथा' ॥

कात्यायनः — 'सन्ध्यादिकं भवेन्नित्यं पारणन्तु निमित्ततः ।
अद्भिस्तु पारयित्वाऽथ नैत्यकान्ते भुजिर्भवेत्' ॥

देवलः — 'सङ्कटे विषमे प्राप्ते द्वादश्यां पारयेत्कथम् ।
अद्भिस्तु पारणं कुर्यात् पुनर्भुक्तं न दोषकृत् ॥

त्रयोदश्यां हि शुद्धायां पारणं पृथिवीफलम् ।
शतयज्ञफलं वापि नरः प्राप्नोत्यसंशयम्' ॥

व्यासः — 'असम्पूर्णा यदा भद्रा क्षये तु तुलसीदलम् ।
विष्णुमभ्यर्च्य पानीयं पिबेद्वा द्वादशीक्षणे ॥

त्रयोदश्यान्तु मतिमान् पारयेदच्युतं स्मरन् ।
कृत्वा चैवोपवासञ्च योऽश्नीयाद्द्वादशीदिने ॥

नैवेद्यं तुलसीमिश्रं ब्रह्महत्याविनाशनम् ।
प्रक्षाल्य पादावाचान्तः पारणान्ते तु दिङ्मुखे (?) ॥

तुलसीदलमिश्रेण तोयेनैवाथ पारणम् ।
उपवासव्रतञ्चैव मन्त्रेणैव समर्पयेत् ।
त्रयोदशी भवेच्छुद्धा पूर्वविद्धा परान्विता' ॥

व्यासः — 'त्रयोदशी पृथक् पृथक् व्याप्यावेवापराह्णिके ।
पूर्वाह्णे व्यापिनी ग्राह्या तथा कृष्णत्रयोदशी ॥

कृष्णत्रोयोदशी पूर्वा परा कृष्णत्रयोदशी ।
एताः परयुताः पूज्याः पराः पूर्वेण संयुताः' ॥

संवर्तः — 'कृष्णाष्टमी बृहत्यल्पा सावित्री वटपैतृके (?) ।
शुक्लपूर्वापरा कृष्णचतुर्दश्यान्तु पूर्णिमा' ॥

पाद्मे — 'एकादश्यष्टमी षष्ठी शुक्लपक्षे चतुर्दशी ।
एताः परयुताः कार्याः पराः पूर्वेण संयुताः' ॥

वायुपुराणे — 'एकादश्यष्टमी षष्ठी शुक्लपक्षे चतुर्दशी ।
पूर्वविद्धा न कर्तव्याः परविद्धाः प्रकीर्तिताः' ॥

स्कान्दे — 'एकादशी दशम्यान्तु सप्तम्यान्तु तथाऽष्टमी ।
पञ्चम्यान्तु तथा षष्ठी त्रयोदश्यां चतुर्दशी ॥

आसु क्रिया न कुर्वीत पूर्वविद्धासु मानवाः ।
नागविद्धा यथा षष्ठी भानुविद्धो महेश्वरः ।
चतुर्दशी कामविद्धा तिस्रस्ता मलिनाः स्मृताः' ॥

भविष्यपुराणे — 'सदा कार्या चतुर्दश्यां न तु युक्ता चतुर्दशी ।
पौर्णमासीयुता सा स्याच्चतुर्दश्याञ्च पूर्णिमा' ॥

अथ श्रीकृष्णजयन्तीनिर्णयः प्रसङ्गात् क्रियते ।

**श्रीवैखानसे यज्ञाधिकारे भृगुः ।**

'अष्टमी कृष्णपक्षे तु श्रावणे रोहिणीयुता ।
वियुक्ता वा जयन्तीति कीर्त्यते वेदपारगैः' ॥

अत्र चान्द्रमस एव मासः श्रावणशब्देनोच्यते ।

'सिंहदर्शात्तु या पूर्वा सा पुण्या श्रावणी भवेत् ।
'चान्द्रश्शुक्लादि दर्शान्तस्सावनस्त्रिंशता दिनैः' ॥

'एकराशौ रविर्यावत्कालो मासस्स भास्करः' ॥

इत्यादिस्मृतिभिः सौरचान्द्रमसयोर्मासयोः पृथक्त्वेन लक्षणप्रतिपादनात् सिंहदर्शान्तः श्रावणमासः, 'सिंहदर्शात्तु या पूर्वे'त्युक्तत्वात् । सामान्यवाचिनो मधुमाधवादयः पूर्वोत्तरवचनाविरोधेन यथायोग्यं नेयाः ।

ननु — 'सिंहे दिवाकरे युक्ते कृष्णपक्षे विशेषतः ।
सप्तम्यामष्टमी नैव रोहिणीसहिताऽथ वा ॥

वियुक्ता वा जयन्तीति कीर्तिता वेदपारगैः ।
सौम्याग्नेययुता वापि तां जयन्तीं विदुर्बुधाः' ॥

इति **वासाधिकारे** प्रतिपादितत्वात् सौरमासे किं न स्यादिति चेत्—न। बहुवचनविरोधात् स्ववचनविरोधात् यज्ञाधिकारे विषयव्यवस्थायाः कृतत्वाच्च। तथाहि—न तत्केवलसौरमासपरत्वेनेत्तम्। किन्तु सिंहश्रावणस्य सप्तम्यादिदोषदुष्टत्वे कर्किश्रावणनिषेधपरत्वाभिप्रायेण 'सिंहे दिवाकर' इत्युक्तमिति मन्तव्यम्।

विषयव्यवस्थाकल्पनं यथा—

**यज्ञाधिकारे**— 'प्राकारप्रतिमादीनि वासाधिकरणोक्तवत्।
ऋषिच्छन्दोधिदेवादीन् क्रियाधिकरणोक्तवत्।
नित्यार्चनं निरुक्तोक्तं यज्ञाख्ये चोत्सवं तथा'॥ इति

तत्रोत्सवनिर्णय इत्थमुच्यते।

'अत ऊर्ध्वं प्रवक्ष्यामि देवेशस्योत्सवक्रमम्।
कालश्रद्धानिमित्ताख्यास्त्रिविधा उत्सवाः स्मृताः॥

मासे तु यस्मिन् कस्मिंश्चित् प्रतिवर्षं दिने तिथौ।
क्रियते समयेनैव स तु कालोत्सवो भवेत्॥

इष्टमासे दिने चेष्टे श्रद्धया क्रियते तु यः।
स तु श्रद्धोत्सवो नाम तस्मात् कालोत्सवो गुरुः॥

भयप्रदनिमित्तेषु तथाऽनावृष्टिकादिषु।
क्रियते तस्य शान्त्यर्थं स निमित्तोत्सवः स्मृतः'॥ इति

एवमुत्सवभेदान् प्रतिपाद्य कालस्य प्राधान्यमवगमयितुं कालविशेषाश्च प्रतिपाद्यन्ते।

'अयनादौ च सङ्क्रांत्यां ग्रहणे च विशेषतः।
तत्तत्काले च तीर्थं स्याद्रात्रावपि च कारयेत्॥

राहुदर्शनसङ्क्रान्त्योः पुन्यं श्रेष्ठं निशास्वपि।
तदाहुः स्मृतिकाराश्च निशायामनिषिद्धताम्॥

विष्णुपञ्चदिनेष्वेवं मासर्क्षे स्थापनादिने ।
यजमानस्य जन्मर्क्षे राज्ञो जन्मर्क्ष एव च ।
एतेष्ववभृथं कल्प्य चोत्सवं सम्यगाचरेत् ' ॥ इति

ालभेदान् प्रतिपाद्य, दिनद्वये ऋक्षे प्राप्ते सति परस्मिन् दिवसे पर्यन्तं विद्यमाने नक्षत्रे तीर्थमित्यभिप्रायेण 'ऋक्षे द्विदिनसंयोगे पर ' मित्युक्तम् ।

'तथा मासर्क्षकाद्यांश्च एकमासे परस्परम् ।
दिनद्वये तु सम्प्राप्ते नेष्टं तत्प्रथमं विदुः' ॥ इति च

त्र मासर्क्षादिकमिति पुष्यपौर्णमासी माघशुक्लद्वादशी फाल्गुनोत्तर-त्त्रापौर्णमासी वैशाखी पूर्णिमा ज्येष्ठे मूले आषाढे अषाढानक्षत्रे ।णनक्षत्रे प्रोष्ठपदे चापि श्रवणे आश्वयुजे मासि श्रवणनक्षत्रे कार्तिके मार्गशीर्षे शुक्लपक्षे तिथौ (इति विवक्षितम् ?)

'द्वादशी श्रवणं तस्मिन्नमावास्या तथोत्तमा ।
उपवासं कृतश्चान्यत्तन्मासाद्यं समाचरेत्' ॥

प्रतिपादितत्वात् मासर्क्षका अन्याश्च पादे (?) मासे दिनद्वये यदा तदा परस्मिन् दिवसे स्नपनादिकं कार्यम् । तथाशब्दात् नक्षत्रविषये—

'खण्डिते सति नक्षत्रे अपरे दशनाडिकाः ।
उत्तमं तीर्थमित्याहुः हीनश्चेत्पूर्वमेव तु' ॥

् दशनाडिका भवन्तीत्यर्थो लभ्यते ।

केञ्च—'तीर्थस्यात्र परं श्रेष्ठमन्यन्नैमित्तिकेषु च' इति सौरमास एव सम्भवति तत्र तीर्थस्य परं श्रेष्ठम् । श्रीकृष्णजयन्तीवामनजयन्त्यादिषु अपरादन्यत् पूर्वमित्यर्थः (चान्द्रमासः)। चान्द्रमसप्रयुक्तश्रावणमासस्य न व्यवहाराभावात् चान्द्रमसे मासि तिथिद्वयाभावात् । अत्र नताया उक्तत्वाच्च तिथिद्वयशङ्का नास्त्येव ।

मेषादिमासेषु कालोत्सवः कर्तव्य इत्युक्तम् । यथा वासाधिकारे—

'यथेष्टदिनमालोक्य कल्पयेत्तीर्थऋक्षकम् ।
मेषादिद्वादशे मासे इष्टं निश्चित्य यत्नतः ॥

प्रत्यब्दं तु विशेषेण कल्पयेत स्वशक्तितः ।
एवं कालोत्सवं कुर्यात् शास्त्रदृष्टेन वर्त्मना ॥ इति

ऋक्षप्रधानतया यत्र तीर्थः क्रियते तत्र सौरमासः । तत्रैव पवित्रारोपणमधिकृत्य चान्द्रमसमासः प्रतिपाद्यते ।

'आषाढे श्रावणे चैव मासे भाद्रपदे तु वा ।
एवं मासे सिते पक्षे द्वादश्यां रोपणं हरेः ॥
एताश्चान्द्मसा वापि सौरा वापि च कारयेत्' ॥ इति

चान्द्रमसत्वेन प्रतिपादिता आषाढादयो वा पूर्वोक्तमेषादयस्सौरा वा इत्यर्थः । यदि चान्द्रमसमासा दोषदुष्टास्स्युः तदा सौरा एवेत्यभिप्रायेणोक्तं सौरा वा अपीति । चान्द्रमसमासदोषानुपपादयति यथा —

'संसर्पश्चाधिमासश्च तिथिशून्यं दिनत्रयम् ।
दशम्येकादशीमिश्रं मासशून्यं तथैव च ॥

अंहस्पतियुतं यत्र अन्यदोषादिना युतम् ।
एतैर्दोषैर्युतं यत्र तत्र त्वारोपणं न च' ॥ इति

एवं दोषदुष्टेषु मासेषु प्रतिषिद्धय प्रतिप्रसव उच्यते ।

'कर्तुश्च त्वरिते चैव नृपस्याज्ञापना यदि ।
तत्रैवारोपयेद्विद्वानुक्तदोषो न लिप्यते' ॥ इति

'रवौ तुलागते चैव न कुर्यादिति शासनम्' ॥ इति च

**क्रियाधिकारे च ।**

'अथातस्सम्प्रवक्ष्यामि पवित्रारोपणं हरेः' इत्यारभ्य —

'मार्गशीर्षास्यमासे तु शुक्लपक्षे विशेषतः ।
द्वादश्यां कृष्णपक्षे वा नक्षत्रे श्रवणेऽथवा ॥

श्रवणद्वादशीयोगे मासि भाद्रपदेऽथ वा ।
दक्षिणायनमासेषु द्वादश्यां श्रवणेऽथवा ॥
एवराश्वयुजे मासि अश्विन्यां वै समारभेत् ।
कृष्णाष्टमीचतुर्दश्योः शम्भोर्मासेषु षट्सु च ॥
द्वादश्यां भास्करस्योक्तं षष्ठ्यां स्कन्दस्य कीर्तितम् ' ॥

इत्यादिचान्द्रमसमासा एव प्रतिपादिताः । एवं चान्द्रमससौरौ प्रतिपादितौ ॥

स्मृत्यन्तरे — ' संसर्पाहस्पतीमासावधिमासादयस्तथा ।
शुक्रे वाऽस्तङ्गते जीवे बाल्ये वा वार्धकेऽपि वा ।
न दोषाय भवेत्कर्म कर्तव्यं विधिचोदितम् ' ॥ इति

प्रकीर्णाधिकारे च । ' अतः परं प्रवक्ष्यामि ' इत्यारभ्य —

विषुवायनभूपर्क्षप्रतिष्ठाकर्तृभेषु च ।
ग्रहणे मासनक्षत्रे विष्णुपञ्चदिनेषु वा ॥
उत्सवस्यान्तदिवसे तेषु तीर्थं प्रकल्पयेत् ।
अयने विषुवे चैव ग्रहणे सोमसूर्ययोः ॥
तत्तत्काले प्रकुर्वीत तीर्थस्नानन्तु नान्यथा ।
अन्यर्क्षेष्वपि मध्याह्ने पूर्वाह्ने वा गुणाधिके ॥
एकस्मिन्नेव मासे तु यदि तीर्थदिनद्वयम् ।
द्वयोरन्त्यदिने तीर्थमिति पूर्वजदर्शनम् ॥
तदेव यदि सूर्यस्य विद्धश्चेत्सङ्क्रमादिभिः ।
वर्जनीयं तदा पूर्वं प्रशस्तमभिधीयते ॥
युक्तं नक्षत्रखण्डे तु अन्त्यांशे तीर्थमाचरेत् ।
खण्डिते सति नक्षत्रे अपरे दशनाडिकाः ॥
उत्तमं तीर्थमित्याहुः हीनश्चेत्पूर्वमेव तु ।
अर्कवारर्क्षसंयोगस्सर्वदा सम्प्रशस्यते ॥

श्रवणद्वादशीयोगस्सर्वकर्मफलप्रदः ।
योगाश्च सम्प्रशस्तास्स्युस्सिद्धामृतवराह्वयाः ' ॥

इति अर्कवारश्रवणद्वादशी सिद्धामृतवराह्वया इति योगाः? पूर्वेण वा परेण वा यदि युक्तास्स्युः तदा तीर्थं कुर्यादित्यभिप्रायेणोक्ता —

'ऋक्षे द्विदिनसंयोगे यदहन्यधिकं परम् ।
तथा मासर्क्षकाद्याश्च एकमासे परस्परम् ।
दिनद्वये तु सम्प्राप्ते नेष्टं तत्प्रथमं विदुः ॥ इति

'तीर्थस्यात्र परं श्रेष्ठमन्यन्नैमित्तिकेषु च ।
पूर्णपर्वेन्दुसंयोगो यद्दिने चोभयोरपि ' ॥ इति च

पूर्ववदेवोक्तम् । सूर्यसङ्क्रमादयः परिहर्तव्या इति शेषः ।

क्रियाधिकारे — 'यदि नक्षत्रयुग्मं स्यादेकमासे विशेषतः ।
परस्मिन्नेव दिवसे स्नापयेत्पुरुषोत्तमम् ॥

तिथिद्वयं यदि भवेद्द्वयोरपि समाचरेत् ।
वारद्वयानुषक्तश्चेन्निमित्तर्क्षे तिथिस्तु वा ॥

परस्मिन्नेव दिवसे स्नपनादीनि कारयेत् ।
एकस्मिन्नेव दिवसे निमित्तर्क्षे तिथिद्वयम् ॥

नक्षत्रस्नपनं पूर्वं तिथिकर्म पुनश्चरेत् ।
पूर्वकर्मावसाने तु कृत्वा सद्योङ्कुरार्पणम् ॥

सद्यः प्रतिसरं बद्ध्वा द्वितीयं स्नपनं चरेत् ।
एष एव विशेषस्स्यादन्यत्सर्वं खिलेकवत् ' ॥ इति

एकस्मिन् मासि तिथिद्वये प्राप्ते सति द्वयोऽपि स्नपनं विधीयते । एतत् श्रीजयन्त्यदिव्यतिरिक्तविषयमिति मन्तव्यम् — जयन्तीद्वयाभावात् ।

यज्ञाधिकारे — 'अत ऊर्ध्वं प्रवक्ष्यामि देवस्य स्नपनक्रमम् ।
प्रतिष्ठोत्सवयोरन्ते अयने विषुवद्द्वये ॥

सूर्येन्द्वोर्ग्रहणे वापि यत्नेन स्नपनं चरेत् ।
विभवे सति पञ्चर्क्षे मासर्क्षे चान्यसङ्क्रमे ॥

दुर्निमित्तादिशान्त्यर्थं दर्शनेऽप्यवलक्षणे ।
यजमानस्य जन्मर्क्षे राज्ञो जन्मर्क्ष एव च ॥

देवस्य स्नपनं कुर्यात्तत्तत्काले विशेषतः ।
विषुद्वये वर्तमाने ग्रहणे चन्द्रसूर्ययोः ॥

अयने चोत्तरेऽतीते आरब्धे दक्षिणे तथा ।
अन्येषु चैव मध्याह्ने दिनद्वयगते सति ॥

तयोरप्यधिकं श्रेष्ठं मासर्क्षे द्विगुणं यदि ।
सम्भवेच्चेत्परं श्रेष्ठं स्नपने तु विशेषतः ॥
पूर्वस्मिन् पूर्णयोगश्चेत्तस्मिन्नेवाथवा चरेत् ॥ इति

एवं सामान्यतो विशेषतश्चर्क्षाणि तिथिद्वयञ्च प्रतिपादितम् । अथ वेधः—

**मरीचिः – आनन्दसंहितायाम् ।**

'पूर्वविद्धा यथा नन्दा वर्जिता श्रवणाऽन्विता ।
तथाऽष्टमीं पूर्वविद्धां सर्क्षां वाऽपि परित्यजेत् ॥

अविद्धायां सऋक्षायां जातोऽष्टम्यां हरिस्स्वयम् ।
उदये चाष्टमी किञ्चिन्नवमी सकला यदि ।
मुहूर्तेनापि संयुक्ता सा सम्पूर्णाष्टमी भवेत् ॥

अष्टमी सप्तमीविद्धा यथा नन्दा तु पूर्वया ।
वर्जनीया प्रयत्नेन दानपूजनतत्परैः ॥
तस्यां चन्द्रोदये कृष्णपूजाऽनन्तफलप्रदा' ॥

अत्र पूर्वोक्तयोगवेधस्त्याज्यः । 'उदये चाष्टमी किञ्चि' दिति सूर्योदयकाले विद्यमानाया एव अष्टम्या ग्राह्यत्वेन प्रतिपादनात् 'सप्तम्यामष्टमी नैवे'त्युक्तत्वात् ।

'एकादशी दशम्यां तु सप्तम्यां तु तथाऽष्टमी ।
पञ्चम्यां तु तथा षष्ठी त्रयोदश्यां चतुर्दशी ॥
आसु क्रिया न कुर्वीत पूर्वविद्धासु मानवाः' ॥

इति स्कान्दवचनाच्च ॥

ब्रह्मवैवर्ते — 'जयन्ती या प्रयत्नेन सप्तमीसंयुताऽष्टमी ।
सा सर्क्षाऽपि न कर्तव्या सप्तमीसंयुताऽष्टमी ।
अविद्धायान्तु सर्क्षायां जातो देवकिनन्दनः' ॥

सागर-संहितायाम् — 'रोहिणीसहिता वापि सप्तमीसहिताऽष्टमी ।
त्याज्या नभसि कृष्णायां कृष्णजन्मव्रतं तथा' ॥

समुच्चये — 'दशम्येकादशी त्याज्या सप्तम्या संयुताऽष्टमी ।
कृत्तिकारोहिणी त्याज्या त्याज्या पर्वचतुर्दशी' ॥ इति

अतिवेधमहावेधा ये चान्ये तिथिषु स्मृताः ।
सर्वेऽप्यवेधा विज्ञेया वेधस्सूर्योदये मतः ॥

स्कान्दे — 'प्रतिपत्प्रभृतय(?) स्सर्वा उदयादोदयाद्रवेः ।
सम्पूर्णा इति विज्ञेया हरिवासरवर्जिताः' ॥ इति

नारदीये — 'आदित्योदयवेलायामारभ्याषष्टिनाडिका ।
या तिथिस्सा तु शुद्धा स्यात्सर्वतिथ्या अयं विधिः ॥ इति

तिथित्रयसङ्क्रमे—सूर्योदये सप्तमी किञ्चित्, षट्पञ्चाशदधिका अष्टमी, ततः परं नवमी स्थिता चेत् तिथित्रयं भवति । तदानीं सप्तमीविद्धां त्यक्त्वा सौरे (शुद्धा) संभवति चेत् सा ग्राह्या । तिथित्रयैकादशी यथा गृह्यते–तद्वत् । तत्राप्यसम्भवे नवमी ग्राह्या ।

'मासे संवत्सरे चैव तिथिद्वैधं यदा भवेत् ।
तत्रोत्तरा तिथिर्ग्राह्या दैवे सङ्क्रान्त्यवेधिता' ॥

इति 'सङ्क्रान्त्यवेधिते' त्युक्तत्वात् पूर्वा विद्धा चेत्परा तिथिरविद्धा ग्राह्या ।

अत्र 'संवत्सरे' इति संवत्सरशब्देन अधिमास उच्यते ।

तथा च— 'तिथिर्नक्षत्रमेकस्मिन् मासे द्विदिनभाग्यदि ।
तिथिः पूर्वा तु कर्तव्या जन्मर्क्षमपरं तथा' ॥

इत्यनेन न विरोधः ।

जाबालिः— 'षष्ट्याद्दि (?) दिवसैर्मासः कथितो बादरायणैः ।
पूर्वार्धन्तु परित्यज्य कर्तव्या तूत्तरे क्रिया' ॥

इति वचनं जयन्त्यादिविषयं न भवति ।

देवलः— 'यां तिथिं समनुप्राप्य उदयं याति भास्करः ।
सा तिथिस्सकला ज्ञेया दानाध्ययनकर्मसु' ॥ इति

विष्णुधर्मोत्तरे— 'व्रतोपवासस्नानादौ घटिकैका यदा भवेत् ।
उदये सा तिथिर्ज्ञेया श्राद्धादावस्तगामिनी' ॥ इति

बोधायनः— 'आदित्योदयवेलायां या स्वल्पापि तिथिर्भवेत् ।
पूर्णा इत्येव मन्तव्या प्रभूता नोदयं विना (?) ॥'

अत्र पूर्वोदाहृतसम्मतवचनानि —

स्मृतिः— 'श्रौतस्मार्तानि कर्माणि मासोक्तानि व्रतानि वै ।
तिलदानादि सर्वाणि चान्द्रमासे वदन्ति हि' ॥

नारदीये— 'सिंहराशिगते सूर्ये श्रावणे मासि नारद ! ।
कृष्णपक्षे तथाऽष्टम्यां बुधवारे निशार्धके ।
वसुदेवेन देवक्यां जज्ञे कृष्णश्चतुर्भुजः' ॥

वाराहे— 'सिंहार्के रोहिणीयुक्ता नभःकृष्णाष्टमी यदा ।
अत्र जातो जगन्नाथः कौस्तुभी हरिरच्युतः ।
तमेवोपवसेत्कालं कुर्यात् तत्रैव जागरम्' ॥

वाराहसंहितायाम्— 'सिंहार्के रोहिणीयुक्ता नभःकृष्णाष्टमी यदि ।
रात्र्यर्धपूर्वापरगा जयन्ती नाम सा तिथिः' ॥

कालप्रकाशिकायाम्— 'सिंहार्के रोहिणीयुक्ता नभःकृष्णाष्टमी यदि ।
रात्र्यर्धपूर्वापरगा जयन्ती कलयाऽपि वा' ॥

मार्कण्डेये — ‘प्राजापत्येन संयुक्ता कृष्णा नभसि चाष्टमी ।
जयन्ती नाम सा प्रोक्ता सा ह्युपोष्या महाफला’ ॥

भविष्योत्तरे — ‘श्रावणे बहुले पक्षे कृष्णजन्माष्टमीव्रतम् ।
न करोति नरो यस्तु भवति क्रूरराक्षसः’ ॥

स्कान्दे — ‘प्राजापत्यर्क्षसंयुक्ता अष्टमी तु यदा भवेत् ।
श्रावणे बहुले सा तु सर्वपापप्रणाशिनी’ ॥

विष्णुरहस्ये — ‘प्राजापत्यर्क्षसंयुक्ता कृष्णा नमसि चाष्टमी ।
मुहूर्तमपि लभ्येत सैवोपोष्या महाफला ॥

मुहूर्तमप्यहोरात्रे यस्मिन् युक्तं हि लभ्यते ।
अष्टम्यां रोहिणीऋक्षं तां सुपुण्यामुपावसेत्’ ॥

ग्रन्थान्तरे — ‘रोहिणी तु यदाऽष्टम्यां कृष्णायां श्रावणे भवेत् ।
जयन्ती नाम सा प्रोक्ता न तु भाद्रपदाऽष्टमी’ ॥

पाद्मे — ‘प्रेतयोनिगतानाञ्च प्रेतत्वं नाशितं नरैः ।
यैः कृता श्रावणे मासि अष्टमी रोहिणीयुता ॥

किं पुनर्बुधवारेण सोमेनापि समन्विता ।
किं पुनर्नवमीयुक्ता कुलकोट्यास्तु मुक्तिदा ॥

एकलिप्ताष्टमीविद्धा नवमी बुधसंयुता ।
रोहिणी चार्धरात्रे तु जयन्ती चोत्तमोत्तमा’ ॥

जयन्ती त्रिविधा ।

‘सोमवारे तु सम्प्राप्ते नभोमासेऽसिताष्टमी ।
रोहिणीसहिता सा चेज्जयन्ती ब्रह्मसंज्ञिता ॥

नभस्यसितरोहिण्यां सौम्यवारयुताऽष्टमी ।
जयन्ती विष्णुसंज्ञा च सर्वसिद्धिप्रदा नृणाम् ॥

निशीथे रोहिणीयुक्ता नवमीसहिताऽष्टमी ।
बुधवारसमायुक्ता सोमेनापि विशेषतः ।
नभः कृष्णजयन्ती च रुद्रसंज्ञाऽघनाशिनी ' ॥ इति

उदयकालस्थाया एव जन्माष्टमीत्वं स्मर्यते ।

ब्रह्मसंहितायाम् —' श्रावण्यां कृष्णपक्षस्य घटीषष्टिर्यदाऽऽष्टमी ।
तदा जन्माष्टमी ख्याता सा सम्पूर्णा प्रकीर्तिता ॥
त्रिमुहूर्तं तिथेर्वृद्धौ सन्निरीक्ष्य परीक्षयेत् ।
सा तु जन्माष्टमी ज्ञेया भुक्तिमुक्तिफलप्रदा ' ॥

सागरसंहितायाम्–' श्रावणस्य तु मासस्य घटीषष्टिर्यदा भवेत् ॥
तदा जन्माष्टमी ख्याता सम्पूर्णा सा प्रकीर्तिता ।
तत्रोपवासं कुर्वीत पुण्यश्रीकीर्तिवृद्धये ।
विहितस्सर्वजातीनामुपोषणविधिः परः ' ॥

सनत्कुमार संहितायाम् — ' सम्प्राप्ते श्रावणे मासि कृष्णपक्षे यदा(ष्टमी ?) भवेत ।
कृष्णजन्माष्टमी ज्ञेया महापातकनाशिनी ॥
रोहिणी सहिता सा चेज्जयन्ती नाम सा तिथिः ।
जयन्ती न भवेद्वर्षे शुद्धाष्टम्यामुपोषयेत् ' ॥

सागरसंहितायाम्–' कृष्णाष्टम्यां श्रावणे तु रोहिणी वै न लभ्यते ।
अष्टमीरोहिणीयोगः सिंहार्के भाद्रपादके ॥
तस्यामुपोष्य विधिवद्विष्णुं सम्पूज्य सादरम् ।
तिथ्यृक्षयोस्तु निगमे परेद्युः पारयेद्व्रती ' ॥ इति

स्कान्दे — ' कृष्णाष्टमीदिने प्राप्ते येन भुक्तं द्विजोत्तम ।
त्रैलोक्यसम्भवं पापं तेन भुक्तं द्विजोत्तम! ॥
केवलेनोपवासेन तस्मिन् जन्मदिने मम ।
सप्तजन्मकृतात्पापान्मुच्यते नात्रसंशयः ॥

कृष्णजन्माष्टमीं त्यक्त्वा योऽन्यं व्रतमुपाश्रयेत् ।
नाप्नोति सुकृतं किञ्चिदिष्टापूर्तमथापि वा ॥

वर्षे वर्षे तु या नारी कृष्णजन्माष्टमीव्रतम् ।
न करोति महापापा व्याली भवति कानने' ॥

विष्णुधर्मे — 'जयन्त्यामुपवासश्च महापातकनाशनः ।
सर्वैः कार्यो महाभक्त्या पूजनीयश्च केशवः' ॥

अथ निशीथयोगस्य जन्माष्टमीत्वं स्मर्यते ।

'श्रावणे मासि या कृष्णा अर्धरात्रयुताष्टमी ।
जन्माष्टमीं भवेत्सैव जयन्ती रोहिणीयुता ।
जन्माष्टमीं तथा त्यक्त्वा जयन्त्यां व्रतमाचरेत्' ॥

स्कान्दे — 'कृष्णाष्टमी श्रावणे तु प्रदोषे वार्धरात्रगा ।
जन्माष्टमी तु विज्ञेया सर्वपातकनाशिनी ।
कुर्याच्चैवोत्सवान्तेन व्रती कुर्वीत पारणम्' ॥

नारदीये — 'अर्धरात्रयुताष्टम्यां सोऽश्वमेधफलं लभेत् ।
जन्माष्टमी जयन्ती च शिवरात्रिश्चतुर्दशी ।
पूर्वविद्धैव कर्तव्या परविद्धा न कस्यचित्' ॥

विष्णुरहस्ये — 'कार्या विद्धाऽपि सप्तम्या रोहिणीसंयुताऽष्टमी ।
जयन्ती शिवरात्रिश्च कार्ये भद्राजयान्विते' ॥

आदित्यपुराणे — 'अर्धरात्रद्वयं वापि कृष्णजन्माष्टमी भवेत् ।
परैवोपोषणं कुर्याज्जागरं विष्णुपूजनम् ॥

अर्धरात्रस्पर्शिनी वा शून्ये वापि दिनद्वये ।
*　　*　　*　　*　　*
प्रदोषव्यापिनी ग्राह्याः (कृष्णजन्म?) व्रते सदा ॥

दिनद्वयेऽर्धरात्रे तु कृष्णजन्माष्टमी भवेत् ।
प्रदोषव्यापिनी ग्राह्या नक्ते वापि प्रदोषगा ॥

कृष्णाष्टमी स्कन्दषष्ठिः शिवरात्रिश्चतुर्दशी ।
एताः पूर्वयुताः कुर्यात्तिथ्यन्ते पारणं भवेत् ॥

जन्माष्टमी जयन्ती च शिवरात्रिश्चतुर्दशी ।
पूर्वविद्धैव कर्तव्या परविद्धा न कस्यचित्' ॥

इति स्कान्दवचनम् श्रीवैखानसवैष्णवव्यतिरिक्तविषयम् ।

'एकादश्यां जयन्त्याश्च व्रते चानन्तसंज्ञिते ।
पूर्वविद्धा तिथिस्त्याज्या पूर्वपुण्यविनाशिनी' ॥

इति पुराणान्तरवचनम् । एवं च निशीथयोगप्रदोषकालयोग(वती) जन्माष्टमी श्रीवैखानसादिवैष्णवव्यतिरिक्तविषया ।

अथ पाञ्चरात्रविषये, अनिरुद्धसंहितायाम् —

'कृष्णाष्टमी नभस्ये वा पूर्वविद्धाऽरुणोदये ।
सरोहिणी जयन्तीति प्रोक्ता चन्द्रोदये यदि' ॥

परमसंहितायाम्—'सम्पूर्णा रोहिणी यत्र सप्तमी न भवेद्यदि ।
रोहिण्यामेव कुर्वीत कृष्णजन्मार्चनादिकम्' ॥

वसिष्ठसंहितायाम्-'अष्टम्यां वा नवम्यां वा दशम्यामथवा पुनः ।
रोहिणी तु यदा कृष्णे पक्षे ग्राह्याऽग्निवर्जिता ।
अग्निवेधे तु रोहिण्या हन्ति पुण्यं पुराकृतम्' ॥ इति

'तस्मात्पञ्चाननस्थेऽर्के घटिकैकापि शस्यते ।
वासरे वा निशायां वा यत्र कुत्रापि रोहिणी ।
विशेषेण नभोमासे सैवोपोष्या मनीषिभिः' ॥

सागरसंहितायाम्–'अथातस्सम्प्रवक्ष्यामि जयन्तीनिर्णयं परम् ।
सिंहराशिगते सूर्ये गगने जलदाकुले ॥

मासि प्रोष्ठपदेऽष्टम्यामर्धरात्रे विधूदये ।
बुधवारे वृषे लग्ने रोहिण्याश्चरमांशके ॥

शुभे हर्षणयोगे च कौलवेन युते तथा ।
वसुदेवेन देवक्यामहं जातोऽस्मि पद्मज ' ॥

नारदीये— 'कुर्यात्सर्वाणि कर्माणि जन्मनक्षत्रगे विधौ ।
रोहिणी जन्मनक्षत्रं कृष्णस्य शुभदं भवेत् ॥

जयोत्तर-संहितायाम्— 'अष्टमी सप्तमीयुक्ता रोहिणी कृत्तिकाऽन्विता ।
तद्दिनं वर्जयेद्विद्वान् तदन्ये वासरे चरेत् ' ॥

तत्रैव— 'नवमी च दिवायुक्ता मृगेण दशमीयुता ।
पूर्वे तु दोषसंयुक्ते तस्यामेवोपवासयेत् ॥

शुद्धाष्टमीं विना वापि शुद्धर्क्षस्यास्य भावतः ।
मृगेण च दशम्या च युक्ता ग्राह्या तु वैष्णवैः ' ॥

पाद्मे चर्यापादे— 'श्रावणे मासि कृष्णे च पक्षेऽष्टम्यां तिथौ हरेः ।
रोहिण्यां जन्म कृष्णस्य लोकानां मङ्गलावहम् ॥

जयन्ती नाम सा प्रोक्ता जयत्यशुभमित्यसौ ।
मध्यरात्रे ततस्तस्मिन् कल्याणं सम्यगाचरेत् ॥

तिथियोगेऽपि नक्षत्रे केवलार्चनमिष्यते ।
देवस्य देवकीसूनोरपरेद्युर्महोत्सवः ' ॥ इति

कृष्णजयन्तीविषये **क्रियाधिकारे** ॥

'श्रावणे मासि तस्मिंश्च कृष्णपक्षे विशेषतः ।
अष्टमी रोहिणीयुक्ता जयन्ती रहिताऽथवा ॥

तत्र चन्द्रोदये विष्णुं कृष्णविग्रहमर्चयेत् ।
विष्णुं चतुर्भुजं वापि तथा संस्नाप्य वारिभिः ' ॥

यज्ञाधिकारे— 'अष्टमी कृष्णपक्षे तु श्रावणे रोहिणीयुता ।
वियुक्ता वा जयन्तीति कीर्त्यते वेदपारगैः ॥

सौम्याग्नेययुता वापि तां जयन्तीं विदुर्बुधाः ।
जया दिनप्रधाना स्याज्जयन्ती च तथा तिथिः ॥

जयाऽर्चनन्तु मध्याह्ने पूजयेद्राघवं बुधः ।
चन्द्रोदये जयन्त्यां वै कृष्णं वै पूजयेत्तथा ॥

अत्रिः — 'श्रावणे मासि तस्मिश्च कृष्णपक्षे विशेषतः ।
अष्टमी रोहिणीयुक्ता सा जयन्तीति कीर्तिता' ॥

मरीचिः — 'अस्मिन् मासे (श्रावणमासे) कृष्णपक्षे अष्टमी रोहिणीयुक्ता वियुक्ता वा जयन्तीति कीर्त्यते । इति

'जनने जन्मनक्षत्रं मरणे तिथिरुच्यते ।
तस्मात्तु जन्मनक्षत्रयोगः कृष्णदिने भृगोः' ॥

इति जन्ममरणादेः मनुष्यविषयत्वात् जन्मनक्षत्र(योगस्य) तान्त्रिकविषयत्वात् जन्मनक्षत्रं (?) केवलमेव वैदिकविषयं भवति ।

अतो विद्धाऽष्टमी त्याज्या । सूर्योदयविद्धाया एव प्राधान्येन त्याज्यता । तिथिक्षयादौ 'पूर्वविद्धा यथा नन्दे' त्यादिवचनानुसारेण अरुणोदय-वेधस्त्याज्यः । आराधनादिकं चन्द्रोदयवेलायामेव । 'अतिवेधो महावेधो ये चान्ये तिथिषु स्मृताः । सर्वेऽप्यवेधा विज्ञेया वेधस्सूर्योदये मतः' इति योगवेधस्य प्राधान्यस्मरणात् तिथिक्षयादावतिवेधमहावेधौ परिहरणीयौ ।

श्रीरामनवमीविषयेऽप्येवमेव ॥

'जया दिनप्रधाना स्याज्जयन्ती च तथा तिथिः' ।

इत्युक्तत्वात् ।

स्मृत्यन्तरे — 'यां तिथिं समनुप्राप्य उदयं याति भास्करः ।
सा तिथिस्सकला ज्ञेया दानाध्ययनकर्मसु' ॥

भविष्यत्पुराणे — 'शुक्लपक्षे तिथिर्ग्राह्या यस्य मभ्युदितो रविः ।
कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविः' ॥

वेधश्चानुक्ततिथिविषय: (?) ।

ज्यौतिषे — 'द्वयोरह्नो: सङ्गतिस्स्यात् कला वाऽप्यन्तिमे दिने ।
सा तिथिस्सकला ग्राह्या सा ग्राह्येत्यवदद्गुरुः ॥
सा तिथिस्सकला ज्ञेया यस्यामभ्युदितो रविः ।
तन्नक्षत्रमहोरात्रं यस्यामस्तमितो रविः' ॥

श्रीवैखानसे — 'अतः परं प्रवक्ष्यामि नवम्यामर्चनं हरेः ।
देवदेवस्य विष्णोस्तु रामस्य च विशेषतः ॥
चैत्रमासे सिते पक्षे नवम्यान्तु रघूत्तमः ।
प्रादुरासीददितिभे परं ब्रह्मैव केवलम् ॥
नवमी त्वष्टमीविद्धा त्याज्या धर्मपरायणैः ।
उदये चाष्टमी किञ्चित् नवमी ऋक्षसंयुता ॥
यदि तस्यामुपवसेत् धर्महानिमवाप्नुयात् ।
उदये नवमी किञ्चिद्दशमी सकला यदि ॥
मुहूर्तार्धेन संयुक्ता संपूर्णा नवमी भवेत् ।
तत्र मध्याह्नकाले तु पूजयेद्राघवं बुधः' ॥ इति

कृष्णाष्टमीवत् सर्वं भवतीति मन्तव्यम् । ननु—उदयात्परं कलामात्रमारभ्य प्रातःकालपर्यन्तं वा अष्टमी पञ्च घटिका वा, ततः परं नवमी पञ्चपञ्चाशत्पर्यन्तं तत्र कथमिति चेत्—उच्यते ।

'उषः प्रधानमिति च केचिदाहुर्मनीषिणः ।
उत्सवस्नपनादीनि दिवाधिक्ये चरेद्बुधः' ॥

इत्यर्चनाधिकारवचनात् परस्मिन् दिवसे नवम्यभावात् 'दिवाधिक्ये' इत्युक्तत्वाच्च तत्रैव नवमी ।

'तिथयः प्रतिपन्मुख्याः पक्षयोरुभयोरपि ।
पूर्वया परया तिथ्या विद्धा स्यात्त्रिमुहूर्तकैः' ॥

इति स्मृत्यन्तरवचनात्,

‘पक्षद्वयेऽपि कलया तिथिं पूर्वा तथोत्तरा ।
त्रिभिर्मुहूर्तैर्विद्ध्यान्ति सामान्योऽयं विधिस्स्मृतः’ ॥

इति पैठीनसिस्मरणाच्च षट्घटिकामात्रमष्टमी स्थिता चेन्नवमी त्याज्या । चतुर्दश्यामप्येवमेव । स्मार्तविषये केचित् (?) ।

ऋश्यशृङ्गः — ‘अविद्धानि निषिद्धैश्च न लभ्यन्ते दिनानि तु ।
मुहूर्तैः पञ्चभिर्विद्धा ग्राह्याप्येकादशी तिथिः ।
तदर्धविद्धान्यन्यानि दिनान्युपवसेद्व्रती’ ॥ इति

अथ पारणविषये —

‘सर्वेष्वेवोपवासेषु दिवा पारणमिष्यते ।
अन्यथा तत्फलस्यार्धं धर्ममेवोपसर्पति’ ॥ इति

‘तिथ्यृक्षयोस्तु निगमे परेद्युः पारयेद्व्रती’ ॥

इति च सागरसंहितादिषूक्तत्वाच्च परेद्युः पारणं कर्तव्यम् ।

अत्र केचिदेवमाहुः ।

‘भक्तानां वैष्णवानाञ्च शुद्धानां नियतात्मनाम् ।
विहिता सात्त्वताभिज्ञैः रात्रावेव तु पारणम् ॥

उत्सावान्ते च तिथ्यन्ते व्रती कुर्याच्च पारणम् ।
पञ्चकालरतानाञ्च दीक्षितैकान्तिनामपि ।
भक्तैर्भागवतैस्सार्धं रात्रावेव तु पारणम्’ ॥

इति पाञ्चरात्रे अनन्तसंहितायामुक्तत्वात् दिवापारणमवैष्णवविषयमिति— तदसत् ।

‘तिथ्यन्ते वाथ भान्ते वा उत्सवान्ते च पारणम् ।
कुर्यात्कृष्णार्चनान्ते वा न कुर्यात्पारणं निशि’ ॥

इति जयसंहितायां चतुर्धा पारणावसरमुक्त्वा निशि पारणं न कुर्यादिति तत्रैवोक्तत्वात् ।

किञ्च 'तिथ्यृक्षयोर्यदा छेदो नक्षत्रान्तमथापि वा ।
अर्धरात्रेऽथवा कुर्यात्पारणं तत्परेऽहनि ॥

अष्टम्यामथ रोहिण्यां न कुर्यात्पारणं निशि ।
हन्यात्पुराकृतं पुण्यमुपवासार्जितं फलम्' ॥

इति प्रत्यवायस्मरणात् पाञ्चरात्रस्य मोहशास्त्रत्वेन कुण्डगोलकादिविषयत्वेन शप्तविषयत्वेन च श्रुतिषु पुराणेषु च तत्रतत्रावगम्यमानत्वाच्च तत्रोक्तदीक्षापरविषयम् तत् रात्रिपारणम् ।

किञ्च 'पारणान्तं व्रतं ज्ञेयं व्रतान्ते विप्रभोजनम् ।
असमाप्ते व्रते पूर्वे नैव कुर्याद्व्रतान्तरम् ॥

इति विष्णुधर्मोत्तरवचनादसमाप्तव्रतस्य व्रतान्तरयोग्यतासम्भवात् श्राद्धादिकमपि त्यक्तव्यम् । अत एव रात्रौ पारणमयुक्तम् (?) ।

'अहस्सु तिथयः पुण्याः कर्मानुष्ठानतो दिवा ।
रात्रिव्रतेषु सर्वेषु रात्रियोगः प्रशस्यते' ॥

इत्युक्तरीत्या रामावतारस्य मध्याह्नकालत्वात् अगस्त्यसंहितादिषु परेद्युः पारणविधानाच्च सर्वास्वपि जयन्तीषु परेद्युः पारणं सिद्धम् ।

अथ दौर्गनवमी विषये —

'नवमी पूर्वविद्धैव पक्षयोरुभयोरपि ।
दुर्गोत्थानस्य नवमी मध्याह्नद्वयगामिनी ॥
पूर्वा मूलर्क्षसंयुक्ता पूर्वतः परतो दिवा' ॥

बृहद्यमः — 'श्रावणे दौर्गनवमी पूर्वा चैव हुताशनी' ।
पूर्वविद्धा तु कर्तव्या शिवरात्रिर्बलेर्दिनम् ॥

पूर्वविद्धा सदा ग्राह्या नवमी मूलसंयुता ।
पूर्वतः परतो वापि मध्याह्नव्यापिनी शुभा' ॥

स्कान्दे — 'कुमारीपूजने त्याज्या नवमी पूर्वसंयुता ।
स्वल्पापि परतो ग्राह्या पूर्वतः परतोऽपि वा ॥

सङ्ग्रहे — 'आश्वयुक्शुक्लपक्षस्य नवमी मूलसंयुता ।
सा महानवमी प्रोक्ता साऽपि चात्यन्तदुर्लभा ॥

नवम्यावर्तनी ग्राह्या पूर्वतः परतोऽपि वा ।
मूलर्क्षयोगा सा कार्या पूर्वतः परतोऽपि वा ॥

आश्वयुक्प्रतिपत्काम्ये नवदुर्गार्चनं प्रति ।
पूर्वतः परतो वापि यस्मिन्नावर्तनी भवेत् ॥

तस्यां व्रतमुपक्रम्य नवदुर्गार्चनं प्रति ।
प्रत्यक्षं गन्धपुष्पाद्यैः क्रमात्प्रतिपदादिषु ॥

तिथिष्वावर्तनाख्येषु नवम्यन्तेषु पूजयेत् ।
तिथिप्रयुक्तपूजायां तिथिष्वावर्तनं न चेत् ॥

सा च पूर्वतिथिश्चैव सन्मुखः पूर्ववासरा (?) ।
आवर्तनद्वये तत्र नवम्येका भवेद्यदि ॥

मूलर्क्षयोगे सा कार्या यदि न स्यात्परा शुभा ।
नवम्यां च जपं होमं समाप्य विधिवद्बलिम् ॥
यात्रां विजयिनां कुर्याद्दशम्यां श्रवणेऽपि वा' ॥

अथ दशमी ।

अङ्गिराः — 'सम्पूर्णा दशमी कार्या पूर्वया परया दिवा ।
युक्ता न दूषिता या स्यादिति सा सार्वतोमुखी' ॥

ब्रह्मकैवर्ते — 'दशमी चैव कर्तव्या नवम्या संयुता विभो ।
एकादश्यन्विता वापि सा कार्या द्विमुखी पुनः' ॥

शातातपः — 'कृष्णपक्षे तु दशमी सरन्ध्रा भूतकर्मणि ।
रुद्रयुक्ता सदा ग्राह्या दशमी शुक्लपक्षगा' इति ॥

'चतुर्दश्युत्तरा शुक्ला पूर्वा कृष्णचतुर्दशी ।
उदये त्रिमुहूर्ताऽपि ग्राह्याऽनन्तव्रते तिथिः' ॥

अथ कृत्तिकादीपविधिः ।

भृगुः — 'कार्तिक्यां पूर्णिमायान्तु दीपोत्सवमथाचरेत्' ।

ज्योतिषे 'द्वयोर्दिवसयोः पर्व यदि स्यादादिमं दिनम् ।
हित्वा परत्र दिवसे कुर्याद्दीपोत्सवं बुधः ॥

कृत्तिकाभिरयोगे वा केवलायां तिथौ भवेत् ।
अपर्वणि कृते दीपे राजराष्ट्रं विनश्यति ॥

तस्मात्सर्वप्रयत्नेन पर्वयुक्तं समाचरेत् ।
दिवसे तु कलामात्रापूर्णिमा रोहिणीयुता ॥
दिवारात्र्यन्तरे राष्ट्ररक्षार्थं दीपमाचरेत्' ॥

तत्रैव — 'कृत्तिका पर्वसंयुक्तादीपारोपणकर्मणि ।
उत्तमं मध्यमं पार्श्वे पर्वयुक्ता प्रशस्यते ॥

पर्वदिनस्य चतुर्दशीभरणीदुष्टत्वे प्रतिपदेव ग्राह्या ।

'पूर्णिमाप्रतिपत्सन्धौ चन्द्रस्सम्पूर्यते यतः ।
प्रथमा पूर्णिमा ज्ञेया तत्र दीपश्श्रियावहः ॥

कालप्रकाशिकायाम् — 'पूर्णिमान्ते प्रतिपदः तदादौ घटिकाद्वये ।
प्रथमा पूर्णिमा तुल्या दीपारोप शुभावहः' ॥

तिथिक्षये परेद्युः उदयकालपर्वासम्भवे सङ्गवस्पृक् ग्राह्या ।

'रोहिणी कृत्तिकायुक्ता पूर्णिमा सङ्गवस्पृशी ।
निश्यादौ दीपमारोप्यं सर्वसम्पत्समृद्धिदम् ॥

'सङ्गवस्पृग्यदा पर्व तदहोरात्रपर्वभा' गिति वचनाच्च ।
'वृश्चिकस्थे दिवानाथे वृषभस्थे निशाकरे' ॥

वृषभस्योदये कुर्याद्दीपारोपमहोत्सवम् ।
'वृश्चिकेऽर्के वृषे लग्ने पूर्णायामग्निभे शुभे ॥
दीपं दद्याद्वृषस्यांशे धनधान्यादि वर्धते' ॥

ज्योतिषे 'अधिमासप्रभेदेन पर्वद्वयमथो भवेत् ।
उत्तरत्र शुभं शस्तं दीपोत्सवमथाचरेत् ॥

संवत्सरे तु सोमस्य ग्रहणं यद्दिने भवेत् ।
तद्दिनं वर्जयेद्देव तद्वत्सूर्यग्रहं त्यजेत् ॥

सोमग्रहो यदि भवेत्तां निशां वर्जयेच्छुभे ।
सूर्यस्य ग्रहणं तु अहोरात्रं शुभं त्यजेत् ॥

कार्तिके मासि नक्षत्रे कृत्तिकाख्ये विधोर्ग्रहे ।
तन्मासं वर्जयन्त्येके तद्दिनं वा परित्यजेत्' ॥

तत्रैव 'पर्व ग्रहणयुक्तञ्चेन्नात्र दीपोत्सवो मत: ।
कुर्यात्परेऽह्नि कलयाऽप्यग्निभं पर्व वा यदि ॥

'द्वयोरह्नो: सङ्गतिस्स्यात्कला वाऽप्यन्तिमे दिने ।
पूर्वं हित्वा परेणैव दिवसे दीपमङ्गलम् ॥

अपरे दैविकं कुर्याद्दीपोत्सवविधिं द्विज! ।
सा तिथिस्सकला ज्ञेया सङ्ग्राह्येत्यवदद्गुरु: ॥

तथा मासर्क्षकान्याश्च एकमासे परस्परम् ।
दिनद्वये तु सम्प्राप्ते नेष्टं तत्प्रथमं विदुरिति' ॥

पाञ्चरात्रादिविषये —

'कृत्तिकारोहिणीयुक्तपौर्णमास्यामथाचरेत् ।
कार्तिक्यां पौर्णमास्यां वा दीपोत्सवमथाचरेत् ॥

भरणीकृत्तिकामिश्रदिने यदि चतुर्दशी ।
व्याध्यल्पवृष्टिक्षोभैश्च राष्ट्रपीडा न संशयः ॥

चतुर्दश्या च भरणी कृत्तिकायुतपूर्णिमा ।
त्याज्या स्याद्दीपदानार्थं तदन्ये वासरे चरेत्' ॥

भरद्वाजः — 'मास्यूर्जे कृत्तिकाधिष्ण्ये सायंकाले प्रदापयेत् ।
दीपांश्चैव महादीपान् अनेकान् सर्वतो गृहे ।
देवालये नृपगृहे सभायां पुण्यभूमिषु' ॥

सिद्धान्ते च — 'वृश्चिकस्थे दिवानथे वृषभस्थे निशाकरे ।
वृषभस्योदये कुर्याद्दीपारोपमहोत्सवम्' ॥

मासादौ मासान्ते च कृत्तिकासम्भवे परत्रैव दीपारोपणं कुर्यात् । पूर्वत्र वा परत्र वा सङ्क्रमरहिते दिने कुर्यात् । उभयत्र सङ्क्रमे सति सम्पूर्णपर्वयुक्ते कुर्यात् ।

तथा भरद्वाजः ।

'कृत्तिकाद्वयसंयुक्ते मासे तस्मिन् कथं भवेत् ।
तन्मासान्तगतास्वेव तासु दीपान् प्ररोपयेत् ॥

कृत्तिका सङ्क्रमे युक्ता यदि दीपप्ररोपणम् ।
न तासु कारयेदादौ कृत्तिकास्वेव कारयेत् ॥

मासादौ कृत्तिकास्वेव सङ्क्रान्तिस्तासु सन्त्यजेत् ।
सङ्क्रान्तिद्वयसंयुक्तं कृत्तिकाद्वयमेव चेत् ॥

द्वयोरपि च नक्षत्रे पूर्णबिम्बेन्दुसंयुते ।
आग्नेयं कारयेद्धीमान् राजराष्ट्रविवृद्धये' ॥

दत्तात्रेयः — 'एकस्मिन्नपरे घस्रे यदि सङ्क्रमणं न च ।
पूर्वस्मिन् पौर्णमासी स्यात्तस्मिन् तान् ज्वालयेद्बुधः ॥

अपौर्णिमासं पूर्वर्क्षं सङ्क्रान्तिश्च दिनेऽपि वा ।
परस्मिन् कारयेद्धीमान् महादीपप्ररोपणम् ॥

एतद्यो विधिवत्कुर्याद्दीपारोपणमुत्तमम् ।
राजराष्ट्रविवृद्ध्यै च लक्ष्मीलाभाय कल्पते ।
सम्यग्वर्षति पर्जन्यश्चोरा नश्यन्त्यसंशयः' ॥

यदि कृत्तिकाभं सङ्क्रान्तिदुष्टमपर्वकं वा तदा पर्वयुक्ता रोहिणी ग्राह्या ।

तथा भरद्वाजः ।

'द्वयोरन्यतरं पौर्णिमास्या न च युतं कथम् ।
तदानीं रोहिणीयुक्ता पौर्णिमासी यदि द्विज ।
तस्यां वा ज्वालयेद्धीमानिति शास्त्रस्य निश्चयः' ॥

रोहिणीयोगाभावे सङ्क्रान्तियुक्ताऽपि परा कृत्तिका ग्राह्या ।

दत्तात्रेयः— 'पौर्णमास्या न च युता रोहिणी कथमत्र वै ।
एवञ्चेत्परसङ्क्रान्तौ कृत्तिकास्वेव कारयेत्' ॥

भौमवारयुतं पर्व त्याज्यमिति सुप्रदीपे ।

'पर्वयुक्तेऽपि वर्ज्यं स्याद्भौममन्त्यदिने यदि ।
अपरे दिवसे कुर्यात्कृत्तिकाया महोत्सवम्' ॥

एवं भरणीयुक्तं चतुर्दशीयुक्तञ्च त्याज्यम् ।

**जयोत्तरसंहितायाम् ।**

'कृत्तिकाभरणीयुक्तदिने यदि चतुर्दशी ।
अल्पवृष्टिश्च रोगश्च राष्ट्रक्षोभो नसंशयः' ॥

भरणी कृत्तिकायुक्ता तद्दिने पूर्णिमा यदि ।
तदन्ये वासरे त्वेव कृत्तिकोत्सवमाचरेत्' ॥

विष्णुरहस्ये— 'भरणी कृत्तिकायुक्ता कृत्तिका पूर्णिमायुता ।
सा तिथिर्निष्फला त्याज्या दीपदानं निषिध्यते ॥

भरणी कृत्तिकायुक्ता युक्ता पर्वचतुर्दशी (?) ।
त्याज्यावेतौ सदा ब्रह्मन् उत्सवं नैव कारयेत् ॥

रोहिणी कृत्तिकायुक्ता पूर्णिमा कलया युता ।
निश्यादौ दीपमारोप्य सर्वसम्पच्छुभावहम् ॥

कृत्तिकरोहिणीमिश्रे तद्दिने पूर्णिमा यदि ।
राजराष्ट्रविवृद्धिस्स्यात्तत्काले दीपमुत्तमम्' ॥ इति

अथ साम्प्रतं सङ्क्रमविषुवायनादिषु स्नानदानादिपुण्यकालनिर्णयः क्रियते । यथा —

**कालनिर्णये** ।

'कर्कटो मकरस्सिंहः कुम्भोऽलिर्वृषभस्तुला ।
मेषः कन्या धनुर्मीनो मकरश्चेति सङ्क्रमाः' ॥ इति

मेषराशिस्थितरवेः वृषभराशिप्रवेशस्सङ्क्रमः । सङ्क्रमशब्दस्सामान्यवाची ।

'द्वादशात्र क्रमाद्विद्यात् अयने दक्षिणोत्तरे ।
चत्वारोऽनन्तरा विष्णुपदास्स्युर्दक्षिणोत्तरे ॥

विषुवे तत्परे द्वौ तु चत्वारस्तदनन्तराः ।
षडशीतिमुखाः प्रोक्ताः षडशीतिगुणाः फलैः' ॥

स्मृतिः — 'षिडशीतिमुखाः प्रोक्तास्त्रिंशत्पूर्वास्तु कर्कटे ।
नाडिका मकरे तु स्युः पुण्या विंशतिरुत्तराः ॥

चतुर्ष्वनन्तरेषूर्ध्वं प्राक् च षोडश षोडश ।
सङ्क्रमेषु च पुण्यास्स्युः सङ्क्रान्त्यां विषुवाह्वयोः ॥

दश प्राक् दश पश्चाच्च पुण्यास्स्युष्षडशीतिषु ।
षष्टिर्नाड्यो ह्यतीतासु पुण्यदा इति कीर्तिताः ॥

सङ्क्रमेऽहन्यहः कृत्स्नं पुण्यं स्नानादिकर्मसु ।
अर्वाङ् निशि तदा चेत्तु भवेदावर्तनात्सदा ॥

कालं पुरातनस्याह्नः ऊर्ध्वश्चेदुत्तरेऽहनि ।
आवर्तनादधःकालान्निशीथसमये यदि ॥

पूर्वोत्तराहर्द्वितयं पुण्यमाहुर्मनीषिणः ।
अहस्सङ्क्रमणे पुण्यमहः कृत्स्नं प्रकीर्तितम् ॥

रात्रौ सङ्क्रमणे पुण्यं दिनार्धं स्नानदानयोः ।
पूर्णे चैवार्धरात्रे तु यदा सङ्क्रमते रविः ॥
तदा दिनद्वयं पुण्यं मुक्त्वा मकरकर्कटौ' ॥

ग्रन्थान्तरे — 'कार्मुकन्तु परित्यज्य नक्रं सङ्क्रमते रविः ।
प्रदोषे वाऽर्धरात्रे वा स्नानं दानं परेऽहनि' ॥ इति

'एवं च मकरसंक्रमः प्रदोषे वा अर्धरात्रे वा प्राप्तश्चेत् परेऽहनि स्नानदानादिकं कर्तव्यमिति सिद्धम् ।

स्मृत्यन्तरे — 'प्रत्यूषे वा निशीथे वा यदि कर्कटसङ्क्रमः ।
पूर्वस्मिन्नेव कुर्वीत स्नानदानादिकं नरः ॥

प्रदोषे वा निशीथे वा मकरे सङ्क्रमो यदि ।
पराह्ण एव सर्वत्र पुण्यास्सन्निधिनाडिकाः ॥

स्नायाच्छ्राद्धञ्च दानञ्च विदध्यात्सङ्क्रमेष्वपि ।
अयने विषुवद्विष्णुपद्योस्तु षडशीतिषु ॥

सदा मध्ये चापगमे कुर्यात्स्नानादिकं नरः ।
विष्णुपद्याह्वयेष्वत्र स्नानदानादिकं कृतम् ॥

सहस्रगुणमुद्दिष्टं षडशीतिमुखेषु च ।
विषुवत्ययने लक्षगुणं कोटिगुणं भवेत् ॥

तत्तत्सङ्क्रान्तिपूर्वेषु तद्वद्देवायनेष्वपि ।
मकरस्यायनेऽप्यादौ (?) कालः स्नानादिनिश्चयः' ॥

शातातपः — 'कुर्यात्सदाऽयने मध्ये विषुवत्यां विषूवति ।
षडशीत्यामन्त्यभागे स्नानदानादिकः स्मृतः ॥

भविष्यत्ययने दानं वर्तमाने तु सङ्क्रमे ।
अतीते च व्यतीपाते इतरेषु यथेच्छया' ॥

याज्ञवल्क्यः — 'शतमिन्दुक्षये दानं सहस्रन्तु दिनक्षये ।
विषुवे शतसाहस्रं व्यतीपाते त्वनन्तकम्' ॥

भरद्वाजः — 'व्यतीपाते वैधृतौ च दत्तमक्षयकृद्भवेत्' ॥

पराशरः — 'पुत्रजन्मनि यज्ञे च मृतौ सङ्क्रमणे रवेः ।
राहोश्च दर्शने स्नानं प्रशस्तं नान्यदा निशि ॥

उपक्रमे लक्षगुणं ग्रहणे चन्द्रसूर्ययोः ।
पुण्यं कोटिगुणं मध्ये मुक्तिकाले त्वनन्तकम् ॥

सङ्क्रमस्तु निशीथे स्यात्षड्यामाः पूर्वपश्चिमाः ।
सङ्क्रान्तिकालो विज्ञेयस्तत्र स्नानादिकं भवेत् ॥

राहुदर्शनसङ्क्रन्तिविषुवात्ययवृद्धिषु ।
स्नानं नैमित्तिकं ज्ञेयं रात्रावपि न दुष्यति' ॥

स्मृत्यन्तरे – 'ग्रहणोद्वाहसङ्क्रान्तियात्रार्तिप्रसवेषु च ।
स्नानं नैमित्तिकं ज्ञेयं रात्रावपि न दुष्यति ॥

याज्ञवल्क्यः— 'राहुदर्शनसङ्क्रान्तिविषुवात्ययवृद्धिषु ।
स्नानदानादिकं कार्यं निशि [illegible]

सुमन्तुः — 'रात्रौ स्नानं न कुर्वीत दानञ्चैव विशेषतः ।
नैमित्तिकन्तु कुर्वीत स्नानं दानञ्च रात्रिषु ।
यज्ञे विवाहे यात्रायां तथा पुस्तकवाचने ॥

दानान्येतानि शस्तानि रात्रौ देवालये तथा ।
ग्रहणोद्वाहसङ्क्रान्तियात्रार्तिप्रसवेषु च ॥

श्रवणे चेतिहासस्य रात्रौ दानं प्रशस्यते ।
अर्धरात्रे तदूर्ध्वं वा सङ्क्रान्तौ दक्षिणायने ।
पूर्वमेव दिनं ग्राह्यं यावन्नोदयते रविः' ॥

स्मृतिः— 'अयने विंशतिः पूर्वे मकरे विंशतिः परे ।
वर्तमाने तुलामेषे नाड्यस्तूभयतो दश' ॥

स्मृत्यन्तरे — 'मन्दा मन्दाकिनी ध्वाङ्क्षी घोरा चैव महोदरी ।
राक्षसी मिश्रिता प्रोक्ता सङ्क्रान्तिस्सप्तधा नृप ॥

मन्दा ध्रुवेषु विज्ञेया वृद्धौ मन्दाकिनी मता ।
क्षिप्रे ध्वांक्षा विजानीयात् उग्रे घोरा प्रकीर्तिता ॥

चरैर्महोदरी ज्ञेया क्रूरैः ऋक्षैस्तु राक्षसी ।
मिश्रता चैव विज्ञेया मिश्रैः ऋक्षैस्तु सङ्गमे ॥

द्विचतुःपञ्चसप्ताष्टनवद्वादश एव च ।
क्रमेण घटिका ह्येतास्तत्पुण्यं पारमार्थिकम् ॥

क्षिप्रञ्च स्थिरमुग्रञ्च दारुणं चरमेव च ।
मृदु साधारणन्त्वृक्षभेदाः सप्त प्रकीर्तिताः' ॥

हिरण्यगर्भादिकमुत्तरात्रयं ध्रुवाणि । कराश्विनीवाक्पतिभमभिजिल्लघूनि । पूर्वत्रयं भरणी मघा च उग्रम् । भुजङ्गभं नैरृतभमैशमिन्द्रभं तीक्ष्णानि । रेवतीचित्तानुराधामृगशीर्षाणि मृदूनि । कृत्तिकाविशाखे मिश्रे । श्रवणपुनर्वसूशतभिषक्धनिष्ठास्वातयश्चराणि ।

मन्दादित्रिंशन्नाडिकापर्यन्तपुण्यकालप्रतिपादकानि वचनानि उत्तमोत्तमपुण्यकालमारभ्याधमाधमपुण्यकालपर्यन्तप्रतिपादकानीत्यवगम्यते । एवमेवात्यन्तपुण्यकालप्रतिपादनाय 'या याः सन्निहिता नाड्यस्तास्ताः पुण्यतमाः स्मृताः । शुद्धा' इति सन्निहितकालस्य तमपा प्रतिपादनम् । तथा 'मकरस्यायनेऽप्यादौ स्नानादिविधय' इति असन्निहतस्यापि (कालस्य) बहुषु स्मृतिषु स्नानादिकर्मसु पुण्यतमत्वेन प्रतिपादनम् । यथा —

'सङ्क्रान्तिसमयस्सूक्ष्मो दुर्ज्ञेयः पिशितेक्षणैः ।
तद्योगादप्यधश्चोर्ध्वं त्रिंशन्नाड्यः पवित्रकाः' ॥ इति

भविष्योत्तरे — 'प्रत्यूषे कर्कटं भानुः प्रदोषे मकरं यदि ।
सङ्क्रमेत् षष्टिनाड्यस्तु पुण्याः पूर्वोत्तराः स्मृताः' ॥

इत्यादिवचनानि मुख्यकालासम्भवविषयाणि । 'मुख्ये सम्भवत्यमुख्यकल्पनायोगा' दिति न्यायात् ।

'मुख्यकाले यदा कर्तुं कर्म चैव न शक्यते ।
गौणकालेऽपि कर्तव्यं गौणोऽप्यत्रेदृशो भवेत्' ॥

इत्यादिवचनानां 'स्नानं दानं परेऽहनी'त्यादि वचनानां च का गतिरिति चेत्—उच्यते ।

शातातपः — 'सूर्यस्य सङ्क्रमे पुण्ये न स्नायाद्यदि मानवः ।
सप्तजन्मसु रोगी स्याद्दुःखभागी च जायते' ॥

इति वचनानुरोधेन व्याधिशोकराजदस्युभयपीडितेनापि स्नानादिकमवश्यं कर्तव्यमित्यभिप्रायेण परेऽहनीत्युक्तमिति मन्तव्यम् । अन्यथा बहुवचनविरोधः ।

'अकाले चेत्कृतं कर्म कालं प्राप्य पुनः क्रिया ।
कालातीतन्तु यः कुर्यादकृतं तद्विनिर्दिशेत्' ॥

इत्यकाले कृतमकृतमिति घटिकाव्यवस्थाभावे तृतीयेऽहन्यपि भवेत् । अतो मन्दादिपुण्यतमकालेष्वेव स्नानादिकं कार्यमिति सिद्धम् ।

अत्र भगवच्छास्त्रे प्रकीर्णाधिकारे भृगुः —

'अतः परं प्रवक्ष्यामि देवेशस्योत्सवक्रमम् ।
विषुवायनभूपर्क्षप्रतिष्ठाकर्तृभेषु च ॥
ग्रहणे मासनक्षत्रे विष्णुपञ्चदिनेषु च' ॥

उत्सवस्यान्त्यदिवसे तेषु तीर्थं प्रकल्पयेत् ।
अयने विषुवे चैव ग्रहणे सोमसूर्ययोः ॥
तत्तत्काले प्रकुर्वीत तीर्थस्नानन्तु नान्यथा' ॥

यज्ञाधिकारे — 'अत ऊर्ध्वं प्रवक्ष्यामि देवस्य स्नपनक्रमम् ।
प्रतिष्ठोत्सवयोरन्त अयने विषुवद्वये ॥

सूर्येन्द्वोर्ग्रहणे चापि यत्नेन स्नपनं चरेत्' इत्यारभ्य —

देवस्य स्नपनं कुर्यात्तत्तत्काले विशेषतः ।
विषुद्वये वर्तमाने ग्रहणे चन्द्रसूर्ययोः ॥
अयने चोत्तरेऽतीते प्रारब्धे दक्षिणे तथा' ॥ इत्युक्तम्

अर्चनाधिकारे — 'अत ऊर्ध्वं प्रवक्ष्यामि कालं स्नपनकर्मणः ।
प्रारम्भातीतकाले तु दक्षिणोत्तरकेऽयने ॥

विषुवद्वयकाले च वर्तमाने च सर्वदा ।
ग्रस्यमाने रविग्राहे मुच्यमाने निशाकरे' ॥

इत्यादिवचनैः दक्षिणायने अतीते उत्तरायणादौ स्नानादिकं दक्षिणायनप्रारम्भे उत्तरायणान्ते च पुण्यकालश्च प्रतिपादितः । अन्यथा 'तत्तत्काले प्रकुर्वीत तीर्थस्नानन्तु नान्यथा' इति विधिनिषेधवचनवैयर्थ्यप्रसङ्गः ।

अत्र श्रुतिरपि । 'सन्धौ यजेत सन्धिमभितो यजेत' इति ।

सन्धिश्च — सूक्ष्मत्वात्सन्धिकालस्य सन्धिर्विषम उच्यते ।
सामीप्यविषयं प्राहुः पूर्वतः परतोऽपि वा ॥

ननिवयं श्रुतिः यागकालविषयेति चेत्–सत्यम् । 'यज–देवपूजासङ्गति-करणदानेष्विति' यागशब्देन अद्वारकसद्वारकभगवत्समाराधनमुच्यते। अद्वारकम्–अर्चावतारे दिव्यमङ्गलविग्रहविशिष्टस्य समाराधनम् । सद्वारकम् – यागादि ।

श्रीवैखानसे भृगुः - 'अमूर्तञ्च समूर्तञ्च द्विविधं कर्म वैदिकम् ।
अमूर्तोऽग्न्याहुतिः प्रोक्ता समूर्तं बेरपूजनम्' ॥

ग्रन्थान्तरे — 'देवदेवेशितुर्विष्णोर्लक्ष्मीशस्य जगत्पतेः ।
उपायस्त्रिविधः प्रोक्तः पूजायां शृणुत द्विजाः! ॥
मानसी होमपूजा च बेरपूजेति वै श्रुतिः' ॥ इति

दहरविद्यादिकं मानसिकम् 'अग्नयो वै त्रयी विद्या देवयानः पन्थाः' इत्यादि । अत्र मुण्डकोपनिषदि – 'क्रियावन्तः श्रोत्रिया ब्रह्मनिष्ठास्स्वयं जुह्वत: एकर्षिं श्रद्धयन्तः, तेषामेवैतां ब्रह्मविद्यां वदेत' इत्यादि श्रूयते । तत्र 'क्रियावन्तः' इति भगवदाराधनादिक्रियावन्त उच्यन्ते । 'आत्मक्रीडः आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठः' इति पूर्वमेव प्रतिपादितम् । अत्र —

'निषेके गर्भसंस्कारे जातकर्मक्रियासु च ।
विधिवत्संस्कृता मन्त्रैः चीर्णव्रतसमापनाः ॥
श्रोत्रिया इति विज्ञेयाश्शाखापाराश्च ये द्विजाः' ॥

इति **बोधायनस्मरणात्** 'स्वयं जुह्वत एकर्षिं श्रद्धयन्त' इत्यमूर्ताराधनप्रतिपादनाच्च आराधनत्रयमपि प्रतिपादितं भवति ।

स्कान्दे — 'वैखानसीं महाशाखां स्वसूत्रे विनियुक्तवान् ।
पद्मभूः परमो धाता तस्मिन्नाराधनत्रयम् ।
उक्तवान् निगमार्थानामाचारं प्रविभागशः' ॥ इति

अतः 'सन्धौ यजेत' इत्यादिश्रुतयः समूर्तविषया अमूर्तविषयाश्च ।

कालातिक्रमे दोषः–'कालातीतं तु यः कुर्यात्' इत्यादिना पूर्वमेवोक्तः ।

'प्रभुः प्रथमधर्मे तु योऽनुकल्पेन वर्तते ।
न साम्परायिकं तस्य दुर्मतेर्विद्यते फलम् ॥

विधर्मः परधर्मश्च आभास उपमा छलः ।
अधर्मशाखाः पञ्चेमाः यत्नतो धर्मवान् त्यजेत् ॥

धर्मबाधो विधर्मः स्यात्परधर्मोऽन्यचोदितः ।
उपधर्मस्तु पाषण्डः दम्भो वाऽऽशंसुभिश्छलः ॥

यस्त्विच्छया कृतं पुम्भिराभासो ह्याश्रमाद्बहिः ।
स्वशास्त्रनिर्णये सत्ये सत्यास्स्युर्लोकनिर्णयाः' ॥

यमः — 'स्वपाके वर्तमानस्तु परपाकं निषेवते ।
शाश्वतं सूकरत्वञ्च गर्दभत्वञ्च गच्छति ॥

अवलिप्तस्य मूर्खस्य दुष्टवृत्तस्य दुर्मतेः ।
अन्नमश्रद्धधानस्य यो भुङ्क्ते भ्रूणहा स वै ॥

यस्यान्नेन तु भुक्तेन भार्यां समधिगच्छति ।
यस्यान्नं तस्य ते पुत्राः अन्नाद्रेतः प्रवर्तते ॥

सर्वन्तु तरितुं शक्यमन्नलेपो हि दुस्तरः ।
दुष्कृतं हि मनुष्याणामन्नमाश्रित्य तिष्ठति ॥

अभोज्यं ब्राह्मणस्यान्नं वृषलेन निमन्त्रितम् ।
तथैव वृषलस्यान्नं वृषलेन विनिर्मितम् ॥

कण्डूपकं स्नेहपकं पायसं दधि सक्तवः ।
एतान्यशूद्रान्नभुजो भोज्यानि मनुरब्रवीत्' ॥

कटकर्पं कण्डूपक्कम् (?) ।

याज्ञवल्क्यः — 'न भार्यादर्शनेऽश्नीय(?)न्नैकवासा न संवृतः ।
ब्राह्मण्या सह योऽश्नीयादुच्छिष्टं वा कदाचन ॥
न तस्य दोषमिच्छन्ति नित्यमेव मनीषिणः' ॥

भारते —
'केशकीटावपन्नञ्च मुखमारुतवीजितम् ।
अभोज्यं तद्विजानीयात् भुक्त्वा चान्द्रायणं चरेत् ॥

उत्थाय च पुनः स्पृष्टं पदा स्पृष्टञ्च लङ्घितम् ।
अन्नं तद्राक्षसं विद्यात्तस्मात्तत्परिवर्जयेत् ॥

राक्षसोच्छिष्टभुग्विप्रः सप्तपूर्वान् परानपि ।
निरये रौरवे घोरे स्वपितॄन् पातयिष्यति ॥
तस्मिन्नाचमनं कुर्याद्यस्मिन् भाण्डे स भुक्तवान् (?) ॥

प्रत्युत्तिष्ठत्यथाचान्तो भुक्तवानासनात्तदा ।
स्नानं सद्यः प्रकुर्वीत अन्यथाऽप्रयतो भवेत् ॥

गृह्यः —
'भुक्त्वाऽमृतापिधानेति चोर्जस्करमिति ब्रुवन् ।
अर्धं पीत्वा तु गण्डूषमर्धं त्याज्यं महीतले ॥

रसातलगता नागास्तेन प्रीणन्ति नित्यशः ।
हस्तं प्रक्षाल्य गण्डूषं पिबेत्स पतितो भवेत् ॥

देवलः —
'भुक्त्वोच्छिष्टं समादाय नामन्त्रं किञ्चिदाचमेत् ।
उच्छिष्टभागधेयेभ्यः सोदकं निर्वपेद्भुवि' ॥

तन्त्रः —
'रौरवे पुण्यनिलये पद्मार्बुदनिवासिनाम् ।
अर्थिनामुदकं दत्तमक्षय्यमुपतिष्ठतु ॥
इत्यङ्गुष्ठेन संस्राव्य पाणी प्रक्षाल्य चाचमेत' ॥

**आचम्यापो गृहीत्वा आदित्याभिमुखं ओंप्राणानाप्यायस्वेत्युदरमभिमृशेत् ॥ ३ ॥**

**दक्षिणेन कराङ्गुष्ठाग्रेण 'अणोरणीया' निति दक्षिणपादाङ्गुष्ठे जलं स्रावयेत् ॥ ४ ॥**

आचमनविषये विशेषः । भृगुः ।

'जपहोमप्रदानेषु पितृपिण्डोदकेषु च ।
विप्रस्समासेष्वाचामेत् सर्ववस्तुषु चर्वणे' ॥

शातातपः— 'दन्तलग्ने फले मूले भुक्तस्नेहावशिष्टके ।
ताम्बूले चेक्षुदण्डे च नोच्छिष्टो भवति द्विजः' ॥

मधुपर्के च सोमे च प्राणाहुतिषु चाप्सु च ।
आस्यहोमेषु सर्वेषु नोच्छिष्टो भवति द्विजः ॥

स्मृत्यन्तरे— 'अस्निग्धे औषधे जग्धे स्निग्धबन्धे च लेपने ।
नाचामेद्भोजने वृत्ते शुद्ध्यर्थं क्रमुकादिषु' ॥

अथ हुतानुमन्त्रणम् । गौतमः

'हुतानुमन्त्रणे कुर्याच्छ्रद्धायामिति मन्त्रतः ।
अथाक्षरेण चात्मानं योजयेद्ब्रह्मणेति ह' ॥

विष्णुपुराणे— 'स्वस्थः प्रशान्तचित्तस्तु कृतासनपरिग्रहः ।
अभीष्टदेवतानाञ्च कुर्वीत स्मरणं नरः ॥

अग्निराप्याययेद्धातुं पार्थिवः पवनेरितः ।
दत्त्वावकाशं नभसा जरयेदस्तु मे सुखम् ॥

अन्नं बलाय मे भूमिरापोऽन्नमनिलस्य च ।
भवेत्त्वेतत्परिणतं ममास्त्वव्याहतं सुखम् ॥

प्राणापानसमानानामुदानव्यानयोस्तथा ।
अन्नं पुष्टिकरं चास्तु ममास्त्वव्याहतं सुखम्' ॥

'अगस्तिरग्निर्बडबानलश्च भुक्तं मयाऽन्नं हरयन्त्वशेषम् ।
सुखञ्च मे तत्परिणामजातं यच्छन्त्वरोगं मम चास्तु देहे' ॥

विष्णुस्समस्तेन्द्रियदेहदेही प्रधानभूतो भगवान् यथैकः ।
सत्येन तेनात्तमशेषमन्नं आरोग्यदं मे परिणाममेतु ॥

विष्णुरत्ता तथैवान्नं परिणामश्च वै तथा ।
सत्येन तेन मे भुक्तं जीर्यत्वन्नमिदं तथा ॥

इत्युच्चार्य स्वहस्तेन सम्मार्ज्य च तथोदरम् ।
अनायासप्रदान्येव कुर्यात्कर्माण्यतन्द्रितः' ॥

ताम्बूलविषये — 'एकपूगं सदाऽऽरोग्यं द्विपूगं निष्फलं भवेत् ।
अतिश्रेष्ठं त्रिपूगं चेत् अधिकं चेन्न दोषकृत् ॥
एकद्वित्रिचतुःपञ्चषड्भिः पूगफलैः क्रमात् ॥

पर्णमूले भवेद्व्याधिः पर्णाग्रे व्याधिसम्भवः ।
चूर्णपर्णं हरेदायुः सिरा बुद्धिविनाशिनी ॥

अकृत्वा च मुखेपर्णं पूगं खादति यो नरः ।
दशजन्मदरिद्रस्तु मरणे न स्मरेद्धरिम् ॥

**एवं सायं प्रातः प्राणाग्निहोत्रं यजेत ॥ ५ ॥**

**एवम्** — उक्तप्रकारेण ।

**याज्ञवल्क्यः** — 'ललाटसम्मिते भानौ प्रथमः प्रहरः स्मृतः ।
स एवाध्यर्धसंयुक्तः प्रातरुक्तो मनीषिभिः' ॥

**बाहटे** — 'यामादर्वाङ् न भुञ्जीत यामयुग्मं न लङ्घयेत् ।
रात्रौ यामान्तरे भुक्त्वा सुप्त्वा यामत्रयं सुखम्' ॥

मध्याह्नः मुख्यकालः । सङ्गवात्परं मध्यकालः सङ्गवात् अर्वाक् अधमकालः ?

ननु — हरिवासरादिषु भोजननिषेधश्रवणात् प्राणाग्निहोत्रलोप इति चेत् । न — तन्मन्त्रजपेनैव तस्य पूरणात् ।

**बोधायनः** — 'प्राणाग्निहोत्रमन्त्रांस्तु निषिद्धे भोजने जपेत्' ।

'यं यं क्रतुमधीते तेन तेनास्येष्टं भवति ॥ इति श्रुतिः

**आत्मयाजिनामिदमिज्यमग्निहोत्रं यावज्जीवकमिति ब्रह्मवादिनो वदन्ति ॥ ६ ॥**

आत्मयाजिनो गृहस्थादयः । योगिन इति केचित् – तदसत् । सर्वैरपि प्राणाग्निहोत्रस्य कर्तव्यत्वेन विधानात् । यथा —

'गृहस्थो ब्रह्मचारी वा योगी चैव तपश्चरन् ।
प्राणाग्निहोत्रलोपेन ह्यवकीर्णी भवेत्तु सः' ॥ इति

एवं क्रियाधिकारे–'गृहस्थो ब्रह्मचारी वा भक्त्यैवार्चनमारभेत्' इत्युपक्रम्य —

'जुहोत्युदितहोमी चेत् कृत्वाऽऽत्मयजनं ततः' ।

इत्युक्तत्वाच्च ब्रह्मचर्यादारभ्य आत्मयाजिनः इदमिज्यमिदमग्निहोत्रम् अकरणे प्रत्यवायस्मरणात् नित्यत्वेन यजनीयम् । 'एतन्मूलास्तदग्नयः' इति 'बहिः प्राणो वै मनुष्यस्तस्याशनं प्राणः' इति श्रुतेः, अन्नेन प्राणा' इत्यारभ्य 'तस्मादन्नं ददन्त्सर्वाण्येतानि ददाती' त्युक्तत्वाच्च अशनाख्यप्राणमूलत्वावगमाद्गार्हपत्याद्यग्नीनाम् ।

**'तदेवं भु(हु)क्त्वा गच्छन्तमनृणो ब्रह्माऽभ्येति पद' मिति मामपूर्वं माता पिता गुरुर्वा पैतृकादिकमृणत्रयं जायमानस्य ब्राह्मणस्य सहजमित्युक्त्वा वाग्येदिति विज्ञायते ॥ ७ ॥**

तत् – तस्मात् ब्रह्मप्राप्तिकारणात्, एवं – उक्तप्रकारेण । **भु(हु)क्त्वा गच्छन्तम्** – प्राणाग्निहोत्रमेवालमिति कृत्वा गच्छन्तम् । **अनृण** इत्यादि । अत्र श्रुतिः । 'जायमानो वै ब्राह्मणस्त्रिभिः ऋणवा जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः । एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारी वा' इत्यादि । **ऋग्ब्राह्मणे** । 'नापुत्रस्य लोकोऽस्ति तत्सर्वे पशवो विदु' रिति । 'प्रजननं वै प्रतिष्ठा साधु प्रजायास्तन्तुं तन्वानः पितॄणामनृणो भवति तदेव तस्यानृण्य' मित्यादि ।

**भारते** — 'ऋणिनो मानवा ब्रह्मन् सर्वेऽजायन्त तच्छृणु ।
ब्रह्मचर्येण यज्ञेन प्रजया च न संशयः ॥

तदपाक्रियते सर्वं यज्ञेन तपसा सुतैः ।
तपस्वी यज्ञकृच्चापि न तु ते विद्यते प्रजा: ॥
त इमे प्रसवस्याप्त्यै तव लोकास्समावृताः' ॥ इति

एवं च जायमानश्रुतेः,

'ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् ।
अनपाकृत्य मोक्षन्तु सेवमानः पतत्यधः' ॥

इति मनुस्मरणाच्च ऋणानि त्रीण्यपाकृत्य गन्तव्यम् । अनपाकृतऋणत्रयस्य गतिर्नास्तीति माता पिता गुरुः, वाशब्दादन्यो वा निवारयेत् । यद्वा विवाहयेत् ।

ननु — 'किं प्रजया करिष्यामः किमर्थं वयमध्येष्यामः' इति ऋषयः कावषेयाः इति वचनात्,

'देवर्षिभूतात्मनृणां पितॄणां
न किङ्करो नायमृणी च राजन् ।
सर्वात्मना यश्शरणं शरण्यं
नारायणं लोकगुरुं प्रपन्नः' ॥ इति स्मृतेः,

'यदहरेव विरजेत् तदहरेव प्रव्रजेत्' इति श्रुतेश्च पूर्वोक्तास्श्रुतयो मुमुक्षुविषया न भवन्ति' इति–चेत्–न । जायमानश्रुतिविरोधात् । श्रुत्यन्तरविरोधात् । भारतादिवचनविरोधात् । मनुवचनविरोधात् । सूत्रे च प्रतिपादितत्वात् अनपाकृतऋणत्रयस्य मुमुक्षुत्वाधिकारासम्भवात् । अन्यत्राविरोधेनोक्तत्वाच्च । अतः ताः श्रुतयः मुमुक्षुविषयाश्च भवन्ति ।

अन्यत्र अविरोधेन कथमुक्तमिति चेदुच्यते । प्रजोत्पत्तिर्द्विविधा । 'ऊर्ध्वा अवाचीना' चेति । **बोधायनः**–'मुखं वै ब्राह्मणस्य संश्रवोऽनूचानस्य रेतो ब्राह्मणस्य ऊर्ध्वं नाभेरधस्तादन्यः । ऊर्ध्वं नाभेस्तेन हैव तत् जायते यद्ब्राह्मणानुपनयति यदध्यापयति यत्साधु करोति सर्वास्येष्टा प्रजा भवति । अथ यदवाचीनं नाभेः तेन वाऽस्यौरसी प्रजा भवति । तस्माच्छ्रोत्रियमनूचानमप्रजोऽसीति न

वदन्ति। स एव प्रजया पितृभ्य इति । अथास्य प्रजा भवति यानुत्पादयते यानध्यापयते यान् याजयते सर्वास्येष्टा प्रजा भवति' ।

'पुदि' ति नरकस्याख्या दुःखञ्च नरकं विदुः ।
पुदित्राणात्ततः पुत्रमिहेच्छन्ति परत्र च' ॥
न मांसपेशलः पुत्रो नाविद्वान् न ह्यकर्मकृत् ।
यस्स्वयं नयति स्वर्गं किं पुनः पितरं तरे'दिति ॥

श्रुत्यन्तरे — 'यावत्तरसं स्वाध्यायमधीते सर्वान् लोकान् जयतिं सर्वान् लोकाननृणोऽनुसञ्चरति' इति ।

अतो वयं, ब्रह्मचर्याद्याश्रमान्विधाय तत्तदाश्रमोचितऋणापकरणार्थमध्यापनादिरूपेण प्रतिपादितं कर्म कृत्वेति व्याख्यानमकार्ष्म । एवं श्रुतीनां परस्परमविरोधेन नयनमुक्तम् । तदेवं भुक्त्वा गच्छन्तमित्यनेन तीर्थगमननिवारणमिति केचिद्वदन्ति। वारयेत् विवाहयेदिति केचित् व्याकुर्वन्ति । 'देवा वै पुष्टिं नाविन्दन् तां मिथुनेऽपश्यन्' इति श्रुतिः ।

**अथ शारीरेषु — चरुमपूपाद्यथ गर्भाधानादि — ब्राह्मणस्य पालाशः — प्रोष्ठपदहस्तौ — ततो विधिवदाचमनं — धातादि पूर्वं — अग्निष्ट आयुरिति दण्डं — अथ पारायणव्रतानि — सोमाय काण्डर्षये — तथैव धाता — अथापाढोपाकर्म — अथ समावर्तनं — दिविश्रयस्वेति — तदग्नावुपरिधारयन् — तत्रोपवेश्य — द्यौस्त्वाददातु — अथ प्राणाग्निहोत्रविधानमित्यष्टादश ॥ ८ ॥**

सूत्रस्य वेदतुल्यताज्ञापनार्थं खण्डानामादिपदग्रहणम् । प्रश्नपरिसमाप्तिश्चकृतेति निरवद्यम् ॥

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ द्वितीयप्रश्ने अष्टादशदशः खण्डः

द्वितीय प्रश्नः समाप्तः ।

---

# अथ तृतीयः प्रश्नः

## प्रथमः खण्डः

**अथातः पाणिग्रहणम् ॥ १ ॥**

अथ समावर्तनानन्तरम् । अतः — समावर्तनस्य पूर्ववृत्तत्वात् । 'स्नानेन च पुरन्दर' मिति पूर्वमुक्तम् । पाणिग्रहणमिति । पाणिग्रहणशब्देन समन्त्रकं कन्याग्रहणमुच्यते ।

**अष्टौ विवाहा भवन्ति ॥ २ ॥**

गान्धर्वादिषु समन्त्रकं कन्यास्वीकरणाभावात् विवाहशब्दस्य सामान्यवाचित्वाच्च अष्टौ विवाहा भवन्तीत्युच्यते ।

**ब्राह्मो दैवः प्राजापत्य आर्ष आसुरो गान्धर्वो राक्षसः पैशाच इति ॥ ३ ॥**

तेषां नामानि स्वरूपञ्च पृथक्त्वेनोपपादयति — ब्राह्म इत्यादिना ।

**यदभिरूपं वृत्तवयस्सम्पन्नमाहूयाऽर्हयित्वा कन्याऽलङ्कृता दास्यते स ब्राह्म इति गीयते ॥ ४ ॥**

यदभिरूपमित्यादि । यत् — यस्मात् कारणात् ।

'श्रुतमिच्छन्ति पितरः धनमिच्छन्ति मातरः ।
बान्धवाः कुलमिच्छन्ति रूपमिच्छन्ति कन्यकाः' ॥

इति वचनात् समानजातीयत्वं सौन्दर्यादिकञ्चाभिरूप्यमभिरूपशब्देन परामृश्यते । वृत्तवयस्सम्पन्नमिति । वृत्तशब्देन शौचाचारस्वाध्यायश्रुतशीलादि, वयःशब्देन 'त्रिंशद्वर्ष' इत्यादि च गृह्यते ।

बृहस्पतिः — 'त्रिंशद्वर्षो दशाब्दान्तु भार्यां विन्देत नग्निकाम् ।
एकविंशतिवर्षो वा सप्तवर्षामवाप्नुयात्' ॥ इति

यद्वा यौवनेन वयसा ब्रह्मचर्योक्तव्रताचरणवयसा वा सम्पन्नम्। यद्वा सम्पन्नमित्यनेनैश्वर्यसम्पत्तिः विवक्षिता। यथा—

यमः— 'कुलञ्च शीलञ्च वपुर्यशश्च
विद्या च वित्तञ्च सनाथताञ्च।
एतान् गुणान् सप्त समीक्ष्य देया
कन्या बुधैः शेषमचिन्तनीयम्'॥ इति

विष्णुः— 'ब्राह्मणस्य कुलं ग्राह्यं न वेदाः सम्पदः क्रमात्।
कन्यादाने तथा श्राद्धे न विद्या तत्र कारणम्॥
यस्य देशं न जानाति नाम गोत्रं त्रिपूरुषम्।
कन्यादानं पितृश्राद्धं नमस्कारञ्च वर्जयेत्'॥ इति

कात्यायनः— 'उन्मत्तः पतितः कुष्ठी तथा षण्डस्सगोत्रजः।
चक्षुश्श्रोत्रविहीनश्च तथाऽपस्मारदूषितः॥
वरदोषाः स्मृता ह्येते कन्यादोषाश्चकीर्तिताः।
'दीर्घकुत्सितरोगार्ता व्यङ्गा च स्पृष्टमैथुना।
दुष्टाऽन्यगतभावा च कन्यादोषाः प्रकीर्तिताः'॥ इति

गुणसमृद्धं दोषरहितं वरमाहूय मधुपर्कादिना यथाशक्ति वस्त्राभरणपुष्पगन्धाद्यैरलङ्कृत्य तस्मै ब्रह्मतृप्त्यर्थं दास्यते (कन्या) स विवाहो ब्राह्म इति गीयते।

**यदृत्विजो यज्ञस्याऽत्मनोऽलङ्कृत्य कन्यां प्रतिपादयति स दैवः॥**

दोषरहितां कन्यामलङ्कृत्य आत्मनो यज्ञस्य चातुर्मास्यादिषु होत्रादेरेकस्य दक्षिणार्थं कन्यां प्रतिपादयति स दैवः।

**युगपद्धर्मानुवर्तिनौ स्यातामिति वाचाऽनुमान्याऽग्निकार्यं स्वयं कृत्वा यत्कन्यामर्हयित्वा दद्यात् स प्राजापत्यो भवति॥ ६॥**

कन्यापिता यदृच्छया गृहागतं वरं कन्याञ्च दृष्ट्वा युवां युगपद्धर्मानुवर्तिनौ सह गार्हस्थ्यधर्मचारिणौ स्यातमिति वाचाऽनुमान्य सम्मानं कृत्वाऽऽधारं

स्वयमेव कृत्वा कन्यामलङ्कृत्य ददातीति यत् स विवाहः प्राजापत्यो भवति।

**यद्गोमिथुनेनैकेन द्वाभ्यां वा कन्यां ददाति तमार्षमाचक्षते ॥ ७**

एकं द्वे वा गोमिथुने वरात् प्रतिगृह्य कन्यां ददातीत्यर्थं मन्वादयोवदन्ति।

**यत्कन्यामाभरणमारोप्य शक्त्या बन्धुभ्यो धनं दत्वाऽऽहरते तमासुरमामनन्ति ॥ ८ ॥**

**कामयोगो यदुभयोः स गान्धर्वः ॥ ९ ॥**

वरवध्वोरुभयोरपि कामेच्छया संयोग इति यत् स विवाहो गान्धर्वः।

**प्रसह्य यत्कन्याऽऽहरणं स राक्षसः ॥ १० ॥**

बलात्कृत्य कन्याऽऽहरण क्रियत इति यत् स राक्षसः।

**सुप्तां प्रमत्तां वा रहसि यद्गच्छति स पैशाचो भवति ॥ ११ ॥**

सुप्तां प्रकर्षेण मत्तां बन्धुभिस्तया च न ज्ञातं गच्छति स पैशाचो भवति।

**अत्र मनुः—** ‘ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथाऽऽसुरः।
गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः ॥

आच्छाद्य चार्हयित्वाऽथ श्रुतशीलवते स्वयम्।
आहूय दानं कन्यायाः ब्राह्मो धर्मः प्रकीर्तितः ॥

यज्ञे तु वितते सम्यगृत्विजे कर्म कुर्वते।
अलङ्कृत्य सुतादानं दैवं धर्मं प्रचक्षते ॥

एकं गोमिथुनं द्वे वा वरादादाय धर्मतः।
कन्याप्रदानं विधिवदार्षो धर्मस्स उच्यते ॥

सहोभौ चरतां धर्ममिति वाचाऽनुभाष्य तु।
कन्याप्रदानमभ्यर्च्य प्राजापत्यो विधिस्स्मृतः ॥

ज्ञातिभ्यो द्रविणं दत्वा कन्यायै वा स्वशक्तितः।
कन्याऽऽप्रदानं स्वाच्छन्द्यादासुरो धर्म उच्यते ॥

इच्छयाऽन्योन्यसंयोगः कन्यायाश्च वरस्य च ।
गान्धर्वस्स विधिर्ज्ञेयो मैथुन्यः कामसम्भवः ॥

हत्वा भित्वा च जित्वा च क्रोशन्तीं रुदतीं गृहात् ।
प्रसह्य कन्याहरणं राक्षसो विधिरुच्यते ॥

सुप्तां मत्तां प्रमत्तां वा रहो यत्रोपगच्छति ।
स पापिष्ठो विवाहानां पैशाचः प्रथितोऽष्टमः' ॥ इति

**एतेषां प्रथमे चत्वारस्तोयप्रदानपूर्वकाश्शस्ता ब्राह्मणस्य। नेतरे जघन्याः ॥ १२ ॥**

मनुः— 'षडानुपूर्व्या विप्रस्य क्षत्रस्य चतुरोऽवरान् ।
विट्छूद्रयोस्तु तानेव विद्याद्धर्म्यानराक्षसान् ॥

चतुरो ब्राह्मणस्याद्यान् प्रशस्तान् कवयो विदुः ।
राक्षसं क्षत्रियस्यैकमासुरं वैश्यशूद्रयोः ॥

पञ्चानान्तु त्रयो धर्म्या द्वावधर्म्यौ स्मृताविह ।
पैशाचश्चासुरश्चैव न कर्तव्यौ कदाचन ॥

पृथक् पृथग्वा मिश्रौ वा विवाहौ पूर्वचोदितौ ।
गान्धर्वो राक्षसश्चैव धर्म्यौ क्षत्रस्य तौ स्मृतौ ॥ इति

तथा :— 'अद्भिरेव द्विजाग्र्याणां कन्यादानं प्रशस्यते ।
इतरेषान्तु वर्णानामितरेतरकाम्यया' ॥

देवलः— एवं विवाहाश्चत्वारो धर्म्यास्तोयप्रदानकाः ।
अशुल्का ब्राह्मणार्हाश्च तारयन्ति द्वयोः कुलम् ॥

विवाहाश्चाष्टधा भिन्ना ब्राह्माद्या मुनिसत्तम ।
पूर्वः पूर्वो वरो ज्ञेयः पूर्वाभावे परः परः ॥

नारदः— 'क्रीता द्रव्येण या कन्या न सा पत्नी विधीयते ।
न सा दैवे च पित्र्ये च दासीं तां काश्यपोऽब्रवीत् ॥

यमः— 'न कन्यायाः पिता विद्वान् गृह्णीयाच्छुल्कमण्वपि ।
गृह्णन् शुल्कं हि लोभेन स्यान्नरोऽपत्यविक्रयी' ॥

'कन्यान्तु जीवनार्थाय यश्शुल्केन प्रयच्छति ।
उपभुङ्क्ते पुरीषञ्च मूत्रञ्चास्याः परत्र च ॥

मनुः— 'यासां नाददते शुल्कं ज्ञातयो न स विक्रयः ।
अर्हणं तत्कुमारीणामानृशंस्यञ्च केवलम्' ॥ इति

स्मृत्यन्तरे— 'निष्कषट्कमशक्तश्चेदन्यथा दोषमर्हति' ॥ इति

ननु यद्यासुरदयो विवाहा निषिद्धाः तर्हि किमर्थं प्रतिपादिताः इति चेत् – उच्यते । कामादिदोषवशात् ब्राह्मादिविवाहासम्भवात्,

'आश्रमादाश्रमं गच्छेन्न च तिष्ठेदनाश्रमी' ॥ इति स्मृतेः,

'यस्तु सन्त्यज्य गार्हस्थ्यं वानप्रस्थो न जायते ।
परिव्राड्वापि मैत्रय स नग्नः पापकृन्नरः' ॥

इत्यनाश्रमिणो महादोषस्मरणाच्च दोषलाघवाभिप्रायेणासुराद्याः प्रतिपादिताः । अत्र वत्सः—

'सर्वोपायेन साध्या स्यात्सुकन्या पुरुषस्य या ।
शौर्येणापि विवाहेण सा विवाह्या रहः स्थिता' ॥ इति

गान्धर्वादिषु च समन्त्रकं पश्चाद्विवाहविधिरुच्यते । यथा—

देवलः— 'गान्धर्वादिविवाहेषु पुनर्वैवाहिको विधिः ।
कर्तव्यश्च त्रिवर्णैश्च समस्तैरग्निसाक्षिक'मिति ॥

पराशरः— 'गान्धर्वासुरपैशाचविवाहा राक्षसश्च यः ।
पूर्वं परिग्रहस्तेषां पश्चाद्धर्मो विधीयते' ॥ इति

गृह्यः— 'आपद्यभावे पूर्वेषामासुराद्यास्समन्त्रकम् ।
ब्राह्मणो विधिवत्कुर्यात्परात्पूर्वो विशिष्यते ॥

ब्राह्मः श्रेष्ठो ब्राह्मणस्य राक्षसः क्षत्रियस्य च ।
वैश्यस्य चासुरो मुख्यः सर्वेषां स्त्री सवर्णजा ॥

भार्याः स्युर्ब्राह्मणादीनां सवर्णावरवर्णजाः ।
अवरस्योर्ध्वजा कार्या न भवेदिति शासनम्' ॥ इति

एतत् स्वजात्यभावे गृहस्थत्वमात्राकाङ्क्षायामेवेति वेदितव्यम् ।

मनुः — 'न ब्राह्मणक्षत्रिययोरापद्यपि हि तिष्ठतोः ।
कस्मिंश्चिदपि वृत्तान्ते शूद्रा भार्योपदिश्यते' ॥ इति

याज्ञवल्क्यः — 'यदुच्यते द्विजातीनां शूद्राद्दारोपसङ्ग्रहः ।
न तन्मम मतं यस्मात्तत्रायं जायते स्वयम् ।
असवर्णाविवाहाश्च कलौ रक्ष्याः प्रयत्नतः' ॥ इति

किञ्च — 'सप्त पौनर्भवाः कन्या वर्जनीयाः कुलाधमाः ।
वाचा दत्ता मनोदत्ता कृतकौतुकमङ्गला ॥

उदकं स्पर्शिता या च या च पाणिगृहीतिका ।
अग्निं परिगता या च पुनर्भूःप्रसवा च या ॥
इत्येताः काश्यपेनोक्ता दहन्ति कुलमग्निवत्' ॥ इति

बोधायनः — 'बलादपहृता कन्या मन्त्रैरपि न संस्कृता ।
अन्यस्मै विधिवद्देया यथा कन्या तथैव सा' ॥ इति

ननु 'चत्वारस्तोयप्रदानपूर्वकाः' इत्युक्तत्वात् तोयप्रदानमेव भार्यात्वे नियामकं उत पाणिग्रहणं आहोस्वित् सप्तपदक्रमादिस्तोमारोपणपर्यन्तमुतध्रुवदर्शनमाहोस्वित् क्षतयोनित्वम् — न प्रथमः ;

'नोदकेन न वाचा वा कन्यायाः पतिरिष्यते ।
पाणिग्रहणसंस्कारात् पतित्वं सप्तमे पदे' ॥

इति यमस्मरणात्,

'अद्भिर्वाचा च दत्ताया म्रियेतादौ वरो यदि ।
न च मन्त्रोपनीता स्यात् कुमारी पितुरेव सा' ॥

इति वसिष्ठस्मरणाच्च । न द्वितीयः ;

'पाणिग्रहणसंस्कारैर्नियतं दारलक्षणम् ।
तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे' ॥

इति सप्तपदप्रक्रमपर्यन्तस्मृतेः । न च तृतीयः ;

'वरश्चेत्कुलशीलाभ्यां न युज्येत कथञ्चन ।
न मन्त्राः कारणं तत्र न च कन्याऽनृतं भवेत् ।
दत्तामपि हरेत्कन्यां श्रेयांश्चेद्वर आव्रजेत् ॥

इति स्मृत्यन्तरवचनात् । अथ ध्रुवदर्शनाद्यम्न्युत्पत्तिपर्यन्तमिति चतुर्थः पक्षः अस्तु इति चेत् – सोपि न साधुः ।

'दीर्घकुत्सितरोगार्ता व्यङ्गाङ्गी स्पृष्टमैथुना ।
दुष्टाऽन्यगतभावा च कन्यादोषाः प्रकीर्तिताः ॥

पाणिग्रहणका मन्त्राः कन्यायाश्च प्रतिष्ठिताः ।
नोन्मत्तया न कुष्ठिन्या न च या स्पृष्टमैथुना ॥

नाद्यासु च क्वचिन्नॄणां सर्वा लुप्तक्रिया हि ताः ।
कन्यासु दोषदुष्टासु इदं (?) सप्तपदा भवेत् ॥

उन्मत्तः पतितः क्लीबो दुर्भगस्त्यक्तबान्धवः ।
कन्यादोषाश्च ये पूर्वा एतान् परिगणेद्वरे ॥

वरदोषमनाख्याय पाणिं गृह्णाति यो नरः ।
योजनं वा प्रकृत्येव तां दत्तां नाप्नुयात्तु सः ॥
कन्यादोषेऽप्ययं धर्मो दाता दण्ड्यो वरस्तथा' ॥

इति स्मृतेः ।

अथ क्षतयोनित्वमिति पंचमः पक्षोस्त्विति चेत्—सोपि न साधुः,

'ईर्ष्या(?)षण्डादयो ये च चत्वारः समुदाहृताः ।
त्यक्तव्यास्ते पतितवत् क्षतयोन्याऽपि च स्त्रिया' ॥

इति स्मृतेरिति चेत्—उच्यते । शेषहोमान्ते संगमनविधानात्, 'सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः । तृतीयो अग्निष्ट पतिस्तुरीयस्ते मनुष्यजाः । इति,

'सोमोऽददद्गन्धर्वाय गन्धर्वोऽददद्ग्नये ।
रयिञ्च पुत्रांश्चादादग्निर्मह्यमथो इमाम्' । इति ॥

'चतुर्थेऽह्नि मनुष्यस्तु पतित्वं लभतेति च' ।
रोमकाले तु सम्प्राप्ते सोमो भुङ्क्तेऽथ कन्यकाम् ।
रजो दृष्ट्वाथ गन्धर्वः कुचौ दृष्ट्वा तु पावकः' ॥

सोमश्शौचं ददौ तेषां(तासां) गन्धर्वस्तु शुभां गिरम् ।
पावकस्सर्वमेध्यत्वमतो मेध्याः स्त्रियस्स्मृताः' ॥ इति

शातातपः — 'वरश्चेत्कुलशीलाभ्यां न युज्येत कथञ्चन ।
न मन्त्राः कारणं तत्र नात्र कन्यानृतं भवेत् ॥

उद्वाहिता च या कन्या सम्प्राप्ता न च मैथुनम् ।
भर्तारं पुनरभ्येति यथा कन्या तथैव सा ॥

समाक्षिप्य तु तां कन्यां बलादक्षतयोनिकाम् ।
पुनर्गुणवते दद्यादिति शातातपोऽब्रवीत्' ॥

इति श्रुति—स्मृतिवचनेभ्यः प्रतिगृह्य पाणिग्रहणसंस्कारादारभ्य शेषहोमान्त-संगमनपर्यन्तम् भार्यात्वे नियामकमिति राद्धान्तः ।

अत्रेयं व्यवस्था । अयं युगान्तरविषयो राद्धान्तः । यद्वा कन्यावरयोः दोषदुष्टत्वविषयो वा । 'सप्त पौनर्भवाः' इत्युक्तत्वात् । तथा च 'इदं सप्तपदा भवेदित्यादिवचनैः उदकदानमारभ्य मांगल्यसूत्रधारणान्तमित्यंगीकरणीयम् । मांगल्यसूत्रधारणान्तश्चेत्पतित्वं अक्षतयोनिश्चेदेव सम्भवति । क्षतयोनिश्चेन्न संभवति ।

किञ्च स्मृत्यन्तरे —

'न कन्या दर्शनेनैव न पाणिग्रहणेन च।
न सप्तपद्याक्रमणे पतिरौपासने विधि' रिति॥

कात्यायनः — 'प्रदाय शुल्कं गच्छेद्यः कन्यायाः स्त्रीधनं तथा।
धार्या सा वर्षमेकन्तु देयाऽन्यस्मै विधानतः॥

अदंड्यो हि न दंडायामनूढायान्तु तत्र वै (तद्वरः)।
पुरागतश्च सर्वेषां सहते तदिमां सुताम्॥
अथागच्छेत वोढायां दत्तां पूर्ववरो हरेत्' (?)॥ इति

अतो ब्राह्मणस्य नेतरे जघन्या इत्युक्तम्।

**यस्मात् त्रीन् पूर्वान् त्रीनपरान् आर्षी जातः षट्पूर्वान् षडपरान् प्राजापत्येनोढाया जातः सप्त पूर्वान् सप्तावरान् दैवीजातो दश पूर्वान् दशावरानात्मानश्चैकविंशतिकं ब्राह्मीपुत्रः पावयेदिति विज्ञायते॥१३॥**

**आर्षीजातः** इत्यादि। गोद्वन्द्वप्रतिग्रहकारणात् **त्रीन् पूर्वान्** पितृपितामहप्रपितामहान् **त्रीनपरन्** पुत्रपौत्रप्रपौत्रान् आत्मना सह सप्तपूरुषान् आर्षविवाहोढायां सवर्णायामनन्यपूर्विकायां जातः पुत्रः **पावयेत्** पूतान् कुर्यादित्यर्थः। एवं षट् पूर्वान् षडपरान् आत्मना सह त्रयोदश पुरुषान् प्राजापत्येनोढायां पाणिग्रहणसंस्कारसंस्कृतायां जातः पावयेत्। सप्त पूर्वान् सप्तावरानात्मना सहपञ्चदशपुरुषान् दैवीसुतः पावयेत्। दश पूर्वान् दशावरानात्मानश्चैकविंशतिकं ब्राह्मीपुत्रः पावयेदिति।

अत्र मनुः — 'दश पूर्वान् परान् वंशानात्मानश्चैकविंशतिम्।
ब्राह्मीपुत्रः सुकृतकृत् मोचयेदेनसः पितॄन्॥

दैवोढायास्सुतश्चैवं सप्तसप्तपरावरान्।
आर्षोढायास्सुतः त्रींस्त्रीन् षट्षट् कायोढजस्सुतः॥

ब्राह्मादिषु विवाहेषु चतुर्ष्वेवानुपूर्वशः।
ब्रह्मवर्चस्विनः पुत्रा जायन्ते शिष्टसंमताः॥

रूपसत्त्वगुणोपेता धनवन्तो यशस्विनः ।
पर्याप्तभोगा धर्मिष्ठा जीवन्ति च शतं समाः ॥

इतरेषु च शिष्टेषु नृशंसानृतवादिनः ।
जायन्ते दुर्विवाहेषु ब्रह्मधर्मद्विषस्सुताः ॥

अनिन्दितैः स्त्रीविवाहैः अनिन्द्या भवति प्रजा ।
निन्दितैर्निन्दिताश्चैव तस्मात्तांस्तु विवर्जयेत् ॥

पाणिग्रहणसंस्कारः सवर्णासूपदिश्यते ।
असवर्णास्वयं ज्ञेयो विधिरुद्वाहकर्मणि ॥

सवर्णया कुशो धार्यः धार्यः क्षत्रियया शरः ।
प्रतोदो वैश्यया धार्यो वासो वृषलया तथा ' ॥ इति

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने तात्पर्यचिन्तामणौ तृतीयप्रश्ने प्रथमः खण्डः ।



# अथ द्वितीयः खण्डः

मातुरसपिण्डां पितुरसमानऋषिगोत्रजातां लक्षणसम्पन्नां नग्निकां कन्यां वरयित्वा पञ्चाहेषु कुलस्य परिशुद्ध्यै सपिण्डैः श्रोत्रियैस्सह भूतं भुञ्जीत ॥ १ ॥

एवं ब्राह्मादिविवाहानां लक्षणं तत्फलञ्च प्रतिपाद्य सामान्येनोक्तत्वात् सपिंडादिष्वपि विवाहः संभवेदित्याशंक्य तन्निषेधः क्रियते **मातुरसपिण्डामित्यादिना**। मातुरसपिण्डामित्यनेन मातृवर्गे सपिण्डतामात्रम्। समानः पिण्डो देहो यस्यास्सा सपिण्डा तथा न भवतीत्यसपिण्डा। पुरुषस्य सपिण्डता षष्ठपुरुषावधिः कन्यायास्त्रिपुरुषावधिर्भवतीति उत्तरत्र वक्ष्यते। पितृपितामहप्रपितामहानां मातृपितामहीप्रपितामहीनां पितृद्वारा पितृव्यादीनां मातृद्वारा मातृष्वसृमातुलादीनामेकशरीरारंभकत्वेन साक्षात् परंपरया वा एते सपिण्डा ज्ञातव्याः।

मार्कण्डेयः—

'पितापितामहश्चैव तथैव प्रपितामहः।
पिण्डसम्बन्धिनो ह्येते विज्ञेयाः पुरुषास्त्रयः॥

लेपसम्बन्धिनश्चान्ये पितामहपितामहात्।
प्रभृत्युक्तास्त्रयस्तेषां यजमानस्तु सप्तमः॥
इत्येवं मुनिभिः प्रोक्तः सम्बन्धस्साप्तपूरुषः'॥ इति

आपस्तम्बः— 'लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः।
पञ्चमस्सप्तमस्तेषां सापिण्ड्यं सप्तपूरुषम्'॥ इति

स्मृत्यन्तरे— 'यस्माद्विशिष्यते वंशः पुरुषाद्वरकन्ययोः।
तं समारभ्यगणयेन्मातृतः पितृतोऽपि च'॥ इति

कूटस्थव्यतिरिक्तस्तृतीय इति केचिद्वदन्ति। मातुलसुतानिषेधस्मरणात्।

'मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च।
समानप्रवराञ्चैव त्यक्त्वा चान्द्रायणं चरेत्'॥ इति

'चतुर्थीमुद्वहेत्कन्यां चतुर्थः पञ्चमीमपि ।
षष्ठीन्तु नोद्वहेत्कन्यां पञ्चमो न तु पञ्चमीम् ।
पितृबन्धुषु कूटस्थात्पञ्चमीं षष्ठ उद्वहेत्' ॥
पञ्चमः पञ्चमीं कन्यां नोद्वहेदिति यत्स्मृतम् ।
पितृपक्षे प्रयोक्तव्यं मातृपक्षे न तद्भवेत्' ॥

चतुर्विंशतिमते — 'तृतीयां वा चतुर्थीं वा पक्षयोरुभयोरपि ।
विवाहयेन्मनुः प्राह पाराशर्यो यमोऽङ्गिराः ॥
पितृव्यपत्नीभगिनीं तत्सुताञ्चापि वर्जयेत् ।
मातुस्सपत्नीभगिनीं तत्सुताञ्चापि वर्जयेत्' ॥

इत्याद्यान्ध्रादिविषयम् । मातुलसुतोद्वाहवत् ।

बृहस्पतिः — 'उद्वाह्यते दाक्षिणात्यैः मातुलस्य सुता द्विजैः ।
मध्यदेशे कर्मकराः शिल्पिनश्च गवाशिनः ॥
मत्स्यादाश्च नराः सर्वे व्यभिचाररताः स्त्रियः ।
उत्तरे मद्यपा नार्यः स्पृश्या नृणां रजस्वलाः ॥
अप्रजां प्रतिगृह्णन्ति भ्रातृभार्यामभर्तृकाम् ।
देशजातिकुलाचारधर्माः सम्यक् प्रकीर्तिताः ।
तथैवैते पालनीयाः प्रजा प्रक्षुभ्यतेऽन्यथा' ॥
विरुद्धाः प्रतिदृश्यन्ते दाक्षिणात्येषु संप्रति ।
मातुलस्य सुतोद्वाहो मातृबन्धुत्वदूषितः' ॥ इति

बोधायनश्च — 'पञ्चधा विप्रतिपत्तिर्दक्षिणतः तथोत्तरतः । यानि दक्षिणतस्तानि व्याख्यास्यामः । यथैतेनानुपेतेन सहभोजनं, स्त्रिया सहभोजनं, पर्युषितभोजनं' मातुलपितृष्वसृदुहितृगमनमिति । अथोत्तरतः — ऊर्णाविक्रयः सीधुपानमुभयतो दद्भिर्व्यवहारः आयुधीयकं समुद्रयानमिति । इतरदितरस्मिन् दुष्यतीतरदितरस्मिन् । तत्र तत्र देशप्रामाण्यमेव स्यात् । मिथ्यैतदिति गौतमः । उभयथैव नाद्रियेत शिष्टस्मृतिविरोधदर्शनात' ॥ इति

पितुरसमानर्षिगोत्रजातामिति । विश्वामित्रादीनामष्टानामेव वंशोत्पन्ना ऋषयः । समानऋषीणां गोत्रजाता न भवतीत्यसमानऋषिगोत्रजाता । ताम् । अत्र भृगुः —

'एक एव ऋषिर्यावत् प्रवरेष्वनुवर्तते ।
तावत्समानगोत्रत्वमन्यत्रांगिरसो भृगोः' ।। इति

पराशरः — 'पञ्चानां त्रिषु सामान्यादविवाहस्त्रिषु द्वयोः ।
भृग्वंगिरोगणेष्वेवमेकोऽप्यन्यत्र वार्यते' ।। इति

समानऋषिगोत्रे प्रवरप्रश्ने वेदितव्ये । स्वगोत्रर्षिः यस्मिन् खण्डे उक्तस्स्यात् तस्मिन्नुक्ताः समानर्षयः इति सूत्रकाराभिप्रायः । अत्रापस्तम्बश्च । 'समानगोत्रप्रवरां कन्यामूढ्वा उपगम्य च तस्यामुत्पाद्य संतानं ब्राह्मण्यादेव हीयते' इति ।

स्मृत्यन्तरे — 'परिणीय सगोत्रान्तु समानप्रवरां तथा ।
कृत्वा तस्यां (स्याः) समुत्सर्गमतिकृच्छ्रं विशोधनम्' ।। इति

लक्षणसम्पन्नामिति ।

गोभिलः — 'पीनोरुः पीनकर्णी समसितरशना पद्मपत्रायताक्षी
बिम्बोष्ठी तुंगनासा गजपतिगमना दक्षिणावर्तनाभिः ।
स्निग्धांगी चापसुभ्रूः मृदुघनजघना सुस्वरा सूक्ष्मकेशी
योषा सा लक्षणीया .... .... .... कुमारी ।।

इत्यादिलक्षणसंपन्नाम् ।

'पीताक्षी रूक्षकर्णी घनपुरुषरवा स्थूलजंघोरुकेशी
रूक्षाक्षी संगनेत्री प्रविरलनयना त्यक्तताम्रोष्ठजिह्वा ।
कृष्णांगी संगतभ्रूः कुचयुगविषमा वामना चातिदीर्घा
कन्या साऽऽलक्षणा स्यात् स्थगितकुलधना सर्वहन्तुर्हरायाः(?)।।

'यस्यास्तु चरणौ हस्तौ जंघे चापि च रोमशौ ।
उत्तरोष्ठे च रोमाणि शीघ्रं मारयते पतिम्' ॥

इत्यादिदुर्लक्षणरहिताम् ।

**आपस्तम्बः**—'दत्तां गुप्तां द्योतामृषभां शरभां विनतां विकटां मुण्डां मण्डूषिकां सांकरिकां रातां पालीं मित्रां स्वनुजां वर्षकारीञ्च वर्जयेत् नक्षत्रनाम नदीनाम वृक्षनामाश्च(?) गर्हिताः। पर्वतनामा पिशाचनामा प्रेष्यनामाश्च गर्हिताः। सर्वाश्च रेफलकारोपान्ताः वरणे परिवर्जयेत्'इति। दत्तां वाचा दत्तां जलप्रदानपूर्वं दत्तां वा—गुप्तां दौश्शील्यादिशंकया गुप्तां यद्वा कुष्ठादिरोगभयाद्गुप्तां—द्योतामत्यन्ततेजस्विनीं—ऋषभां गृहे प्रधानां—यद्वा वृषभस्येव शरीरं गतिः शीलं वा यस्याः तां—शरभां शीर्णदीप्तिं सर्वगात्रेषु नीललोमां वा—विनतां विनतगात्रां पुरुषाधिकगात्राञ्च—विकटां विकटजंघां विस्तीर्णजंघां वा—मुंडां अपनीतकेशां असंजातकेशां वा—मण्डूषिकां मार्जारत्वक्कर्कटत्वचं (?) सांकरिकां अन्यस्मिन् कुले जातां अन्यापत्यतां गतां मातुर्गर्भदशायामेव पितुरस्थिसंचयनकारिणीं—रातां रमणशीलां सर्वदा कन्तुकादिक्रीडनपरां—पालीं वत्सक्षेत्रादिपालिकां—मित्रां बहुमित्रवतीं मित्रत्वं गतां वा—स्वनुजां शोभना अनुजा यस्यास्तां--भ्रातृमती' मित्युक्तत्वात्, वर्षकारीं—वराधिकवयस्काम् वर्जयेत् ।

**स्मृत्यन्तरे**— 'कुष्ठादिरोगकुलजां कन्यां यत्नेन वर्जयेत् ।
वरमेवं परीक्ष्यैव कन्यादानं विशिष्यते ॥

अप्रजादिषु वंशेषु स्त्रीप्रजाप्रसवस्तथा ।
पतिघ्न्यश्च स्ववासिन्यस्तांश्च यत्नेन वर्जयेत् ॥ इति

**मनुः**— 'स्त्रीसंबन्धे दशैतानि कुलानि परिवर्जयेत् ।
हीनक्रियं निष्पुरुषं निच्छन्दोरोमशार्मसम्(?) ॥
क्षयामयव्यपस्मारिश्वित्रिकुष्ठकुलानि च' ॥ इति

याज्ञवल्क्यः — 'अप्रयच्छन्समवाप्नोति ब्रह्महत्यामृतावृतौ ।
गम्यं त्वभावे दातॄणां कन्या कुर्यात् स्वयंवरम्' ॥ इति

गम्यं गमनार्हमित्यर्थः ।

**नग्निकाम्** ।

नारदः — 'यावच्चेलं न गृह्णाति यावत्क्रीडति पांसुभिः ।
यावद्दोषं न जानाति तावत् भवति नग्निका' ॥ इति

संवर्तः — 'अष्टमे तु भवेद्गौरी नवमे नग्निका भवेत् ।
दशमे कन्यका प्रोक्ता द्वादशे वृषली स्मृता ॥
विवाहयेदष्टवर्षां यो न धर्मेण हीयते' ॥ इति

स्मृत्यन्तरे — 'अष्टमे तु भवेद्गौरी प्राप्ते रजसि रोहिणी ।
अव्यञ्जनकृता श्यामा कुचहीना तु नग्निका' ॥ इति

अव्यञ्जनकृता – 'असञ्जातकक्षादिलोमा ।

गौतमः — 'प्रदान प्रागृजःप्राप्तेरिति ।

बोधायनः — 'दद्याद्गुणवते कन्यां नग्निकां ब्रह्मचारिणे ।
अपि वा गुणहीनाय नोपरुन्ध्याद्रजस्वलाम् ।
अविद्यमाने सदृशे गुणहीनमपि श्रयेत्' ॥ इति

स्मृत्यन्तरे — 'अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी ।
दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला' ॥ इति

**वरयित्वा** – गोत्रस्य श्रीमन्नारायणस्य कुमारस्य गोत्रजां लक्ष्मीनामधेयां धर्मप्रजार्थं वृणीमहे इति वरयित्वा । **पञ्चाह्नो** इति । नवधा विभक्तस्याह्नः अयुग्मभागेषु । कुलशुद्ध्यर्थं सपिंडैः श्रोत्रियैस्सह । **भूतं** – महान्नमोदनं सापूपव्यञ्जनम् । **भुंजीत** इति । अयं सूत्रकाराभिप्रायः । यद्वा शोभनदिवसेषु ।

**यस्मात् स पूतो भवतीति विज्ञायते ॥ २ ॥**

यस्मात् – कालविशेषात्। श्रोत्रियैस्सह भूतभोजनाच्च। सः – वरः **पूतो भवति**। सद्वारकत्वेनाद्वारकत्वेन वा वरवध्वोरिदं समानम्।

प्रसिद्धंह्येतत् श्रुतिस्मृतिषु। 'समानस्याह्न'इत्यादिषु, 'साधवो न्यासिनः शान्ताः ब्रह्मिष्ठा लोकपावनाः। हरन्त्यघं तेऽङ्गसंगात् तेष्वास्ते ह्यघभिद्धरिः' इत्यादौ च।

ननु—उपनयनादिसंस्कारेषु नक्षत्रादिकं प्रतिपादितम्। पाणिग्रहणे किमर्थं न प्रतिपादितमिति चेत्—सत्यम्। गान्धर्वादिषु कालनियमाभावात् 'स्नात्व पुण्येऽहनि' इति पूर्वमेव संक्षेपेणोक्तत्वाच्च ज्योतिश्शास्त्रोक्तलग्नादिषु कर्तव्यम्

यथा —

'अर्के कर्कटकन्यकाघटधनुर्मुक्ते भृगौ मन्त्रिणा
स्फीतज्योतिषि शीतरोचिषि बलोद्रिक्ते विरिक्ते तिथौ।
रोहिण्युत्तररेवतीपितृमरुन्मित्रेषु हस्तासुरे
आरार्कार्कजवासरादिरहितेषूद्वाहकर्मारभेत्(?)॥

श्रेष्ठास्तौलियमंगनाघटधनुर्गोकर्णकण्ठीरवाः
मध्यास्सौम्ययुतास्तदूर्ध्ववदनास्सर्वे विवाहे हिताः(?)।
उद्वाहे धंनुरत्यर्थं मिथुनस्त्रीतुलाश्शुभाः।
कृष्णेऽष्टमी चतुर्थी च वृषो नक्रश्च मध्यमाः(?)॥

विधूदये खात्मजयोः कुजोऽशुभो
व्यये बुधश्चायुषि पातभार्गवौ।
ग्रहास्स्मरेऽर्कोऽम्बुसुतेऽऽर्कजोऽम्बरेऽ
शुभौ(?) मतावायुषि षष्ठगो गुरुः'॥ इति

उद्वाहलग्ने चन्द्रः अशुभः। तथा दशमपञ्चमस्थः कुजः – द्वादशे बुधः – अष्टमे राहुकेतुशुक्राः – सप्तमे सर्वे ग्रहाः – चतुर्थपञ्चमयोस्सूर्यः – दशमे शनिः शनिसूर्यावष्टमे षष्ठे गुरुरिति। अन्यत्सर्वमुपनयनप्रकरणे द्रष्टव्यम्। एवञ्च ताराबलान्विते शुभे मुहूर्ते —

गृह्यः— 'कन्याप्रदोऽपि दानांगमंकुरार्पणमाचरेत् ।
नान्दीमुखञ्च पूर्वेद्युः कुर्यादिति विनिश्चयः ॥

उपनयनादि स्नानान्तं कर्मस्वाभ्युदयक्रियाम् ।
पिता कुर्यात्तदूर्ध्वं हि परिणेता यथाविधि' ॥ इति

पूर्वेद्युः नान्दीमुखं कन्यावरणञ्च कुर्यात् ।

गृह्यः— 'प्रसुग्मन्ते' ति च द्वाभ्यां सद्यः पूर्वं शुभेऽह्नि वा ।
ब्राह्मणांश्चतुरो द्वौ वा गोत्रनाम विवाहयेत्' ॥ इति

**कनिक्रदादिना कन्यागृहं गत्वा 'प्रसुग्मन्ता' इति तामीक्षित्वा 'अभ्रातृघ्नी' मिति तयेक्ष्यमाणः ॥ ३ ॥**

**कनिक्रदादिना कन्यागृहं गत्वा** इति । छन्दोग ब्राह्मणे—'अग्रे वाचः कनिक्रददित्यगृह्णीत वा वाचो गच्छन्नग्र इग्रमे (?) वै तया यजमानं गमयती' ति ।

गृह्यः— 'भुक्त्वा भूतमलंकृत्य समारुह्य च वाहनम् ।
स्वबन्धुभिः परिवृतः स्वस्तिसूक्तादिमंगलैः ॥
कनिक्रदादिना कन्यागृहं गच्छेत्समाहितः' ॥ इति

बोधायनः— 'स्नातोऽहतवासाः गन्धानुलिप्तः स्रग्वी भुक्तवान् प्रतोदपाणिः अपदातिर्गच्छे' दिति ।

गृह्यः— 'कन्याप्रदोपि तत्रैव मधुपर्कं समाहरेत् ।
वरस्तिष्ठेदासनस्थः प्राङ्मुखस्तण्डुलोपरि ॥

तदा प्रत्यङ्मुखीं कन्यां प्रच्छन्न पटमन्तरे ।
कृत्वातिष्ठेदामुहूर्तात् सुमुहुर्ते समीक्षयेत्' ॥ इति

बोधायनः—'स्नातामहतवाससां गन्धानुलिप्तां स्रग्विणीं भुक्तवतीमिक्षुहस्तां दत्तां वधूं समीक्षते' ॥ इति

आश्वलायनः—'अथ खल्वयं जनपदधर्मांश्च प्रतियातीति। यस्मिन् ग्रामे यजमाना यमाचारं कुर्वन्ति तच्च कर्तव्यम्'॥ इति

**गुरुणाऽग्निमुखे कृते कन्याप्रदो वरगोत्रनाम शर्मान्तं तथा तामस्य सहधर्मचारिणी भवतीति ब्राह्मे विवाहे धर्मप्रजासंपत्त्यर्थं यज्ञापत्त्यर्थं (यज्ञपत्न्यर्थं) ब्रह्मदेवर्षिपितृतृप्त्यर्थं प्रजासहत्वकर्मभ्यो ददामीत्युदकेन तां दद्यात् (दाति)॥ ४॥**

कन्याप्रदः इति।

याज्ञवल्क्यः— 'पिता पितामहो भ्राता सकुल्यो जननी तथा।
कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः'॥ इति

पित्राद्यभावे अन्यो वा मधुपर्कं दत्वा। वरगोत्रनामशर्मान्तमित्यादि।

गृह्ये— 'त्य(उ?)क्त्वा त्रिपुरुषं कन्यावरयोः पितृपितामहात्।
गोत्रनाम यथापूर्वं ददेत्पौराणमन्त्रतः'॥ इति

अत्रायं मन्त्रः।

'कन्यां कनकसंपन्नां कनकाभरणैर्युताम्।
दास्यामि विष्णवे तुभ्यं ब्रह्मलोकजिगीषया'॥ इति

एवं प्रथममुक्त्वा श्रीनिवासशर्मणो नप्त्रे विष्णुशर्मणः पौत्राय गोविन्दशर्मणः पुत्राय कौशिकगोत्राय श्रीधरशर्मणे वराय—केशवशर्मणो नप्त्रीं नारायणशर्मणः पौत्रीं माधवशर्मणः पुत्रीं काश्यपगोत्रां लक्ष्मीदा नाम कन्यां प्रजासहत्वकर्मभ्यः ब्रह्मतृप्त्यै ददामीति तत्तद्विवाहनाम्ना दद्यात्।

**तां 'प्रजापतिः स्त्रिया' मित्युदकेनाहरते॥ ५॥**

वरश्च 'प्रजापतिस्त्रिया' मित्युक्त्वा उदकेन सहाहरते—तिष्ठन् गृह्णीयात्। एवं त्रिः। असौ मे काम इत्यत्र कन्याया नमनिर्देशः। 'प्रजा मे काम' इति द्वितीयम्। 'पशवो मे काम' इति तृतीयम्। पूर्वसूत्रे 'ब्राह्मे विवाहे' इत्यनेन आसुरपर्यन्ता गृह्यन्ते।

**वस्त्रगन्धाभरणादीनि संभृत्य 'कनिक्रदादिना' कन्यागृहं सह बान्धवैर्गत्वा 'तेज आयुश्श्रिय' मिति वस्त्रादिना अलंकृत्य 'प्रजापति स्सोम' मिति तथा आभरणमारोप्य आददीतेत्येके ॥ ६ ॥**

**वस्त्रगन्धाभरणादीनी**त्यादि । चत्वारस्तोयप्रदानपूर्वका इति पूर्वमुक्तत्वात् आसुरादिषु समन्त्रकत्वेन कन्यादानादिकं नास्तीति शंकायां तद्व्यावृत्त्यर्थं पुनरपि 'कनिक्रदादिने' त्युक्तम् । द्रव्यमूलत्वात् साक्षित्वेन **सह बान्धवैरि**त्युक्तम् । वस्त्रगन्धाभरणादिकं सर्वत्र समानम् । आदिशब्देन पुष्पलाजाक्षततांबूलादयो गृह्यन्ते । **संभृत्य** । स्त्रीभिर्वाहयित्वेति कैश्चिद्व्याख्यातम् । प्रतिग्रहानन्तरं 'तेज आयुश्श्रिय' मिति वस्त्रादिना अलंकृत्य । **प्रजापतिस्सोम**मिति । **तथा** । पूर्ववत् । ब्रह्मादिष्वपि मांगल्यसूत्रज्ञापनार्थं **तथा**शब्दः । **आददीतेत्येके** इति । एकशब्दः 'एके मुख्यान्यकेवला' इति मुख्यार्थः ।

'मांगल्यतन्तुनानेन भर्तृजीवनहेतुना ।
कंठे बध्नामि सुभगे त्वं जीव शरदां शतम्' ॥

'इति मांगल्यसूत्रञ्च हिरण्यमणिसंयुतम् ।
वृद्धानुमत्या तत्कंठे बद्ध्वा मौञ्जीं त्यजेद्बुधः' ॥ इति

एक इति पक्षान्तरत्वेन कैश्चिद्व्याख्यतम् । पक्षान्तरत्वेन यदि व्याख्यायते तर्हि पूर्वस्मिन् पक्षे बान्धवैस्सह मंगलद्रव्यैश्च कन्यागृहप्रवेशः समन्त्रकत्वेन वाससो धारणं मांगल्यधारणञ्च न संभवति । इतरस्मिन् प्रसुग्मन्तेत्यादिमन्त्राणां लोपः । अतः पक्षान्तरत्वेन व्याख्यातुमयुक्तम् ।

गृह्यः — 'वधूवरौ मिथोऽन्योन्यं पूरिताञ्जलितण्डुलान् ।
प्रजापतिः स्त्रीतिकेचित्कुत्रचित् शिरसोः क्षिपेत्' ॥ इति

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ तृतीयप्रश्ने द्वितीयः खण्डः ।

## अथ तृतीयः खण्डः

**ततः सहस्नातायां वध्वा नववस्त्रालंकारायाः पुण्याहान्ते पाणिं गृहीत्वा 'सुमंगलीरियं वधू' रित्यग्निशालामागत्य प्राङ्मुखमासयित्वा तस्यै शुद्धाम्बरवेषः कूर्चं ददाति ॥ १ ॥**

**ततः** प्रतिग्रहादिमांगल्यधारणानन्तरम् । **स्नातायां वध्वाः** इत्यादि ।

गृह्यः — 'मन्त्रप्रोक्षणतः स्नानं विभूष्य स्नानदूषणात् ।
धृतोपवीतः पुण्याहं कर्मांगञ्च समाचरेत्' ॥

इति स्नानस्य दूषितत्वात 'स्नानन्तु द्विविधं प्रोक्तं स्नानमभ्युक्षणं तथा' इति भृगुवचनाच्च मन्त्रस्नानं कर्तव्यम् । **अग्निशालामागत्य** इत्यादि । अत्र विवाहशालाया लक्षणम् ।

गृह्यः — 'विवाहकादौ शुभवेदिकायाः प्रमाणमाहुः किल गर्गमुख्याः ।
द्विहस्तयुग्मां वसुरश्र(?)युक्तां हस्तोच्छ्रितां मन्दिरवामभागे'॥ इति

किञ्च — 'वितानध्वजतोरणांकुरपूर्णकुंभादिभिरलंकृतांच कुर्यात् ॥' इति

तथा — 'लोकेऽस्मिन् मंगलान्यष्टौ ब्राह्मणो गौर्हुताशनः ।
हिरण्यं सर्पिरादित्यः आपो राजा तथाऽष्टमः' ॥

एतानि सततं पश्यन्नमस्यन्नर्चयेच्च यः ।
प्रदक्षिणञ्च कुर्वीत तथाह्यायुर्न हीयते' ॥ इति

'हरिद्रा लवणं धाना राजमाषस्तथा गुलम्' ।
जीरकं फलपुष्पञ्च मंगलाष्टकमुच्यते' ॥

'इक्षवस्तृणराजञ्च निष्पावयवधान्यकम् ।
विकारवच्च गोक्षीरं कुसुम्भकुसुमं तथा ॥
लवणञ्चाष्टमञ्चैव सौभाग्याष्टकमुच्यते' ॥

इत्याद्युक्तप्रकारेण सर्वमंगलद्रव्यसंयुक्तामग्निशालामागत्येत्यर्थः । **तस्यै स्त्रियै। शुद्धांबरवेषः**। शुद्धशब्दः श्वेतपरः धौतपरो वा। वेषशब्दः अलंकारपरो वा। शुद्धवस्त्राभरणादिभिरलंकृत्येत्यर्थः। **कूर्चं ददाति**।

मनुः— 'सवर्णया शरो धार्यः धार्यः क्षत्रियया शरः।
प्रतोदो वैश्यया धार्यः वासोऽन्तं शूद्रया तथा ॥ इति

अग्नेः पश्चिमतः।

'संस्कार्यः पुरुषो वाऽथ स्त्री वा दक्षिणतस्ततः।
संस्कारकृत्तु सर्वत्र तिष्ठेदुत्तरतस्सहि' ॥

इति वचनात्, 'दक्षिणतः पतिं भार्योपविशति' इति **बोधायनवचनात्** उत्तरत्र वक्ष्यमाणत्वाच्च दक्षिणे वधूं समासयित्वा कूर्चं ददाति।

**बोधायनः**—'अपरेणाग्निमुदीचीनप्रतिषेवणमेकामधिषवणमास्तीर्य तस्यां प्राञ्चमुपविशतः। उत्तरे पतिर्दक्षिणतः पत्नी। अथान्वारब्धाया' मिति ॥

**ततः परिस्तीर्य अग्निरैतु – 'इमामग्निः – 'इमामग्निस्त्रायतां – 'मा ते गृहे – 'द्यौस्तेपृष्ठं – 'अप्रजस्तां – 'देवकृतं' इति पञ्चवारुणान्तं प्रधानान् जुहुयात् ॥ २ ॥**

**ततः** अनन्तरं 'ऊर्ध्वपेषणमश्मानं लाजान् स्तोमाक्षतानपि।
पुण्याहाद्यारसंभारान् विवाहार्थे सुसंभरेत्' ॥

इति गृह्योक्त विवाहसंभारानाहृत्य अग्निं परिस्तीर्येत्यार्थः ॥

**अग्नेरपरस्यामास्तीर्णेषु दर्भेषु अश्मानं 'आतिष्ठे' ति वध्वा दक्षिणपादांगुष्ठेन दक्षिणेन स्पर्शयति ॥ ३ ॥**

**'प्रत्यङ्मुख' इति पाणिग्रहणं 'सरस्वती' ति विसर्गं 'अघोरचक्षु' रित्यासनञ्च कृत्वा 'इमान् लाजा' नित्यभिघार्य 'इयं नारी' ति तस्या लाजांजलिना जुहोति ॥ ४ ॥**

**प्रत्यङ्मुख** इति। प्राङ्मुख्या हस्तं प्रत्यङ्मुखो गृह्णीयात्। एतत् पाणि ग्रहणमिति केचित्। **बोधायनः**। 'प्रत्यङ्मुखः प्राङ्मुख्या वा, यदि कामयेत पुंसो जनयेय' मित्यंगुष्ठं गृह्णीयात्। यदि कामयेत स्त्रीरित्यंगुलीः, यदि कामयेतो भयमित्यभीवलोमानि सांगुष्ठमंगुलीः गृह्णीयात्' इति। **सत्याषाढः**। प्राङ्मुखः प्रत्यङ्मुख्या हस्तं गृह्णीयात्' इति।

**बोधायनः**। अथास्य दक्षिणेन नीचा हस्तेन दक्षिणमुत्तानं हस्तं सांगुष्ठमभीवलोमानि गृह्णाती' ति। **सरस्वतीतिहस्तं विसृज्य इमान् लाजानिति।** वध्वञ्जलावभिघार्य जुहोति। **बोधायनः**। 'अस्याञ्जलावुपस्तृणाति। तस्यास्सोदर्यो द्विर्लाजानावपति। तानादाय जुहोति' इति। **आश्वलायनः**। 'तस्याञ्जलावुपस्तीर्य भ्राता भ्रातृस्थानीयोवा? लाजाञ्जलीनावपती' ति। 'द्विर्जामदग्न्यानाम्। प्रत्यभिघार्य हविः, द्विरवत्तञ्चेदविच्छिन्नवदञ्जलिं स्रुचेव जुहुयात्' इति च। अत्र आपस्तम्बकारिका—

'अंगुल्यग्रैर्न होतव्यं न हुत्वाऽञ्जलिभेदनम्।
वामभागे न होतव्यो लाजहोम इति स्मृतिः'॥ इति

न हुत्वाञ्जलिभेदनमितीदमसमञ्जसम्। अञ्जलिभेदनाभावे कर्मान्तरयोग्यताभावात्। इदमापस्तंबविषयम् (?)।

**'उदायुषे'त्युत्तिष्ठति 'प्रत्यङ्मुख' इति वधूमुखेक्षणं 'सरस्वती'ति पाणिग्रहणं 'अघोरचक्षुरि' ति विसर्गं 'इमान् लाजा' निति लाजपूरणं 'इयं नारी' ति होमं 'उदायुषे' त्यग्निप्रणामं कुर्यादित्येके ॥ ५ ॥**

स्वाभिमतं पक्षान्तरमाह 'उदायुषे' त्यादि। **प्रत्यङ्मुख** इत्यादि। वधूमुखेक्षणादिमन्त्रेषु तत्परत्वेन किञ्चिद्विशेषश्रवणात् पक्षान्तरमुक्तम्।

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ तृतीयप्रश्ने तृतीयः खण्डः।

---

## अथ चतुर्थः खण्डः

**'विश्वा उतत्वया' इत्यग्निं प्रदक्षिणं कृत्वा 'अतिगाहेमहि द्विष' इत्यासित्वा त्रिधैवं लाजहोमं जुहुयात् ॥ १ ॥**

पुनरपि पाणिं गृहीत्वाऽग्रतो गच्छेत् । 'विश्वा उतत्वया वय' मित्यग्निं प्रदक्षिणं कारयित्वा 'अतिगाहेमहि द्विष' इत्यासित्वा पुनरप्यातिष्ठेत्यादि सर्वमेव त्रिवारं कुर्यात् । अत्र आपस्तम्बादयः एवं कुर्वन्ति ।

'दक्षिणां दिशमाश्रित्य यमो .... वच्च धावति ।
दम्पत्यो रक्षणार्थाय ब्रह्माप्येको बहिर्भवेत्' ॥ इति

इदमापस्तंबविषयम् । 'सोमायेत्याहुतेः पूर्वं सब्रह्माग्नेः प्रदक्षिण' मिति विधिनिषेधयोर्विद्यमानत्वात् । त्रिधैवं लाजहोमं जुहुयात् ।

**अतो मूलहोमान्ते अग्निं पतिघ्न्यन्तं वायुं निन्दितान्तमादित्यं घोरान्तं गन्धर्वं यशोघ्न्यन्तं चन्द्रं पुत्रघ्न्यन्तं हुत्वा व्याहृतीः ॥ २ ॥**

अतः इति । लाजहोमान्ते मूलहोमः । अत्र 'सोमः प्रथमो विविदे' इत्यादि मन्त्रलिंगात् 'ऋतुकाले तु संप्राप्ते' इत्यादि स्मृतेश्च 'भगो अर्यमा सविता पुरन्धिर्मह्यं त्वाऽदुर्गार्हपत्याय देवाः' इत्युक्तगार्हस्थ्यधर्मायेत्यर्थः । अतः धर्माचरणार्थं पञ्चप्रायश्चित्तं ज्ञापयितुमतश्शब्दः प्रयुक्तः ।

**प्रासावीरित्यन्तैश्चतुर्भिः प्रवाहणं कृत्वा पुनः परिस्तीर्य स्विष्टकृन्मिन्दाहुतीर्विच्छिन्नमृद्धिं सप्तसमिद्व्याहृतीश्च जुहुयात् ॥ ३ ॥**

प्रासावीरित्यन्तैरित्यादि । अयमेव प्रवेशहोमः । इदं कर्मसादृगुण्यार्थम् ।

**अग्नेरपरस्यामास्तीर्योदगग्रान् सप्त बर्हिषः वध्वा सह दक्षिणेन पादेन 'एकमिषे विष्णु' रिति 'द्वे ऊर्जे' इति 'त्रीणि व्रताय' इति**

**'चत्वार' इति 'पञ्च पशुभ्यः' इति 'षड्रायस्पोषाय' इति 'सप्त सप्तभ्य' इति तान् पर्यायेणाऽऽक्रम्य गत्वा 'सखा' इति निवर्तेत ॥ ४**

**'मम हृदय' मिति तस्या हृदयमभिस्पृशति ॥ ५ ॥**

**अग्नेरपरस्यामित्यादि ।** अत्र दर्भास्तरणं 'तासां यन्मेध्यं यज्ञियं सदेवमासी' दिति श्रुतेः देवतातिक्रमशपथमित्यवगम्यते ।

**प्रोक्षणैः प्रोक्ष्य पुण्याहस्वस्तिघोषेण 'अरुन्धती – इन्द्राणी – अदितिः – श्रीरिव' इति वध्वाः 'मनुः प्रजापतिः – पुरुषोत्तमः – महेन्द्र इवेति' वरस्य च चत्वारि स्तोमान्यारोपयेयुः ॥ ६ ॥**

**इति पाणिग्रहणम् ॥ ७ ॥**

**प्रोक्षणैः** – आपोहिष्ठादिभिः । पुण्याहस्वस्तिघोषेण पुण्याहोक्तस्वस्तिघोषेण सह । कैश्चिदेवं व्याख्यातम् । पुण्याहमिति पृथुक्तेनोक्तत्वात् पुण्याहानन्तरं स्वस्तिसूक्तेन सह उक्तैर्मन्त्रैः स्तोमान्यारोपयेयुरिति । 'इति पाणिग्रहण' मित्युक्तत्वात् ततः प्रभृतिगार्हस्थ्यं धर्ममनुतिष्ठतीत्युक्तत्वाच्च ।

स्तोमद्रव्याण्याह भृगुः —

'दूर्वाग्रं लक्ष्मिपुष्पञ्च देवमूर्धनि चार्पयेत् ।
सानन्दादि ततो जप्त्वा स्तोमान्यारोपयेद्बुधः' ॥ इति

स्तोमारोपणेन पाणिग्रहणसिद्धिः । **नारदीये** रुक्मांगदचरित्रे ।

'विना तोयैर्विना दर्भैर्विना वा पावकेन च ।
ब्राह्मणस्य विना वाक्यैर्विवाहो निष्फलो भवेत्' ॥ इति

आरोपयेयुरित्युक्त्या अरुन्धतीत्यादिमन्त्रैः स्तोमद्रव्यैः शिरस्यारोपणमाशीर्वादः इति सिद्ध्यति ।

**ध्रुवदर्शनान्तमित्येके ॥ ८ ॥**

पाणिग्रहणं ध्रुवदर्शनान्तमिति केचित् । यद्वा मुख्य एवार्थः । ध्रुवदर्शनशब्देन आग्नेयस्थालीपाकग्रहणम् ।

गृह्यः — 'प्राक् स्थालीपाकतो वह्निनाशे वै दुर्मुहूर्तके ।
विवाहे विधिहीनेऽपि तामेव पुनरुद्वहेत् ॥
अग्न्युत्पत्तिं केचिदाहुः प्राक् स्थाल्या अपि नाशने ।
न दानं नैव वरणं न प्रतिग्रहणं तथा ।
त्रिरात्रञ्च व्रतं न स्यात् पुनरुद्वाहकर्मणि' ॥ इति वचनात् ।

**ततः प्रभृति गार्हस्थ्यं धर्ममनुतिष्ठतीति विज्ञायते ॥ ९ ॥**

**गार्हस्थ्यधर्ममिति** । आग्नेयस्थालीपाकस्यौपासनारंभकत्वात् औपासन-वैश्वदेवादिगर्हस्थ्यधर्ममनुतिष्ठतीत्युक्तम् भवति ॥

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ तृतीयप्रश्ने चतुर्थः खण्डः ।



# अथ पञ्चमः खण्डः

—*०*—

[1] **अथ चतुर्थीवासः ॥ १ ॥**

अथ स्तोमारोपणानन्तरं । चतुर्थीहोमः । विवाहाद्याचरणीयं त्रिरात्रं चतुर्थीत्युच्यते । यद्वा अन्तहोमानन्तरं व्रतार्थं नियमेनैवात्र वासः चतुर्थीवासः ।

**वैवाहिकमग्निं वध्वा सहाऽऽदाय 'संप्रवाहारय' न्त्विनि वधूं 'समं वध्वा' इत्यग्निं 'संशासि दक्षिणं पादमग्रेऽतिहर देहलीं माधिष्ठा' इत्यावसथे प्रविश्य प्राच्यामर्धे समादधीत ॥ २ ॥**

वैवाहिकेत्यादि । विवाहहोमाग्निं भाण्डे अरण्यादौ वा समारोप्यादाय शिबिकादिवाहनेष्वारूढौ वधूवरौ बन्धुभिर्मंगलवाद्यादिभिश्च सह स्वगृहं गच्छेयुः । दूरश्चेदत्रैव वसेयुः ।

गृह्यः — 'वधूगृहं समीपश्चेत् तदैव स्वगृहं व्रजेत् ।
दूरश्चेत्कन्यकागेहे चतुर्थीवासमाचरेत् ॥
दूरं वा स्वगृहं गत्वा तदादि व्रतमाचरेत् ।
रात्रौ चेदपि वाऽऽविश्य गृहान् मन्त्रेण तत्र वै ।
स्थालीपाकादिकं कृत्वा अन्तहोमं समाचरेत्' ॥ इति

रात्रौ विवाहश्चेत् गृह्यपरिशिष्टे विशेष उक्तः । यथा —

'रात्रेर्द्विभागं संकल्प्य चतुर्थ्यास्तु तथा तदा ।
स्थालीपाकव्रतारंभः तृतीये चेत्परेऽहनि ॥
सायंत्वौपासनारंभः पूर्वभागे दिवैव वा ।
स्थालीपाकादिकं कुर्याद्रात्रौ मुख्यतरं भवेत् ।
सायं प्रातश्च षण्णाड्यो होमकाल उदाहृतः' ॥ इति

---

1. अथ स्तोमारोपणानन्तरम् । यस्मिन् चर्मणि दंपती आसीनौ शयानौ च त्रिरात्रं व्रतं चरतः तच्चर्म चतुर्थी, तत्र वासः चतुर्थीवासः । उच्यत इति शेषः । इति ग्रन्थाक्षरकोशटिप्पण्याम् वाजपेयिभाष्यम् ।

'संप्रवाहाय' न्त्वितीदं दुर्निमित्तादिदोषवारणार्थम्। मन्त्रलिंगादव-गम्यते। अत्र बोधायनः। "यदि कन्या........पतेत् तामुत्थापयति। 'उदस्थाद्देव्यदितिर्विश्वरूप्यायुर्यज्ञपतावधात्। इन्द्राय कृण्वती भागं मित्राय वरुणाय च' इति। अथ यदि कन्योपसाद्यमाना चोह्यमाना वा रजस्वला स्यात् तामनुमन्त्रयते, 'पुमाँसौ मित्रावरुणौ पुमाँसावश्विनावुभौ। पुमानिन्द्रश्च सूर्यश्च पुमाँसंवर्धयेता' मिति। अथ कन्योपसाद्यमाना वोह्यमाना वा अश्रु कुर्यात् तामनुमन्त्रयते– 'जीवाँरुदन्ति विमयन्ते अध्वरे दीर्घामनुप्रसितिं दीधियुर्नरः। वामं पितृभ्यो य इदँ समेरिरेमयः पतिभ्यो जनयः परिष्वज" इति।

[सर्वत्र दर्वीकूर्चप्रस्तरपरिधिबर्हिःपवित्रेध्मद्रव्यसंभाराणां छेददाहोपघातेषु नाशे विनाशे वा अन्यं यथालिंगं कृत्वा यथालिंगमुपसाद्य 'त्वं नो अग्ने'–'स त्वं नो अग्ने'–त्वमग्ने अयासि 'प्रजापते' इत्येताभिर्जुहुयात्। अथ कर्मान्तमेवं प्रतिपद्यते। अथ यदि परिस्तरणदाहः स्यात् 'अग्नये क्षामवते स्वाहे' ति हुत्वा परिस्तृणाति। 'इन्द्रं वो विश्वतस्परि' 'इन्द्रं नर' इति द्वाभ्यां परिस्तीर्य जुहुयात्। 'इन्द्राय स्वा' हेति कृतान्तेन प्रतिपद्यते। अथ यदि-परिधिदाहः स्यात्, 'परित्वाग्ने पुरं वयं विप्रँसहस्यधीमहि, धृषद्वर्णं दिवे दिवे चेत्यरंभगुरावत' इति हुत्वा कृतान्तेन प्रतिपद्यते।]

अथ यदि वस्त्राणां प्रोक्षितानां छेदनादि 'सोमाय स्वाहे' ति जुहुयात्। यदि सिचा अभिघातः स्यात् तदभिमन्त्रयते 'सिगसि नसि वज्रोऽसि नमस्ते अस्तु मा माहिँसी' रिति। दशासूत्रमवदाय मुखवातेन प्रध्वंसयेत्। अथ यदि गौर्वा अश्वो वा श्वापदमृगमहिषमेषवराहवज्रवन्तो दंष्ट्रवन्तो वान्यद्वा श्वापदमपसव्यं गच्छेत्तस्य पदमभ्युक्ष्य जपति 'तद्विष्णोः परमं पद' मिति। एतेनैव जुहुयाद्रौद्रमभिव्याहरेद्वा। रौद्र्यावृचौ जुहुयाज्जपेद्वा– 'त्वमग्नेरुद्र'– 'आवोराजान' मिति। अथ यदि शकुनोऽभिव्याहरेत् तां वाचमनुमन्त्रयते। 'द्विपच्चतुष्पदस्माकँ सर्वमस्त्वनातुरम्। 'उद्गातेव शकुने साम गायसि ब्रह्मपुत्र इव सवनेषु शंससि॥ स्वस्ति नश्शकुने अस्तु प्रति नस्सुमनाभ' वेति। अथ यदि सालावृकी वाश्येत तां वाचमनुमन्त्रयते 'दीर्घमुखि दुर्हणु मास्म दक्षिणतो

वद:। यदि दक्षिणतो वदात् द्विषन्तं मेऽवबाधा सा' इति ॥ .... परिक्षवे परिकासने च अप उपस्पृश्य जपेत् । [ रासभो व्याधमेव यद्युलूक इत्याद्युलूक आपस्तराण्यक्षो-आयोमुख:-रक्षसां दूत आगच्छत: तमितो नाशयाग्ने । यदि वामनेत्रादिस्पन्दनं प्रसार्य 'सर्वापदस्य सव्यमक्षिक्षोपि च हैकस्य नाममत् । ] अनुहवं परिहवं परीवादं परिक्षपं दुस्स्वप्नं दुरुदितं तद्विषद्भ्यो दिशाम्यहम् । अनुहूतं परिहूतं शकुनैर्यदशाकुनम् मृगस्य सृतमक्षणया तद्विषद्भ्यो दिशाम्यहम्' इति । अथ नदीनां धन्वनाञ्च व्यतिक्रमे पुरस्तादुपस्थानं जपति । 'या ओषधयो या वनस्पतयो या नद्यो यानि धन्वानि ये वना । ते त्वाऽवतु प्रजावतीं प्रत्वे मुञ्चन्त्वँहस:' इति ।

'शकुनविषये विशेषा: ।

'राजानं वृषभं कन्यां गजं रथतुरंगमौ ।
पूर्णकुंभं सुरां वेश्यां भामिनीं वित्तशोभनाम्' ॥ इति

उपश्रुति:

'गच्छाऽऽहर भवेक्षस्व गृहाणेति तु शोभनम् ।
जीव वर्धस्व मोदस्व जय शाधि प्रभो कुरु' ॥ इति

**काश्यपीये** — 'तत्र हयगजवृषभधेनुछत्रचामरचक्रांकुशपायसदेवताकृति हरिद्रा-गोमय व्रीहितंडुलतिलयवालंकृतगणिकाभामिन्यादिदर्शने गच्छाऽऽहर — गृहाण-भुंक्ष्व जय शाधि प्रसीद एहीत्यादिश्रवणे वीणावेणुमृदंगवेदमंगलानुवाकसूक्तश्रवणे च दधिक्षीरघृतजलसुरापूर्णकुंभरज्जुमुखपिठरं शकटवीवधे त्तमांगान्यतमन्यस्तं लोहितं सीसान्यलोहं रत्नं दीप्ताशुशुक्षणिं वा दृष्ट्वा परमां वृद्धिमादिशेत् । स्कन्धवहं कुंभं शंखमकुटभेर्यादि दृष्ट्वा स्तोकवृद्धिरिति । कृकलासपल्लाक्षकेदि कृष्णारज्जुवालक (?) चकोर ( कृष्णसार ) शुकशावश्वेतकूबररक्ततुंडकोकिल बलि जीवंजीवक भृंगराजरामा वामात् दक्षिणगा: शुभदा: । चाषश्येन बलाका बल्लोली सूकरी माकरी वनकुक्कुटकुंडीवाशालीदात्यूहा: (?) दक्षिणात वामगा: शुभदा: । वृकोलूकगौलिकद्रोणानां स्वरो वामत: शुभद: । कुणिकाण-

कृशह्रस्वपापरोगिछिन्ननासपाषण्डमुंडषंडचण्डालगृध्रश्येनवानरोरगजवाजिनररुधिर - स्रावतरुपतनाशन्युल्कापातेन्द्रचापपरिवेषाहर्नक्षत्रज्योतिः ज्वाल प्रतिसूर्यादयः कार्यविघ्नकरा भवन्ति । इति

बोधायनः — 'अथ श्मशानादि व्यतिक्रमे तमेवाग्निमुपसमाधाय संपरिस्तीर्य ........ आग्निमुखात् कृत्वा पक्वात् जुहोति । 'अग्निर्भूतानामधिपतिस्स मावतु स्वाहे' ति जयप्रभृति सिद्धमाधेनुवरप्रदानात् । अथैनं मिथुनमभिमन्त्रयते 'इदं मिथुनमायुष्मदस्तु, इदं मिथुनं प्रजावदस्तु, इदं मिथुनं पशुमदस्तु, इदं मिथुनं वीर्यवदस्तु' इत्यादि ।

अन्यत्र — 'कन्या भेरी च शंखं दधिफलकुसुमं पावकोदीप्यमानः
यानं वा विप्रयूथं हयगजवृषभाः पूर्णकुंभं ध्वजो वा ।
उद्धृत्यापेयभाण्डं जलचरयुगलं बद्धमन्नं शवो वा
वेश्यास्त्री मांसखंडं प्रियहितवचनं मंगलं प्रस्थितानाम्' ॥ इति

दुर्निमित्तानि — 'तक्रं तैलाभिषिक्तं भुजगमभिमुखं मुक्तकेशञ्च नग्नं
शस्त्रं रिक्तञ्च कुंभं कलहमभिमुखं काष्ठभारञ्च दृष्ट्वा ।
प्रव्राजं छिन्ननासं जटिलमुकुटिनं रक्तपुष्पार्द्रवस्त्रं
प्रस्थाने प्रस्थितानां प्रविरलदशनो मृत्युरग्रे स्थितः स्यात्' ॥ इति

**संशास्मीति** – 'दक्षिणं पादमग्रेऽतिहर देहलीं माधिष्ठा' इति पत्नीं संशास्ति । **आवसथे** – अग्निशालायाञ्च । **प्राच्यामर्धे** – पूर्वार्धे उत्तरार्धे वा पूर्वोक्तमौपासनकुंडं कृत्वा प्रोक्ष्य उल्लेखनादीन् कृत्वा प्रोक्ष्य सुवर्णं व्रीहीन् वा निधाय अग्निं **समादधीत** संदध्यात् ।

**अग्नेरपरस्यामानडुहं चर्म लोहितं कृष्णाजिनं वा प्राचीनग्रीवमुत्तरलोमास्तृणाति ॥ ३ ॥**

**अपरस्यां** – अपरभागे । **लोहितं** रक्तवर्णम् । **आनडुहमित्यादि** । 'वह्निर्वा अनड्वा' निति **श्रुतिः** । 'अग्निर्वै देवानां व्रतपति' रिति च ।

व्रतपूर्त्यर्थमानडुहं चर्मेत्युक्तम् । आनडुहाभावे कृष्णाजिनम् । 'ब्रह्मणो वा एतद्रूपम् । यत्कृष्णाजिन' मिति श्रुतिः । वाशब्दात् कटादि ।

गृह्यः — 'दीपाद्यलंकृते गेहे व्रीहीनास्तीर्य तत्र वै ।
चर्माभावे कटं वापि तदूर्ध्वे वस्त्रमास्तरेत्' ॥ इति

**तत्र प्राङ्मुखमुदङ्मुखं वा वधूमुपवेश्य पतिः 'इह गावः प्रजायध्व' मिति पश्चान्निषीदेत ॥ ४ ॥**

तत्र—चर्मणि । निषीदेत 'उपविशेत् ॥

**आज्योतिषां दर्शनात् वाचंयमावन्यतरानुपेतावासाताम् ॥ ५ ॥**

आज्योतिषा मित्यादि । नक्षत्रदर्शनपर्यन्तं । वाचंयमौ मौनिनौ । अन्यतरानुपेतौ अन्येनायुतौ पुरुषान्तरेण स्त्रिया वा । आसाताम् । आसननिर्देशात् स्वापादिकर्मान्तरनिवृत्तिः ।

**उदिते नक्षत्रे प्राचीमुदीचीं वा 'देवीष्षडुर्वी' रिति दिशमुपस्थाय 'नाहास्महि प्रजया' इति चन्द्रं 'सप्तर्षय' इति सप्तर्षीन् कृत्तिकादि-नक्षत्राण्यरुन्धतीञ्च 'ध्रुवक्षिति' रिति ध्रुवञ्च दृष्ट्वोपतिष्ठेयाताम् ॥ ६**

उदित इत्यादि । वाशब्दः विकल्पार्थः । वधूवरयोः प्रत्येकमुपस्थानम् सर्वकामसमृद्ध्यर्थं दिगुपस्थानादिकम् । द्विजराजत्वात् चन्द्रोपस्थानम् । नक्षत्रादिदर्शनाभावे —

गृह्यः — 'अदृष्ट्वाप्याह नक्षत्रं द्रष्टाऽहमिति तत्पतिः ।
तेषामदृष्टकालेऽपि मन्त्राणां जप इष्यते' ॥ इति

कात्यायनश्च — 'सा यदि न पश्येत् 'पश्यामी' ति ब्रूयात्' ॥ इति

कृत्तिकादीति ।

ननु— 'यदिष्टादिस्तथा कालः ब्रह्मणा परिनिर्मितः ।
रोहिण्याद्यं भवेत् सर्वमेवं संख्यासमो भवेत् ॥

एवमुक्ते तु शक्रेण त्रिदिवं कृत्तिका गता ।
नक्षत्रं शकटाकारं भाति तद्ध्यग्निदैवतम्' ॥

इत्यारण्यपर्वण्युक्तत्वात् कृत्तिकादित्वेन कथमुच्यत इति चेत्—सत्यम् । 'कृत्तिकाः प्रथमम् । विशाखे उत्तमम् । तानि देवनक्षत्राणि । अनूराधाः प्रथमम् । अपभरणीरुत्तमम् । तानि यमनक्षत्राणि' इत्यारभ्य 'तेषु कुर्वीत यत्कारी स्यात् । पुण्याह एव कुरुते' इति देवनक्षत्राणामादिभूतत्वात् अग्निदेवत्यत्वात् 'मुखं वा एतन्नक्षत्राणाम् यत्कृत्तिकाः' इति श्रुतेश्च कृत्तिकादीनीत्युक्तम् । पातिव्रत्यसिद्ध्यर्थं अरुन्धतीदर्शनम् । स्थैर्यादिसिद्ध्यर्थं ध्रुवदर्शनम् ।

**मनोज्ञं तया सह संभाष्य ॥ ७ ॥**

मनोज्ञमित्यादि । ध्रुवोपस्थानानन्तरं यथायोगं मनःप्रियं तया संभाष्य ।

**अथाऽऽग्नेयः स्थालीपाकः ॥ ८ ॥**

अथ दिगुपस्थानादि सन्ध्योपस्थानानन्तरं आग्नेयस्थालीपाकः ।

**'प्रजास्थाली'मिति स्थालीमभिमृश्य 'अग्नये जुष्टं निर्वपामी'ति स्थाल्यां तण्डुलान् निर्वाप्य 'वाचस्पतये पवस्वे'ति वध्वा चरुं श्रपयति ॥ ९ ॥**

**अभिघार्योदगुद्वास्य परिस्तीर्य अग्निमुपसमाधाय 'हव्यवाह'मिति स्विष्टकृता यजेत ॥ १० ॥**

अग्निमुपसमाधायेत्यादि । जुहू स्रुवञ्च दर्भैः संमृज्य प्रोक्ष्य सकृदुपस्तीर्य द्विरवदाय सकृदभिघार्य 'हव्यवाह'मिति स्विष्टकृत्संज्ञितेन मन्त्रेण यजेत । यजनविधानात् 'हव्यवाह'मिति पुरोनुवाक्यामनूच्य 'स्विष्टमग्न' इति याज्यया जुहोतीति केचित् । कृत्स्नाघारानन्तरमिति केचित् । यद्वा पर्वणि स्थालीपाकवत् सर्वं कर्तव्यम् । 'अथाग्नेय' इत्यग्निशब्दनिर्देशात् 'अग्नये जुष्टं निर्वपामी'त्युक्तत्वाच्च 'अग्निर्मूर्धे'ति पुरोनुवाक्यामनूच्य 'भुवो यज्ञस्ये'ति याज्यया यजेत—यजनविधानात् । 'पुरस्ताल्लक्ष्मा पुरोऽनुवाक्या उपरिष्टाल्लक्ष्मा याज्या' इत्युक्तत्वात् । सामान्येन '‘हव्यवाह'मिति स्विष्टकृता यजेते'

स्युक्तत्वात् हव्यवाहशब्दस्य मन्त्रान्ते विद्यमानत्वात् पाकयज्ञत्वात् कृत्स्नाघारविधौ अग्निमुद्दिश्य निरुप्ते हविषि व्याहृतिहोमादिपक्वहोमासंभवात् चरुद्वयासंभवात चरुद्वय प्रतिपादनाभावाच्च पर्वणि स्थालीपाकवत् कर्तव्यमित्यवगम्यते। तदानीमेव स्थालीपाकश्चेत् आघारं विना सूत्रोक्तमार्गेण कृत्वा अन्तहोमः। अन्यदा 'अग्निर्मूर्धे'ति पुरोऽनुवाक्यामनूच्य 'भुवो यज्ञ'स्येति याज्यया हुत्वा स्विष्टकृते अवदाय 'हव्यवाह'मिति पुरोऽनुवाक्यामनूच्य 'स्विष्टमग्न' इति याज्यया जुहुयात्। ननु—'यदेकया जुहुयात् दर्विहोमं कुर्या'दिति श्रुतेः स्मार्तस्य दर्वीहोमत्वादाहुतिद्वयं न संभवतीति चेत्—सत्यम्। पितृदेवताव्यतिरिक्ताग्न्यादीनां पृथक्त्वेन यत्र निर्वापः क्रियते तत्र स्विष्टकृदपि कर्तव्यम् इति आग्नेयस्थालीपाके आग्रयणे चोक्तत्वात्। यत्र कुत्रचिदाज्येन वा संभवति। अत एवाहुतिद्वयं सिद्धम्।

**हुतशेषेण श्रोत्रियं ब्राह्मणं तर्पयित्वा तस्मा ऋषभं दत्वा अनृणो भवतीति विज्ञायते ॥ ११ ॥**

हुतशेषेणेत्यादि।

'देवो मुनिर्द्विजो राजा वैश्यः शूद्रो बिडालकः।
पशुर्म्लेच्छश्च चण्डालो दश विप्राः प्रकीर्तिताः॥

शिक्षाशी ध्याननिरतः सन्तुष्टस्संयतेन्द्रियः।
वेदशास्त्रार्थतत्त्वज्ञो देवब्राह्मण उच्यते॥

अकृष्टमन्नमश्नाति वनवासरतस्सदा।
कुरुतेऽहरहः श्राद्धं मुनिब्राह्मण उच्यते॥

षट्कर्मनिरतो नित्यं देवतातिथिपूजकः।
स्वाध्यायनिरतस्साधुस्स विप्रो द्विज उच्यते॥

धनुर्वेदविशेषज्ञो राजसेवापरश्च यः।
त्रिकर्मकृन्महोत्साहो विप्रः क्षत्रिय उच्यते॥

हेमरत्नविशेषज्ञो योनिपोषणतत्परः ।
क्रयविक्रयतत्त्वज्ञस्स विप्रो वैश्य उच्यते ॥

लाक्षानीलीतिलक्षारकुसुम्भक्षीरसर्षपान् ।
विक्रेता मधुमांसानां वैश्य ब्राह्मण उच्यते ॥

कृषिसेव्यसमाचारो धान्यसंग्रहणे रतः ।
कृत्याकृत्यविहीनश्च स विप्रश्शूद्र उच्यते ॥

यश्शान्तिपौष्टिकान्वेषी पाथेयादिपरिग्रहः ।
परान्ननिरतः प्रेष्यो बिडालद्विज उच्यते ॥

अभोज्यभोजनाच्चैव अभक्ष्यस्य च भक्षणात् ।
अगम्यागमनाच्चैव पशुब्राह्मण उच्यते ॥

वापीकूपतटाकानामारामसुरवर्त्मनाम् ।
उद्भेदको निरातंको म्लेच्छब्राह्मण उच्यते ॥

परदारधनासक्तः परनिन्दारतस्तथा ।
परमर्मावभेत्ता च चण्डालद्विज उच्यते ' ॥ इति

अतः **श्रोत्रियं** ब्राह्मणमित्युक्तम् । तर्पयित्वा—भोजयित्वा । **अस्मा ऋषभं**मित्यादि । अस्मै भुक्तवते ब्राह्मणाय ऋषभवत् सुपुष्टांगमनड्वाहं दत्वा । अनेन दानेन वरः पुत्रवान् भवति । तेन पैतृकमृणं नश्यतीति कैश्चिद्व्याख्यातम् । तदयुक्तम् । भूतार्थत्वेनानुक्तत्वात् (?) । स्थालीपाकस्य दैविकऋणापकरणमूलत्वात् 'यज्ञेन देवेभ्यः' इति । औपासनमूलत्वाद्यज्ञानां देवऋणापकरणं तेन भवतीति वक्तव्यम् । 'जीवति पितर्यग्निं नादधी' तेति बोधायनः । 'जीवति मृते वा जायामवाप्य दशमेऽह' नीति शालीकिः । मादुर्ब्राह्मणो भवति । अथाप्युदाहरन्ति ।

'यस्य वेदश्च वेदी च विच्छिन्ने त्रिपूरुषम् ।
स वै दुर्ब्राह्मणो नाम यश्चैव वृषलीपतिः ' ॥ इति

औपासनो वा नित्यो धार्यः इति । न दुर्ब्राह्मणो भवति । औपासनं धारयमाणः ' इत्यादि ।

अत्र कात्यायनः—'त्रैवार्षिकाधिकान्नो यस्सहि सोमं पिबेद्द्विजः ।
प्राक् सौमिकीः क्रियास्सर्वा यस्यान्नं वार्षिकं भवेत्' ॥ इति

मनुः— 'अतः स्वल्पीयसि द्रव्ये यस्सोमं पिबति द्विजः ।
सपीतसोमपूर्वोऽपि न तस्य फलभाग्भवेत्' ॥

इति बहुद्रव्यवतः सोमाधिकारस्मरणात् आढ्यस्य ऋणापाकृतिरितरस्य न संभवतीति शंकायां, तद्व्यावृत्त्यर्थं औपासनेनापि संभवति अनड्वाह(?) दानेन सह स्थालीपाकेनेति ज्ञापयितुमनृणो भवतीत्युक्तम् । अग्निसिद्धिद्वारेत्यर्थो विज्ञायते । न दुर्ब्रह्मणो भवतीत्यादिषु औपासनं वा धारयमाण इत्युक्तत्वात् ।

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ तृतीयप्रश्ने पञ्चमः खण्डः ।



## अथ षष्ठः खण्डः

**अत ऊर्ध्वं पर्वणि पर्वणि स्थालीपाकेन यजेत ॥ १ ॥**

**नित्यं यवैः व्रीहिभिर्वा हस्तेन 'सूर्याय स्वाहा' 'प्रजापतये स्वाहा' इति प्रातराहुती 'अग्नये स्वाहा - प्रजापतये स्वाहा' इति सायमाहुती जुहुयात् ॥ २ ॥**

यवैरित्यादि। वाशब्दो विकल्पार्थः। अग्निहोत्रहविषा वा। यद्वा **अत ऊर्ध्वं** नित्यौपासनानन्तरं पर्वणि स्थालीपाकेन यजेत। यावज्जीवं पर्वद्वयेऽपि कर्तव्यताज्ञापनार्थं द्विरुक्तिः। आग्नेयस्थालीपाकनित्यौपासनयोरेकत्वमंगीकृत्य औपासनादूर्ध्वं पर्वणि स्थालीपाक इति ज्ञापयितुमत ऊर्ध्वमित्युक्तम्। सर्वमन्यत् स्थालीपाकप्रकरणे द्रष्टव्यम्।

किञ्च। 'यथा वै पुरुषोऽश्वो गौर्जीर्यत्येवमग्निराहितो जीर्यति संवत्सरस्य परस्तादाग्निं पावमानीभिरुपतिष्ठते पुनर्नवमेवैनमजरं करोति' इति। अतः **पर्वणि पर्वणी**त्युक्तम्। **श्रुत्यन्तरे**। यस्याग्निहोत्रमदर्शपूर्णमासमनाग्रयणमतिथिवर्जितञ्च अहुतमवैश्वदेवमश्रद्धया अविधिना हुतमासप्तमांस्तस्य लोकान् हिनस्ति' इति।

देशकालाद्यपेक्षया स्थालीपाकव्यवस्थामाह **गृह्यः**।

'रात्रिं द्विभागं संकल्पेत् चतुर्थस्तु तदादितः।
स्थालीपाकव्रतारंभः तृतीयश्चेत्परेऽहनि ॥

साये त्वौपासनारंभः पूर्वभागे दिवैव वा।
स्थालीपाकादिकं कुर्यात् रात्रौ मुख्यतरं भवेत् ॥

रात्रिं त्रिभागं कुर्यात्तु द्वौ भागौ पूर्ववासरे।
शेषं परदिने चैव स्थालीपाकमृते मृतौ ॥

उदयादुदयं यावद्दिनमित्यभिधीयते।
तद्दिनादितमाशौचमिति (?) वेदविदो विदुः' ॥ इति

ग्रन्थान्तरे — 'भागद्वये व्यतीते तु परेद्युः सायमेव हि ।
स्थालीपाके प्रदोषान्ते मुख्यकालस्स उच्यते ' ॥ इति

औपासनमारप्स्ये तेन यावज्जीवं यावदाधान वा व्रीहिभिर्यवैरग्निहोत्रहविषा वा होष्ये इति संकल्प्य 'यथा' हेति परिषिच्य परिस्तीर्य । अग्नये नमः – जातवेदसे नमः – सहोजसे नमः – अजिराप्रभवे नमः – वैश्वानराय नमः – नर्यापसे नमः – पङ्क्तिराधसे नमः – विसर्पिणे नमः इत्यग्निमलंकृत्य 'चत्वारि शृङ्गा' इत्यग्निं ध्यात्वा अनन्तरं 'अग्नये स्वाहा – प्रजापतये स्वाहा' इति सायमाहुती 'सूर्याय स्वाहा प्रजापतये स्वाहा' इति प्रातराहुती हुत्वा पुनः परिषिच्य 'आपो हिष्ठे' ति प्रोक्ष्य 'भूतिस्स्मे' ति भस्मधारणं 'यत्ते अग्ने तेजस्ते' नेत्यग्निं 'उद्वय-मित्यादिभिरादित्यं चोपतिष्ठेत । अथार्याग्नेः समिध्यात्मन्यरण्यां वा समारोपणम् । 'अग्निहोत्रहवींषि श्रौते उक्तानि । 'पयसा मुमुक्षोः श्रीकामस्य वा जुहुयात् आज्येन तेजस्कामस्य दध्नेन्द्रियकामस्य यवाग्वा ग्रामकामस्यौदनेनान्नाद्यकामस्य । तण्डुलैरोजस्कामस्य पाप्मानं हन्तुकामस्य वा, पिष्टेन विद्याकामस्य, सोमेन ब्रह्मवर्चसकामस्य । दध्नस्तण्डुलानां सोमस्य नाधिश्रयणप्रतिषेचने । प्रतिषेककाले आज्यस्य दर्भतरुणौ प्रत्यस्येत्' इति । व्रीहियवयोराधिक्यं ऋग्ब्राह्मणे श्रूयते । 'पुरुषं वै देवाः पशुमालभन्त तस्मादालब्धान्मेध उदक्रामत्' इत्यारभ्य किंपुरुषाश्वगौगौरमृग अविमृगादि संभवमुक्त्वा 'अजं प्राविशत् तस्मादजो मेध्योऽभवत् अथैनमुत्क्रान्तमेधमत्यार्जं तप उष्ट्रोऽभव' दित्यन्तेन किंपुरुषादिषु प्रवेशादिकमुक्त्वा 'त एतमुत्क्रान्तमेधाः अमेध्याः पशवः तस्मादेतेषां नाश्नीयात्' इति पूर्वोक्तानां निषेधमुक्त्वा 'तमस्यामन्वगच्छत् सोऽनुगतो व्रीहिरभवत्' इति' व्रीहिरूपापन्नतामुक्त्वा 'तद्यत्पशुपुरोडाशमनुनिर्वपन्ति स मेधेन नः पशुनेष्टमस-त्येवमलेन पशुनेष्टमसत् समेधेन हास्य पशुनेष्टं भवति' इति । तत्रैव । 'स वा एष पशुरेवालभ्यते यत्पुरोडाशः । तस्य यानि किंशारूणि तानि रोमाणि । ये तुषाः । सा त्वक् । ये फलीकरणाः । तदसृक् । यत्पिष्टम् । तत् कीकसाः । तन्मांसम् । यत्किञ्चित्कं सारं तदस्थि । सर्वेषां वा एष पशूनां मेधेन यजते यः पुरोडाशेन यजते । तस्मादाहुः पुरोडाशसत्र सालोक्य' मिति ।

तत्रैवान्यत्र। 'तदाहुर्यदेष हविरेव यत् पशुः। अथास्य बह्वं लोमानि त्वगसृक् कुष्ठिकाः शफा वृषणे स्कन्दति पिशितं केनास्य तदाऽऽपू इति यद्देवैतत्पुरोडाशमनुनिर्वपन्ति तेनैवास्य तदापूर्यते पशुभ्यो वै मे उदक्रामत्तौ व्रीहिश्चैव यवश्च भूतावजायेतां तद्यत्पशौ पुरोडाशमनुनिर्वप समेधेन नः पशुनेष्टमासत्' इति। अतो व्रीहियवावुक्तौ॥

व्यासः — 'हविष्येषु यवा मुख्याः तदनु व्रीहयः स्मृताः।
अभावे व्रीहियवयोः दध्ना वा पयसाऽपि वा॥

तदभावे यवाग्वा वा जुहुयादुदकेन वा।
आज्यं गव्यमनादेशे जुहोति च विधीयते॥
यवाभावे तु गोधूमास्ततो वेणुयवादयः'॥ इति

स्मृत्यन्तरे — 'व्रीहिश्यामाकनीवारयवगोधूमशालयः।
एतेषां तण्डुला होम्या यावनालाः प्रियंगवः॥

नीवाराश्शालयश्चापि गोधूमा व्रीहयो यवाः।
स्वरूपेणैव होम्यास्स्युः स्वरूपेणैव वै तिलाः'॥ इति

आश्वलायनः — 'कामन्तु व्रीहियवतिलैः' इति।

पुस्तधान्यं चतुष्षष्टिराहुतिःपरिकीर्तिता।
तिलानान्तु तदर्धं स्यात् तदर्धांशं घृतस्य तु।
व्रीहीणाञ्च यावानाञ्च शतमाहुतिरिष्यते'॥ इति

होमकालविचारः —

सायं प्रातस्तु षण्णाड्यो होमकाल उदाहृतः।
.... .... .... .... .... ॥

स्मृत्यन्तरे — 'रेखामात्रन्तु दृश्येत रश्मिभिस्तु समन्वितः।
उदितं तु विजानीयात् तत्र होमं प्रकल्पयेत्॥

हस्तादूर्ध्वं रविर्यावत् भूमिं हित्वा स गच्छति ।
एष होमविधिः (अवधिः) पुण्यो नान्योऽभ्युदितहोमिनाम् ॥

रात्रेः षोडशभागे तु ग्रहनक्षत्रदूषिते ।
काले त्वनुदिते प्रातः होमं कुर्याद्विचक्षणः ॥

तदा प्रभातसमये नष्टे नक्षत्रमण्डले ।
रविर्यावन्न दृश्येत समयाध्युषितः स्मृतः' ॥ इति

कात्यायनः — 'सूर्येऽस्तशैलं संप्राप्ते षट्त्रिंशद्भिरिहांगुलैः ।
प्रादुष्करणमग्नीनां प्रातर्भासामदर्शने ॥

यावत्सम्यग्विभासन्ते नभस्यृक्षाणि सर्वतः ।
लोहितत्वश्च नापैति तावत्सायन्तु हूयते' ॥

आपस्तंबः — 'तस्यैतस्य ह्यगाधे तीर्थे (?) यत्संधिस्तस्मात्संधौ होतव्यमिति शैलालिब्राह्मणं भवति' ॥ इति

श्रौते च — 'सायं प्रातस्संध्ययोर्होतव्यम् । नक्षत्रं दृष्ट्वा प्रदोषे निशायां वोषसि पुरोदयात् समाविषित उदिते वा प्रदोषान्तो होमकालः सायम् । संगवान्तः प्रातः' इति । 'प्रातः प्रातरनृतं ते वदन्ति पुरोदयाज्जुह्वति योऽग्निहोत्र' मित्यादिश्रुतयः 'नहि निन्दा निन्दितुं प्रवृत्ता अपितु निन्दितादन्यत्प्रशंसितु'मिति नहिनिन्दान्यायेन अनुदितहोमप्रशंसापराः व्याख्येयाः ।

वैशंपायनः — 'एकेऽभ्युदितहोमास्स्युः अन्येऽनुदितहोमिनः ।
अन्ये भोजनहोमास्स्युः पक्षहोमास्तथैव च ॥

सन्ध्याकालावसाने तु स्वयंहोमो विधीयते ।
स्वयंहोमे फलं यत्स्यात् न तदन्येन लभ्यते' ॥ इति

मनुः — 'ग्रहर्क्षयुक्तोऽनुदितो नक्षत्रार्कविवर्जितः ।
एतैरपि हुतं यत्स्यात् तद्धुतं स्वयमेव हि' ॥ इति

षड्विंशब्राह्मणे :— 'अन्यैश्शतहुताद्धोमात् एकश्शिष्यकृतो वरः ।
शिष्यैश्शतहुताद्धोमात् एकः पुत्रकृतो वरः ॥
पुत्रैश्शतहुताद्धोमात् एको ह्यात्महुतो वरः ।
समयाविषितस्साक्षादुदितस्त्रिषु होमयेत्' ॥ इति

स्कान्दे — 'तुलसीकाष्ठयुक्तेऽग्नौ जुहुयादक्षयं फलम् ।
हविस्तेनैव यत्पक्वं विष्णोरानन्त्यमश्नुते' ॥ इति

हस्तेन - -

'ओषध्यः सक्तवः पुष्पं तृणं काष्ठं फलं तथा ।
एतद्धस्तेन होतव्यं नान्यत्किञ्चन चोदनात्' ॥ इति

गृह्यः — 'उत्तानेन तु हस्तेन अंगुष्ठेन निपीडितम् ।
संयतांगुलिपाणिस्तु वाग्यतो जुहुयाद्धविः' ॥ इति

**सूर्याय प्रजापतय इत्यादि ।**

श्रुतिः—'सोऽजामसृजत' इत्यारभ्य 'किं भागधेयमभिजनिष्य इति तुभ्यमेवेद हूयाता इत्यब्रवीत् । स एतद्भागधेयमभ्यजायत । यदग्निहोत्रम् । तस्मादग्निहोत्रमुच्यते । तद्धूयमानमादित्योऽब्रवीत् । माहौषीः । उभयोर्वै नावेतदिति । सोऽग्निरब्रवीत् । कथं नौ होष्यन्तीति । सायवेव तुभ्यं जुहवन् । प्रातर्मह्यमित्यब्रवीत् । तस्मादग्नये सायं हूयते । सूर्याय प्रात' रिति । तथा 'प्रजापतिरकामयत प्रजायेयेति । स एतदग्निहोत्रं मिथुनमपश्यत् । तदुदिते सूर्येऽजुहोत् । यजुषाऽन्यत् । तूष्णीमन्यत् । ततो वै स प्राजायत' इत्यादि । किञ्च । 'उत्तरावतीं वै देवा आहुतिमजुहवुः । अवाचीमसुराः । ततो देवा अभवन् । पराऽसुराः । यं कामयेत वसीयान् स्यादिति । कनीयस्तस्य पूर्वं हुत्वा उत्तरं भूयो जुहुयात् । एषा वा उत्तरावत्याहुतिः । तां देवा अजुहवुः । ततस्तेऽभवन् । यस्यैवं जुह्वति । भवत्येव । यं कामयेत पापीयान् स्यादिति । भूयस्तस्य पूर्वं हुत्वा । उत्तरं कनीयो जुहुयात् । एषा वा अवाच्याहुतिः । तामसुरा अजुहवुः । ततस्ते पराभवन् । यस्यैवं जुह्वति । परैव भवति' इति ।

भारद्वाजः — ‘होमं वैतानिकं कृत्वा स्मार्तं कुर्याद्विचक्षणः ।
स्मृतीनां वेदमूलत्वात् स्मार्तं केचित्पुरा विदुः ॥

श्रौतं कर्म न चेत्तच्च कर्तुं स्मार्तं समाचरेत् ।
अशक्तौ स्मार्तमप्यस्य कुर्यादाचारमन्ततः ॥’ इति

शातातपः — ‘सर्वशाखोपसंहारादुक्तः श्रौतो यथाविधि ।
सर्वस्मृत्युपसंहारादुक्तस्स्मार्तो यथाविधि ॥

द्वितीयोद्वाहवह्निश्चेल्लौकिकः पूर्वपावके ।
‘भवतं नः’ सुजुहुयात् ‘अग्नावग्निं’ हुनेद्बुधः ॥’ इति

**अग्न्यन्तरसंसर्गे अनुगते वा पत्नी कृच्छ्रं चरति ॥ ३ ॥**

**अग्न्यन्तर**मित्यनेन लौकिकाग्निना वैदिकाग्निना औपासनवह्निना गृहदाहवह्निना अशन्यादिवह्निना वा संसर्गे प्रायश्चित्तं कृत्वा पत्नी कृच्छ्रं चरेत् । संसर्गप्रायश्चित्तप्रकारः । यथा —

औपासनाग्निद्वयसंगतिश्चेत्
अग्निं समारोपणतो विभज्य ।
पूर्वस्य होतुर्विविचश्च हुत्वा
पश्चाच्च होतुः पथिकृच्च होमे ॥

**श्रौते** — ‘यस्याग्नयोऽग्निभिरन्यैः संसृज्यन्ते मिथो वा ‘अग्नये विविचये मिथश्चेद्विपृचय अग्नय’ इत्येकेषाम् । यदि गार्हपत्य आहवनीयेन दक्षिणाग्निना वा संसृष्टः, ‘अग्नये वीतय’ इत्येकेषाम् । यदि प्रदाव्येन गृहदाहवाह्निना श्मशानवह्निना वा गार्हपत्योऽग्निः संसृष्टः ‘अग्नये शुचये — अग्नये संकुसुकाय । यदि वैद्युतेन ‘अग्नये अप्सुमते । यदि सर्वैः विविचये निरुप्य शुचये निर्वपति । ततो व्रातभृतीं तृतीयामप्सुमतीं अन्ततः क्षामवतीमिष्टिं निर्वपति । संसृष्टाग्नीन् पृथगरणिषु समारोप्य मथित्वा आयतने निधायाथैता इष्टय आहार्याः पूर्णाहुतयः स्रुवाहुतयो वा पूर्वाः पूर्वा गरीयस्यः । पुनराधेय इत्येके । हविः प्रोक्षन्नग्नि-

मभिप्रोक्षयेत् । 'पुनस्त्वादित्या रुद्रा वसवः समिन्धता' मिति समिधमादध्यात् जुहुयादुपतिष्ठेत वा' इति । शूद्रादिस्पर्शजाग्न्युपघातेप्येतदेव । अन्त्यजाति-रजस्वलाग्न्युपघाते पुनरादधीत' ऋग्ब्राह्मणे – 'य आहिताग्निरासन्नेषु हविष्षु म्रियेत का तत्र प्रायश्चित्तिरिति । याभ्य एव देवताभ्यो हवींषि गृहीतानि भवन्ति ताभ्यः स्वाहेत्याहवनीये जुहुयात् । अथ यदि स्रुक् भिद्येत किं तत्र प्रायश्चित्तिरिति । सोऽग्नये वीतयेऽष्टाकपालं पुरोडाशं निर्वपेत । तस्य याज्यानु-वाक्ये । .... .... .... । अन्यां स्रुचमाहृत्य जुहुयात् । अथैनां स्रुचं भिन्नामाहवनीयेऽभ्यादध्यात् । प्राक् दण्डादि प्रत्यक् पुष्कराम् । सा तत्र प्रायश्चित्तिः । यस्याहवनीयौ मिथस्संसृज्येतां का तत्र प्रायश्चित्तिरिति । सोऽग्नये वीतयेऽष्टाकपालं पुरोडाशं निर्वपेत् । तस्य याज्यानुवाक्ये । 'अग्न आयाहि वीतय' इत्याहवनीये जुहुयात् । 'अग्नये वीतये स्वाहा' इति । यस्य सर्व एवाग्नयो मिथस्संसृज्येरन् का तत्र प्रायश्चित्तिरिति । 'अग्नये विविचये स्वाहा' सा तत्र प्रायश्चित्तिः । ग्राम्याग्निना संसर्गे 'अग्नये संसर्गाय । दिव्याग्निना संसर्गे 'अग्नयेऽप्सुमते' शवाग्निना संसर्गे 'अग्नये शुचये । य आहिताग्निरुपवसथे अश्रु कुर्वीत(?) । सोऽग्नये व्रातभृते । यस्याहिताग्नेरुपवसथे आवृत्त्य (?) मापद्येत सोऽग्नये व्रतपतये । य आहिताग्निराग्रयणे अनिष्ट्वा नवान्नमश्नाति सोऽग्नये तन्तुमते । आहिताग्निः प्रातरस्नातोऽग्निहोत्रं जुहुयात् सोऽग्नये वरुणायेति । 'स्मार्ते स्रुवाहुतिः समुत्सन्न इत्यादि ।

औपासनाग्नौ संसृष्टे समिधौ द्वौ प्रतापयेत् ।

'अयं ते योनिर्ऋत्विय' इत्येव युगपत्ततः ।
'सप्त ते अग्न' इति तु सा वा पूर्णाहुतिस्ततः ॥

'अच्छागिरो मतय' इति विभज्याग्निं ततः पुनः ।
न प्रतिष्ठा समित्तस्मिन् प्रहरेदेकमेव हि ॥

'आजुह्वाने' ति मन्त्रेण प्रायश्चित्तं ततो हुनेत् ।
'अयाश्च' व्याहृतीश्चैव घृतं पक्वात्ततः (?) पुनः ॥

एवं विभज्य चैकेन स्मार्तकर्म समाचरेत् ।
संसृष्टेऽग्नौ गृहस्थस्य विधिरुक्तो मनीषिभिः ॥

**बोधायनः** — 'अथ यद्युपनयनाग्निर्विवाहाग्निर्जातकाग्निश्श्मशानाग्निराचतुर्थादादशाहादास्थिसञ्चयनादुद्वातस्स्यात् 'अपहता असुरा' इति प्रोक्ष्य क्षिप्रं भस्मसमारोपणम्। 'अयं ते योनिर्ऋत्विय' इति समिधि समारोप्य लौकिकमग्निमाहृत्य समिधमादधाति । 'आजुह्वान' – 'उद्बुद्ध्यस्वाग्न' इति द्वाभ्यां संपरिस्तीर्य प्रायश्चित्तं जुहोति। 'अयाश्चाग्नेः – यश्च होता – ब्राह्मण एकहोता – मनस्वतीं – मिन्दाहुतीः - महाव्याहृतीः - व्याहृतयश्च प्रायश्चित्तं जुहुयात्' इति ।

**देवलः** — 'चण्डालाग्निरमेध्याग्निस्सूतकाग्निश्च कर्हिचित् ।
पतिताग्निश्चिताग्निश्च न शिष्टग्रहणोचितः' ॥ इति

प्रकारान्तरेणाग्निनाशः स्मृत्यन्तरे

'भार्यायां प्रोषितायाञ्चेत् उदेत्यर्कोऽस्तमेति वा ।
तत्र स्यात्पुनराधेयमन्ये त्वाहुरिहान्यथा ॥

सन्ध्यावदन्यथाऽप्यग्नीन् हुत्वा चेद्दंपती गतौ ।
ग्रामान्तरं वा सीमान्तं तत्रैकेऽग्निशमं विदुः ॥

आपद्यपि च कष्टायां विना पत्नीं नरान्तरैः (?) ।
सीमातिक्रमणे .... न कथञ्चिदनुग्रहः ॥

विहायाग्निं सभार्यश्चेत् सीमामुलंघ्य गच्छति ।
होमकालात्यये तस्य पुनराधानमिष्यते' ॥ इति

**कात्यायनः** — 'विहायाग्निं सभार्यश्चेत् सीमामुलंघ्य गच्छति ।
होमकालव्यपेतस्य पुनराधानमिष्यते' ॥ इति

**शौनकः** — 'अग्नावनुगते यत्र होमकालद्वयं व्रजेत् ।
उभयोर्विप्रवासे तु लौकिकोऽग्निर्विधीयते ॥

प्रोषितस्य यदा पत्नी यदि ग्रामान्तरं व्रजेत् ।
होमकाले तु संप्राप्ता न सा दोषेण युज्यते' ॥ इति

स्मृत्यन्तरे विशेषः- 'ज्येष्ठा चेदग्निसंयुक्ता तिष्ठत्यन्या यथारुचि ।
यजमानेन सहिता यद्याता एव केवला: ॥

एतस्यामप्यतिष्ठन्त्यामग्निहोत्रसमीपतः ।
पतिस्तिष्ठति चेदग्निनाशो नेत्यपरे जगुः ॥

प्रत्यक्षेण नया(?)दग्निमुच्छ्वसेच्चेद्विनश्यति ।
यदि वानुच्छ्वसन् हुत्वा निधायोच्छ्वस्य तं पुनः ॥

हरेदनुच्छ्वसन्नेव नश्यते हरणेऽनलः ।
त्रिकांडी — यस्य भार्या विदूरस्था पतिता व्याधितापि वा ॥

अनिच्छुः प्रतिकूला वा तस्य प्रतिनिधौ क्रिया ।
ज्येष्ठायां दोषहीनायां कनीयस्या यदाग्निमान् ॥' इति

श्रौते —[1] 'अन्त्यजात्यमेध्यवायसादिस्पर्शने अरण्योर्नाशः । तावुत्सृज्य 'भवतं नस्सुमनसा' वित्यप्सु निमज्जयेत् । अन्यौ नवावाहृत्याग्न्याधेयं करोति । इति ।

( .... कार व्याहरेत्तस्य प्रतिपर्व हि सर्वदा ।
कात्यायनः — 'अग्निहोत्रादिशुश्रूषां बहु भार्यस्यमन्वयौ (?) (समन्वये) ।
कारयेत्तद्बहुत्वेऽपि ज्येष्ठया गर्हिता न चेत्' ॥ )

स्मृत्यन्तरे — 'अग्निहोत्रादियज्ञेषु द्वितीया न सहाचरेत्' ।
'अन्यथा निष्फलं तस्य शिष्टैः क्रतुशतैरपि ॥

नैकयाऽपि विना कार्यमाधानं भार्यया द्विजैः ।
अकृतं तद्विजानीयात् सर्वानन्वारभन्ति(?) तत् ॥

अकृतारंभसोमेज्यां भार्यामेवानुवर्तते ।
नास्ति माहेन्द्रसान्नाय्यं सन्ति सारस्वतादयः' ॥

इति केचित् ।

**श्रोत्रियागारात् मथित्वा वाऽऽग्निमादाय पुनरौपासनमादधीत॥४**

1. इदमत्राप्रकृतमिव भाति ।

[1]अत्र बोधायनः—(अथ हैव भवति आपो वा इदमग्रे सलिलमासीत्। तस्मिन् प्रजापतिर्वायुर्भूत्वाऽचरत्। स इमामपश्यत्। तां वराहो भूत्वाऽहरत्। तां विश्वकर्मा भूत्वा व्यमार्ट् साऽप्रथत। सा पृथिव्यभवत्। तत्पृथिव्यै पृथिवीत्वम्। तस्यामश्राम्यत् इति)। तदुहैक औपासनमेवोपासते। स्त्रिया एव संस्कारार्थं औपासनो नित्यो धार्यः, अनुगतो मन्थ्यश्श्रोत्रियागाराद्वाऽऽहार्यो........द्वादशाहं विच्छिन्नः पुनराधेय' इति। अतः पत्नी कृच्छ्रं चरतीत्युक्तम्। कृच्छ्रमिति सामान्येनोक्तत्वात् प्राजापत्यम्। भृगुः—'कृच्छ्रमित्यविशेषोक्ते प्राजापत्यं विधीयते' इति। प्राजापत्यादीनां लक्षणञ्चोक्तम्।

'एकभुक्तेन नक्तेन तथैवायाचितेन च।
उपवासेन चैकेन पादकृच्छ्रः प्रकीर्तितः॥

यथाकथञ्चित्त्रिगुणं प्राजापत्योऽयमुच्यते।
प्राजापत्यो भवेत्कृच्छ्रो दिवारात्रमयाचितम्॥

क्रमशो वायुभक्षश्च द्वादशाहं त्र्यहं त्र्यहम्।
अहरेकं तथा नक्तमज्ञातं वायुभक्षता॥

त्रिवृदेष परावृत्तो भावानां कृच्छ्र उच्यते।
एकैकं ग्रासमश्नीयात् पूर्वोक्तेन त्र्यहं त्र्यहम्॥

वायुभक्षस्त्र्यहं चान्यदतिकृच्छ्रोऽघनाशनः।
अब्भक्षस्त्रियहानेतान् वायुभक्षस्ततः परम्।
एष कृच्छ्रातिकृच्छ्रस्तु विज्ञेयस्सोऽतिपावनः॥

तप्तक्षीरघृतांबूनामेकैकं प्रत्यहं पिबेत्।
एकाहमुपवासेन तप्तकृच्छ्रः प्रकीर्तितः'॥ इति

प्राजापत्यादि चतुर्विंशतिमते।

---

1. चतुर्थं सूत्रं मातृकायां नोपलभ्यते। औचित्यादत्र निवेशितम्। बोधायनवाक्ये पूर्वखण्डोदाहरणं प्रकृतानुपयुक्तमिव भाति।

प्रातस्तु द्विदशग्रासं नक्तं पञ्चदशैव तु ।
अयाचितेषु द्वौ चाष्टौ प्राजापत्यो विधिस्स्मृतः ॥

त्र्यहं त्र्यहं पिबेदुष्णं पयस्सर्पिः कुशोदकम् ।
वायुभक्षस्त्र्यहञ्च स्यात् तप्तकृच्छ्रस्स उच्यते ॥

गोमूत्रं गोमयं क्षीरं दधिसर्पिः कुशोदकम् ।
एकरात्रोपवासश्च कृच्छ्रं सान्तपनं स्मृतम् ॥

यतात्मनोऽप्रमत्तस्य द्वादशाहमभोजनम् ।
पराको नाम कृच्छ्रोऽयं सर्वपापप्रणाशनः ॥

गोमूत्रादित्रिरभ्यस्तमेकैकं तत्त्रिसप्तकम् ।
महासान्तपनं कृच्छ्रं वदन्ति ब्रह्मवादिनः ॥

गोमूत्रं गोमयञ्चैव क्षीरं दधि घृतं तथा ।
पञ्चरात्रं तथाऽऽहारः पञ्चगव्येन शुध्यति' ॥ इति

यमः — 'एकैकं पिण्डमश्नीयात् त्र्यहं कल्पे (?) त्र्यहं निशि ।
अयाचितं तु त्रियहमंबुभक्षस्त्र्यहं परम् ॥

अतिकृच्छ्रं चरेदेतत्पवित्रं पापनाशनम् ।
चतुर्विंशतिरात्रन्तु नियतात्मा जितेन्द्रियः ॥
कृच्छ्रातिकृच्छ्रं कुर्वीत एकस्थाने द्विजोत्तमः' ॥ इति

पराशरः — 'षट्पलन्तु पिबेदंबु त्रिपलन्तु पयः पिबेत् ।
पलमेकं पिबेत्सर्पिस्तप्तकृच्छ्रं विधीयते' ॥ इति

याज्ञवल्क्यः — 'कुशोदकन्तु त्रिपलं दधि मूत्रं पयो घृतम् ।
तत्परेद्युश्चोपवसेत् कृच्छ्रं सान्तपनं स्मृतम्' ॥ इति

जाबालिः — 'गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।
एकैकं प्रत्यहं पीत्वा अहोरात्रमभोजनम् ॥
कृच्छ्रं सान्तपनं नाम सर्वपापप्रणाशनम्' ॥

अन्यत्र — 'पृथक्सान्तपनद्रव्यैः षडहः सोपवासकः ।
सप्ताहेन तु कृच्छ्रो यो महासान्तपनः स्मृतः' ॥ इति

यमः — 'त्र्यहं पिबेत्तु गोमूत्रं त्र्यहं वै गोमयं पिबेत् ।
त्र्यहं दधि त्र्यहं क्षीरं त्र्यहं सर्पिस्ततश्शुचिः ॥
महासान्तपनं ह्येतत् सर्वपापप्रणाशनम्' ॥ इति

जाबालिः — 'षण्णामेकैकमेतेषां त्रिरात्रमुपयोजयेत् ।
त्र्यहश्चैवोपवासश्च महासान्तपनः स्मृतः' ॥ इति

योगयाज्ञवल्क्यः — 'आतृप्तेश्चारयित्वा गाः गोधूमान् यवमिश्रितान् ।
गोमयोत्थांश्च संगृह्य पिबेद्गोमूत्रयावकम् ॥

गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।
यावाचामेन संयुक्तौ (?) ब्रह्मकूर्चोऽतिपावनः' ॥ इति

अंगिराः — 'गोमूत्रेण च संयुक्तं यावकेन प्रयोजयेत् ।
एतत्तु विहितं पुण्यं कृच्छ्रमंगिरसा स्वयम् ॥

प्रणवान्तसमारंभो नाम्ना वज्रमिति स्मृतम् ।
गोक्षीरं सप्तरात्रन्तु पिबेत् स्तनचतुष्टयात् ॥

स्तनत्रयात्सप्तरात्रं सप्तरात्रं स्तनद्वयात् ।
स्तनेनैकेन षड्रात्रं षड्रात्रं वायुभुग्भवेत् ॥
एतत्सोमायनं नाम सर्वकल्मषनाशनम्' ॥ इति

अथ चान्द्रायणविधिः —

'एकवृद्ध्या सिते पिंडमेकहान्याऽसिते तथा ।
पक्षयोरुपवासौ द्वौ तद्धि चान्द्रायणं स्मृतम्' ॥ इति

अन्यत्र — 'तिथिवृद्ध्या चरेत्पिंडान् शुक्ले शिख्यण्डनिर्मितान् ।
एकैकं ह्रासयेत्पिंडं कृष्णे चान्द्रायणं चरेत् ॥

यथा कथञ्चित् पिंडानां चत्वारिंशच्छतद्वयम् ।
मासेनैवोपयुञ्जीत चान्द्रायणमथापरम् ॥

कुर्यात्त्रिषवणस्नायी कृच्छ्रं चांद्रायणं तथा ।
पवित्राणि चरेत्पिंडान् गायत्र्या अधिचिन्तयेत् ॥
अनादिष्टेषु पापेषु शुद्धिश्चान्द्रायणेन तु' ॥ इति

प्रथमदिने एकभुक्तं द्वितीयदिने नक्तं तृतीयदिने अयाचितं चतुर्थदिने उपवासः एवमेतच्चतुश्चतुष्टयमेव चान्द्रायणम् । एतच्चान्द्रायणं द्विगुणितं पिपीलिकाचान्द्रायणम् । कृष्णधेनोः मूत्रं पञ्चदशदिनपर्यन्तं प्रातःकाले पीत्वा तदेव स्वांगेष्वनुलिप्य नियताहारश्चेद्गोमूत्रचान्द्रायणम् । तथैव गोमयम् । प्रातः अष्टोत्तरशतं गायत्रीजपः मध्याह्ने अष्टोत्तरं गायत्रीजपः सायंकाले अष्टोत्तरशतं गायत्रीजपः । एवं प्रतिदिनं त्रिमासपर्यन्तं त्रिकालगायत्रीजपाचरणेनैकं जपचांद्रायणम् । संकल्पपूर्वकं षट्त्रिंशद्वारमुदके निमज्ज्य मन्त्रवदघमर्षणस्नानेन प्रतिदिनं मासपर्यन्तमेवं स्नानचान्द्रायणम् । मासपर्यन्तं कन्दमूलाहारेणैकं सिद्धचान्द्रायणम् । अथान्नचान्द्रायणानि । द्वात्रिंशत्कबलात्मकं ज्ञानसारस्वतान्नचान्द्रायणम् । चतुर्विंशतिकबलात्मकं वनस्थमुक्तिज्ञानचान्द्रायणम् । द्वादशकबलात्मकं यतिमुक्तिचान्द्रायणम् । अष्टकबलात्मकं महाप्रायश्चित्तचान्द्रायणम् । मासपर्यन्तं चतुःकबलात्मकं महापातककृच्छ्रचान्द्रायणम् । मासपर्यन्तं फलाहारेण कर्मचान्द्रायणम् । इति

**पराशरः —** 'सायन्तु द्वादशग्रासान् प्रातः पञ्चदश स्मृतः ।
चतुर्विंशतिरायाच्यं परं निरशनं स्मृतम्' ॥ इति

**आपस्तंबः —** 'सायं द्वाविंशतिग्रासः प्रातः षड्विंशतिः स्मृतः ।
प्रातः पादं चरेच्छूद्रः सायं वैश्यस्य दापयेत् ॥

अयाचितन्तु राजन्ये त्रिरात्रं ब्राह्मणे स्मृतम् ।
एतैर्मतः पत्रकृच्छ्रः पुष्पैस्तत्कृच्छ्र उच्यते ॥

मूलकृच्छ्रस्ततो मूलैस्तोयकृच्छ्रो जलेन तु ।
अष्टावष्टौ समश्नीयात्पिंडान मध्यंदिने स्थिते ॥

नियतात्मा हविष्यश्च यतिश्चान्द्रायणं चरेत् ।
चतुरः प्रातरश्नीयात्पिंडान् विप्रस्समाहितः ॥

चतुरोऽस्तमिते सूर्ये शिशुचान्द्रायणं चरेत् ।
यथाकथञ्चित् पिंडानां तिस्रोऽशीतिस्समाहितः ॥

मासेनाश्नन् हविष्यस्य चन्द्रस्यैति सलोकताम् ।
त्रींस्त्रीन् पिंडान्त्समश्नीयात् नियतात्मा दृढव्रतः ॥
हविष्यान्न स वै मासमृषिचान्द्रायणं स्मृतम्' ॥

कृच्छ्रप्रत्यम्नायाः —

'प्राजापत्यक्रियाशक्तौ धेनुं दद्यात् सदक्षिणाम् ।
धेनोरभावे निष्कं स्यात् तदर्धं पादमेव वा ॥
पादहीनं न कर्तव्यमिति शातातपोऽब्रवीत्' ॥ इति

'कृच्छ्रोऽयुतश्च गायत्र्याः उपवासस्तथैव च ।
धेनुप्रदानं विप्राय सममेतच्चतुष्टयम्' ॥ इति

चतुर्विंशतिमते — 'तिलहोमसहस्रञ्च वेदपारायणं तथा' ॥ इति

पराशरः — 'कृच्छ्रो देव्ययुतश्चैव प्राणायामशतद्वयम् ।
पुण्यतीर्थेनार्द्रशिरस्स्नानं द्वादशसंख्यया ॥
द्वियोजनं तीर्थयात्रा कृच्छ्रमेवं प्रकल्पितम्' ॥ इति

'प्राजापत्यं चरन् विप्रो यद्यशक्तो दिने दिने ।
विप्रान् पञ्चावरान् शुद्धान् भोजयेत्सम्यगर्चितान्' ॥

'चान्द्रायणत्रयं कृच्छ्रस्साविञ्याश्चायुतद्वयम् ।
समुद्रगनदीस्नानं सममेतच्चतुष्टयम्' ॥ इति

चतुर्विंशतिमते — 'प्राजापत्ये तु गां दद्यात् दद्यात् सान्तपने द्वयम् ।
पराकतप्तकृच्छ्रेषु तिस्रस्तिस्रश्च गाः स्मृताः ॥

पराकतप्तकृच्छ्राणां स्थाने कृच्छ्रत्रयं चरेत् ।
अष्टौ चान्द्रायणे देयाः प्रत्याम्नायविधौ सदा ॥

'प्राजापत्ये तु गामेकामतिकृच्छ्रे द्वयं स्मृतम् ।
चान्द्रायणे पराके च तिस्रस्ता दक्षिणास्तथा ॥
यथावित्तानुसारेण दानं दद्याद्विशुद्धये' ॥ इति

चान्द्रायणादीनां प्रत्याम्नायाः ।

चतुर्विंशतिमते — 'चान्द्रायणं मृगारेष्टिः पवित्रेष्टिस्तथैव च ।
मित्रविन्दात्रयं (कृतिः) चैव कृच्छ्रं मासत्रयं तथा ॥
तिलहोमायुतञ्चैव पराकद्वयमेव च ।
गायत्र्या लक्षजप्यञ्च समान्याह बृहस्पतिः' ॥ इति

संग्रहः — 'कृच्छ्रे पञ्चातिकृच्छ्रे त्रिगुणमहरहस्त्रिंशदेवं तृतीये
चत्वारिंशच्च तप्ते त्रिगुणगुणितया विंशतिस्स्यात्पराके ।
कृच्छ्रे सान्तापनाख्ये भवति षडधिका विंशतिः सैव हीना
द्वाभ्यां चान्द्रायणे स्यात्तपसि कृशबलो भोजयेद्विप्रमुख्यान् ॥

'पत्नी मन्त्रेष्वशक्ता चेत् स्वामी तत्सन्निधौ जपेत् ।
स्वामिनः सन्निधौ शिष्यः पुत्रोऽध्वर्युरथापि वा' ॥ इति

अथाग्न्यनुगतप्रायश्चित्तं कृच्छ्रम् ।

व्याघ्रः — 'योऽग्निं त्यजति नास्तिक्यात् प्राजापत्यं चरेद्द्विजः ।
अग्निहोत्र्यपविद्धयाग्नीन् ब्राह्मणः कामकारतः ॥
चान्द्रायणं चरेन्मासं वीरहत्यासमं हि तत्' ॥ इति

मनुः — 'योऽग्निं त्यजाति नास्तिक्यात् ब्राह्मणः पतितो भवेत् ।
तं चारयित्वा कृच्छ्रांस्त्रीन् ग्राहयेद्विधिपूर्वकम्' ॥ इति

वृद्धगौतमः — 'गृह्यं वैतानिकाग्निं वा नास्तिक्येन तु यस्त्यजेत् ।
निष्कृतिस्तस्य पापस्य शास्त्रेषु न विधीयते' ॥ इति

कात्यायनः — 　‘पितृयज्ञात्ययेनैव वैश्वदेवात्ययेऽपि च ।
अनिष्ट्वा नवयज्ञेन नवान्नप्राशनेन च ॥
भोजने पतितान्नस्य चरुर्वैश्वानरो भवेत्’ ॥ इति

प्रजापतिः — 　‘दर्शञ्च पूर्णमासञ्च लुप्त्वा चोभयमेव च ।
एकस्मिन् कृच्छ्रपादेन द्वयोरर्धेन शोधनम् ॥

हविर्यज्ञेष्वशक्तस्य लुप्तमप्येकमादितः ।
प्राजापत्येन शुध्येत पाकसंस्थासु चैव हि ॥

सन्ध्योपासनहीने च नित्यस्नानं विलोप्य च ।
होमञ्च नैत्यकं शुध्येत् गायत्र्यष्टसहस्रतः ॥

वेदोदितानां नित्यानां कर्मणां समतिक्रमे ।
स्नातकव्रतलोपे च प्रायश्चित्तमभोजनम्’ ॥ इति

भारद्वाजेन लघुप्रायश्चित्तमुक्तम् । ‘आविंशतिरात्रादेकोपवासः आत्रिंशद्रात्रात् .... अत ऊर्ध्वमाषष्टिरात्रात् तिस्रो रात्रीरुपवसेत् । अत ऊर्ध्वं संवत्सरात् प्राजापत्यमत ऊर्ध्वं कालबहुत्वे दोषबहुत्वमिति ॥

किञ्च — 　‘अतीतकालं जुहुयादग्नौ विप्रायचान्ययम् (?) ।
नष्टेऽग्नौ विधिवद्धुत्वा कृत्वाऽऽधानं पुनर्द्विजः’ ॥

अग्नौ नष्टे त्रयः कृच्छ्राः कर्तव्या वत्सरं प्रति ।
स्वाध्यायजपशीलानां कृच्छ्रमेकं विधीयते’ ॥ इति

मनुः — 　‘अग्निहोत्र्यपविद्धाग्निः ब्राह्मणः कामकारतः ।
चान्द्रायणं चरेन्मासं वीरहत्यासमं हि तत्’ ॥ इति

श्रुतिरपि — ‘उतैकाहमुत द्व्यहं न जुह्वति । हुतमेवास्य भवति’ इति । अतो द्वादशाहं विच्छिन्नः पुनराधेयः इति ।

‘त्रिभिर्हुते स्वापमुपैति वह्निर्न तत्र होमं जुहुयाच्चतुर्थम् ।
‘बोधासबोधी’ति समिद्द्वयेन हुत्वान्तहोमो विधिवद्विधेयः’ ॥ इति

श्रुतिः — 'बोधासबोधीत्युपतिष्ठते बोधयत्येवैनं तस्मात्सुप्ताः प्रजाः प्रबुध्यन्ते' इति।

संग्रहे — 'उपावरोहणं कृत्वा प्राणायाममनन्तरम् ।
स्वगृह्योक्तविधानेन वह्नेरर्चनमारभेत्' ॥ इति

'अग्निश्च जातवेदाश्च । सहोजा अजिराप्रभुः । वैश्वानरो नर्यापाश्च । पंक्तिराधाश्च सप्तमः । विसर्पेवाष्टमोऽग्नीनां" इत्युक्तमार्गेणार्चनं कृत्वा परिषिच्य 'अग्नये — प्रजापतय' इति सायं — 'सूर्याय — प्रजापतय' इति प्रातः हुत्वा परिषेचनादि कुर्यात् ।

बृहस्पतिः — 'सायं प्रातस्तथा होमौ उभौ सायं समस्यतः ।
आपन्नो जुहुयात्तत्र समिदेकाऽथ वा द्वयम् (?) ॥

सायंहोमस्य मुख्यत्वात् तदीयं तन्त्रमिष्यते ।
चतस्र आहुतीः कुर्यात्तत्र द्वे सायमाहुती ॥

द्वौ प्रातराहुती चैव उपस्थानं तथा सकृत् ।
अथोपतिष्ठेदादित्यमुदयन्तं समाहितः ॥
मन्त्रैस्तु विविधैस्सौरैः ऋग्यजुस्सामसंभवैः' ॥ इति

अत्र परिषेचनानन्तरमुपस्थानात्पूर्वं शकलहोमं केचिद्वदन्ति ।

व्यासः — 'नित्यं देवकृताद्यैश्च पाद्याद्यैर्व्याहृतीरपि ।
शल्कैरौपासने होमः सर्वपापापत्तये' ॥ इति

शकलधारणानन्तरं भूतिधारणोपस्थानादि ।

**उदक्याऽशुच्यादिसंसर्गे च विधानं यज्ञप्रायश्चित्ते वक्ष्यामः ॥ ५**

स्पष्टम् ।

**वियोगे पक्षस्य 'उपावरोहे' ति समिधं यावत्कृष्णं तावत्तप्त्वा समारोप्य गच्छेत् ॥ ६ ॥**

**अहरहस्तां प्रज्वाल्य हुत्वा तथाऽन्यां समिधं निदधाति ॥ ७ ॥**

प्रवासादिनिमित्तेषु पक्षहोममाह—**वियोगे पक्षस्येत्यादिना।**

'सूतके मृतके चैव अशक्तौ श्राद्धभोजने।
प्रवासादिनिमित्तेषु हावयेन्नतु हापयेत्' ॥ इति वचनात्।

**गृह्यः**— 'प्रवत्स्यन् संग्रहश्चैव समारोप्याथवाऽथ तैः।
गच्छेत् सहाग्निभिः पत्न्यसन्निधौ होमदूषणात्' ॥ इति

**कात्यायनः**— 'असमक्षन्तु दम्पत्योः होतव्यं नर्त्विगादिना।
द्वयोरप्यसमक्षन्तु भवेद्धुतमनर्थकम् ॥

निक्षिप्याग्निं स्वदारेषु परिकल्प्य द्विजं तथा।
प्रवसेत्कार्यवान् विप्रो वृथैव न चिरं वसेत्' ॥ इति

**स्मृत्यन्तरे**— 'प्रवासे चाग्निहोत्री यः द्विपञ्चाहांश्च सप्त वा।
दातव्यो होमः एकाहे सायं प्रातः पृथक् पृथक्' ॥ इति

**मरीचिः**— 'शरीरापद्भवेद्यत्र द्विपञ्चाहाश्च सप्त वा।
दातव्यो होम एकाहे सायं प्रातः पृथक् पृथक् ॥

कालातीतानि सर्वत्र उत्तरेषु हुतेषु च।
कालातीतानि हुत्वैव उत्तराणि समापयेत्' ॥ इति

'पक्षहोमं करिष्ये' इति संकल्प्य 'अदितेऽनुमन्यस्व' इत्यादि परिषेचनान्ते यावत्पक्षान्तं तावद्गणयित्वा तावत्सायं प्रातराहुतीः पृथक् जुहुयात् इति केचित्। श्रौतन्यायेन सायमाहुतीस्सर्वा एकदैव हुत्वा प्रातराहुतीस्तथा हुत्वा परिषेचनादिकं कुर्यात्। एवं गृहस्थस्यौपासनहोमे पक्षहोमः कर्तव्य इति ज्ञापयितुं **वियोगे पक्षस्येत्युक्तम्।**

**मरीचिः**— 'पक्षहोमानथो हुत्वा मध्येऽकस्मान्निवर्तितः।
होमं पुनः प्रकुर्यात्तु न चासौ दोषभाग्भवेत्' ॥ इति

पक्षहोमं कृत्वा धार्यं कर्तुमशक्तः प्रवत्स्यन्वा उपावरोहेति समिधं यावत्कृष्णं तप्त्वा समारोप्य गच्छेत्। यद्वा समारोप्य गच्छन् तथा

उपावरोहेति मन्त्रेणाग्नौ क्षिप्त्वा होमं हुत्वा अन्यां समिधं पूर्ववदुपावरोहेति यावत्कृष्णं तप्त्वा कुर्यात्। उपावरोहसमारोपणयोरयमेव मन्त्र इति ज्ञापयितुं मन्त्रान्तरशंकाव्यावृत्त्यर्थञ्चैवमुक्तम्।

किञ्च। 'आत्मारूढोऽप्सु मज्जेद्वा वदेद्वा पतितादिभिः।
अग्निनाशं वदन्त्यन्ये नारदाद्यास्सुरर्षयः॥

इति वचनात् (आत्मारोपणापेक्षया समिदारोपणं वरमिति ज्ञायते) आत्मारूढेष्वग्निषु न खादेन्न पिबेन्नोपरि शय्यायां शयीत नाप्सु निमज्ज्यात् न मैथुनं व्रजेत्। कामं खादेत्कामं पिबेत् कामन्त्वेवोपरि शय्यायां शयीत। इति पालाशीमाश्वत्थीं खादिरीमौदुंबरीं वा तेषामन्यतमस्य प्रसिद्धं समारोपण' मिति बोधायनः। अवरोपणप्रकारः —

'अक्षतानिध्ममादाय सम्यग्वायुं निगृह्य च।
मन्त्रमुच्चारयन्नेव धमन्नग्नौ विनिक्षिपेत्॥

अचोदितेन पाकेन कृतेनोद्धरणेन च।
लौकिकाग्निस्स विज्ञेयः पुनराधानमर्हति'॥ इति

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ तृतीयप्रश्ने षष्ठः खण्डः



## अथ सप्तमः खण्डः

—*०*—

**पचने वाऽऽवसत्थ्ये चरुमभिघार्य वैश्वदेवम् ॥ १ ॥**

अथ वैश्वदेवं वक्तुमारभते **पचने** वाऽऽवसत्थ्य इति ।

'वैश्वदेवेन ये हीना आतिथ्येन बहिष्कृताः ।
सर्वे ते वृषला ज्ञेया प्राप्तवेदा अपि द्विजाः ॥

प्रवासं गच्छतो यस्य गृहे कर्ता न विद्यते ।
पञ्चानां महतामेषां स यज्ञैस्सह गच्छति' ॥

इति **यमस्मरणात्** 'पञ्चसूना गृहस्थस्य' इति स्मृतेः,—'यस्याग्निहोत्रमदर्शपूर्णमास' मिति श्रुतेश्च वैश्वदेवस्य आवश्यकत्वाभिप्रायेण **पचने** वाऽऽवसत्थ्य इत्युक्तम् ।

**व्यासः(कूर्मपुराणे)**-'शालाग्नौ लौकिके वापि जले भूम्यामथापि वा ।
वैश्वदेवस्तु कर्तव्यो देवयज्ञस्स वै स्मृतः' ॥ इति ।

**पचने**—छुल्ल्यां (चुल्ल्यां) । **आवसत्थ्ये**—औपासने । वाशब्दो जलादिपरः ।

**स्मृत्यन्तरे**— 'प्रातर्होमन्तु निर्वर्त्य समुद्धृत्य हुताशनम् ।
शेषं महानसे कृत्वा तत्र पाकं समाचरेत् ॥

तमग्निं पुनराहृत्य शालाग्नावेव निक्षिपेत् ।
ततोऽस्मिन् वैश्वदेवादि कर्म कुर्यादतन्द्रितः' ॥ इति

**शातातपः**— 'नैवेद्यार्थं पृथग्भाण्डे स्नात्वा पत्नी पचेत्तथा ।
वैश्वदेवार्थमन्यस्मिन् व्यञ्जनानि पृथक् पृथक् ॥

एकस्मिन् वाऽप्यशक्तौ चेत् विष्णवे पूर्वमर्पयेत् ।
वैश्वदेवं ततः शिष्टाद् व्यासस्य वचनं यथा ॥

एकपाकेन वसतां पितृदेवद्विजार्चनम् ।
एकं भवेद्विभक्तानां तथैव स्यात् गृहे गृहे ।
यस्मिन्नेव पचेदन्नं तस्मिन्नेव परे विदुः' ॥

इतीदं वचनमनग्निकविषयम् । 'पञ्चसूनादोषापनोदनद्वारा श्रीमन्नारायणप्रीत्यर्थं वैश्वदेवेन यक्ष्ये' इति संकल्प्य, 'विद्युदसि — सत्यमुपैमि' इत्यन्तसंकल्पज्ञापनार्थं वैश्वदेवमित्युक्तम् (१) ॥

'यथाह' इति मण्डलं प्रदक्षिणमुपलिप्य परिमृज्य परिषिच्य 'अग्नये स्वाहा — सोमाय स्वाहा' इत्युत्तरदक्षिणयोः मध्ये व्याहृतीः 'विश्वेभ्यो देवेभ्यः स्वाहा — धन्वन्तरये स्वाहा — कुह्वै स्वाहा — अनुमत्यै स्वाहा — प्रजापतये स्वाहा — द्यावापृथिवीभ्यां स्वाहा' व्याहृतीः । 'इमां मे अग्न' इति चरुं सेध्मं जुहुयात् ॥ २ ॥

'अग्निहोत्राय स्वाहा — वैश्वदेवयज्ञाय स्वाहा — ब्रह्मयज्ञाय स्वाहा — देवयज्ञाय स्वाहा — पितृयज्ञाय स्वधा नमस्स्वाहा — भूतयज्ञाय स्वाहा — मनुष्ययज्ञाय स्वाहा — पञ्चमहायज्ञाय स्वाहा' व्याहृतीः स्विष्टकृत् व्याहृतीः ॥ ३ ॥

'अथ गृहदेवताभ्यो यथादिशं बलिहरणम् ॥ ४ ॥

अथ होमानन्तरम् । गृहदेवताभ्यः गृहरक्षकेभ्यः ब्रह्मादिभ्यः । यथादिशं -- तत्तद्देवतादिशि बलिहरणम् । यथोक्तम् —

अमरर्षिमनुष्याणां बलं यस्मात् प्रवर्धते ।
तस्माद्बलिरिति ख्यातं सर्वत्रापि समाचरे' दिति ॥

ब्रह्मणे नमः — ब्रह्मपुरुषेभ्यो नमः — वास्तोष्पतये नमः इति गृहमध्ये ॥ ५ ॥

सर्वत्र प्रागन्तमुत्तरान्तं वा दद्यात्

**'इन्द्राय नमः – इन्द्रपुरुषेभ्यो नमः – यमाय नमः – यमपुरुषेभ्यो नमः – वरुणाय नमः – वरुणपुरुषेभ्यो नमः – सोमाय नमः – सोमपुरुषेभ्यो नमः – अग्नये नमः – निर्ऋतये नमः – वायवे नमः – ईशानाय नमः' इति ॥ ६ ॥**

इतीति – बलिं दत्वा

**सर्वं दक्षिणे पितृभ्यो ज्ञातिवर्गपत्न्यन्तेभ्यः ॥ ७ ॥**

सर्वमित्यादि। प्राचीनावीती दक्षिणे – गृहस्य दक्षिणभागे, पितृभ्यः – पितामहेभ्यः – प्रपितामहेभ्यः – इत्यादि । ज्ञातिवर्गपत्न्यन्तेभ्यः ।

**कृतोपवीती 'यावन्तोऽन्नार्थिनस्तावद्भ्यो निर्वपामि' इति निरुप्याकाशे विश्वेभ्यो देवेभ्यो नमः – दिवाचरेभ्यो नमः – नक्तञ्चरेभ्यो नमः – भूतेभ्यो नम इति ॥ ८ ॥**

दिवाचरेभ्य इति – 'दिवाचरेभ्यो भूतेभ्यो नमः' इति दिवा, 'नक्तञ्चरेभ्यो भूतेभ्यो नम' इति रात्रौ ॥

**आदिपर्वणि** — 'अशीतिस्त्रुटिभिर्होमान् त्रिमुहूर्तान् प्रचक्षते ।
विहितान् कामचाराय यक्षगन्धर्वरक्षसाम् ।
शेषमन्यन्मनुष्याणां कामचारमिति स्मृतम्' ॥

**उच्छीर्षके 'श्रियै' इति ॥ ९ ॥**

उच्छीर्षके शिरःप्रदेशे ।

**पादतः 'भद्रकाल्यै' इति ॥ १० ॥**

**प्रतिद्वारं पूर्वान्तमुत्तरान्तं वा भुवंगयोः 'मरुद्भ्यः' इति ॥ ११**

प्रतिद्वारं । यत्र यत्र द्वारम् । द्विः ।

**छुल्न्याः पक्षयोः 'अग्नय' इति ॥ १२ ॥**

छुल्न्या इति । महानसे द्विः । मन्त्रावृत्तिः ।

**उदधान्यां 'अद्भ्य' इति ॥ १३ ॥**

उदधान्यां प्रधानजलघटसमीपे ।

**पेषण्योरुभयोः 'दृषदे' इति ॥ १४ ॥**

द्विः । मन्त्रावृत्तिः ।

**उलूखलमुसलयोः 'वनस्पतिभ्य' इति ॥ १५ ॥**

द्विः ।

**शूर्पे 'ओषधीभ्यः' इति ॥ १६ ॥**

**वास्तुपृष्ठे 'शुनाञ्च पतितानाञ्च श्वपचां पापरोगिणाम् । वयसाञ्च कृमीणाञ्च भूमावन्नं वपाम्यहम्' इति बलिशेषं निर्वपति ॥ १७ ॥**

**वास्तुपृष्ठे** । गृहस्य पश्चिमभागे । ततः गृह्यपरिशिष्टोक्तश्वानबलिं दद्यात् । यथा —

श्वानौ वै श्यामशबलौ वैवस्वतकुलोद्भवौ ।
ताभ्यां बलिं प्रदास्यामि रक्षेथां पथि सर्वदा ॥ इति

ऐन्द्रवारुणवायव्ययाम्या वै नैर्ऋताश्च ये ।
ते काकाः प्रतिगृह्णन्तु भूमौ पिंडं मयाऽर्पितम् ॥

श्वभ्यश्च वायसेभ्यश्च दद्यादेभ्यो बलिं पृथक् ।
सर्वत्रालेपनं भूमेर्बलिश्च परिषेचनम्' ॥ इति

एवं कर्तुमशक्तस्य अग्नेः पुरतः **मण्डलं प्रदक्षिणमुपलिप्येत्युक्तम्** ।

**गृह्यः** — 'अग्नेः पश्चिम आलिप्य तत्तत् स्थानमनुस्मरन् ।
मध्यादि तद्बलीन् दद्यात् सर्वान् प्रागुदगन्तकान् ॥
परिषेकोऽन्त एकस्स्यात् तदशक्तावयं विधिः' ॥ इति

**किञ्च** — 'आयुष्कामो दिवारात्रं स्रुवाकारं बलिं क्षिपेत् ।
आयुरारोग्यकामो वा ध्वजाकारं बलिं हरेत् ॥

मृत्युरोगविनाशार्थी नराकारं बलिं क्षिपेत् ।
जनवश्यं कर्तुकामो वल्मीकाख्यं बलिं हरेत् ॥

आयुरारोग्यसौभाग्यपुत्रविद्यापशून् प्रति ।
कामश्च धनमोक्षादौ चक्राकारं बलिं हरेत्' ॥ इति

**गृह्यः** — 'चक्राकारमथाष्टाश्रं कुर्यादग्निसमीपतः ।
बदरीफलमात्रान्नमंगुल्यग्रैर्विनिक्षिपेत्' ॥ इति

केचिद्व्यजनाकारं केचिद्वल्मीकाकरञ्च वदन्ति । वायसबल्यन्ते —

'देवा मनुष्याः पशवो वयांसि सिद्धास्सयक्षोरगदैत्यसंघाः ।
प्रेताः पिशाचास्तरवस्समस्ता येचान्नमिच्छन्ति मया प्रदत्तम् ॥

पिपीलिकाः कीटपतंगकाद्या बुभुक्षिताः कर्मनिबन्धबद्धाः ।
प्रयान्तु ते तुष्टिमिदं मयाऽन्नं तेभ्यो विसृष्टं सुखिनो भवन्तु ॥

येषां न माता न पिता न बन्धुर्नैवास्ति सिद्धिर्न तथाऽन्नमस्ति ।
तत्तृप्तयेऽन्नं भुवि दत्तमेतत् तेषान्तु तृप्त्यै मुदिता भवन्तु ॥

भूतानि सर्वाणि तथाऽन्नमेतत् अहञ्च विष्णुर्न ततोऽन्यदस्ति ।
तस्मादहं भूतहिताय भूमौ अन्नं प्रयच्छामि भवाय तेषाम् ॥

चतुर्दिशो लोकगणो य एष तत्र स्थिता येऽखिलभूतसंघाः ।
तृप्त्यर्थमन्नं हि मया निसृष्टं तेषामिदं ते मुदिता भवन्तु' ॥

इत्युच्चार्य नरो दद्यादन्नं श्रद्धासमन्वितः ।
भुवि भूतोपकाराय गृही सर्वाश्रयो यतः ॥

इति व्यासस्मरणादेतां (?) दद्यात् । श्रीमद्वैखानससूत्रानुसारेणैष बलिप्रकारः **मनुना** प्रतिपादितः । यथा —

'वैश्वदेवस्य सिद्धस्य गृह्येऽग्नौ विधिपूर्वकम् ।
आभ्यः कुर्याद्देवताभ्यो ब्राह्मणो होममन्वहम् ॥

अग्नेस्सोमस्य चै वादौ द्वयोश्चैव समस्तयोः ।
विश्वेभ्यश्चैव देवेभ्यो धन्वन्तरय इत्यपि ॥

कुह्वै चैवानुमत्यै च प्रजापतय एव च ।
सहद्यावापृथिव्योश्च तथा स्विष्टकृतेऽन्ततः ॥

एवं सम्यग्घविर्हुत्वा सर्वदिक्षु प्रदक्षिणम् ।
इन्द्रान्तकाप्पतीन्दुभ्यस्सानुगेभ्यो बलिं हरेत् ॥

मरुभ्य इति तु द्वारि क्षिपेदप्स्वद्भ्य इत्यपि ।
वनस्पतिभ्य इत्येवं मुसलोलूखले हरेत् ॥

उच्छीर्षके श्रियै कुर्यात् भद्रकाल्यै च पादयोः ।
ब्रह्मवास्तोष्पतिभ्यान्तु वास्तुमध्ये बलिं क्षिपेत् ॥

विश्वेभ्यश्चैव देवेभ्यो बलिमाकाश उत्क्षिपेत् ।
दिवाचरेभ्यो भूतेभ्यो नक्तञ्चारिभ्य एव च ॥

पृष्ठवास्तुनि कुर्वीत बलिं सर्वात्मभूतये ।
पितृभ्यो बलिशेषन्तु सर्वं दक्षिणतो हरेत् ॥

शुनाञ्च पतितानाञ्च श्वपचां पापरोगिणाम् ।
वायसानां कृमीणाञ्च भूमौ तु निवपेत् गृही ॥

एवं यस्सर्वभूतानि गृहस्थो नित्यमर्चयेत् ।
स गच्छेत्परमं स्थानं तेजोमूर्तिः पथर्जुना' ॥ इति

एवं बलिं दत्वा

**पूर्ववत् प्रवाहणं कृत्वा 'भूतिस्स्मे' ति भस्माऽलिप्य, 'आपोहिष्ठा' इति प्रोक्ष्य 'यत्ते अग्ने तेजस्तेने' त्यग्निं 'उद्वय' मित्यादित्यञ्चोपतिष्ठेत ॥ १८ ॥**

**नित्यं सायं प्रातः पत्नी वा भूष्णुकामा बलिं हरेत् ॥ १९ ॥**

नित्यमित्यादि । पत्नी वेति । वाशब्दादृत्विगादयः ।

**आश्वलायनः** — 'पाणिग्रहणादि गृह्यमग्निं परिचरेत् । स्वयं पत्न्यपि वा पुत्रः कुमारी अन्तेवासी वा नित्यानुगृहीतस्स्यात्' । इति

**अत्रिः** — 'स्वयं पुत्रोऽध्वरी ऋत्विक् शिष्यश्वशुरमातुलाः ।
पत्नी श्रोत्रिययाज्याश्च दृष्टास्ते बलिकर्मणि' ॥ इति

**गृह्यः** — 'शाकं वा यदि वा पत्रं मूलं वाऽप्यथ वा फलम् ।
संकल्पयेद्यदाहारः तेनैव जुहुयाद्धविः ।
यदन्नः पुरुषो भवति तदन्नास्तस्य देवताः' ॥ इति

**बोधायनः** — 'न चेदुत्पद्यते चान्नमद्भिरेनान् समाचरेत्' ॥ इति

**स्मृत्यन्तरे** — 'पक्वाभावे प्रवासे वा तण्डुलानोषधीस्तु वा ।
पयो दधि घृतं वापि कन्दमूलफलानि वा ॥
योजयेद्देवयज्ञादौ बलिं वाऽपस्सु वा जपेत्' ॥ इति

**कात्यायनः** — 'पयोदधिघृतैः कुर्याद्वैश्वदेवं स्रुवेण तु ।
हस्तेनान्नादिभिः कुर्यादद्भिरञ्जलिना जले' ॥ इति

**भूष्णुकामा** — वर्धिष्णुकामा । तूष्णीम् ।

**भारद्वाजः** — 'स्त्रियाश्चाप्यनुपेतस्य बलिमन्त्रो न विद्यते ।

**अन्यत्र** — अपि वा स्त्रीजुहुयान्मन्त्रवर्जितम्' ॥ इति

रात्रावमन्त्रकमित्युक्तत्वात् पत्न्याश्चामन्त्रकमेव बलिहरणम् ।

'अविभक्तेषु संसृष्टेष्वेकेनापि कृतन्तु वा ।
पयोमूलफलैर्वापि पञ्चयज्ञान् समाचरेत्' ॥ इति

अत्र वैश्वदेवकालस्तु सायंप्रातश्चेत्युक्तम् ।

**स्मृतावपि** — 'सायं प्रातश्च कुर्वीत वैश्वदेवं यथाविधि ।
महतः पञ्चयज्ञांस्तु दिवैवेत्याह गौतमः' ॥ इति

अत्रानग्निमतो नित्यौपासनवैश्वदेवप्रकारः उच्यते ।

संग्रहे — ‘उद्धृत्य वह्निं प्रणवेन पूर्वमन्वग्निमन्त्रेण हरेत् पुरस्तात् ।
निधाय ‘पृष्टो दिवि’ मन्त्रमुक्त्वा ततश्च होमश्शकलैश्चतुर्भिः ॥

रेखादयो नैव च तत्सुवांश विश्वानिनोद्यान इमे च मन्त्राः ।
आरोपणं नाप्यवरोपणं स्यादुत्पत्तिरेवं विधुरानलस्य’ ॥

‘नित्यानि नैमित्तिककाम्यकर्माण्यत्रैव कुर्याद्विधिवत्सदैव’ ॥ इति

अत्र सायंप्रातराहुती

वैश्वदेवप्रकारः —

गोभिलः — ‘कामं गृह्येऽग्नौ पत्नी जुहुयात्सायं प्रातर्होमा’ विति ।

मनुः — ‘अग्निहोत्रस्य शुश्रूषा सान्ध्योपासनमेव च ।
कामं पत्न्या प्रतिदिनं बलिकर्म च नित्यकम्’ ॥ इति

गृह्यः — ‘हुत्वा व्याहृतिभिश्चाग्निं हुत्वा च शकलादिभिः ।
भूतेभ्यश्च द्विजातिभ्यो दद्यादन्नमनग्निमान्’ ॥ इति

वसिष्ठः — ‘अनग्निकस्तु यो विप्रः सोऽन्नं व्याहृतिभिर्हुनेत् ।
हुत्वा शकलहोमञ्च शिष्टं काकबलिं हरेत्’ ॥ इति

**वैश्वदेवकाले प्राप्तमतिथिं शक्त्या तर्पयेत् ॥ २० ॥**

**वैश्वदेवकाल** इत्यादि ।

व्यासः — ‘आचम्य च ततः कुर्यात्’ प्राज्ञो द्वारावलोकनम् ।
मुहूर्तस्याष्टमं भागमुदीक्ष्यो ह्यतिथिस्स्वयम्’ ॥ इति

‘दूराध्वोपगतं श्रान्तं वैश्वदेव उपस्थितम् ।
अतिथिं तं विजानीयात् नातिथिः पूर्वमागतः’ ॥ इति

यमः — ‘तिथिपर्वोत्सवास्सर्वे त्यक्ता येन महात्मना ।
सोऽतिथिस्सर्वभूतानां शेषानभ्यागतान् विदुः’ ॥ इति

पराशरः — इष्टो वा यदि वा द्वेष्यो मूर्खः पण्डित एव वा ।
संप्राप्तो वैश्वदेवान्ते सोऽतिथिस्स्वर्गसंक्रमः ॥

अन्नपानादिदानेन स्वशक्त्या पूजयेत्पुमान् ।
शयनप्रस्तरमहीप्रदानैर्मृदुभाषणैः ॥
पूजयेदतिथिं भक्त्या पूर्वाभावे परेण च' ॥ इति

मनुः — 'वैश्वदेवे तु निर्वृत्ते यद्यन्योऽतिथिराव्रजेत् ।
तस्याप्यन्नं यथाशक्ति प्रदद्यान्नबलिं हरेत्' ॥ इति

बोधायनः — 'अभ्यागतान् यथाशक्ति भोजयेत् । बहून् न शक्नुयादेकस्यैव गुणवतो दद्यात् यो वा प्रथममुपागतस्या' दिति (?) ।

मनुः — 'एकरात्रिन्तु निवसन् सोऽतिथिर्ब्राह्मणः स्मृतः ।
अनित्यं हि स्थितो यस्मात् तस्मादतिथिरुच्यते ॥

नैकग्रामीणमतिथिं विप्रं सांगतिकं तथा ।
उपस्थितं गृहे विद्यात् भार्या यत्राग्नयोऽपि वा' ॥ इति

'न भोजनार्थं स्वे विप्रःकुलगोत्रे निवेदयेत् ।
भोजनार्थं हि ते शंसन् वान्ताशीत्युच्यते बुधैः ॥

न ब्राह्मणस्य त्वतिथिर्गृहे राजन्य उच्यते ।
वैश्यशूद्रौ सखा चैव ज्ञातयो गुरुरेव च ॥

यदि त्वतिथिधर्मेण क्षत्रियो गृहमाव्रजेत् ।
भुक्तवत्सु च विप्रेषु कामं तमपि भोजयेत् ॥

वैश्यशूद्रावपि प्राप्तौ कुटुंबेऽतिथिधर्मिणौ ।
भोजयेत्सह भृत्यैस्तावानृशंस्यं प्रयोजयन् ॥

इतरानपि सख्यादीन् संप्रीत्या गृहमागतान् ।
संस्कृत्यान्नं यथाशक्ति भोजयेत्सह भार्यया' ॥ इति

व्यासः — 'अकृते वैश्वदेवे तु भिक्षुके गृहमागते ।
उद्धृत्य वैश्वदेवार्थं भिक्षां दत्वा विसर्जयेत् ॥

(शूद्रमप्यागतं कर्मकार इत्येव भोजयेत् ।)
यतिश्च ब्रह्मचारी च विद्यार्थी गुणपाठकः ॥
अध्वगः क्षीणवृत्तिश्च षडेते भिक्षुकास्स्मृताः' ॥ इति

पराशरः — दद्याच्च भिक्षात्रितयं परिव्राड् ब्रह्मचारिणे ।
इच्छया च ततो दद्याद्विभवे सत्यवारितः' (?) ॥ इति

व्याघ्रपादः — 'ग्रासमात्रं भवेद्भिक्षा चतुर्ग्रासन्तु पुष्कलम् ।
पुष्कलस्य च चत्वारि हन्तकारः प्रकीर्तितः ॥

यवगोधूमशालीनां द्वे शते ग्रासमाहृते ।
ग्रासप्रमाणं भिक्षा स्यादग्रं ग्रासचतुष्टयम्' ॥ इति

पराशरः — 'यतिहस्ते जलं दद्यात् भैक्षं दद्यात्पुनर्जलम् ।
तद्भैक्षं मेरुणा तुल्यं तज्जलं सागरोपमम्' ॥ इति

पराशरः — 'वैश्वदेवकृतं दोषं शक्तो भिक्षुर्व्यपोहति ।
न हि भिक्षुकृतान् दोषान् वैश्वदेवो व्यपोहति' ॥ इति

विष्णुपुराणे — 'अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्तते ।
तस्मात्सुकृतमादाय दुष्कृतन्तु प्रयच्छति' ॥ इति

तत्रैव — 'तस्मादष्टगुणं पापं सूर्योढातिथिसंभवम्' ॥ इति

अस्तमयात्परमागतः सूर्योढः ।

व्यासः — 'कुर्यादहरहः श्राद्धमन्नाद्येनोदकेन वा ।
पितॄनुद्दिश्य विप्रांस्तु भोजयेद्विप्रमेव वा' ॥ इति

प्रचेताः — 'नामन्त्रणं न होमश्च नाह्वानं न विसर्जनम् ।
न पिंडदानं न सुरान् नित्यं कुर्याद्विजोत्तमः (?) ॥

न ब्रह्मचर्यादिविधिः गन्धार्घ्यादिभिरर्चयेत् ।
सर्वान् पितृगणान् सम्यक् सहैवोद्दिश्य भोजयेत् ॥
दत्वा तु दक्षिणां भक्त्या नमस्कारैर्विसर्जयेत्' (?) ॥ इति

एवं वैश्वदेवकाले प्राप्तमतिथिं शक्त्या तर्पयेत् ।

**वैश्वानरो ह्येष भवति ॥ २१ ॥**

**वैश्वानर इति** । वैश्वानरमहिमा पुरोहितमुद्दिश्य **ऋग्ब्राह्मणे** श्रूयते । 'अग्निर्वा एष वैश्वानरः पञ्चमेनिर्यत्पुरोहितः । तस्य वाच्येका त्वच्येका मेनिर्भवति । पादयोरेका हृदय एका उपस्थ एका ताभिर्ज्वलन्तीभिर्दीव्यमानाभिरुपोदेति । राजान स यथाऽऽह क भगवोऽवात्सीः तृणान्यस्मा आहरतेति तेनास्य तां शमयति यास्य वाचि मेनिर्भवति अथ य अस्मा उदकमादयन्ति पाद्यं तेनास्य तां शमयति । यस्य पादयोर्मेनिर्भवति । अथ यदेनमलंकुर्वन्ति तेनास्य तां शमयति यास्सत्वं मेनिर्भवति अथ यदेनं तर्पयति तेनास्य तां शमयन्ति यास्य हृदये मेनिर्भवति अथ यदस्या रुद्धो वेश्मसु वसति तेनास्यतां शमयति यस्य हृदये मेनिर्भवति अथ यदस्य नारुद्धो वेश्मसु वसति तेनास्य तां शमयति । यास्योपस्थे मेनिर्भवति त एनं शान्ततनुरभिहुतोऽभिप्रेतस्स्वर्गं लोकमभिभवन्ति । क्षत्रं बलञ्च राष्ट्रञ्च विश(ति)श्च । स एवैनमशान्ततनुरनभिहुतोऽनभिप्रेतस्स्वर्गान् लोकानुदत् क्षत्राच्च बलाच्च राष्ट्राच्च विशश्च' इति ।

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने तात्पर्यचिन्तामणौ तृतीयप्रश्ने सप्तमः खण्डः ।



## अथ अष्टमः खण्डः

**तदेवं त्रिरात्रं हविष्याशिनौ ब्रह्मचारिणौ धौतवस्त्रव्रतचारिणौ स्याताम् ॥ १ ॥**

**तदेव**मित्यादि । **तत्** – तस्मात् – सोमगन्धर्वाग्नीनां प्रीतिद्वारा 'सोमो ददादि'ति मन्त्रोक्तप्रकारेण स्वपत्नीत्वसिद्ध्यर्थत्वाद्धेतोः । **एवं** – उक्तप्रकारेण । **हविष्याशिनौ** अक्षारलवणाशिनौ **ब्रह्मचारिणौ** स्रक्चन्दनतांबूलादिरहितौ । यद्वा ।

'दर्शनं स्पर्शनं केलिः प्रेक्षणं गुह्यभाषणम् ।
संकल्पोऽध्यवसायश्च क्रियानिर्वृतिरेव च ॥
एतन्मैथुनमष्टांगं प्रवदन्ति मनीषिणः ॥

इति साभिलाषत्वेन दर्शनाद्यष्टांगमैथुनरहितौ । **धौतवस्त्रव्रतचारिणौ स्याता**मिति । धौतवस्त्रशब्देन वस्त्रान्तरधारणशंकापरिहारः सूच्यते । व्रताचरणशब्देन 'तद्व्रतं चर्म संत्यजे'दिति परिशिष्टे उक्तत्वात् आसनशयनादिकं चर्मणि कर्तव्यमिति ज्ञाप्यते ।

**बोधायनः** — 'श्रोत्रियं जनयेय'मित्युपस्थानान्तं कृत्वा त्रिरात्रमक्षारलवणाशिनावधश्शायिनावासाते' इति (१) ।

**अथापरस्यां रात्रौ चतुर्थ्यामलंकृत्याग्निमुपसमाधाय नव प्रायश्चित्तानि जुहुयात् ॥ २ ॥**

**अथे**त्यादि – ततो विवाहदिनादारभ्य **चतुर्थे**ऽहन्य**परस्यां रात्रौ** आभरणपुष्पगन्धाद्यैः दंपती **अलंकृत्य** अग्नेरपरस्यामुपविश्य **अग्निमुपसमाधाय** – वैवाहिकाग्निमाधाय आघारं हुत्वा **नवप्रायश्चित्तानि जुहुयात्** ॥

**'अग्ने वायो आदित्य, आदित्य वायो अग्ने, अग्ने वायो आदित्य' व्याहृतीः ॥ ३ ॥**

अग्ने वायवित्यादि । अत्र प्राणशरीरेन्द्रियाणामधिपा अग्न्यादयः । श्रुतिः । 'प्राणानामहमित्यग्निः । तनु वा अहमिति वायुः । चक्षुषोऽहमित्यादित्यः' इति ॥ अग्न्यादिस्पृष्टाया मनुष्यस्पर्शने अधिकाराभावात् नव प्रायश्चित्तानि । 'नव वै पुरुषे प्राणा' इति श्रुतेः । 'त्रिवृद्वै प्राण' इति श्रुतेः त्रिवारमुक्तम् ।

**'भूर्भगमिति चतुर्भिर्वधूमूर्ध्न्याज्येन जुहुयात् ॥ ४ ॥**

**भूर्भगमितीत्यादि** । वधूमूर्ध्नि हिरण्यं निधाय तस्मिन् जुहुयात् । श्रुतिः—'यदध्वर्युरनग्नावाहुतिं जुहुयात् अन्धोऽध्वर्युः स्याद्रक्षाँसि यज्ञँ हन्युः, हिरण्यमुपास्य जुहोति, अग्निवत्येव जुहोति, नान्धोध्यर्युर्भवति, न यज्ञं रक्षाँसि घ्नन्ती' ति । अयमेव संस्कारहोमः ।

बोधायनः—'अथाज्यशेषेण हिरण्यमन्तर्धाय मूर्ध्नि संस्कारहोमं जुहुया' दिति ।

किञ्च — 'चतुर्थीहोममन्त्रेण मांसमेदोऽस्थिभिस्सह ।
एकत्वं संगता भर्त्रा तस्मात्तद्गोत्रभाक् भवेत्' ॥ इति

**अग्निं प्रदक्षिणं कृत्वा प्राच्यामुदीच्यां वा तामुपवेश्य 'अभीष्टा पञ्चशाखेन' इति योनिमभिमृश्य 'सुप्रजास्त्वाये' त्यभिगच्छेत् । 'सन्नाम मन' इत्यालिंगनं 'मधुहेन्मध्विद' मिति मैथुनं कुर्वीत ॥ ५**

**अग्निं प्रदक्षिणं कृत्वेत्यादि** । अन्तहोमान्ते । उपवेश्य चर्मणि कटे वा । विशिष्यानुक्तत्वात् ।

गृह्यः— 'शेषहोमे तु होमान्ते आसीनौ तत्र चर्मणि ।
विसृजामि व्रतश्चेति तद्व्रतं चर्म संत्यजेत्' ॥

इति चर्मत्यागं कृत्वा

गृह्यः— 'भुक्त्वा सबान्धवश्चाथ वितानाद्यैरलंकृते ।
गृहे सदीपे प्रथमं कुर्यात्संगमनं स्त्रियाः ॥
कन्यां बाल्येऽपि कर्तव्यं तत्रापि क्रियते यदि' (?) ॥ इति

जैमिनिः— 'अर्धरात्रे संवेशन' मिति – संवेशनं – मैथुनम् ।

**'सुप्रजास्त्वाये' त्युपगमनं 'सन्नाम मन' इत्यालिंगनं 'इमामनुव्रते' ति वधूमुखेक्षणमित्येके ॥ ६ ॥**

'वृद्धां वन्ध्यां सुवृत्ताञ्च मृतापत्याञ्च पुष्पिणीम् ।
कन्याञ्च बहुपुत्राञ्च वर्जयेन्मुच्यते भयात्' ॥

इति कन्यायां (मैथुनस्य) अशक्यत्वादनुचितत्वादक्षतयोनित्वमेव भार्यात्वे हेतुरित्यभिप्रायेण च मन्त्रजपरूपेण संगमनं पक्षान्तरेणोपपादयति – **सुप्रजास्त्वायेत्यादि** । अयमेव मुख्यार्थः ।

गृह्यः— 'वधूगृहे चतुर्थी चेत् परेद्युः स्वगृहं पुनः ।
प्रविश्य पूर्ववत् कृत्वा पुण्याहं भोजयेद्द्विजान् ॥
सा च नित्यं शुचिश्चाग्निभर्तृशुश्रूषणं चरेत्' ॥ इति

स्त्रीधर्मान् प्रस्तुत्य मनुः ।

'नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषणम् ।
पतिं शुश्रूषते येन तेन स्वर्गे महीयते' ॥ इति

व्यासः— 'कुरूपो वा कुवृत्तो वा दुस्स्वभावोऽथवा पतिः ।
रोगान्वितोऽपि वृद्धो वा मूको वा बधिरोऽपि वा ॥

कातरः कितवो वापि ललनालंपटोऽपि वा ।
पतिस्तु दैववत्पूज्यस्सदा वाक्कायकर्मभिः ॥

क्रीडां शरीरसंस्कारं समाजोत्सवदर्शनम् ।
हास्यं परगृहे यानं त्यजेत्प्रोषितभर्तृका' ॥ इति

मनुः— 'पितृमातृसुतभ्रातृश्वश्रूश्वशुरमातुलैः ।
हीना न स्याद्विना भर्त्रा गर्भिणी या तथा भवेत्' ॥ इति

व्यासः — 'द्वारोपवेशनं चैव गवाक्षावेक्षणं तथा ।
असत्प्रलापं हास्यञ्च दूषणं कुलयोषिताम्' ॥

'भुंक्ते भुक्ते तथा पत्यौ दुःखिते दुःखिता च या ।
मुदिते मुदितऽत्यर्थं प्रोषिते मलिनांबरा ॥

सुप्ते शेते तु या पश्चात् पूर्वमेव प्रबुद्ध्यते ।
नान्यं कामयते चित्ते सा विज्ञेया पतिव्रता ॥

भक्तिं श्वशुरयोः कुर्यात् पत्युश्चापि विशेषतः ।
क्षेत्राद्वनाद्वा ग्रामाद्वा गृहं भर्तारमागतम् ॥

प्रत्युत्थायाभिवन्देच्च स्वागतेनोदकेन च ।
गृहव्ययाय द्रव्यं स दिशेत्पत्न्याः करे पतिः ॥

निर्वृत्तगृहकार्या सा किञ्चित् बुद्ध्याऽवशेषयेत् ।
भर्तुराज्ञां विना नैव स्वबन्धुभ्यो दिशेद्धनम् ॥

तैलाभ्यंगं तथा स्नानं शिरोद्वर्तनतः क्रियाम् ।
मार्जनञ्चैव दन्तानामलकानाञ्च कर्तनम् ॥

भोजनं वमनं निद्रां परिधानञ्च वाससाम् ।
प्रारंभं मण्डनानाञ्च न कुर्यात्पश्यति प्रिये ॥

नानुत्तरीया निर्गच्छेत् नानुत्थानं जरान्विता ।
न स्तनौ विवृतौ कुर्यात् न नाभिं दर्शयेत् क्वचित्' ॥ इति

गौतमः — 'आगुल्फात् वासः परिधत्ते — न स्तनौ विवृतौ कुर्यात् न नाभिम्' इति ।

अन्यत्र — 'न कुर्यात्पुरुषैरन्यैः कदाचिदपि भाषणम् ।
विना वणिक्प्रव्रजितवैद्यवृद्धादिभिस्सती ॥
गर्भपातञ्च या कुर्यात् न तां संभाषयेत् क्वचित्' ॥ इति

**अथाग्निद्वयसंसर्गप्रयोगः**—'ततः शुभे दिने द्वितीयमौपासनं प्रज्वाल्य स्रुक्स्रुवौ प्रक्षाल्य निष्टप्य निधायाऽज्यं विलाप्योद्दीप्य संस्कृत्य तया वध्वा परा (2)

यजमानः स्रुवेण स्रुचि चतुर्गृहीतं गृहीत्वा 'नमस्त ऋषे गद। अव्यधायै त्वा स्वधायै त्वा। मान इन्द्राभितस्त्वदृष्वारिष्टासः। एवा ब्रह्मन् न तवेदस्तु स्वा' हेति जुहोति। व्याहृतीश्च। अथाऽग्नि 'मुपावरो' हेति समिधि समारोपयति। अतः पूर्वाग्निं निधाय प्रज्वाल्य 'आजुह्वानस्सुप्रतीकः पुरस्तादग्ने स्वां योनिमासीद साध्या। अस्मिन् सधस्थे अध्युत्तरस्मिन् विश्वेदेवा यजमानश्च सीदत।' 'उद्बुद्ध्यस्वाग्ने प्रति जागृह्येनमिष्टापूर्ते सँसृजेथामयञ्च। पुनः कृण्वँस्त्वा पितरं युवानमन्वाताँसीत्त्वयि तन्तुमेतम्'। 'उपावरोहे' ति समारोपितं द्वितीयाग्नि-समिधं पूर्वाग्नावाधाय। 'अग्नावाग्निश्चरति प्रविष्ट ऋषीणां पुत्रो अधिराज एषः। स्वाहाकृत्य ब्रह्मणा ते जुहोमि मा देवानां मिथुयाकर्भागधेय' मिति संयुज्य उपस्थाय अग्निं परिस्तीर्य परिषिच्य आज्यं विलाप्य स्रुवेण स्रुचि चतु-र्गृहीतं गृहीत्वा तयोरन्वारब्धयोर्जुहोति। 'यो ब्रह्माणं ब्रह्मण उज्जहार प्राणे-श्वरः कृत्तिवासाः पिनाकी। ईशानो देवस्स न आयुर्दधातु तस्मै जुहोमि हविषा घृतेन स्वाहा' 'विभ्राजमानस्सरिरस्य मध्याद्रोचमानो घर्मरुचिर्य आगात्। स मृत्युपाशादपनुद्य घोरानिहायुषेणो घृतमत्तु देवस्स्वाहा'॥ 'ब्रह्म ज्योतिर्ब्रह्मपत्नीषु गर्भं यमादधात्पुरुरूपं जयन्तम्। सुवर्णरंभागृहमर्कमर्च्यं तमायुषे वर्धयामो घृतेन स्वाहा'॥ 'श्रियं लक्ष्मीमौपलामंबिकां गां षष्ठीं जयामिन्द्रसेनेत्युदाहुः। तां विद्यां ब्रह्मयोनिं सरूपामिहायुषे तर्पयामो घृतेन स्वाहा'॥ 'दाक्षायण्यस्सर्वयोन्यस्सयोन्यस्सहस्रशो विश्वरूपा विरूपाः। ससू-नवस्सपतस्सयूथ्या इहायुषेणो घृतमिदं जुषन्तां स्वाहा'॥ दिव्या गणाः बहुरूपाः पुराणाः आयुश्छिदो नः प्रमथ्नन्तु वीराः। तेभ्यो जुहोमि बहुधा घृतेन मानः प्रजाँ रीरिषो मोत वीरांत्स्वाहा'॥ 'एकः पुरस्ताद्य इदं बभूव यतो बभूव भुवनस्य गोपाः। यमप्येति भुवनँ सांपराये स नो हविर्घृतमिहायुषेऽत्तु देव-स्स्वाहा'॥ 'वसून् रुद्रानादित्यान्मरुतोऽथ साध्यान् ऋभून्यक्षान् गन्धर्वाँश्च पितृँश्च विश्वान्। भृगून् सर्पाश्चांगिरसोऽथ सर्वान् घृतँ हुत्वा स्वायुष्यामहयाम शश्वत्स्वाहा' इति॥ 'यन्म आत्मनः – पुनरग्नि' रिति द्वे चतुर्हुत्वा स्थंडिलमुपकल्प्य 'ये तोन्विन्द्र' मित्यादि पक्वचरुहोमन्तं जुहोति। अथ वैष्णवान्ते चरुं गृहीत्वा

'समित ँसंकल्पेथां संप्रियौ रोचिष्णू सुमनस्यमानौ इषमूर्जमभिसंवसानौ । सं वा मना ँसि संव्रताम् । समुचित्तान्याकरम्' इति पुरोनुवाक्यामनूच्य 'अग्ने पुरीष्याधिपा भवा त्वं न इषमूर्ज ँ यजमानाय धेहि स्वाहा' ॥ इति याज्यया जुहोति । 'पुरीष्यस्त्वमग्ने रयिमान् पुष्टिमा ँअसि ॥ शिवाः कृत्वा दिशस्सर्वास्स्वां योनिमिहासदस्स्वाहा । 'भवतं नस्समनसौ समोकसा वरेपसौ मा-यज्ञ ँहि ँसिष्ट मा यज्ञपतिं जातवेदसौ । शिवौ भवतमद्य नः स्वाहा' ॥ मातेव पुत्रं पृथिवी पुरीष्यमग्नि ँस्वे योनावाभारुखा तां । विश्वैर्देवैर्ऋतुभिस्संविदानः प्रजापतिर्विश्वकर्मा विमुञ्चतु स्वाहा ॥ यदस्य पारेरजसः शुक्रं ज्योतिरजायत । तन्नः पर्षदतिद्विषोऽग्ने वैश्वानर स्वाहा' ॥ 'नमस्सुते निर्ऋते विश्वरूपेऽयस्मयं विचृता बन्धमेतम् । यमेन त्वं यम्या संविदानोत्तमं नाकमधिरोहयेम स्वाहा' ॥ 'यत्ते देवी निर्ऋतिराबबन्ध दामग्रीवास्वविचर्त्यम् इदं ते । तद्विष्याम्यायुषो न मध्यादथा जीवः पितुमद्धि प्रमुक्तः स्वाहा' (?) ॥ 'यस्यास्ते अस्याः क्रूर आसञ्जुहोम्येषां बन्धानामवसर्जनाय । भूमिरिति त्वा जना विदुर्निर्ऋतिरिति त्वाऽहं परिवेद विश्वतस्स्वाहा' ॥ 'असुन्वन्तमयजमानमिच्छ स्तेनस्येत्यां तस्करस्या-न्वेषि । अन्यदस्मदिच्छ सात इत्या नमो देवि निर्ऋते तुभ्यमस्तु स्वाहा' ॥ 'देवीमहं निर्ऋतिं वन्दमानः पितेव पुत्रं दयसे वचोभिः । विश्वस्य या जायमानस्य वेदशिरश्शिरः प्रतिसूरी विचष्टे स्वाहा' ॥ 'निवेशनस्संगमनो वसूनां विश्वा रूपाऽभिचष्टे शचीभिः । देव इव सविता सत्यधर्मेन्द्रो न तस्थौ समरे पथीनां स्वाहा" ॥ 'संवरत्रा दधातन निराहावान् कृणोतन । सिञ्चामहा अवटमुद्रिणं वयं विश्वाहादस्तमक्षितं स्वाहा' ॥ 'निष्कृताहावमवटं सुवरत्रं सुषेचनम् । उद्रिणं सिञ्चे अक्षितं स्वाहा' ॥ 'सीरा युञ्जन्ति कवयो युगा वितन्वते पृथक् । धीरा देवेषु सुम्नया स्वाहा ॥' 'युनक्त सीरा वियुगा तनोत कृते योनौ वपतेह बीजम् । गिरा च श्रुष्टिस्सभरा असन्नो नेदीय इत्सृण्या पक्कमायत्स्वाहा' ॥ 'लांगलं पवीरवं सुसेवं सुमति तत्सरु । उदित्कृषति गामविं प्रपर्यञ्च पीवरीं प्रद्यावद्रथवाहनं स्वाहा' ॥ 'शुनं नः फाला वितुदन्तु भूमिं शुनं कीनाशा अभियन्तु वाहान् । शुनं पर्जन्यो मधुना पयोभिः शुनाशीरा शुनमस्मासु धत्त

स्वाहा ' ॥ 'कामं कामदुघे धुक्ष्व मित्राय वरुणाय च । इन्द्रायाग्नये पूर्ण ओषधीभ्यः प्रजाभ्यः स्वाहा ' ॥ घृतेन पीता मधुना समक्ता विश्वैर्देवैरनुमता मरुद्भिः । ऊर्जस्वती पयसा पिन्वमानासात्सीते पयसाभ्याववृत्स्वस्वाहा ' ॥ अथ स्विष्टकृत्प्रभृत्यन्तहोमः । चरुशेषमादाय अग्नेः पुरतः '**ब्रह्म** जज्ञानं – 'पिता विराजामृषभ ' इति द्वाभ्यां दर्भेषु दद्यात् । एवं कृते संयुक्तं स्यात् । एवमेव बहुभार्यस्यापि ॥

**अथ संसृष्टाग्नेर्विभागप्रयोगः** – ' अग्निं प्रज्वाल्य 'उपावरोहे ' ति समिधौ द्वौ युगपदेव प्रतापयित्वा पश्चात् 'अच्छागिर ' इति विभज्याग्निं द्विधा प्रतिष्ठाप्य तयोरग्न्योः समिधौ 'उपावरोहे ' ति निधाय ततः प्रायश्चित्तं जुहुयात् । 'अयाश्चाग्नेः ' व्याहृतीश्च । एवं विभज्य तत्तदंशेन स्मार्तो होमो विधेय इति केचित् । एवं स्मार्ताग्नेः । श्रौताग्नेस्तु कदाचिदपि विभागो न सिद्ध्यति । संसृष्टाग्निविभागपक्षे चतुर्गृहीतं गृहीत्वा 'इमं स्तनमूर्जस्वन्तं धयापा ' मित्यग्निमेकं हुत्वाऽनलं विभजेत् (पु) नस्संगो न भवति ' इति **बोधायनः** ।

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने तात्पर्यचिन्तामणौ तृतीयप्रश्ने अष्टमः खण्डः ।



# अथ नवमः खण्डः

---

**अथ त्रिरात्रमृतौ मलद्वासाः स्नानाञ्जनादीनि वर्जयेत् ॥ १ ॥**

**अथ** पाणिग्रहणशेषहोमानन्तरं। **त्रिरात्रं ऋतौ** कालजऋतौ। आर्त
चतुर्विधं रागजं रोगजं द्रव्यजं कालजञ्चेति। अत्र –

बृहस्पतिः — 'रागजं रोगजञ्चैव द्रव्यजं कालजं तथा।
यद्रागरोगद्रव्यार्थं तद्रक्तं प्राह भार्गवः ॥

अर्वाक् प्रसूतेरुत्पन्नं मेदो वन्ध्यांगनासु यत्।
तद्रागजमिति प्रोक्तं वक्षोदेशसमुद्भवम् ॥

पित्तादिदोषवैषम्यात् असकृत्संप्रवर्तते।
रोगजं तत्समुद्दिष्टमथ द्रव्यजमुच्यते ॥

द्रव्यजं धातुवैषम्यहेतु द्रव्योपरागजम्।
आरभ्य चार्तवादिनात् एकविंशतिवासरे ॥

मासि चोर्ध्वं रजो यत्स्यात् तत्कालजमुदाहृतम्।
रजस्वला तु या नारी पुनरेव रजस्वला ॥
एकविंशद्दिनादूर्ध्वं त्रिरात्रमशुचिर्भवेत्' ॥ इति

गृह्यपरिशिष्टे — 'स्नानाहाद्द्वादशाहात्प्राक् शौचाद्रजसि शुद्ध्यति।
स्नानादष्टदशाच्छुद्धिरेकाहाद्विंशतेः परम् ॥

तत्रापि बहुशः स्रावे तदूर्ध्वञ्च त्रिरात्रतः।
आरूढयौवनायास्तु तदर्वाक् च त्रिरात्रकम्' ॥ इति

ऋतुकाललक्षणमाह **बृहस्पतिः** —

अंगनाजन्मनक्षत्रात् पिंडास्तारागते विधौ।
भौमेऽवास्मिन् समायोगे मासिमासि तु धारणम् ॥

पिङ्गाः — ऋक्षाः ।

देवकीर्तिः — 'अनुपचयराशिसंस्थे कुमुदपतौ भौमेन संदृष्टे ।
स्वतनुस्तु तपश्छिद्राव्ययसंज्ञान्यपचयानि' ॥ इति

वसिष्ठः — 'स्त्रीजन्मराशेश्चन्द्रस्तु धनधर्मगतेषु च ।
व्ययाष्टकामतोयेषु गतः पित्रर्क्षगो भवेत् ।
तदाऽऽरयुक्ते दृष्टे वा आर्तवं स्त्री प्रपद्यते' ॥ इति

बादरायणः — 'स्त्रीणां गतोऽनुपचयर्क्षमनुष्णरश्मिः
संदृश्यते यदि धरातनयेन तासाम् ।
गर्भा गृहार्तवमुशन्ति तथा न वन्ध्या
वृद्धातुराल्पवयसामपि चैतदेवम्' ॥ इति

**मलवद्वासाः** इत्यादि । 'ऋतुप्रादुर्भावे यद्वस्त्रं धृतं तत् मलवस्त्रम् । तद्वस्त्रमेव त्रिदिनपर्यन्तं वसाना अञ्जनादीनि वर्जयेत् । आदिशब्देन हरिद्रालेपनाञ्जनपुष्पगन्धदर्पणदर्शनतांबूलक्रीडाहास्यतल्पारोहणान्यजनस्पर्शनमैथुनदेवपितृकार्याणि गृह्यन्ते ।

'रजस्वला चतुर्थेऽह्नि स्नानाच्छुद्धिमवाप्नुयात् ।
आद्वादशाहान्नारीणां मूत्रवत् शौचमिष्यते ।
अष्टादशाहात्स्नानं स्यात् त्रिरात्रं परतोऽशुचिः ॥

**एकभक्ता स्यात् ॥ २ ॥**

अहन्येवैकभक्ता स्यात् ।

**(न) अखर्वेणाञ्जलिना आयसेन वा पिबेत् ॥ ३ ॥**

**अखर्वेणे**त्यादि । भिन्नपात्रं खर्वमुच्यत इति केचित् ।

स्मृत्यन्तरे — 'हस्ते वा मृण्मये .... .... वाक्षितिशायिनी ।
रजस्वला चतुर्थेऽह्नि स्नाता शुद्धिमन्वाप्नुयात् ॥

**न शुल्वेनाश्नाति ॥ ४ ॥**

**शुल्वेन** – ताम्रपात्रेण नाश्नाति ।

**न ग्रहमीक्षेत ॥ ५ ॥**

**नेत्यादि** । ग्रहं – नक्षत्रसूर्यचन्द्रादीन् देवतारूपाणि च – नेक्षेत न रागेणेक्षणं कुर्यात् ।

**न दिवा स्वपेत् ॥ ६ ॥ यथोक्तं व्रतं कुर्यात् ॥ ७ ॥**

प्रजारक्षणार्थं **यथोक्तं** व्रतं श्रुत्युक्तम् । 'यां मलवद्वाससँ संभवंति यस्ततो जायते सोऽभिशस्तो यामरण्ये तस्यै स्तेनो यां पराचीं तस्यै ह्रीतमुख्यपगल्भो याऽस्नाति तस्या अप्सुमारको याऽभ्यङ्क्ते तस्यै दुश्चर्मा या प्रलिखते तस्यै खलतिरपमारी याङ्क्ते तस्यै काणो या दतो धावते तस्यै श्यावदन् या नखानि निकृन्तते तस्यै कुनखी या कृणत्ति तस्यै क्लीबो या रज्जुँ सृजति तस्या उद्बन्धुको या पर्णेन पिबति तस्या उन्मादुको या खर्वेण पिबति तस्यै खर्वस्तिस्रो रात्रीर्व्रतं चरेदञ्जलिना वा पिबेदखर्वेण वा पात्रेण प्रजायै गोपीथाय' इति ।

अत्रिः — 'कन्यायामप्यकन्यायामार्तवे प्रथमेऽहनि ।
अक्षतैरानने क्लृप्तिः सपिष्टैर्वासयेत्त्र्यहम् ॥
अपूपालवणं (?) मुद्गं गुडमिश्रं यथाविधि ।
दत्वा ब्राह्मणपत्नीभ्यः पादुके अधिरोहयेत् ॥
पुण्याहं वाचयित्वाऽथ ब्राह्मणान् भोजयेच्छुचि' रिति ॥

**चतुर्थ्यां दन्तधावनं गन्धामलकादिभिः स्नात्वा श्वेतवस्त्रानुलेपना स्त्रीशूद्राभ्यामनभिभाष्याऽपरमदृष्ट्वा भर्तारं पश्येत् ॥ ८ ॥**

**चतुर्थ्यामित्यादि** ।

अंगिराः — 'स्नानं रजस्वलायाश्च चतुर्थेऽहनि निर्दिशेत् ।
कुर्याद्रजोनिवृत्तौ तु शौचार्थन्तु ततः परम्' ॥ इति

गृह्यः— 'प्राप्ते तु संगवे स्नायात् सगोमयमृदंभसा ।
पुण्यतीर्थेषु नद्यादौ गात्रशुद्धिं विधाय च' ॥ इति

रोगिण्या विशेषमाह उशनाः ।

'ज्वराभिभूता या नारी रजसाऽथ परिप्लुता ।
चतुर्थेऽहनि संप्राप्ते स्पृशेदन्या तु तां स्त्रियम् ॥
सा सचेला विगाह्यापः स्नात्वा स्नात्वा पुनः स्पृशेत् ।
दश द्वादशकृत्वो वा आचामेच्च पुनः पुनः ॥
अन्ते च वाससां त्यागः ततश्शुद्धा भवेत्तु सा ।
दद्याच्छक्त्या ततो दानं पुण्याहेन विशुद्ध्यति' ॥ इति

कार्ष्णाजनिः— 'स्पृष्ट्वा तामपरा स्नायाद्दशकृत्वः क्रमेण तु ।
वासोभिर्दशभिश्चैव परिधाय यथाक्रमम् ॥
ब्राह्मणान् भोजयित्वा तु पुण्याहेन विशुद्ध्यति ।
मलवद्वाससो यत्तु अप्रायत्यं भवेद्यदि ॥
अभिषेकेन शुद्धिस्स्यात् नाश्नीयाद्वा दिनत्रयम्' ॥

अप्रायत्वमशुचित्वम् ।

'रोगेण यद्रजः स्त्रीणामप्रायत्यं प्रवर्तते ।
अशुद्धा नैव तास्तेन यस्माद्वैकारिकन्तु तत् ॥
स्नाने नैमित्तिके प्राप्ते किं करोति रजस्वला ।
उद्धृतेन जलेनैव स्नात्वा चैव समापयेत् ॥
न वस्त्रपीडनं कुर्यात् नान्यद्वासश्च धारयेत्' ॥ इति

वृद्धवसिष्ठः— 'स्पृष्टे रजस्वलेऽन्योन्यं सगोत्रत्वैकभर्तृके ।
कामादकामतो वाथ सद्यस्स्नात्वा विशुद्ध्यतः' ॥ इति

काश्यपः— 'रजस्वला तु संस्पृष्टा ब्राह्मण्या ब्राह्मणी यदि ।
एकरात्रं निराहारा पञ्चगव्येन शुद्ध्यति' ॥ इति

इदं कामकृतविषयम् ।

स्मृत्यन्तरे -- 'सवर्णया उदक्या तु संस्पृष्टा चेदुदक्यया ।
तस्मिन्नेवाहनि स्नात्वा शुद्धिमाप्नोत्यसंशयम्' ॥ इति

अत्रिः — 'उच्छिष्टोच्छिष्टसंस्पृष्टा कदाचित् स्त्री रजस्वला ।
कृच्छ्रेण शुद्ध्यते पूर्वा शूद्रा दानैरुपोषणैः ॥

पतितान्त्यश्वपाकैश्च संस्पृष्टा चेद्रजस्वला ।
तान्यहानि व्यतिक्रम्य प्रायश्चित्तं समाचरेत्' ॥ इति

बोधायनः — 'रजस्वला तु संस्पृष्टा चण्डालाद्यैस्तु वायसैः ।
तावत्तिष्ठेन्निराहारा यावत्कालेन शुद्ध्यति' ॥ इति

अशक्तौ तु —

'शुचिस्स्नात्वा क्षिपेत्तावत् यावच्चन्द्रस्य दर्शनम् ।
रजस्वलां तु भुञ्जानां अन्त्यजातिः स्पृशेद्यदि ॥

गोमूत्रयावकाहारा षड्रात्रेणैव शुद्ध्यति ।
अशक्तौ काञ्चनं दद्याद्विप्रेभ्यश्चापि भोजनम् ॥

आर्तवाभिप्लुता नारी शवं स्पृष्ट्वा तु मोहिता ।
आस्नानकालान्नाश्नीयात् आसीना वाग्यता बहिः ॥

आर्तवाभिप्लुता नारी चण्डालपतितान् स्पृशेत् ।
अतिकृच्छ्रं चरेत्पूर्वं कृच्छ्रमेकमथापि वा ॥

मिथस्संभाषणे चैव उपवासं तयोर्भवेत् ।
आर्तवाभिप्लुतायास्तु शावं शौचं भवेद्यदि ॥

सूतकं वा भवेन्मध्ये स्नात्वा भोजनमाचरेत् ।
उदक्या पात्रे या भुङ्क्ते प्राजापत्यं समाचरेत् ॥

आर्तवाभिप्लुतां नारीं स्पृष्ट्वा मोहाद्द्विजोत्तमः ।
उपवासेन शुद्धस्यात् प्रमादात् स्नानतश्शुचिः ॥

स्पृष्ट्वा तु भोजनं कुर्वन् उपवासत्रयं चरेत् ।
तदन्नं वर्जयित्वा तु कुशवारि पिबेत्तु वा ॥

शयनं भुक्तपात्रं च स्पृष्ट्वा मोहाद्द्विजोत्तमः ।
अज्ञात्वा भोजनं कुर्वन् उपवासेन शुद्धयति ॥ इति

बृहत्संवर्तः — 'रजस्वलान्तु यो गच्छेत् गर्भिणीं पतितां तथा ।
तस्य पापविशुद्धयर्थमतिकृच्छ्रं विशोधनम् ॥

कौशिकः — 'ब्राह्मणो ब्राह्मणीं गत्वा निजां भार्यां रजस्वलाम् ।
सकृच्चेदवमत्या च स्नात्वा तत्र सचेलकम् ॥
महाव्याहृतिभिर्होमं कुर्याच्छातातपोऽब्रवीत्' ॥ इति

**स्त्रीशूद्रेत्यादि** । स्त्रीशूद्राभ्यां संभाषणनिषेधहेतुः शुक्रियव्रते उक्तः । **अपरमित्यादि** । भर्तुर्व्यतिरिक्तं साभिलाषमदृष्ट्वेत्यर्थः ।

**यस्मादृतुस्नाता यादृशं पुरुषं पश्येत् तादृशी प्रजा भवति ॥ ९**

इदमानुशासनिके मतंगोपाख्याने स्पष्टमुक्तम् ।

स्मृत्यन्तरे च — 'ऋतुस्नाता सती नारी यं तु स्नेहेन पश्यति ।
तादृशं जनयेत्पुत्रं तस्मात्पश्येन्निजं पतिम्' ॥ इति

देवलः — 'यदा गोश्वोष्ट्रदासीषु मनुष्याजाविकादिषु ।
नोत्पादकः प्रजाभागी तथैवान्यांगनासु च' ॥ इति

मरीचिः — 'पुंसस्त्रियो वा परस्परभावनातिरेको गर्भस्य वर्णविधिरिति विज्ञायते' इति ।

**ऋतुरात्रयो द्वादश भवन्ति षोडशेति च आचक्षते ॥ १० ॥**

**ऋतुरात्रय** इत्यादि ।

मनुः — 'ऋतुस्स्वाभाविकः स्त्रीणां रात्रयः षोडश स्मृताः ।
चतुर्भिरितरैस्सार्धमहोभिस्सद्भिर्गर्हितैः ॥

तासामाद्याश्चतस्रस्तु निन्दितैकादशी च या ।
त्रयोदशी च शेषास्तु प्रशस्ता दश रात्रयः ' ॥ इति

**प्रथमास्तिस्रो न गम्याः ॥ ११ ॥**

**पुमान् समासु विषमासु स्त्री जायते ॥ १२ ॥**

**प्रथमा** इत्यादि ।

**व्यासः** — 'प्रथमेऽहनि चण्डाली द्वितीये ब्रह्मघातिनी ।
तृतीयेऽहनि धेनुघ्नी चतुर्थेऽहनि शूद्रिका ' ॥ इति

**महाभारते** — 'चतुर्थे वा न गम्याऽह्नि गन्ताऽल्पायु प्रसूयते ।
विद्याहीनं व्रतभ्रष्टं पतितं पारदारिकम् ॥

दारिद्र्यार्णवमग्नञ्च तनयं वा प्रसूयते ।
कन्यार्थिनैव गन्तव्या पञ्चम्यां विधिवत्पुनः ' ॥

.... .... .... षष्ठ्यात्र जननी भवेत् ।
सप्तम्याञ्चैव कन्यार्थी गच्छेच्चैव प्रसूतये ॥

अष्टम्यां सर्वसंपन्नं तनयं संप्रसूयते ।
नवम्यां दारिकार्थी स्यात् दशम्यां पण्डितं तथा ॥

एकादश्यां तथा नारीं जनयेत्कुलदूषणीम् ।
द्वादश्यां धर्मतत्त्वज्ञं श्रौतस्मार्तप्रवर्तकम् ।
त्रयोदश्यां तथा नारीं वर्णसंकरकारिणीम् ' ॥ इति

**बोधायनः** — 'चतुर्थीप्रभृत्याषोडशीमुत्तरामुत्तरां युग्मामुपैति । प्रजानिश्श्रेयसमृतु गमनमित्याचार्याः ' ॥ इति

**देवलः** — 'अशुद्धदिवसेष्वेनां मैथुनाय यदि व्रजेत् ।
आयुः प्रजाश्च धर्मश्च तस्य पुंसः प्रहीयते ' ॥ इति

स्मृत्यन्तरे — 'शुद्धा भर्तुश्चतुर्थेऽह्नि स्नाता नारी रजस्वला ।
दैवे कर्माणि पित्र्ये च पञ्चमेऽहनि शुद्ध्यति' ॥ इति

भर्तृशुश्रूषादिविषयं चतुर्थदिनम् ।

**शालिव्रीहियवानामन्नं पयसा प्राश्नीयाद् ॥ १३ ॥**

**यस्मादाहारमूला धातवो भवन्ति ॥ १४ ॥**

**यस्मा**दित्यादि । अनेन असाराणां कोद्रवादीनां निवृत्तिः ।

बाहटः — 'अन्नहीनं बलक्षीणं घृतहीनन्तु शोणितम् ।
क्षीरहीनं शुक्रनाशं त्रिहीनं चाक्षिनाशनम्' ॥ इति

श्रुतिः — 'इन्द्रियं वै गर्भः । अथो पयसा वै गर्भा वर्धन्ते' इति ।

हरिवंशे — 'रसाद्वै शोणितं भवति शोणितान्मांसमुच्यते ।
मांसात्तु जायते मेदः मेदसोऽस्थीह जायते ॥

अस्थ्नो मज्जा समभवन्मज्जायाश्शुक्रसंभवः ।
शुक्राद्गर्भस्समभवत् रसमूलेन कर्मणा ॥

शुक्रो हि प्रथमो भागस्स सौम्यो राशिरुच्यते ।
गर्भोष्णसंभवो ज्ञेयो द्वितीयो राशिरुच्यते ॥

शुक्रं सोमात्मकं विद्यात् आर्तवं पावकात्मकम् ।
भावौ रसानुगावेतौ वीर्यञ्च शशिपावकौ ॥

कफवर्गे भवेच्छुक्रं पित्तवर्गे च शोणितम् ।
कफस्य हृदयं स्थानं नाभ्यां पित्तं प्रतिष्ठितम् ।
देहस्य मध्ये हृदयं स्थानं नु मनसः स्मृतम्' ॥ इति

देवलः — 'योगपथे तु तीर्थानां विप्रादिक्रमशो व्रजेत् ।
रक्षणार्थमपुत्राणां विवाहक्रमशोऽपि वा ॥

ओजराश्यंशगे चन्द्रे लग्ने पुंग्रहवीक्षिते ।
उपविशेद्युग्मतिथिषु न नग्नः कामयेत् स्त्रियम्' ॥ इति

तीर्थमृतुगमनम् ।

**लक्ष्मीवटशुंगसहदेवीनामन्यतममभिषूय प्रक्षिपेद्दक्षिणे नासापुटे पुत्रकामायाः वामे स्त्रीकामायाः ॥ १५ ॥**

**न निष्ठीवनं कुर्यात् ॥ १६ ॥**

**शोकरोषौ वर्जयति ॥ १७ ॥**

**लक्ष्मीत्यादि** । लक्ष्मी लता प्रसिद्धा (पंजि—हरिद्रा वा) । वटशुंगः वटमुकुलानि । सहदेवी प्रसिद्धा । एषामन्यतममेकं अभिषूय दृषदि पेषयित्वा । 'दृषत्पुत्रे दृषत्पुत्रेण पेषयि' त्वेत्यापस्तंबः । नववस्त्रे निधाय पुत्रकामा चेत् तस्याः दक्षिणे नासापुटे अंगुष्ठाग्रेण प्रक्षिपेत । सा च तद्रसं निष्ठीवनेन न बहिः कुर्यात् ।

गृह्यः-　'कन्याऽवहन्यादित्येके वस्त्रेण प्रक्षिपेद्रसम् ।
वस्त्रं दद्यात् सहोदर्यै वरस्य गुरवेऽथ वा' ॥ इति

सामब्राह्मणे—　'अथ यस्या जातानि प्रमीयेरन् न्यग्रोधशुंगाश्वत्थशुंगशतमूलं चोत्थाप्य तदहस्त्रिवृतं कारयेत् मणिमग्निं प्रतिष्ठाप्यावृता हुत्वा मणिं निधाय अबोध्यग्निरित्येतेनाभिजुहुयात् सहस्रशतावरं, तृतीये गर्भमासि निदध्यात् आज्यशेषं मेखलायाम् । मणिं धारयेत् पुमांसं ह जनयति' इत्यादि । 'गोजिरायुक्तं हस्तपृष्ठं शोषयित्वा प्रियंगुकां सभां सहदेव्या मध्याण्यं भूमिपाशकं न चां (?) काचकपुष्पमिति च ता उत्थाप्य तु तदहः चूर्णानि कारयेत् । 'आनो विश्वासु हव्य' मित्यनेन त्रिस्संपातां चूर्णेषु कृत्वा 'अग्न आयाहि वीतय' इति रहस्येनाद्भिः संयूय तानि नाशुचिः पश्येद्वा उपस्पृशेद्वा तदनुलेपनं तेनानुलिप्तां यां यां स्पृशति सा सैनं कामयते' । इत्यादि च ।

मनुः—　'यदि हि स्त्री न रोचेत पुमांसं न प्रमोदयेत् ।
अप्रमोदात्पुनः पुंसः प्रजनं न प्रवर्तते ॥

स्त्रियान्तु रोचमानायां सर्वं तद्रोचते कुलम् ।
तस्यामरोचमानायां सर्वमेव न रोचते' ॥ इति

**तामेनां 'यन्मेगर्भा' दिभिः प्रोक्षणैः प्रोक्ष्य 'विष्णुर्योनिं कल्पय' त्विति तामुपगच्छेत् ॥ १८ ॥**

**तामेनामित्यादि** । मन्त्रान्तरेण पूर्वं संगमनमुक्तम् । इदानीं मन्त्रान्तरेण तस्या एवोपगमनमिति ज्ञापयितुं ता मित्युक्तम् । यन्मेगर्भादीत्यादि-शब्देन पावमान्यादिग्रहणम् । **प्रोक्ष्येति**—सर्वाङ्गदोषनिवृत्त्यर्थं प्रोक्षणम् । सर्वाण्युपगमनानि मन्त्रवत्त्वेन कर्तव्यानि । अत्र **बोधायनः** । 'सर्वाण्युपगमनानि मन्त्रवन्ति भवन्तीति बोधायनः । यच्चादौ यच्चर्ताविति शालीकि' रिति ।

मनुः— 'निषेकयोग्यकाले तु शुचिर्भूत्वा समाहितः ।
विष्णुर्योनिं सुदर्शनञ्च जप्त्वाऽऽधानमथाचरेत्' ॥ इति

**परिषिच्य वैश्वदेवं वैष्णवं मूलहोमांगहोमौ हुत्वा 'विष्णुर्योनिं कल्पय' त्वित्युपगमनमित्येके ॥ १९ ॥**

निषेकस्य प्राधान्यज्ञापनार्थं निषेकस्यानन्तरं **परिषिच्येत्यादिकमुक्तम्** । तत्तदंगगतदोषनिर्हरणार्थमंगहोमः । **श्रुतिः** । 'दद्भ्यः स्वाहा हनूभ्यां स्वाहे-त्यंगहोमान् जुहोति' इति । अंगे अंगे पुरुषस्य पाप्मोपश्लिष्टः । 'अंगादंगादेवैनं पाप्मनस्तेन मुञ्चति' इति । 'विष्णुर्योनि' मित्युपगमनमित्युक्तः अयमेव मुख्यः पक्षः । होमपूर्वकत्वात् । 'ऋतौ प्रथमे होमं कुर्याद्दृतावृतौ संगमन' मित्युत्तरत्र वक्ष्यमाणत्वात् प्रथमर्ताविव होमः ।

प्रथमार्तवफलानि ज्यौतिषे —

'फाल्गुने सुभगा नारी माघे मासि शुचिव्रता ।
कार्तिके मार्गशीर्षे च वृद्धिपुत्रसुपु[illegible]ता ॥

ज्येष्ठे च कुलसंपत्तिर्वैशाखे सखिनी प्रिया ।
आषाढे वृद्धिसंपन्ना यावदर्के च कर्किणि ॥

चैत्रे पौषे च दौर्भाग्यं श्रावणे विधवा भवेत् ।
मासि भाद्रपदे चापि आश्वयुज्यनपत्यता ॥

आदित्यभौममन्दानां वारवर्गोदये क्षणात् ।
मरणं गर्भनाशश्च कुलटात्वं यथा क्रमात् ॥

'करादिपञ्चोत्तरमूलपूषा-
विष्णुत्रयासिज्यविधीन्दुभेषु ।
आद्यं रजस्सौख्यसुतायुरर्थं
सौभाग्यवृत्तिं कुरुतेऽङ्गनानाम् ॥

पूर्वत्रये याम्यभुजंगधिष्ण्ये
वैधव्यमस्या विदधीत नूनम् ।
मघेशयोश्शोकमथादितेर्भे
सा बन्धकीन्द्रेप्यनले दरिद्रा ॥

पुष्पं दृष्टं निन्दिते भे यदि स्यात्
शान्तिं कुर्यादंगनानाञ्च पूर्वम् ।
तत्संयोगं वल्लभा वर्जयेयुः
यावद्भूयः शस्तभे दर्शनं स्यात्' ॥

'प्रथमार्तवनक्षत्रे समहीजे मृतप्रजा ।
आशुक्रसहिते (?) वन्ध्या सगुरुस्स्यात्तपस्विनी ॥

आदित्ये च पतिघ्नी स्यात् शनौ तिष्ठति जारिणी ।
राहौ तिष्ठति दासी स्यात् ग्रहहीने सुवासिनी ॥

कुलीरवृषचापान्त्यानुयुक् कन्या तुलाऽथ वा ।
राशयः शुभदा ज्ञेया नारीणां प्रथमार्तवे ॥

जामित्रे विधवा सूर्ये सोमे सुतविनाशिनी ।
असिते दुष्टचारित्रा बुधे वन्ध्या भवेद्वधूः ॥

बहुभाषी देवगुरौ भृगौ नष्टकुला भवेत् ।
शनौ सर्वविनाशः स्याद्राहौ स्यात् स्वामिघातुकी ॥

केतौ जनितवन्ध्या स्याद्रजस्स्याच्छुद्धसप्तमम् ।
रजोदर्शनकले तु स्वयं पश्यति दुःखिता ॥

सुमगल्या च मांगल्यं भवेद्विधवयाऽथवा ।
कन्यया दर्शने भोगो रोगकृत् पुरुषदर्शने ॥

रोगिण्या रोगिता दास्या दृष्टे दारिद्र्यमेव च ।
वन्ध्यया चैव सौभाग्यं भिक्षाशित्वं बहुदर्शने ॥

वैधव्यं पुत्रसंपत्तिर्वेश्यात्वं प्रथमार्तवे ।
स्नानकाले दरिद्रा स्यात् भोजने सुखभागिनी ॥

शयने पितृहानिस्स्यात् गतागति पतिं हरेत् ।
तिष्ठति श्रियमाप्नोति गमने मरणं ध्रुवम् ।
हरिद्राधान्यतांबूललाजपुष्पाणि धारिणी ॥

गन्धाभरणशाल्यन्नपूर्णपात्रञ्च धारिणी ।
ऊष्वराश्मसशूर्पादि (?) धारणे त्वशुभं भवेत् ॥

'शूर्पोलूखलवह्निकाष्ठमुसलं धत्ते च सम्मार्जनीं
आयुर्हानिमपत्यदौःस्थ्यदयिताकामादिकाले ऋतून्' (?) ॥

छिद्रवस्त्रादिहरणं तैलाभ्यंगञ्च बाधकृत् ।
आर्तवं कुत्सिते देशे क्रन्दे वा त्वशुभं भवेत् ॥

उन्नते चोन्नतिं विद्यात् निम्ने दारिद्र्यमेव च ।
समदेशे समत्वं स्यादृतूत्पत्तिफलं विदु' रिति ॥

संगमादिषु वर्ज्यानाह पराशरः ।

'नाभ्यंगमर्के न च भूमिपुत्रे क्षौरञ्च शुक्रे च कुजे च मांसम् ।
बुधे च योषित्परिवर्जनीया शिष्टेषु सर्वेषु सदैव कुर्यात्' ॥ इति

'नन्दासु नाभ्यंगमुपाचरेत्तु
क्षौरञ्च रिक्तासु जयासु मांसम् ।
पूर्णासु योषित्परिवर्जनीया
भद्रासु सर्वाणि समाचरेच्च ॥

चित्रासु हस्ते श्रवणे च तैलं
क्षौरं विशाखासु भिषक्षु वर्ज्यम् ।
मूले मृगे भाद्रपदासु मांसं
योषिन्मघाकार्तिकसोत्तरासु' ॥ इति

'विष्णुप्रजेशरविमित्रसमीरपोष्ण-
मूलोत्तरावरुणभानि निषेककार्ये ।
पूज्यानि पुष्यवसुशीतकराश्विचित्रा-
दित्याश्च मध्यमफला विफलास्स्युरन्याः ॥

चतुर्थदिवसादूर्ध्वं मघापुष्यादि वर्जयेत् ।
पुत्रार्थी युग्मऋतुषु गच्छेत् षोडशवासरान्' ॥ इति

'उत्पत्तौ च विपत्तौ च मैथुने दन्तधावने ।
अभ्यंगे चोदधिस्नाने तिथिस्तात्कालिकी स्मृता ॥

सूतके मृतके क्षौरे निषेके दन्तधावने ।
प्रस्थाने च प्रवासे च तिथिस्तात्कालिकी स्मृता' ॥ इति

'षष्ठ्यष्टमीं पञ्चदशीं चतुर्थीं
चतुर्दशीमप्युभयत्र हित्वा ।
शेषाश्शुभास्स्युस्तिथयो निषेके
वाराश्शशांकार्यसितेन्दुजानाम्' ॥

वृषमिथुनकर्कसिंहकन्या-
तुलाधटचापझषाः शुभं वहन्ति ।

यदि शुभबलशालिनोऽनुकूले
निधनविशुद्धिगते निषेककार्ये' ॥ इति

गर्गः — 'पञ्चदश्यां चतुर्दश्यामष्टम्यां रविसंक्रमे ।
द्वादश्यां सप्तमीषष्ठ्योस्तैलस्पर्शं विवर्जयेत् ॥

न च कुर्यात्तृतीयायां त्रयोदश्यां तिथौ तथा ।
शाश्वतीं भूतिमन्विच्छन् दशम्यामपि पंडितः' ॥ इति

ज्योतिः पराशरः– 'सन्तापः शान्तिरल्पायुः धनं निधनता तथा ।
अनारोग्यं सर्वकामाः अभ्यंगाद्भास्करादिषु' ॥ इति

प्रचेताः — 'सार्षपं गन्धतैलञ्च यत्तैलं पुष्पवासितम् ।
अन्यद्रव्ययुतं तैलं न दुष्यति कदाचन' ॥

'घृतञ्च सार्षपं तैलं यत्तैलं पुष्पवासितम् ।
न दोषः पक्वतैलेषु स्नानाभ्यंगेषु नित्यशः ॥

रवौ पुष्पं गुरौ दूर्वा भृगौ गोमयमेव च ।
भौमे भूमिस्तथान्येषु वासरेषु न दोषभाक्' ॥ इति

स्मृत्यन्तरे — 'तैलाभ्यंगनिषेधे तु तिलतैलं निषिद्ध्यते ।
अभ्यंगस्य निषेधे तु सार्षपादेरपीष्यते' ॥ इति

काश्यपीये — 'इष्टा सितचतुर्दश्यामिन्दुक्षयतिथावपि ।
ऊर्जा तु स्वातिसंयुक्ते यदा दीपावली भवेत् ॥

तैले लक्ष्मीः जले गंगा दीपावलितिथौ भवेत् ।
अलक्ष्मीपरिहाराय अभ्यंगस्नानमाचरेत् ॥

इन्दुक्षयेऽपि संक्रान्तावारवारे दिनक्षये ।
तत्राभ्यंगमदोषाय प्रातः पापापनुत्तये ॥

आश्वयुक्कृष्णपक्षस्य चतुर्दश्यामिनोदये ।
तैलाभ्यंगञ्च कर्तव्यं स्नानमुष्णेन वारिणा ॥

यस्यां हतश्चतुर्दश्यां नरको विष्णुना निशि ।
तस्यामभ्यञ्जनं कार्यं नरैर्नरकभीरुभिः ' ॥ इति

बृहस्पतिः — 'ऋतुकालाभिगमनं पुंसा कार्यं प्रयत्नतः ।
सदैव वा पर्ववर्जमनृतौ रतिकाम्यया ॥

यथाकामी भवेद्वापि स्त्रीणां वरमनुस्मरन् ।
स्वदारनिरतश्चैव स्त्रियो रक्ष्या यतस्स्मृताः ' ॥ इति

यज्ञवल्क्यः — 'एवं गच्छन् स्त्रियं क्षामां मघां मूलञ्च वर्जयेत्' ॥ इति

मार्कंडेयः — 'शून्यालये मातृगृहे वृक्षमूले चतुष्पथे ।
गर्भेण वा (?) मातृगृहे शर्करालोष्टपांसुषु ॥

धान्यगोविप्रदेवानां गुरूणाञ्च तथोपरि ।
तथा विहीनशयने नाशुचौ नाशुचिस्स्वयम् ॥

नार्द्रवासा न नग्नश्च नोत्तरापरमस्तकः ।
नाकाशे सर्वशून्ये वा स्वपेन्नोपवनेऽपि च ॥
गच्छेद्वच्छायाममतिमान् न मूत्रोच्चारशंकितः ' ॥ इति

रतिरहस्ये — 'वेदागमोक्तसमये रुचिरप्रदेशे
वाजीकृतेन जितरोषभयेन पुंसा ।
मन्त्रौषधप्रवरतीर्थजलोज्ज्वलेषु
कान्ताजनेष्वथ निषेकविधिर्विधेयः ॥

पुष्पोपहारजुषि जृंभितगन्धधूपे
दीपांशुबोधकपिशे रतिधाम्नि हर्म्ये ।
कान्तासखस्सहचरानुचरश्च कामी
श्यामामुखे स्मितमुखो विदधीत गोष्ठीम् ' ॥

इत्यादि रतिरहस्योक्तमनोहरदेशः ग्राह्यः । वाजीकरणं नाम नीचातिनीच-मोहनपरिहारप्रयोगः । सिंहपाटलिपुत्रेणोक्तम् यथा —

'आयामपरिमाणाभ्यां षण्णवद्वादशांगुलैः ।
गुह्यैः शशो वृषोऽश्वो ना हरिण्यश्वेभकाः स्त्रियः ॥
हरिणीशशयोर्योगे बडवावृषयोस्तथा ।
हस्तिनीहययोश्चैव मतं समरतं त्रयम् ॥
कंडूतेरप्रतीकारात् अन्तर्लिंगावमर्दनात् ।
न द्रवन्ति न तृप्यन्ति योषितो नीचमोहने ॥
स्वेदजाः कृमयः सूक्ष्मा मृदुमध्योग्रशक्तयः ।
स्मरसद्मनि कंडूतिं जनयन्ति यथाबलम् ॥
चर्मदंडोपघातेन कंडूत्यपनयात्ततः ।
क्षरणाच्च सुखं तासां विसृष्टिः स्पन्दनात्मिका' ॥ इति

**बाहुवीर्येण** महर्षिणाप्युक्तम् । 'न ह्यसत्यां रतिप्रतिपत्तौ गर्भसंभव उपपद्यते' इति । नीचातिनीचसुरतेन रोगादिकं जायत इति तत्परिहारार्थं वाजीकरणं कर्तव्यमिति **बाहटाचार्येणोक्तम्** ।

'वाजीवातिबलो येन यात्यप्रतिहतोऽगनाम् ।
तद्वाजीकरणं नाम देहस्योर्जस्करं पर'मिति॥ तत्प्रयोगाश्च तेनोक्ताः ।

सुदर्शनादीनि मन्त्राणि च —

**व्यासः**— 'सुदर्शनमहामन्त्रं शुचिर्भूत्वा समाहितः ।
नित्यमष्टोत्तरशतं जपन् पुत्रं लभेत्सुखम्' ॥ इत्यादि

ओषधयः प्रवरा इति **व्यासः** ।

अंकोलमूलकल्कञ्च चूर्णीकृत्य गुलोदभुक् ।
काकाण्डतुल्यमश्नीयात् गर्भिणी सा भविष्यति ॥ इति

**वसिष्ठः**— 'उत्तमाकर्णिकामूलं पेषयित्वा पयः पिबेत् ।
पायसान्नं समश्नीयात् पुत्रिणी सहसा भवेत्' ॥ इति

**गौतमः**— 'क्षीरवृक्षांकुरं गृह्य पेषयित्वा पयः पिबेत् ।
दैवोदरकृतं दोषं विनश्यति सुतं लभेत्' ॥ इति

**मुद्गलः** — 'वटाग्रं शिंबबीजञ्च स्तन्येन पयसा पिबेत् ।
पुत्रं प्रसूयते नारी दैवदोषं विमुञ्चति' ॥ इति

तीर्थजलादिति पराशरः ।

महातीर्थमहायोगिमहानद्यास्तु संगमे ।
पालाशस्य दलात् स्नानं कुर्यात्पुत्रसुखार्थिनी' ॥ इति

**देवरातश्च** — 'पालाशदलसाहस्रात् सावित्रेण दलं प्रति ।
स्नापयेत्सवितृमन्त्रेण एकादश्यां प्रजार्थिनीम्' ॥ इति

निषेकप्रकारः श्रूयते यजुषि — 'नग्नं कृत्योरुमुपप्रवर्तयति, यदा हि नग्न ऊरुर्भवत्यथ मिथुनीभवतोऽथ रेतस्सिच्यतेऽथ प्रजाः प्रजायन्ते' इति ॥

**रतिरहस्ये** — 'पंकजासनलयेन पद्मिनीं
वेणुदारितलयेन शंखिनीम् ।
स्कन्धपादयुगलेन हस्तिनीं
नागरेण रमयन्ति चित्रिणी' मित्यादि ॥

**बाहटे** — 'सेवेत कामतः कामी तृप्तो वाजीकृतो हिमे ।
त्र्यहाद्वसन्तशरदोः पक्षाद्वर्षानिदाघयोः' ॥ इति

**रतिरहस्ये** — 'जातिस्वभावगुणदेशजधर्मचेष्टा-
भावेंगितेषु विकलो रतितन्त्रमूढः ।
लब्ध्वा बहिः स्खलति यौवनमंगनानां
किं नारिकेलफलमाप्य कपिः करोति' ॥ इति

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने तात्पर्यचिन्तामणौ तृतीयप्रश्ने नवमः खण्डः ।



## अथ दशमः खण्डः

**अथ गृहीतगर्भालिंगानि ॥ १ ॥**

**अथेत्यादि ।** गृहीतगर्भायाश्चिह्नानि । उच्यन्त इति शेषः ।

**शरीराटोपः सक्थिसीदनं द्वेषो भर्तुः अरुचिराहारे लाला-प्रकोपः खरतास्फुरणं योनेरिति ॥ २ ॥**

**शरीराटोप** इत्यादि । शरीरस्य अस्वास्थ्यं । **सक्थिसीदनम्**—ऊरुव्यथनं । **द्वेषो भर्तरि** संगमकाले भर्तरि द्वेषः । भर्तुरिति विभक्तिव्यत्ययः छान्दसः । **अरुचिराहारे** भक्ष्यमाणेषु मधुरादिपदार्थेष्वप्रीतिः । **लालाप्रकोपः** निष्ठीवनस्य वा फेनस्य वा प्राचुर्यं—यद्वा छर्दनादिः । **खरतास्फुरणं योनेः ।** कर्कशता-स्फुरणं । यद्वा शरीरकार्श्यात् वर्णेन वचसा वा बर्बरत्वम् ।

**गर्भस्य दैवानुबन्धं ज्ञात्वा आपूर्यमाणपक्षे पुण्ये पुन्नाम्नि नक्षत्रे आज्येन आघारं हुत्वा तां मंगलयुक्तामुपवेश्य परिषिच्य धातादि-पञ्चवारुणं मूलहोमं स्विष्टाकारञ्च हुत्वा 'वृषोऽसी' ति यवान् ददाति ॥ ३ ॥**

**गर्भस्येत्यादि । दैवानुबन्धं** स्वकर्मकृतमनुबन्धम् । 'ऋणानुबन्धरूपेण पशुपत्नीसुतालयाः' इति वचनात् ।

**मरीचिः** 'अथ देहोत्पत्तिप्रकारः । ओषधीभ्योऽन्नमुपजायते तदन्नं त्रिविधं भवति एकं मूत्रमेकं पुरीषमेकं पुरुषाणां शुक्रं स्त्रीणां शोणितम् । शुक्रशोणितयोः क्षीरे सर्पिरिव सर्वव्यापिनी मायाशक्तिर्भवति । पुरुषबीजमूलसञ्चितं शुक्रं स्त्रीकुचमूलसञ्चितं शोणितम् । संयोगकाले दैवयोगेन वायुना गर्भालयं प्रविशति । तत्रैकरात्रोषितं कलिलं द्विरात्रोषितं बुद्बुदं त्रिरात्रोषितं मांसलं चतूरात्रोषितं पेशलं पञ्चरात्रोषितं घनं षड्रात्रोषितं व्यूहं सप्तरात्रोषितं बन्धमष्टरात्रोषितं सुकुमारं

नवरात्रोषितं यौवनं दशरात्रोषितं पयसमर्धमासे पिंडाकृतिर्मासे शरीराकृतिर्मासद्वये शिरोबाहुप्रदेशास्त्रिमासे जठरं कटिप्रदेशं चतुर्थे मासे पाणिपादद्वयं पञ्चममासे रोमकूपाणि षष्ठे मासेऽस्थिसंघातः सप्तमे मासि जीवप्रकाशः अष्टमे मासे देहो नवमे मासे प्रचलनं करोति। अत ऊर्ध्वं जायते। स्नायुमज्जास्थीनि रेतोमयानि। त्वग्रुधिरमांसानि शोणितमयानि। एवं षट्कोशविकृतत्वग्रक्तमांसमेदोऽस्थिमज्जाशुक्रमिति क्रमेणैवान्तर्भूतानि (क्रमेणैकांशीभूतानि सप्तधातूनि)। सप्तधातुमयं गात्रं भवति। शुक्राधिके पुरुषः शोणिताधिके स्त्री द्वयोस्तुल्ये नपुंसकं भवति। पुंसस्त्रियो वा परस्परभावनातिरेको (परस्परभावेन तयोरेको) गर्भस्य वर्णविधिरिति विज्ञायते।

अथातः पृथिव्यादिमहाभूतानां समवायं व्याख्यास्यामः। शरीरे यत्कठिनं तत्पृथिवी यद्रसस्तदंभो यदुष्णं तत्तेजः यत्सञ्चरति सोऽनिलः यत्सुषिरं स आकाशः। श्रोत्रादीनि ज्ञानेन्द्रियाणि। श्रोत्रमाकाशे वायौ त्वगग्नौ चक्षुः अप्सु जिह्वा पृथिव्यां घ्राणः एवमिन्द्रियाणां यथाक्रमेण शब्दस्पर्शरूपरसगन्धाः विषयाः। वाक्पाणिपादपायूपस्थानि कर्मेन्द्रियाणि। तेषां क्रमेणैव वचनादानगमनविसर्गानन्दाश्च विषयाः पृथिव्यादिमहाभूतेषु चतुर्षु क्रमेणोत्पन्नाः मनोबुद्ध्यहंकारचित्तानीत्यन्तःकरणचतुष्टयम्। तेषां क्रमेण संकल्पविकल्पाध्यवसायानात्मात्मतत्त्वावबोधानुभूतानुस्मरणानि विषयाः। मनःस्थानं गलान्तरं बुद्धेर्वदनमहंकारस्य हृदयं चित्तस्य नाभिरिति। अस्थिचर्मनाडीरोममांसाश्च पृथिव्यंशाः, मूत्रश्लेष्मरक्तशुक्रस्वेदाश्चापां, क्षुत्तृष्णानिद्रालस्यमोहमैथुनान्यग्नेः प्रचरणविलेखनोन्मीलन(स्थूलादि) उन्मेषनिमेषणादीनि वायोः, कामक्रोधलोभमोहभयान्याकाशस्य। शब्दस्पर्शरूपरसगन्धाश्चैते पृथिवीगुणाः, तेषु गन्धविहीनाश्चत्वारोऽपां गन्धरसहीनास्त्रयोऽग्नेः, शब्दस्पर्शौ द्वौ वायोः, शब्द एक आकाशस्य। सात्त्विकराजसतामसा इति त्रयो गुणाः। अहिंसासत्यास्तेयब्रह्मचर्यविकल्पनाक्रोधगुरुशुश्रूषाशौचसन्तोषास्तिक्यार्जवा इति सात्त्विकलक्षणानि। अहं कर्ताऽहंभोक्तेत्यभिमानगुणा राजसलक्षणानि। निद्रालस्यमोहमैथुनस्तेयकर्माणि तामसलक्षणानि। ऊर्ध्वे

सात्त्विका मध्ये राजसाः अधस्तात्तामसा इति । सम्यक्ज्ञानं सात्त्विकं, धर्मज्ञानं राजसं, तिमिरोत्थज्ञानं तामसमिति ।

जाग्रत्स्वप्नसुषुप्तितुर्यमिति चतुर्विधा अवस्थाः । ज्ञानेन्द्रियकर्मेन्द्रियान्तःकरणचतुष्टयचतुर्दशकरणैर्युक्तं जाग्रत्, अन्तःकरणचतुष्टयमात्रसंयुक्तं स्वप्नं, चित्तैककरणयुक्ता सुषुप्तिः, केवलजीवयुक्तमेव तुर्यमिति । उन्मीलितजीवमध्यस्थपरमात्मजीवात्मनोर्मध्यस्थोऽतो जीवात्मा क्षेत्रज्ञ इति विज्ञायते । सोऽपि पञ्चमहाभूताः देहेन्द्रियपञ्चभूतगुणा अन्तःकरणचतुष्टया इत्येतैः पञ्चविंशात्मकः पुरुषः परमात्मनो देह इति विज्ञायते' इति ।

हरिवंशे — 'नाभिकंठान्तरं यत्तु तत्र देवो हुताशनः ।
मनः प्रजापतिर्ज्ञेयस्तत्र देवो विभाव्यते ॥

पित्तमग्निः स्मृतेश्चेति अग्नीषोममयं जगत् ।
एवं प्रवर्तिते .... .... गर्भे बुद्बुदसन्निभे ॥

वायुः प्रवेशनं चक्रे संगतः परमात्मना ।
स पञ्चधा शरीरस्थो भिद्यते वर्धयन् पुनः ॥

प्राणोऽपानस्समानश्च उदानो व्यान उच्यते ।
प्राणोऽस्य परमात्मानं वर्धयन् परिवर्धते ॥

अपानः पश्चिमं कायमुदानोर्ध्वशरीरगः ।
व्यानो व्यायच्छते येन समानस्सन्निवर्तते ॥

ऋतावाप्तिस्ततस्तस्य जायेतेन्द्रियगोचरा ।
पृथिवी वायुराकाश आपो ज्योतिश्च पञ्चमम् ॥

तस्येन्द्रियनिविष्टास्स्युः स्वं स्वं योगं प्रचक्रिरे ।
पार्थिवं देहमाहुस्तु प्राणात्मानश्च मारुतम् ॥

छिद्राण्याकाशयोनीनि जलं स्रावं प्रचक्षते ।
ज्योतिश्चक्षूंषि तेनात्मा तेषां यत्र मनः स्मृतम् ॥

ग्रामाश्च विषयाश्चैव यस्य वीर्याः प्रवर्धिताः ।
इत्येताः पुरुषांत्सर्वान् सृजन् लोकांत्समासतः ।
मिथुनेऽस्मिन् कथं लोके नरकं विष्णुरागतः '(?) ॥ इति

कामादीनामुत्पत्तिस्थानान्याह भृगुः ।

'कामः क्रोधश्च लोभश्च मोहश्चैव मदस्तथा ।
मात्सर्यं धर्म इत्येते त्वगाद्यैस्तु यथाक्रमम् ॥

शुक्रात्तु जायते कामः मज्जायाः क्रोध उच्यते ।
अस्थिभ्यो जायते लोभो मेदसा च मदस्तथा ॥

मांसान्मोहः प्रजायेत मात्सर्यमसृजस्तथा ।
त्वचश्चैव भवेद्धर्मः क्रमाज्जाताश्चतुर्दश ॥

दिग्वातार्कप्रचेताश्विवह्नीन्द्रोपेन्द्रमृत्युकाः ।
चन्द्रो विष्णुश्चतुर्वक्त्रश्शंभुश्च करणाधिपाः ' ॥ इति

प्रसंगादिदमुक्तम् । एवं गर्भचिह्नान् ज्ञात्वा **आपूर्यमाणपक्षे पुण्ये पुंनाम्नि शुभे नक्षत्रे** इति ।

**ज्यौतिषे** — 'हस्तादिति हरीशभृत्पौष्णवेदोत्तराख्या
पक्षच्छिद्रांश्च रिक्तां पितृतिथिमपहायाष्टमस्थं शशांकम् ।
सिंहाली वर्जयित्वा शुभबलबहुला राशयोप्यंशकास्स्युः
श्रेष्ठानि श्वेतरोचिर्भृगुबुधधिषणा वह्निशुद्धेऽष्टमे च' ॥

**संग्रहे** — 'जातकर्म च पुंसूतिः सीमन्तोन्नयनानि च ।
मलिम्लुचेऽपि कुर्वीत निमित्तं यदि जायते' ॥

'पुंसवने वनिता न सदेष्टाः कर्क्यमेतरराशय इष्टाः' ।
'क्रूरग्रहाणामेकोऽपि लग्नादन्त्यान्त्यजाष्टमे ॥

सीमन्तिनीं धृतं गर्भं बालं हन्ति न संशयः ।
सितेज्यमूढो नाधिमासो मासप्राधान्यकर्मसु' ॥ इति

गृह्यपरिशिष्टे — 'अवषट्कारहोमाश्च पर्व चाग्रयणं तथा ।
मलमासेऽपि कर्तव्यं काम्या इष्टीर्विवर्जयेत् ॥
नित्यं नैमित्तिकं कुर्यात् प्रयतस्सन् मलिम्लुचे' ॥ इति

**आज्येनाघारं हुत्वा** । 'एतोन्विन्द्र' मित्यादिव्याहृतिपर्यन्तग्रहणम् । औपासने कर्तव्यताज्ञापनार्थमेवमुक्तम् । **तां** गर्भवतीं **मंगलयुक्तां** दक्षिणतोऽग्नेरपरस्यामुपवेश्य तस्या उत्तरे स्वयमासीनः परिस्तीर्य **परिषिच्य धातादीति** ।

**'पयो दधि घृतं समं गृहीतं त्रिवृदित्यामनन्ति ॥ ४ ॥**

**'भूस्त्वयि ददा' मीति एनां त्रिवृत्प्राशयेत् ॥ ५ ॥**

**प्राशयेत्** । सयवं प्राशयेत् । अत्र **जैमिनः** । 'यवश्च दधिप्रसृतेन प्राशयेत्' इति ।

**आचान्तायाः नाभेरूर्ध्वं 'अभिष्ठाऽहं – पगाश्च' । इति दर्भेण त्रिरुन्माज्र्य पुण्याहं कुर्यात् ॥ ६ ॥**

**ब्राह्मणानन्नेन तर्पयति ॥ ७ ॥**

**ब्राह्मणानित्यादि** ॥ अन्तहोमं कृत्वा ब्राह्मणतर्पणम् । 'देविका निर्वपेत्प्रजाकाम' इति **श्रुतेः** ।

**धातादीत्यादिषु** इयमुपपत्तिः । 'पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती' ति शरीरकारणभूतानामपां देवता वरुण इति **वारुणम्** । यद्वा । 'रात्रिं वा अनुप्रजाः प्रजायन्ते' इति श्रुतेः । 'वारुणी रात्रि' रिति **श्रुतेश्च वारुणम्** । मूलहोमप्रशंसा च पूर्वमेवोक्ता । अन्तहोमे स्विष्टकृतश्शुद्ध्यर्थम् । यवदानम् 'यवोऽसी' ति मन्त्रलिंगात् । त्रिवृत्प्राशनन्तु 'प्राणो वा आज्यम्'

'इन्द्रियं वै दधि' 'अथो पयसा वै गर्भा वर्धन्ते' इत्यादिश्रुतिभिः प्राणशरीरेन्द्रियवृद्ध्यर्थम्। यद्वा। 'उल्बं गर्भो जरायु तदेव तन्मिथुनं' इत्युल्बादि वृद्ध्यर्थम्। व्याहृतेस्तु 'भूरिति वै प्राणः। भुवरित्यपानः। सुवरिति व्यानः' इति प्राणादिरूपत्वात् प्राणादीनामुत्पत्त्यर्थं व्याहृतयः। गर्भशुद्ध्यर्थं दर्भेणोन्मार्जनम्। कर्मसाद्गुण्यार्थं पुण्याहब्राह्मणभोजनानि।

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने तात्पर्यचिन्तामणौ तृतीयप्रश्ने दशमः खण्डः



## अथ एकादशः खण्डः

अथ गर्भाधानादि चतुर्थे मासि पुंसवनं भवति ॥ १ ॥

शुक्लपक्षे शुद्धेऽहनि पूर्वाह्णे अग्निमुपसमाधाय पूर्ववत् स्विष्टाकारान्तं हुत्वा दक्षिणतोऽग्नेरपरस्यामासीनायै 'वृषोऽसी' ति सर्षपमिश्रितान् यवान् 'आन्धौ स्थ' इति दद्यात् ॥ २ ॥

शुक्लपक्षे इत्यादि—

'शुक्लपक्षे कृतं कर्म चन्द्रवद्वृद्धिमाप्नुयात् ।
कृष्णपक्षे कृतं कर्म चन्द्रवत् क्षीयते सदा' ॥ इति

शुद्धे दोषरहिते । अह्नि न रात्रौ । पूर्ववत् गर्भाधानवत् ।

अलाभे माषधान्यौ प्रतिनिधी स्याताम् ॥ ३ ॥

अलाभे — यवानामलाभे ।

'ओं भूर्भुवस्सुवः' — 'राकामहं' — 'यास्ते राके' — 'सोम एव' — 'विश्वा उत त्वया' इत्युदरमभिमृशेत् ॥ ४ ॥

पूर्ववत् त्रिवृत्प्राशनादीनीति विज्ञायते ॥ ५ ॥

पूर्ववदित्यादि । 'अभिष्ट्वाहं' 'पराञ्चेति' दर्भेण त्रिरुन्मार्ज्य पुण्याहं ब्राह्मणभोजनञ्च कुर्यादित्यर्थः ।

गृह्यः — 'केशान् मासत्रयादूर्ध्वं गर्भवान्न धारयेत् द्विजः' ।

'क्षौरं शवानुगमनं नखकृन्तनञ्च
श्राद्धञ्च वास्तुसवनं त्वतिदूरयात्राम् ।
उद्वाहमम्बुधिजलं स्वरसोपभोग-
मायुःक्षयं भवति गर्भवतीपतीनाम् ॥

इत्यादयो धर्मा अत्रानुसन्धेयाः ।

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने तात्पर्यचिन्तामणौ तृतीयप्रश्ने एकादशः खण्डः ।



# अथ द्वादशः खण्डः

अथ गर्भाधानाद्यष्टमे मासि सीमन्तोन्नयनं कुर्यात् ॥ १ ॥

पक्षो दिनश्च व्याख्यातम् ॥ २ ॥

पक्षो दिनश्चेति । गर्भाधानादिषु त्रिषु समानमित्यर्थः ।

पूर्ववत् धातादि हुत्वा त्रेण्या शलल्या सह शलाटुग्लप्सं साग्रपत्रं कुशांकुरश्च दर्भेण त्रिराबद्धय 'ओंभूर्भुवस्सुवः' इति गृहीत्वा तस्या स्तथा आसीनायाः स्रग्गन्धवत्याः सीमन्ते 'राकामहं'—'यास्ते राके' इति स्थापयित्वोन्नयनं कुर्यात् ॥ ३ ॥

पूर्ववदित्यादि । गर्भाधानादिवत् । त्रेण्या शलल्या त्रीणि स्थानानि यस्याः श्वेतानि तया त्रेण्या शलल्या । सह शलाटुग्लप्सं ईषत्पक्वं फलं ग्लप्सं, एकत्रानेकफलसहितं एवं विधं विश्वामित्रोदुंबरं साग्रपत्रं कुशांकुरश्च शलल्या सह दर्भेण त्रिराबद्धय गृह्णाति ।

गृह्यः— 'विश्वामित्रौदुंबरी वा न्यग्रोधाश्वत्थसंभवा ।
प्लाक्षी वाल्पफला वापि शाखा सीमन्तकर्मणि' ॥ इति

(विश्वामित्रोदुंबरं — ब्रह्ममेडी)

सीमन्ते — ललाटान्ते उन्नयनं कुर्यात् ऊर्ध्वमुन्नयेत् ।

'सोम एवे'ति पुरस्तादिव कुर्यात् ॥ ४ ॥

सोम एवेत्यादि । मन्त्रान्ते समीपनदीन मग्रहणम् ।

पूर्ववत् त्रिवृत्प्राशनादि पुण्याहान्तमित्येके ॥ ५ ॥

पूर्ववदित्यादि । गर्भाधानोक्तवत् 'आभिष्ट्वाहं—पराञ्चे'ति त्रिरुन्मार्जनं दर्भेण । पुण्याहान्तमित्यर्थः । अन्नदोषपरिहारार्थमेवमुक्तम् ।

'रोगे चालभ्ययोगे वा सीमन्ते पुंसवे तथा ।
यद्ददाति समुद्दिष्टं पूर्वत्रापि न दुष्यति' ॥

इति मरीचिस्मरणात् पूर्वमेव कर्तव्यम् । पूर्वमेव दत्तश्चेदनन्तरं कृतेऽपि न दोषः ।

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने तात्पर्यचिन्तामणौ द्वितीयप्रश्ने द्वादशः खण्डः



## अथ त्रयोदशः खण्डः

—*०*—

अथ विष्णुबलिः ॥ १ ॥

अथेत्यादि। अथ अनन्तरमष्टमे मासि विष्णुबलिः। अत्र बोधायनः। 'यथैतद्धुतो बलिहरणम्। विष्णवे बलिरष्टमे मासि पूर्वपक्षस्य सप्तम्यां द्वादश्यां रोहिण्यां श्रोणायां वा इति। वैष्णवो ह्येष मासो विज्ञायते विष्णुर्गर्भस्य देवता' इति। उक्तदिनात्पूर्वेद्युः नान्दीमुखं कृत्वा 'अस्या गर्भपुष्ट्यर्थं गर्भस्य श्रीवैष्णवत्वसिद्ध्यर्थं च विष्णुबलिकर्मणा संस्करिष्यामि' इति संकल्प्य आघारं हुत्वा आवाहनकाले —

उत्तरप्रणिधावग्न्यादीन् देवान् 'ओंभूः पुरुषं'—'ओंभुवः पुरुषं'—'ओँ सुवः पुरुषं'—'ओं भूर्भुवस्सुवः पुरुषं' चेत्यावाह्य तथैव निर्वापाद्याघारं हुत्वा अग्नेः पूर्वस्यां दर्भासनेषु 'केशवं'—'नारायणं'—'माधवं'—'गोविन्दं—'विष्णुं'—'मधुसूदनं'—'त्रिविक्रमं'—'वामनं' 'श्रीधरं'—'हृषीकेशं'—'पद्मनाभं'—'दामोदरं' इति नामभिः देवं विष्णुमावाह्य 'आपो—हिरण्य—पवमानैः' स्नापयित्वा तत्तन्नाम्नाऽर्चयति ॥ २ ॥

उत्तरेत्यादि। देवं विष्णुं। विष्णुबलिकर्मत्वात् देवं विष्णुमित्युक्तम्। स्नापयित्वा। ततः वस्त्रोत्तरीयोपवीतादीनि दद्यात्।

गृह्यः —

'हृदयादर्कबिंबाद्वा ध्यात्वाऽऽवाह्य सुरूपिणम्।
पीठे वा तंडुले वाऽथ कुशकूर्चे समर्चयेत्' ॥ इति

'अतो देवाद्यैः'—'विष्णोर्नुकं'—'तदस्य प्रियं'—'प्रतद्विष्णुः' 'परो मात्रया'—'विचक्रमे'—'त्रिर्देवः' इति द्वादशाहुतीराज्येन हुत्वा पायसमाज्यसंयुक्तं हविर्देवं निवेद्य द्वादशनामभिः अतो देवाद्यैः विष्णोर्नुकाद्यैः आज्यमिश्रं पायसं जुहुयात् ॥ ३ ॥

**ऋग्यजुस्सामाथर्वभिर्मन्त्रैः वैष्णवैः देवं संस्तूय नमोऽन्तैर्नामभिः प्रणमेत् पायसशेषं पत्नीं प्राशयति ॥ ४ ॥**

**ऋग्यजुस्सामेत्यादि** । मन्त्रैः वैष्णवैः । पुरुषसूक्तस्य चातुर्वेदिकत्वात् पुरुषसूक्तेन च स्तोत्रं कृत्वा 'केशवाय नमः' इत्याद्यैः नमोऽन्तैः द्वादशनामभिः द्वादशकृत्वः प्रणम्य पत्नीञ्च प्रणामं कारयित्वा पूजितौ सुदर्शनपाञ्चजन्यौ तस्मिन्नग्नौ प्रताप्य ताभ्यां पहुतशेषे पायसेंकयित्वा पायसशेषं पत्नीं प्राशयति । सीमन्तेन सहैव कृते विष्णुबलौ संकल्प्य परिस्तीर्य परिषिच्य उत्तरप्रणिधौ 'ओंभूः पुरुष' मित्यादिना आवाह्य निर्वापं कृत्वा आघारौ स्राव्य हुत्वा यथाक्रमं होमः पुरुषादिभ्यः । शेषं पूर्ववत् कुर्यात् ।

**याज्ञवल्क्यः** – 'दौहृदस्याप्रदानेन गर्भो दोषमवाप्नुयात् ।
वैरूप्यं मरणं वापि तस्मात्कार्यं प्रियं स्त्रियाः' ॥ इति

संकोचेनौषधादिक[1]

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ तृतीयप्रश्ने त्रयोदशः खण्डः ।



1. अत्र ग्रन्थपातः । गर्भिण्याः दौहृददानस्यावश्यकतां प्रतिपादयतीक ।

## अथ चतुर्दशः खण्डः

अथ जातकर्म व्याख्यास्यामः ॥ १ ॥

अथेत्यादि । गर्भसंस्कारानन्तरम् ।

अरिष्टागारं यथोक्तं कृत्वा वृषभोषितं तिलसर्षपैः धूपयित्वा तां प्रवेशयेत् ॥ २ ॥

अरिष्टागारमित्यादि । अरिष्टागारम्—अरिष्ट निरसनार्थं निंबादि-विषवृक्षैः यत्क्रियते तदरिष्टागारम् । यथोक्तम् । ज्यौतिषादिषूक्तप्रकारेण कुर्यात् ।

गृह्यः— 'गृहस्य दूरे नैर्ऋत्यां ध्वजाये सूतिकागृहम् ।
निंबैर्वा विषवृक्षैर्वा कुर्याच्छुभदिनर्क्षके' ॥ इति

वास्तुशास्त्रे— 'एन्द्रे तु विश्रमस्थानमाग्नेय्यां धान्यसंग्रहम् ।
याम्ये तु भोजनस्थानं नैर्ऋत्यां सूतिकागृहम् ॥

वारुण्यां विश्रमस्थानं वायव्ये देवतालयम् ।
कौबेरे संञ्चितस्थानमैशान्यां पचनालयम्' ॥ इति

अग्नेय्यां पचनालयमिति शास्त्रान्तरेषु दृश्यते ।

तथा— 'ध्वजे तु विप्रवेश्म स्यात् वृषभे पार्थिव गृहम् ।
सिंहे वैश्यगृहं कुर्यात् गजे शूद्रगृहं भवेत् ॥

गृहसंस्थापनं सूर्ये मेषस्थे शुभदं भवेत् ।
वृषभे धनलाभस्स्यात् मिथुने मरणं भवेत् ॥

कुलीरे पशुवृद्धिस्स्यात् सिंहे भृत्यविवर्धनम् ।
कन्या रोगं तुला सौख्यं वृश्चिके शुभवर्धनम् ॥

कार्मुके च महाव्याधिः मकरे धान्यवर्धनम् ।
कुंभे च रत्नलाभस्स्यात मीने सर्वभयापहम्' ॥ इति

ग्रन्थान्तरे — 'गृहसंस्थापनं चैत्रे धनहानिभयप्रदम् ।
वैशाखे तु शुभं विद्यात् ज्येष्ठे तु मरणं ध्रुवम् ॥

आषाढे गोकुलं हन्ति श्रावणे भृत्यवर्धनम् ।
भाद्रपादे महारोगी कलहश्चाऽऽश्विमासके ॥

कार्तिके धनलाभस्स्यात् मार्गशीर्षे महाभयम् ।
पुष्ये त्वग्निभयं विद्यात् माघे च बहुपुत्रदम् ॥

फाल्गुने रत्नलाभस्स्यात् मासानान्तु शुभाशुभम्' ॥ इति

'मासे वृषभवैशाखे सिंहश्रावण एव वा ।
वृश्चिकोर्जे गृहारंभः श्रेयान् स्थिरयुगान्वयात् ॥

स्वतन्त्रा अपि ते शस्ताः कार्तिके दोष ईरितः ।
कैश्चिद्द्वयस्य चलाकारं तुलाराशिसमन्वयात् ॥

कुम्भमासेऽपि केषाञ्चित् सम्मता गृहसीमयः ।
दोषानुकीर्तनादन्यत् निरुक्तेर्विषयं मतम् ॥

शेषास्सर्वे गृहारंभे वर्ज्या व्याख्यादिदूषिताः ।
नक्षत्राणि शुभान्यूर्ध्वमुखानि शुभदानि च ॥

भौमार्कवर्जमन्ये तु वाराश्शुभफलावहाः ।
शूलवज्रव्यतीपातव्याघातपरिघान्विना ॥

गंडातिगंडविष्कंभवैध्रुतीनितरे शुभाः ।
उत्तरे अयने रिक्ताव्यतिरिक्तदिनेषु च ॥

भानुभौमान्यवारेषु ध्रुवर्क्षे मृदुभेषु च ।
शूलाद्यन्येषु योगेषु गृहाणि प्रविशेन्नरः ॥

मीने कर्किणि वृश्चिके तु शुभदं प्राग्द्वारमायुष्करं
कन्यानक्रवृषेषु दक्षिणमुखं संपत्करं शोभनम् ।

युग्मे तौलिघटेषु पश्चिममुखं द्वारं शुभं सिद्धिदं
सिंहे चाप अजे च तूत्तरमुखं द्वारं प्रवेशे शुभम्' ॥ इति

'यत्कर्तृराशि पुरतो यदि दक्षिणे स्यात्
तत्पुत्रपौत्रधनधान्यसमृद्धिलाभम्' ॥

'प्रवेशे जन्मराशिस्तु मुखं दक्षिणतः शुभम् ।
वामतः पृष्ठतश्चापि कार्यहानिर्धनापहम्' ॥ इति

काश्यपीये — 'कर्तायामाष्टत्रिहतं तद्धस्तेनौजमाहृत्य विस्तारहतायामं त्रिगुणीकृत्य वसुभिर्हृत्वा लब्धेषु ध्वजादिषु शुभयोनावारभेत । ध्वजेऽर्थसिद्धिरजस्रपूजा धूमे हानिर्दुःखं व्याधिभयं सिंहे राजामात्यपुरोहितादीनां पूजा श्वाने कुलानपत्यत्वं वृषे धनधान्यापत्यवृद्धिः खरे दारानाचारत्वं गजेऽर्थसंपत् ध्वांक्षे प्रेष्यप्रवज्यादयः । तस्मात् ध्वजसिंहवृषनागान्यतममाहृत्ये' ति ।

अन्यत्र — 'गृहं षोडशधा कृत्वा मध्ये ब्राह्मचतुष्टयम् ।
करत्यन्तस्त्रितुला सिंहारिष्फाष्टवर्जिताः ॥

ईशान्ये मीनमन्यत्र मेषाद्याश्च प्रदक्षिणम् ।
मेषे वृषभयुग्मे च रिष्फषष्टाष्टवर्जिताः ॥

मेषे मृत्युभयं कुर्यात् वृषभे चार्थनाशनम् ।
मिथुने सूतिकानाशः कर्कटे स्त्रीविवर्धनम् ॥

सिंहकन्या तुलायाञ्च आयुष्यं प्रसवे तथा ।
वृश्चिके धनुनक्रश्च नित्यं रोगभयं भवेत् ॥
कुंभे मीने सुखं दद्यात् इत्येतत् प्रसवे फलम्' ॥ इत्यादि

**वृषभोषितम्** — वृषभैरुषितं निवसितं, यद्वा—शुष्कगोमयशकलानि तिलसर्षपैस्सह धूपयित्वा तामासन्नप्रसवां गर्भिणीं प्रवेशयेत् ।

**तद् ज्ञाः स्त्रियस्तिस्रश्चतस्रो वा परिगृह्यैनां संवाहयेयुः ॥ २ ॥**

**तद् ज्ञाः स्त्रियः** – प्रसवकालकरणीयज्ञाः स्त्रियः। **एनां** – प्रसववेदनापरवशामेनां परिगृह्य स्वकीयेयमिति वा योनिस्पर्शनादिकमंगीकृत्य तच्छरीरं स्वशरीरेषु निधाय किञ्चिच्छयानामिव वहेयुः।

**कुक्षौ शिथिले हृदयबन्धं मुक्त्वा सशूले जघने प्रजायत इत्यवधारयेत् ॥ ५ ॥**

**कुक्षावित्यादि। अवधारयेत्** अधस्ताद्धस्तं प्रसार्य कुमारं धारयेत्।

**गर्भसंगे विशल्यां सुवर्चलां वा योनौ निष्पीडय निदध्यात् ॥ ६**

**गर्भसंग इत्यादि** – गर्भसंगे अन्तर्गर्भे सक्ते सति **विशल्यां** – अग्निशिखां **सुवर्चलां** रुचकाख्यगन्धद्रव्यं वा हस्ताभ्यां मुसलेन वा निष्पीडय योनौ निदध्यात्।

**धूपयेत्पिंडीतकेन अहिकृत्त्या वा योनिम् ॥ ७ ॥**

**धूपयेदित्यादि** – **पिंडीतकेन** – मरुवकेन, **अहिकृत्त्या** – विमुक्तसर्पकञ्चुकेन वा धूपयेत्।

**हिरण्यपुष्प्या मूलं हस्तपादयोरादधाति ॥ ८ ॥**

**हिरण्येत्यादि** – हिरण्यपुष्प्या मूलं पीतपुष्पयूथिकामूलं (पूवुल्मोल्ल)। **हस्तपादयोरादधाति।** तत्पेषयित्वा हस्तयोः पादयोश्च ददाति। इदं **भास्करेणाप्युक्तम्।**

विशाला च विशल्या च विद्धिचन्द्रः वारुणी।

सुवर्चला कपोतवंग पाथश्चरविभक्त सुवर्चला इति वाहटे उक्तम्।

**यदा नासाग्रं दृश्येत्तदाऽस्य ग्रहस्थितिं ज्ञात्वा शुभाशुभं परीक्षेत् ॥ ९ ॥**

**यदेति** – शीर्षोदयस्य प्राधान्यतामवगमयति **यदा नासाग्रमिति।**

उत्तमन्तु जलस्रावं मध्यमं तु शिरोदयम् ।
अधमं भूगतं विद्यादेवं त्रिविधमुच्यते ॥ इति

ज्योतिषे — 'यदा शीर्षोदये लग्ने शुक्रजीवयुतेक्षिते ।
लग्नादादक्षिणे भानौ कोटिदोषं विनश्यति ॥

आदित्यचन्द्रमन्दाश्च पञ्चसप्तवियद्गताः ।
हन्युस्ते तु क्रमात्पत्रमातृपितॄन् न संशयः ॥

उदये भूमिपुत्रस्तु पञ्चमे नहसे (?) धने ।
सूर्यसौरौ यदि स्यातां सद्योमरणसूचकाः' ॥

'सुतमदननवान्त्यरंध्रलग्ने-
प्वशुभयुते मरणाय शीतरश्मिः'

'उदयाद्दशमे मन्दो नाशयेदचिरात्सुतम् ।
अभुक्त (?) मूलजातं वा त्यजेत्तातो न लोकयेत् ॥

तद्वत् सदन्तजातं च पादजातं विकारिणम् ।
शान्तिं वा विधिवत्कुर्यात् तस्य दोषापनुत्तये ॥

स्वोच्चवर्गत्रिवर्गस्थो गुरुः केन्द्रिस्थितो यदि ।
सर्वारिष्टविनाशाय तद्वत्स्यात् भृगुनन्दनः ॥

शुभांशे शुभवर्गे च शुभग्रहनिरीक्षिते ।
आयुष्मांश्च सुखी जातो दोषाल्पे गुणगौरवे' ॥ इत्यादि

सामुद्रिके च — 'पूर्वमायुः परीक्षेत पश्चाल्लक्षणमादिशेत् ।
आयुर्हीने नराणान्तु लक्षणैः किं प्रयोजनम्' ॥

अनामिकापर्वमतिक्रमी भवेत्
कनिष्ठिका वर्षशतं स जीवति ।
समेऽप्यशीतिर्विषमे च सप्ततिः
यवार्धहीनं खलु षाष्टिको भवेत्' ॥

कनिष्ठिकांगुलीमूलात् रेखा गच्छति तर्जनीम् ।
अविच्छिन्ना विवर्णा चेत् शतमायुर्विनिर्दिशेत् ॥

पञ्चदीर्घं चतुर्ह्रस्वं पञ्चसूक्ष्मं षडुन्नतम् ।
सप्तरक्तं त्रिगंभीरं त्रिविस्तीर्णं प्रचक्षते ॥

बाहुनेत्रान्तरश्चैव हनुनासे तथैव च ।
कर्णौ चैव विशेषेण पञ्चदीर्घं प्रशस्यते ॥

ग्रीवा प्रजननं पृष्ठं ह्रस्व (?) जंघे च पूजिते ।
ह्रस्वानि यस्य चत्वारि पूजामाप्नोति नित्यशः ॥

सूक्ष्मान्यंगुलिपर्वाणि केशदन्तनखत्वचः ।
पञ्च सूक्ष्माणि चैतानि ते नरा दीर्घजीविनः ॥

कक्षं कुक्षिश्च वक्षश्च घ्राणं स्कन्धं ललाटकम् ।
पाणिपादतले रक्ते नेत्रान्ते च नखानि च ॥
तालुजिह्वाधरोष्ठाश्च सप्त रक्ताः प्रकीर्तिताः ॥

शिरोविशालो बहुधान्यभोगी
उरोविशालो ह्यपराजितः स्यात् ।
कटीविशालो बहुपुत्रभोगी
विशालपादो व्यसनी भवेत्तु ॥

एकरोमा भवेद्राजा द्विरोमा धनधान्यवान् ।
त्रिरोमा चतूरोमा च अल्पायुर्निर्धनो भवेत्' ॥

'अंगुष्ठमूलप्रभवाश्च रेखाः पुत्रं दिशन्ति प्रमदाश्च तद्वत् ।
अच्छिन्नदीर्घा बृहदायुषस्तु स्वल्पायुषः छिन्नलवप्रमाणाः' ॥

'दीर्घलिंगं दरिद्रं स्यात् ह्रस्वलिंगं महद्धनम् ।
कृशलिंगस्य राज्यं स्यादिति लिंगस्य लक्षणम् ॥

चतुष्कलश्चतुर्लेखश्चतुष्किष्कुश्चतुस्समः ।
चतुर्दशसमद्वन्द्वश्चतुर्दंष्ट्रश्चतुर्गतिः ॥

कलाशब्दस्तत्सूचकरेखापरः ।

नन्दी — 'मूलेऽङ्गुष्ठस्य वेदानां चतस्रस्तिस्र एव वा ।
एका द्वे वा यथायोगं रेखा ध्येया द्विजन्मनाम्' ॥ इति

**चतुर्लेखः** — 'ललाटे यस्य दृश्यन्ते चतुस्त्रिद्व्येकरेखिकाः ।
शतद्वयं शतं षष्टिस्तस्यायुर्विंशतिः स्मृतम् ॥

**चतुष्किष्कुः** — 'किष्कुः चतुर्विंशत्यंगुलिः हस्तः ।
चतुष्किष्कुः — षण्णवत्यंगुलोत्सेध इत्यर्थः' ॥

**चतुस्समः** — 'चत्वारि — भ्रूबाहुवृषणजानूनि चत्वारि समा यस्य सः । यद्वा बाहुजानूरुगंडाः समा यस्य सः ॥

**चतुर्दश समद्वन्द्वः** —

'भ्रुवौ नासापुटे नेत्रे स्कन्धावोष्ठौ च चूचुकौ ।
कूर्परौ मणिबन्धौ च जानुनी वृषणौ कटी ॥
करौ पादौ स्फिजौ यस्य समौ स्यातां स भूपतिः' ॥

**चतुर्दंष्ट्रः** — दंष्ट्राः दन्तविशेषाः । **चतुर्गतिः** — सिंहशार्दूलगजवृषभाणां गतिरिव गतिः यस्य सः ।

'महोष्ठहनुनासश्च पञ्चस्निग्धोऽष्टवंशवान् ।
दशपद्मो दशबृहत्त्रिभिर्व्याप्तो द्विशुक्लवान्' ॥

**ओष्ठस्य महत्त्वं** बन्धुजीवबिंबफलारुणमांसलत्वं, **हनोस्तु** परिपूर्णमांसलत्वं, नासिकाया दीर्घतुंगत्वम् ।

**पञ्चस्निग्धः** — 'चक्षुःस्निग्धेन सौभाग्यं दन्तस्निग्धेन भोजनम् ।
त्वचस्निग्धेन शयनं पादस्निग्धेन वाहनम् ॥
केशस्निग्धेन स्वाराज्य'मिति ॥

'स्निग्धनीलमृदुकुंचितास्तथा मूर्धजास्सुखकराः समं शिरः' ॥

**अष्टवंशवान्** – 'पृष्ठवंशः शरीरञ्च हस्तपादांगुली करौ ।
नासिका चक्षुषी कर्णौ प्रजनो यस्य चायताः' ॥ इति

प्रजननस्यायतत्वमार्जवत्वमभिप्रेतम्—अतोऽविरोधः 'दीर्घलिंगो दरिद्रस्स्या' दित्यनेन। **दशपद्मः** मुखनेत्रास्यतालुजिह्वौष्ठस्तननखाः करौ पादौ च पद्मचिह्निताः। **दशबृहत्** उरोललाटश्रवणग्रीवाबाह्वंसनाभयः पार्श्वपृष्ठस्वराश्चेति विशालाः। ते सुखप्रदाः ।

**त्रिभिर्व्याप्तः** – 'त्रिभिर्व्याप्तिश्च यस्य स्यात् तेजसा यशसा श्रिया' **द्विशुक्लवान्** द्वौ मातृपितृवंशौ यस्य परिशुद्धौ ॥

तथा – अंगुष्ठपर्वमध्ये तु यवो यस्य विराजते ।
उत्पन्नभक्ष्यभोज्यस्तु स नरस्सुखमेधते ॥

मत्स्ये शतं विजानीयान्मकरे तु सहस्रकम् ।
अंकुशं कुंडलं चक्रं यस्य पाणितले भवेत् ॥
तस्य राज्यं विनिर्दिष्टं सामुद्रवचनं यथा ॥ इत्यादि

प्रसंगादिदमुक्तम् । प्रकृतमनुसरामः ।

**यस्मात्तद्गुणान्वितो (तं) वर्धयेत् ॥ ९ ॥**

**यस्मादित्यादि ।** **यस्मात्** – अरिष्टागारकरणादिलक्षणमुक्तं **तस्मात्त**द्गुणान्वितं वर्धयेदित्यर्थः ।

**स्मर्यते च** – शश्वत्पुत्रेण पितरो अत्यायन् बहुलं तमः ।
पिता ऋणाद्विमुच्येत पुत्रस्य मुखदर्शनात् ।
पुत्रेण लोकान् जयति श्रुतिरेषा सनातनी ॥ इति

**श्रुतिश्च** 'यावदेनं प्रजाऽनुगृह्णीते तावदक्षय्यं लोकं जयती'त्यादि। 'ऋणमस्मिन् सन्नयति अमृतत्वञ्च गच्छति' इत्यादि च ।

**जायमाने मातुरुदकुंभं दक्षिणतः शिरोभागे स्थापयेत् ॥ १० ॥**

जायमान इत्यादि । इदं रक्षोहरणार्थम् । 'आपो वै रक्षोघ्नीः' इति श्रुतिः ।

**ततस्तूर्यन्तीं पत्तः निधाय 'यथैव सोमः पवत' इत्युदरमभिमृशेत् ॥ ११ ॥**

ततः इत्यादि । पत्तः—पादप्रदेशे । तूर्यन्तीं पुष्पिकाख्यामोषधिमिति भास्करः । वाद्यविशेषमिति केचित् ।

**जाते कुमारे द्वारग्रामे अश्मनि परशुं तस्मिन् हिरण्यं स्थापयित्वा 'अश्मा भव' इत्यधरमुत्तरं करोति ॥ १२ ॥**

जाते इत्यादि ।

'जाते कुमारे तद्वक्त्रं पिता दृष्ट्वाऽनृणो भवेत् ।
स्नात्वा गोभूहिरण्यादीन् दातुं तत्कालतोऽर्हति' ॥ इति

शंखः — 'कुमारप्रसवे नाभ्यामच्छिन्नायां गुलं तिलान् ।
वस्त्रं हिरण्यं गां धान्यं प्रतिगृह्य प्रदोषभाक्' (?) ॥ इति

व्यासः — 'जातश्राद्धे न दद्यात्तु पक्वान्नं ब्राह्मणेष्वपि ।
यस्माच्चान्द्रायणादेव शुद्धिर्भवति नान्यथा ॥

अच्छिन्ननाभ्यां कर्तव्यं श्राद्धं वै पुत्रजन्मनि ।
आमेन हेम्नाऽऽशौचान्ते अन्नेनैव सुकारयेत् ।
सूतके तु स्वकुल्यानामन्नदोषो न विद्यते' ॥ इति

जैमिनिः — 'यावन्न छिद्यते नालं तावन्नाप्नोति सूतकम् ।
छिन्ने नाले ततः पश्चात् सूतकन्तु विधीयते ॥
दशदानादि दानानि जन्मकाले ददेत्पिता' ॥

इत्यादि वचनैः हिरण्यादिना अभ्युदयं श्राद्धं कृत्वा गोभूहिरण्यादि यथेष्टं दद्यात् । प्रसवकालमाह श्रुतिः । यथा – **छान्दोग्ये** । 'तस्मात्प्रजादशमासे गर्भं भूत्वा एकादशमनुप्रजायन्ते तस्माद्द्वादशं नाभ्यतिहरन्ति' इति ।

**स्मृतिरपि** — 'गर्भाधानर्क्षमारभ्य नक्षत्रे जननं भवेत् ।
नवमे दशमे वापि द्वादशे वापि निश्चितम् ॥

आधानर्क्षं समारभ्य प्रसवो द्वादशे यतः ।
विज्ञाय शुभनक्षत्रं तद्गन्तव्यं विपश्चिता' ॥ इति

**द्वारवामे** – 'अरिष्टागारद्वारस्य वामपार्श्वे उपलिप्ते स्थले अलंकृत्य **तत्राश्मानं** निधाय तदुपरि **परशुं** तदुपरि **हिरण्यं** च निधाय ।

**तस्योपरि 'अंगादंगा' दिति कुमारमेकया स्त्रिया धारयेत्** ॥ १३

**तस्योपरी**त्यादि । तस्योपरि – हिरण्यादेरुपरि । एकया मात्रा अन्यया वा धारयेत् ।

**तमद्भिरभ्युक्ष्य 'तिल देव पद्यस्व' इति सतिलमक्षतं मूर्ध्न्याधाय औपासनमरण्यां निर्हरति** ॥ १४ ॥

**तमि**त्यादि । **औपासनमरण्यां निर्हरति** । स्वकीयमौपासनाग्निं अरण्यां समारोपयेत् ।

**स्मृत्यन्तरे** — 'सूतके मृतके चैव अशक्तौ श्राद्धभोजने ।
प्रवासादिनिमित्तेषु हावयेन्न तु हापयेत्' ॥ इति

ननु — 'संध्यां पञ्चमहायज्ञान् न त्यजेत्स्मार्तकर्म च ।
तन्मध्ये हापयेदेषां दशाहान्ते पुनःक्रिया' ॥

इति **जाबालिस्मरणात्** सूतकादौ सन्ध्यादीनां त्यागस्संभवतीति चेत् न —

'सूतके मृतके चैव सन्ध्याकर्म न सन्त्यजेत् ।
मनसोच्चारयेन्मन्त्रं प्राणायाममृते द्विजः' ॥ इति

पुलस्त्यः — 'सन्ध्यामिष्टिं चरुं होमं यावज्जीवं समाचरेत् ।
न त्यजेत्सूतके वापि त्यजन् गच्छत्यधो द्विजः' ॥ इति

जातूकर्णिश्च — 'सूतके तु समुत्पन्ने स्मार्तं कर्म कथं भवेत् ।
पिंडयज्ञं चरुं होममसगोत्रेण कारयेत्' ॥ इति

संवर्तः — 'दशरात्रेण शुद्धयेत्तु वैश्वदेवविवर्जितः ।
होमस्तत्र तु कर्तव्यः शुष्कान्नेन फलेन वा ।
पञ्चयज्ञविधानन्तु न कुर्यान्मृतिजन्मनोः' ॥

इत्यादिबहुवचनबलात् तत्प्रतिपादितरीत्या तेषां कर्तव्यत्वावगमात् ।

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ तृतीयप्रश्ने चतुर्दशः खण्डः ।



## अथ पञ्चदशः खण्डः

छुल्ल्यां कपालमारोप्य वृषभशकृत्पिण्डैः जातकाग्निं साधयेत् ॥ १

जातकाग्नेरुत्पत्तिप्रकारमाह छुल्ल्यामित्यादिना । जातकाग्न्युत्पत्तौ वृषभशकृत्पिण्डानि मुख्यानि । अथ वा गोमयशकलानि कपाले निधाय अधस्तादग्निं प्रज्वलयेत् सम्यक् तप्ते कपाले तस्मिन् निक्षिप्तेषु तेष्वग्निराविर्भवति स जातकाग्निः ।

**तमेनमुत्तपनीयमित्युदाहरन्ति ॥ २ ॥**

**तमेनमिति** । तं कपालाग्निम् उत्तपनाग्निरिति केचिद्वदन्ति । यद्वा—तमित्यनेन

‘दर्भेष्वग्निं समारोप्य पुनर्दर्भेषु संस्थितः ।
पुनस्तद्वत्तृतीये तु वह्निरुत्तपनः स्मृतः ॥’

इति वृद्धवसिष्ठस्मरणात् दर्भेष्वारोपितोऽग्निः उच्यते । स एवोत्तपनाग्निः ।

**तेनैव धूपं दद्यात् ॥ ३ ॥**

**तेनैवेत्यादि** । पिंडीतकाद्यैः धूपदानम् । अग्न्यन्तरशङ्कापरिहारार्थं तेनैवेत्युक्तम् । अरिष्टागारे धूपं दद्यात् ।

**द्वारस्य दक्षिणतो निधाय अंगारवर्णौ परिस्तीर्य कणसर्षपैः हस्तेन ‘शण्ड रथः’—‘अयश्शण्डो मर्कः’—‘आलिखन्निर्विलिखन्’—‘अर्यम्णः’—‘आन्त्रीमुखः’—‘केशिनीः’—‘एतान् घ्नतैतान्’—‘पूर्व एषां’—‘मिश्रवाससः’—‘नक्तञ्चारिणः’—‘निशीथचारिणी’—‘तासां त्वं’—‘अयन्ते योनिः’—‘मम नाम’ इति व्याहृतीश्च हुत्वा प्रक्षाल्य पाणिमवनीमालभ्य ‘यत्ते सुशीम’ इति मेधायै घृतं करोति ॥ ४ ॥**

**द्वारस्ये**त्यादि। तमग्निं अरिष्टागारस्य दक्षिणपार्श्वे निधाय **कणसर्षपैः**—तण्डुलशकलानि कणान्युच्यन्ते। सर्षपाः प्रसिद्धाः। देवतान्तरपरत्वात् रक्षोहरणार्थत्वाच्च कणसर्षपैरित्युक्तम्। पाणिं दक्षिणपाणिम्। **अवनीं आलभ्य** – अग्नेः पश्चिमतः भूमिं स्पृष्ट्वा।

**वचा पथ्या हिरण्यं मधु सर्पिरिति मेधाजननानि भवन्ति ॥ ५ ॥**

**ब्राह्मीघृतं पयो वचादिकं चामनन्ति ॥ ६ ॥**

**ब्राह्मी**त्यादि। पूर्वोक्तं घृतं करोतीत्युक्तं विशिनष्टि **ब्राह्मीघृत**मिति।

वाहटे — ‘ब्राह्मी मुंडी वचा शुंठी पिप्पली मधुसंयुतम्।
सप्तरात्रप्रयोगेण किन्नरस्वरमुच्यते’ ॥ इत्यादि

**सुवर्णं दर्भेण बद्ध्वा अन्तर्धाय घृतं ‘भूर्ऋचः’ इति प्राङ्मुखं प्राशयति ॥ ७ ॥**

**सुवर्ण**मित्यादि। आस्योपरि धारयन्। केवलघृतं वा। ‘**भूर्ऋच**’ इति चतुर्भिः प्राङ्मुखं प्राशयति। सुवर्णस्पृग्यथा स्यात् तथा कुर्यात्। इति करणसामर्थ्यादेकधा व्याहृत्येति चेत् – न। ऋगादित्वेनोक्तत्वात् चतसृभिः। मन्त्रपाठे पठितत्वाच्च।

**नित्यं सायं प्रातरेवं अहरहर्हुत्वा मेधायै पाययेत् ॥ ८ ॥**

**उष्णशीताभिरद्भिरेनं स्नापयित्वा ‘क्षेत्रियै त्वा’ इति नीत्वा ‘या दैवी’ रिति मातुरंके स्थापयित्वा ‘तासां त्वा’ इति स्तनौ प्रक्षाल्य ‘अयं कुमार’ इति दक्षिणादि पाययेत् ॥ ९ ॥**

**उष्णशीताभि**रित्यादि। पित्रा मातृकः कार्यः। ‘अर्धो वा एष आत्मा यत्पत्नी’ ति **श्रुतेः**।

**‘आपो हविष्षु’ इति न्यस्तमुदकुंभं शोधयित्वा नित्यं सायं प्रातरादधाति ॥ १० ॥**

**आप** इत्यादि । न्यस्तोदकुंभे जलं सायं प्रातर्विसृज्य नूतनजलेनापूर्य 'आपो हविष्ष्वि'ति पूर्ववत् स्थापयेत् मन्त्रलिंगबलात् । स्थापनस्याप्ययमेव मन्त्रः । अत्र **बोधायनः** । 'ब्रह्म जज्ञान'मित्यथोदकुंभमुत्थापयति 'भूर्भुवस्सुव' रित्यथैनमप्सु विसर्जयति 'समुद्रं वः प्रहिणोम्यक्षिता स्वां योनि' मिति (?) ।

**तथैव घृतप्राशनान्तं कर्म कृत्वा स्नात्वा औपासननिर्हरणादिकं करोतीत्यके ॥ ११ ॥**

**तथेत्यादि** । औपासननिर्हरणादिकं जातकर्म होमानन्तरमिति केचित् ।

'गर्भाधानं पुंसवनं सीमन्तं जातकर्म च ।
नामकर्म च तत्काले विहितत्वात्तदा चरेत्' ॥ इति

**जाबालिः** — 'जन्मनोऽनन्तरं कार्यं जातकर्म यथाविधि ।
दैवादतीतकालश्चेत् अतीते सूतके भवेत्' ॥ इति

**तृतीये पञ्चमे सप्तमे नवमे चाह्नि शयनादिकं शोधयति ॥ १२**

**तृतीय** इत्यादि । अनेनैव वस्त्राद्यास्तरणादिशोधनं व्याख्यातम् । **अह्नि** इत्युक्तत्वात्—न रात्रौ । 'कुमारे जाते' इत्युक्तत्वात् न स्त्रीणामेष क्रमः ।

**मनुः** — 'प्राङ्नामकरणात्पुंसां जातकर्म विधीयते' ॥ इति

**शंखश्च** — 'पुत्रे जाते च मधुर्युपविष्टमधुसर्पिर्भिः मन्त्रितं त्रिवृत्प्राशनं सुवर्णान्तरितयानामिकांगुल्या मेधामिके ब्राह्मणस्य करो'तीति (?) ।

सप्तमे दिने विशेषः — **नारदः**

'जननात्सप्तमे वाऽह्नि मृत्युरायाति हिंसकः ।
तद्दिने चैव रक्षैवं कर्तव्याऽऽयुर्विवृद्धये ॥

सायाह्ने पूजयित्वा तु विघ्नेशं बहुभक्षणैः ।
यमं मुसलहस्तञ्च ताडयन्तं कवाटके ॥

प्रोत्सार्य वैदिकैर्मन्त्रैः तालपत्रैस्सकर्णकैः ।
ग्रामाद्बहिर्विक्षिप्याग्निं गोघण्टाभिस्सुशब्दयेत्' ॥ इति

अंगिराः — 'सूतिकावासनिलयात् जन्मदा नाम देवता ।
तस्यायोगनिमित्तार्था शुद्धिर्धामनि कीर्त्यते' ॥ इति

'षष्ठी निशा तु विज्ञेया जन्मनोऽत्र विशेषतः ।
रात्रौ जागरणं कुर्यात् जन्मदानां तदा बलम् ॥

पुरुषाश्शस्त्रहस्तैश्च नृत्तगीतैश्च योषितः ।
रात्रौ जागरणं कुर्युः दशम्यां तत्र सूतिकाम्' ॥ इति

'जन्मतः पञ्चमं तारं याते चन्द्रे शिशुं पिता ।
भूषयेद्भूषणैश्चैव पञ्चायुधसमन्वितैः' ॥ इति

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने तात्पर्यचिन्तामणौ तृतीयप्रश्ने पञ्चदशः खण्डः ।



## अथ षोडशः खण्डः

अथ वास्तुसवनं व्याख्यास्यामः ॥ १ ॥

अथेत्यादि । अथ आशौचापगमनानन्तरम्, कर्तव्यमिति शेषः यद्वा—अस्पृश्यस्पर्शदोषापनोदनानन्तरम् । वास्तुसवनं वास्तुपुरुषमुद्दिश्य क्रियमाणं यज्ञम् । सर्वशुद्धयर्थं वास्तुसवनम् ।

'प्रधानो वास्तुपुरुषः भूदेवी च तथा स्मृता ।
वास्तुसवनं भूमियज्ञमित्येकार्थौ बुधा विदुः' ॥ इति

व्याख्यास्यामः वास्तुपुरुषपूजादिकं संकोचेन अन्यद्विस्तरेणेति भावः ।

**नवे वास्तुन्युषितेऽपि सूतकप्रेतकयोः वापयित्वा मृण्मयानि भाण्डानि पुराणानि त्यक्त्वा नवानि परिगृह्य अन्यान् परिच्छदान् यथोक्तं शोधयित्वा भूमियज्ञेनेष्ट्वा निवसेत् ॥ २ ॥**

नवे वास्तुनीत्यादि । नवे—नूतनगृहे । उषिते आशौचादिदोषदुष्टे चिरोषितेऽपि गृहे । सूतकप्रेतकयोर्वापयित्वा । सूतकप्रेतकयोरिति सामान्येनोक्तम् । स्मृतिषु विशेषोऽवगन्तव्यः ।

'सूतके मृतके चैव वपनं दशमेऽहनि ।
वपनं यो न कुरुते सूतके दशमेऽहनि ॥

स्वर्गस्थाः पितरस्तस्य पतन्ति नरके ध्रुवम् ।
भार्ये यस्य तु गर्भिण्यौ एका भार्या प्रसूतिका ॥

वपनं नैव कुर्वीत जातकर्मादि कारयेत् ।
वपनं यस्तु कुरुते सूतके दशमेऽहनि ॥

स्वर्गस्थाः पितरस्तस्य च्यवन्ते नात्र संशयः ।
उदन्वदम्भसि स्नानं नखश्मश्रुनिकृन्तनम् ॥

अन्तर्वत्न्याः पतिः कुर्वन् व्रजेत्स नरकं ध्रुवम् ।
मृतौ पित्रोर्द्विजः कुर्यात् गर्भवानपि वापनम् ॥

पश्चात्प्रसूतौ पत्न्याश्च तच्छेषं केशधारणम् ।
मातापित्रोर्मृताब्दे तु वपनं नैव कारयेत् ॥
पश्चात् प्रसूतौ पत्न्याश्च तत्रापि दशमेऽहनि' ॥

'गयायां भास्करक्षेत्रे मातापित्रोर्गुरोर्मृतौ ।
आधाने सोमयागे च वपनं षट्सु वै स्मृतम्' ॥

चौलाद्विवाहात् षण्मासं क्षौरकर्म न कारयेत् ।
तत्कर्म जन्मनक्षत्रे षोडशाब्देऽपि नेष्यते ॥

'षष्ठाब्दे षोडशाब्दे च विवाहाब्दे तथैव च ।
अन्तर्वत्न्याश्च जायायां क्षौरकर्म विवर्जयेत्' ॥

मातापितृपितृव्याणां मातुलाग्रजयोर्मृतौ ।
श्वशुराचार्ययोरेषां पत्नीनाञ्च पितृष्वसुः ॥

मातृष्वसुः भगिन्याश्च गर्भवानपि वापयेत् ।
ज्येष्ठस्य चानपत्यस्य मातुलस्यासुतस्य च ॥

अपुत्रस्य पितृव्यस्य श्वशुरस्याप्यसन्ततेः ।
भ्रूवर्जं कोष्ठलोमानि वर्जयित्वा शिखामपि ॥

केशांस्तु वापयेत् पित्रोर्मरणे गर्भवानपि ।
मृतावपि कनिष्ठानां वपनं श्रुतिचोदितम् ॥
मृतावनुपनीतानां संस्कर्ता न कदाचन' ॥

एतानि वचनानि मातृपितृदीक्षासहितस्य गर्भवतो ब्रह्मचारिणः अनासन्नस्य च विषये न प्रभवन्ति ।

'अन्तर्वताऽपि कर्तव्यं पित्रोर्वपनमेव च ।
अन्यथा वपनं कुर्याद्दहत्यासप्तमं कुलम् ॥

मातामह्यां पितामह्यां मातुले पूर्वजे मृते ।
श्वश्रूश्वशुरपत्नीषु गर्भवानपि वापयेत् ॥
व्रती च न वपेत्पित्रोर्वपेत्कर्ताप्यगोचरः' ॥ इति

'मातुर्दीक्षान्तरे मध्ये पिता मरणमाप्नुयात् ।
दहनादिक्रियां कुर्यात् वपनं नैव कारयेत्' ॥

इतीदमकृतसपिंडीकरणविषयम् । 'सपिंडीकरणान्तं वा चरेदेतत्पितृव्रत'मिति वचनात् ।

किञ्च । 'कृते सपिंडीकरणे च पित्रोः
न ब्रह्मचर्यं परिरक्षणीयम् ।
तद्रक्षणञ्चापि महत्फलं स्यात्
निर्वर्तने न स्खलनेऽपि दोषः' ॥ इति

'षण्मासान् वर्जयेत् क्षौरं तैलतांबूलयोषितः ।
ज्येष्ठादीनां मृतिप्राप्तौ मातापित्रोस्तु वत्सरम् ॥

प्रमीतौ पितरौ यस्य देहस्तस्याशुचिर्भवेत् ।
न दैवं नापि पित्र्यञ्च यावत्पूर्णो न वत्सरः ॥

स्नानञ्चैव महादानं स्वाध्यायञ्चाग्निपूजनम् ।
प्रथमेऽब्दे न कुर्वीत महागुरुनिपातने ॥

कृते सपिंडीकरणे न पित्रोर्ब्रह्मचारिणः ।
'अनुप्तकेशो यः पूर्वं स द्वितीयतृययोः ॥

पञ्चमे सप्तमे वाऽह्नि दशमे वापि वापयेत्' ।
श्वशूश्वशुरनाशे तु पूर्वं पत्नी मृता यदि ॥

आशौचं दिनमात्रन्तु वपनं नैव कारयेत्' ।
'दुष्कृतं हि मनुष्याणां केशमाश्रित्य तिष्ठति ॥

तस्मात्सर्वप्रयत्नेन सर्वतीर्थेषु वापयेत्' ॥ इति

गृह्यः— 'सूतिका संगवादूर्ध्वं मुद्गपिष्टादिलेपनैः ।
शीतोष्णाभिः स्नापयेत्तां बहुशश्चान्यवाससः' ॥ इति

**मृण्मयानि पुराणानि भाण्डानि त्यक्त्वा नवानि परिगृह्य** 'अत्यन्तोपहतानि नवान्यपि परित्येजेदित्यर्थः । **अन्यान् परिच्छदान्**—रत्नसौवर्णादीन् **यथोक्तं** । धर्मोक्तप्रकारेण शोधयित्वा यथा—'रत्नसौवर्णरजताश्ममयान्यद्भिः शोधयति अग्नौ वा स्पर्शयेत् । ताम्रत्रपुसीसायसाद्यान्याम्लवारिभिः दारुजातानि दन्तजातान्यत्यन्तोपहतानि तक्षयेत्, अल्पोपहतानि धावयेत् । यज्ञपात्राणि दक्षिणहस्तेन मार्जयेत् उपहतानि क्षालयेत् । चर्ममय संहितानि वस्त्राणि शाकमूलफलानि च प्रोक्षयति । उपहतानि क्षालयेत् । घृतादिद्रवद्रव्याण्युत्पूय दर्भोल्कं दर्शयति । कौशेयान्यरुष्कैः—(निधूननाद्यैरित्यर्थः) अंशुपट्टानि श्रीफलैस्सवारिभिः शंखद्रव्यगोश्रृंगाणि सर्षपैः सवारिभिः मृण्मयानि पुनर्दाहेन । (अत्यन्तोपहतानीत्यर्थः) गृहं मार्जनोपलेपनाप्सेकैः भूमिं खननादन्यमृत्पूरणात् गोवासनामार्जनाद्यैश्च शोधयेत् । गोतृप्तिकरं भूगतं तोयं दोषविहीनं सुपूतम् । यावता गोतृप्तिः तावन्मात्रमित्यर्थः । भूगतमित्यनेन वर्षधारादीनां निषेधः । 'दिव्या आपो अशान्ता' इत्यादि श्रुतेः । (सुपूतम्) वाक्शस्तं वारिर्निर्णिक्तमदृष्टम् । वाक् शस्तं-वाचा यत् शस्यते तत् सुतरां पवित्रम् । वारिनिर्णिक्तमदृष्टम् । योषिदास्यं कारुहस्तः प्रसारितपण्यञ्च सर्वदा शुद्धम् । शकुन्युच्छिष्टं फलमनिन्द्यम् । मशकमक्षिकादिलीनं तद्विप्रुषश्च न दूष्याणि । वाग्वग्निसूर्यरश्मिभिः स्पृष्टञ्च मेध्यम् । आतुरे बाले पचनालये च शौचं न विचारणीयम् । यथाशक्तिस्यात्' इति । अत्र **बोधायनः** 'तैजसानान्तूच्छिष्टानां गोशकृन्मृद्भस्मभिः परिमार्जनमन्यतमेन वा । ताम्ररजतसुवर्णानां तच्छुद्ध्यैव । मृण्मयानांमन्त्राणां(?) दहनं दारवानां तक्षणं वैणवानां गोमयेन फलमयानां गोवालरज्ज्वा कृष्णाजिनानां बिल्वतण्डुलैः कुतपानामरिष्टैरूर्णानामादित्येन क्षौमाणां गौरसर्षपकल्केन मृदा चेलानां चेलवच्चर्मणां चेलवदुपलमणीनां दारुवदस्थीनां क्षौमवत् शंखशृंगशुक्तिदन्तानाम् इत्यादि ।

स्मृत्यन्तरे — कालोऽग्निर्मनसः शुद्धिरुदकाद्युपलेपनम् ।

'अविज्ञातञ्च भूतानां षड्विधं शौचमुच्यते ।
नित्यं शुद्धः कारुहस्तः पण्यं यच्च प्रसारितम् ॥

ब्रह्मचारिगतं भैक्ष्यं नित्यं मेध्यमिति श्रुतिः ।
वत्सः प्रस्रवणे मेध्यः शकुनिः फलशातने ॥

स्त्रियश्च रतिसंसर्गे श्वा मृगग्रहणे शुचिः ।
आकराश्शुचयस्सर्वे वर्जयित्वा सुधाकरम् ॥

अदूष्यास्सततं धारा वातोद्धूताश्च रेणवः ।
अमेध्येषु च ये वृक्षा उप्याः पुष्पफलोपगाः ॥

तेषामपि न दुष्यन्ति पुष्पाणि च फलानि च ।
चैत्यवृक्षं चितिं यूपं चण्डालं वेदविक्रयम् ॥

एतानि ब्राह्मणः स्पृष्ट्वा सचेलो जलमाविशेत् ।
आत्मशय्यासनं वस्त्रं जायापत्यं कमंडलुः ॥

आत्मनश्शुचिरेतानि परेषामशुचिर्भवेत् ।
आसनं शयनं धान्यं नावं पथि तृणानि च ॥

चण्डालपतितस्पृष्टं मारुतेन विशुद्ध्यति ।
दिवादित्यैस्तु संस्पृष्टं धान्यं मूलं फलादि वा ॥

प्रक्षालनेन शुद्ध्येत्तु परित्यागान्महीमयम् ।
खलक्षेत्रेषु यद्धान्यं कूपवापीषु यज्जलम् ॥
अभोज्यादपि तद्भोज्यं यच्च गोषु गतं पयः' ॥

मनुः — 'त्रीणि देवाः पवित्राणि ब्राह्मणानामकल्पयन् ।
अदृष्टमद्भिर्निर्णिक्तं यच्च वाचा प्रशस्यते ॥

आपः शुद्धा भूमिगता वैतृष्ण्य यासु गोर्भवेत् ।
अव्याप्ताश्चेदमेध्येन गन्धवर्णरसान्विताः' ॥ इति

श्रुतिः — 'शुचिकामा हि देवाः श्रद्दधाना हविर्जुषन्ति' ॥ इति

आदिपुराणे — 'कांस्यायस्ताम्ररौप्याणि त्रपुसीसायसानि च ।
प्रक्षेप्तव्यानि तान्यग्नौ यथावद्दसहोदरः (?) ॥ इति

शंखः — 'सूतिकोच्छिष्टभाण्डस्य सुरामद्यहतस्य च ।
त्रिस्सप्तमार्जनाच्छुद्धिः न तु कांस्यस्य वा पुनः' ॥

देवरातः — 'तेजसां विण्मूत्ररेतोऽसृक्कुणपादिभिः चण्डालसूतिकोदक्यापतितादिभिश्चिरकालमुपहतानामग्निसंयोगेन द्रवीकरणं स्वल्पकालोपहतानां परिलेखनं, ततोऽप्यल्पकालोपहतानां परितापनं स्पर्शमकारणे ? एकविंशतिकृत्वो मार्जनञ्च प्रक्षालन' मिति ।

'हेतुताम्रञ्च रजतं कांस्यायस्त्रपुसीसकाः ।
एते च तैजसाः प्रोक्ता यतस्ते तेजसोद्भवाः' ॥ इति

कपिलः — 'रजस्वलाभुक्तकांस्यं चतुर्थेऽहनि भस्मना ।
त्रिस्सप्तकृत्वस्संमृज्य गोमूत्राग्नेस्तु धारणात् ॥

लेखनेन च शुद्धिस्स्यान्निरपेक्षमिति श्रुतिः ।
पूयविण्मूत्रमांसासृक्सुराभिश्शुक्रशोणितैः ।
मृद्दारूपलपात्राणि संस्पृष्टानि परित्यजेत्' ॥ इति

मनुः — 'अद्भिस्तु प्रोक्षणं शौचं बहूनां धान्यवाससाम् ।
प्रक्षालनेन त्वल्पानां अद्भिश्शौचं विधीयते' ॥ इति

देवलः — 'और्णकौशेयकुतपपट्टक्षौमदुकूलजाः ।
अल्पशौचा भवन्त्येते शोषणप्रोक्षणादिभिः ।
प्रोक्षणं संहतानान्तु बहूनां धान्यवाससाम्' ॥

इदमस्पृष्टविषयम् ।

'दिवाकीर्त्यादिसंस्पृष्टं धान्यं वस्त्रादि वा तथा ।
प्रक्षालनेन शुद्ध्येत परित्यागान्महीमयम् ।
शयनासनयानानां सहतं शौचमिष्यते ।' ॥ इति

यानं शिबिकोपशय्यादेः उपलक्षणम् ।

'द्रोणाल्पं क्षालयेद्धान्यं अधिकं प्रोक्षणात् शुचिः ।
तंडुलस्याप्येवमेव प्रस्थादर्वाक् परित्यजेत् ' ॥ इति

सुमन्तुः — 'चतुर्भिः कुडुबैः प्रस्थं तैश्चतुर्भिः तथाऽऽढकम् ।
आढकानां चतुर्द्रोणं तैश्चतुर्भिश्च खारिका ॥

एतान्यपि च चित्राणि कौसुमानि यथाक्रमम् ।
विंशत्येकादश त्रीणि सुबहूनि स्मृता पृथक् (?) ॥

मनुः — 'चेलवच्चर्मणां शुद्धिः वैदलानां तथैव च ।
शाकमूलफलानाञ्च धान्यवच्छुद्धिरिष्यते ' ॥

'उदुंबरवटाश्वत्थप्लक्षजंबूत्वचस्तथा ।
भस्मना च मृदा चैव त्रिफलैः चन्द्रतिश्शुचिः (?) ॥

कौशेयाविकयोरूषैः कुतपानामरिष्टकैः ।
श्रीफलैरंशुपट्टानां क्षौमाणां गौरसर्षपैः ॥

क्षौमवत् शंखशृंगाणामस्थिदन्तमयस्य च ।
शुद्धिर्विजानता कार्या गोमूत्रेणोदकेन च ॥

प्रोक्षणात्तृणकाष्ठञ्च पलालञ्चैव शुध्यति ।
मार्जनोपांजनैर्वेश्म पुनः पाकेन मृन्मयम् ' ॥ इति

अपरार्के — 'चण्डालादिभिरालब्धं तृणं काष्ठं क्षितिस्थितम् ।
जलार्कदर्शनाच्छुद्धं निशि च प्रोक्षणेन तु ॥

शिलाकाष्ठेऽतिविस्तीर्णे स्थित्वाप्यशुचिना सह ।
न भवेत्स तु च स्पृष्टो (?) कटप्रस्तरणेषु च ॥ इति

शातातपः — 'मार्जारमूषिकैर्जग्धं पयो दधि घृतं सकृत् ।
उद्धृत्यैव तु तन्मात्रं शेषं भोज्यं प्रकीर्तितम्' ॥ इति

पराशरः — 'बालैर्नकुलमार्जारैरन्नादेरशितं यदि ।
चेल्दर्भोदकैः (?) प्रोक्ष्य भोज्यं भवति तत् क्षणात्' ॥ इति

अंगिराः — 'आमं मांसं घृतं क्षौद्रं स्नेहश्च फलसंभवम् ।
अन्त्यभाण्डस्थिता ह्येते निष्क्रान्ताः शुचयो मताः' ॥

देवलः — 'द्रोणधान्यकपक्वान्नजलस्य च गुडस्य च ।
नाना शुद्धिः परित्यागात् चण्डालस्पर्शने भवेत्' ॥ इति

श्रीसूत्रम् — 'विण्मूत्राभ्यां बह्वपो न दूष्याः । परस्याचामतस्तोयविन्दुभिः भूमौ निपत्योद्गतैः पादस्पृष्टैराचामयन्नाशुद्धिः स्यात्' । इति

अत्र बोधायनः — 'स्पृशन्ति बिंदवः पादौ य आचामयतः पुरा ।
न तैरुच्छिष्टभावः स्यात् तुल्यास्ते भूमिगैस्सह' ॥ इति

**भूमियज्ञेनेष्ट्वा निवसेत्** । भूमियज्ञप्रकरणत्वात् देवयजनादियोग्यतासंपादनार्थं पूर्वसंस्कारभूता वास्तुपुरुषलक्षणं वास्तु परीक्षा चोच्यते ॥ **काश्यपीये** । 'अथ पूर्वसंस्कारम् । वास्तुपुरुषं ज्ञात्वा मर्माणि परिहृत्य अन्यत्र पूर्वं खनित्वा शल्यान्यपोह्यारभेत । द्वौ वास्तुपुरुषावचलात्मकश्चलात्मकश्चेति । अचलस्तत्र भूमिष्ठः प्राक्छिराः भूमिमग्नांगोऽधोमुखः । तस्योपरि परः सवनत्रयार्धरात्रेषु उदक् प्राग्याम्यशिरा भूत्वा उत्तानाननो नित्यं चरति । अथवा मध्याह्ने प्राच्यां सायाह्ने दक्षिणतो निश्यर्धे पश्चिमे प्रातरुत्तरश्शिरस्तस्येति केचित् । तस्मात्तदूरुबाहुहृदयप्रदेशेषु गर्भालयमन्यत्र सन्धिस्थानानि सर्वाणि अन्यदेवाधिष्ठितं (छित) देशं कुर्यात् । संधिस्थानानि सर्वाणि गृहं प्रति वर्जयेत् । मेढ्रनाभिसंधीन् परिहृत्योर्ध्वोदरे प्रासादं कारयेत् । कोर्परजंघाहस्तनखकर्णाक्षिमर्माणि सर्वाणि परिहृत्य यज्ञे प्रधानाग्निं स्थापयेत् । एवं ज्ञात्वोद्दिश्य सर्वसमं चतुरश्रमाहरेत । अभ्यर्धायामं भौतिकं द्विदीर्घायामं राक्षसं किञ्चिद्धीनमासुरं किञ्चिद्दीर्घं पैशाचमिति । अतः सर्वं समचतुरश्रं मण्डलं वा दण्डेन समुपकल्प्य खानयेत् ।

खननात्पूर्वं भामिनीं कर्तारं वान्यं तलैशान्यां स्थितं 'वदस्व' इत्युक्त्वा तदुक्तेनाक्षरेणोपलक्षयेत्। तत्र अकचटतपयशवर्गैः रक्तकृष्णश्वेतनीलचित्रश्यामासितकपिलवर्णाः लोहांगारभसितेष्टकाद्रुमसंचयोपलरत्नसुवर्णानि तत्रेति ज्ञात्वा स्पृष्टांगैरपि लक्षयेत्। शिरः कंडूयने पुरुषार्धप्रमाणेऽस्थिशल्यं मुखे हस्तद्वये दारुशल्यं ग्रीवायां हस्तत्रये कालशृंखलं ऊर्वोः हस्तद्वये सार्धे पश्वाद्यवयवं हस्तयोः जानुमात्रात् खट्वापादं बाह्वोर्हस्तत्रये शलाकां दक्षिणहस्ते वितस्तिमात्रे हस्त्यवयवं कर्णिकार्धादधः पादे अष्टांगुले चर्मजं अंगुष्ठे खेटकावयवं सक्थिन लोहपात्रं (गैरिकं लौहपात्रं) कनिष्ठिकायामष्टांगुले कांस्यमन्येषु हिंगुलिकमिति। यदंगं स्पृष्टं तस्यांगे वास्तुपुरुषस्य सशल्यम् (?)। विधूनन (सूचन) वीक्षणाद्यसकृद्यत्र तत्रास्थिशल्यमिति ज्ञात्वा शल्यदर्शनात् तत्सर्वं खानयेत्। खननकाले कृमिकीटपतंगसंकुले सर्पमूषिकवृश्चिकादिदर्शने खनकांगपतने भ्रमणे खननभेदे त्सरुभंगे चाद्भुतदर्शने भयातंकमरणादयो भवन्ति' इति। **खिले** च वास्तुहोमं समुद्दिश्य वास्तुपुरुषस्वरूपादिकमुच्यते।

'कल्पयेद्वास्तुपुरुषं दशतालेन मानतः।
आलये गोपुरे चैव मण्डपे चांकणेऽपि वा॥
यावत्तोरणमुद्दिष्टं तावत्तस्याङ्गमुच्यते। इत्यारभ्य

'वास्तुपुरुषञ्च तन्मानं कल्पयित्वा विचक्षणः।
कुंडं श्रामणकं तत्र पूर्वोक्तेन विधानतः॥

कुक्षिप्रदेशे कुर्वीत धनधान्यविवृद्धये।
बाहुप्रदेशे कुर्वीत पुत्रपौत्राभिवृद्धये॥
नाभेरधः प्रदेशे तु वास्तुकुण्डं न कारयेत्'॥ इति

अत्र 'दशतालेन मानतः' इति वचनात् देवयजनार्थं गृहीतभूमिं दशधा विभज्य अधःकायार्थमर्धं विसृज्य ऊर्ध्वेऽग्निकुंडानि कल्पयेत्।

'द्वौ वास्तुपुरुषौ ज्ञेयौ चलाचलविभागतः।
प्राक्छिरोऽधोमुखो मुख्यो भूमिस्थस्स तु सर्वदा॥

स स्थाणू रुद्रदेहात्मा शर्व इत्यभिधीयते ।
तस्योपरि च यश्शेते चलस्सर्वप्रभुर्वरः ॥

मध्याह्ने प्राक्शिराश्शेते स सायं दक्षिणामुखः ।
निश्यर्धे पश्चिमशिराः प्रातरुत्तरदिक्छिराः ॥

सदाऽम्बरमुखो भूत्वा संक्रमेत्संक्रमात्मकः ।
एवं संकल्प्य मनसा वास्तुहोमं समाचरेत्' ॥

इत्यादिवचनैः प्रातःकाले वास्तुहोमकुंडं कर्तव्यमिति ज्ञायते । आवसथ्यञ्च मध्याह्ने सभ्याहवनीयौ पौंडरीकञ्च । 'पितॄणामग्नि' मिति श्रुतेः 'अपराह्णे पितॄणा' मिति वचनाच्च अपराह्णेऽन्वाहार्यपचनः कार्यः । उदयात्पूर्वं गार्हपत्यम् । दिगन्तरे वास्तुहोमश्चेत्प्रायश्चित्तं विधीयते । यथा —

**काश्यपीये** । 'ऐन्द्रे वास्त्वग्निसंस्थानं कुर्यात् । ऐन्द्रं वैष्णवं हुत्वा विप्रदशकं भोजयेत् । एवमेवान्यदिक्स्थाने तत्तद्दिग्देवदेवत्यं वैष्णवञ्च हुत्वा होममारभेत । गर्भालये विमाने वा निम्ने बिले कपाले छुल्ल्यां वा वास्तुहोमं यदि कुर्यात् आग्नेयं वैष्णवं प्राजापत्यं व्याहृत्यन्तं हुत्वा पुनस्सम्यगाचरेदि' ति । अतस्तत्र तत्तत्काले कर्तव्यम्, अन्यथा विरोधः । मुख्यत्वेन **प्रधानाग्निपरतया काश्यपेनोक्तम्** । सर्वाग्निपरत्वेन **भृग्वादिभिरुक्तम्** ।

**यस्माद्वास्तु सवनेन शुद्धिर्वस्तूनाम् ॥ ३ ॥**

**यस्मात्** वास्तुपुरुषपूजापर्यग्निपुण्याहादिशुद्धिबाहुल्यात् **वास्तुसवनेन** होमेन सर्वत्र**वस्तूनां शुद्धिः** । अत्र वस्तुशब्दो देवबिम्बादिसर्ववस्तुपरः । तस्माद्वास्तुयज्ञः कर्तव्यः ।

अथ वास्तुहोमार्थकुंडविधिः ।

**अर्चनाधिकारे** — '**नाभेरधस्तात्सर्वत्र अग्निकुंडं न कारयेत्**' ॥ इत्युक्त्वा

'एवं चलात्मके रूपे तत्तत्कालञ्च रूपितम् ।
ऊर्ध्वभागे तथा कुर्यात् मृद्भिर्वा सिकतामयम् ॥

द्वादशांगुलमुत्सेधं द्वात्रिंशद्विस्तरायतम् ।
चतुरश्रं समं कुर्यान्मध्ये निम्नञ्च कारयेत् ॥
तावद्गाढञ्च तस्यैव द्वादशांगुलमुच्यते ।
तस्मादधो बहिर्वेदिः द्विचत्वारिंशदंगुलैः ॥
उत्सेधं भागमुद्दिष्टमूर्ध्ववेद्या विधानतः ।
मध्यवेद्यास्तु विस्तारं पचांगुलमिति स्मृतम् ॥
तस्मादधो बहिर्वेदिः पञ्चाशत्समुदाहृतम् ।
उत्सेधं भागमुद्दिष्टं विस्तारन्तु द्विगोलकम् ॥
तस्य दक्षिणभागे तु ब्रह्मस्थानं प्रकल्पयेत् ।
षोडशांगुलमायाममुत्सेधं चतुरंगुलम् ॥
तस्य पश्चिमभागे तु पितृस्थानं प्रकल्पयेत् ।
षोडशांगुलमायाममुन्नतं गोलकं भवेत् ॥
शूर्पाकारञ्च कृत्वा तु दक्षिणग्रं प्रकल्पयेत् ।
उत्तरे सोममुद्दिश्य षोडशांगुलमायतम् ॥
भागोन्नतं प्रकुर्वीत समवृत्तं विचक्षणः ।
वेदिप्रमाणं कर्तव्यं सीवनिक्षितक्षचन्द्रवत् (2) ॥
एवं श्रामणकं कृत्वा पश्चादग्निञ्च साधयेत् ' ॥ इति

' कुक्षिप्रदेशे कुर्वीत ' इत्यादिकमत्रिणाप्युक्तम् ।

**आघारो वास्तुसवनस्य ॥ ४ ॥**

आघारानन्तरमैशान्यां

' निष्कपञ्चकसौवर्णैः त्रिभिर्वा वास्तुपूरुषम् ।
भूमिदेवीं तथा कृत्वा स्थंडिलोपरि विन्यसेत् ॥
निष्कसौवर्णतः कृत्वा अर्चयेत्तु यथाविधि ' ॥

इति वचनात् सौवर्णप्रतिमायां कूर्चे वऽऽवाह्याभ्यर्च्य अग्निं परिषिच्य ।

'वास्तोष्पते' – 'वास्तोष्पते शग्मया' इति द्वाभ्यां यजेत ॥ ५

'भूमियज्ञाय स्वाहा' – 'यज्ञदैवतं प्रसीदयैं स्वाहा' इति द्वौ भूमियज्ञदेवत्यौ ॥ ६ ॥

'मेदिनी देवी – 'देवी हिरण्यगर्भिणी – 'समुद्रवती सावित्री – 'शृंगे शृंगे – 'वायुपरी जलशयनी' इति पञ्चभूमिदेवत्याः.. ऽथाहुतीर्हुत्वा पुण्याहम् ॥ ७ ॥

'अहमग्ने(अ)ग्निं गृह्णा' मीति अग्निष्ठाद्दर्भपूलेन अग्निं गृहीत्वा प्रथमादैन्द्रात् भुवंगादारभ्य वास्तुनः कुडयमूलात् बहिरन्तश्च वामं परीत्य आ ब्रह्मस्थानात् पर्यग्नि कारयित्वा अपरद्वारेण विसृजेत् ॥ ८ ॥

अहमित्यादि – गृह्यः – 'अहमग्ने' रिति हुनेत्तदग्नावुद्यताहुतिम्'। इति अग्निष्ठाद्दर्भपूलेन-ग्रथितदर्भमुष्टिना। भूवंगात्। द्वारोर्ध्वशाखाधारभूतदारुर्भुवंगः। तदारभ्य ऐन्द्रादिसौम्यान्तं वास्तुनः कुड्यमूलादारभ्याग्रपर्यन्तं बहिरन्तश्च वामं – मनोरमं यथा भवति तथा परीत्य आब्रह्मस्थानात् – ब्रह्मस्थानादारभ्य।

तथैव 'अणोरणीयान्' इति पात्रेणानापस्स्रावयित्वा शिष्टाद्भिस्सर्वत्र प्रोक्षयति ॥ ९ ॥

तथैवेत्यादि। तथैव पर्यग्निकरणवत्। पात्रेण – पुण्याहपात्रेण अनु – पर्यग्निकरणमनु – पश्चात्। पुण्याहजलेन प्रोक्षयित्वा (स्रावयित्वा) शिष्टाद्भिस्सर्वत्र गृहे प्रोक्षयति।

एवं वारुणात् भुवंगात् याम्यात् सौम्यादारभ्य पर्यग्न्याधावसृती स्याताम् ॥ १० ॥

एवमित्यादि। एवं – उक्तप्रकारेण। वारुणाद्भुवंगादित्यादि। पश्चिमादिद्वारञ्चेत् तदारभ्य पर्यग्निकरणमाधावस्रावञ्च कुर्यात्।

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ तृतीयप्रश्ने षोडशः खण्डः।

## अथ सप्तदशः खण्डः

'ये ते शतं वरुण – 'उदुत्तमं – 'अयाश्चाग्नेः – 'आपस्सृजन्तु स्निग्धानि' इति चत्वारो वरुणदेवत्याः ॥ १ ॥

पुण्याहजलप्रोक्षणानन्तरं होमप्रकारमाह 'येते शत' मित्यादिना । मन्त्रान्तरव्यावृत्त्यर्थं प्रतीकग्रहणम् ।

'विश्वे देवस्य - 'विश्वे अद्य' ति द्वौ वैश्वदेवौ ॥ २ ॥

'अतो देवाः – 'इदं विष्णुः' – त्रीणि पदा – 'विष्णोः कर्माणि – 'तद्विष्णोः परमं – 'तद्विप्रासः' इति षड्वैष्णवाः ॥ ३ ॥

द्वावाद्यावित्येके ॥ ४ ॥

'रुद्रमन्यं' 'त्र्यम्बक' मिति द्वौ रुद्रदेवत्यौ ॥ ५ ॥

'ब्रह्म जज्ञानं' – 'हिरण्यगर्भ' इति द्वौ ब्रह्मदेवत्यौ ॥ ६ ॥

'मिश्रवाससः' – 'एतान् घ्नतैतान्' इति कौबेरौ ॥ ७ ॥

'युवमेतानि' – 'अग्नीषोमौ – 'आन्यं दिवः' इति त्रयोऽग्नीषोमीयाः ॥ ८ ॥

'बृहस्पतिर्देवानां' – 'बृहस्पतिस्सोमः' – 'बृहस्पते अतियत् – उपयाम गृहीत' इति चत्वारो बार्हस्पत्याः ॥ ९ ॥

'त्रातारमिन्द्रं' - 'महाँ इन्द्रो य ओजसा' – 'महाँ इन्द्रोनृवत्' – 'भुवस्त्वमिन्द्र' – 'एन्द्रसानसि' – 'प्रससाहिषे' – 'अस्माकमिन्द्रः' – 'इन्द्रो भूदस्य – 'इन्द्रो द्यौः' – 'इन्द्रं प्रणयन्तं' – 'इन्द्रो वृत्रं' – 'इन्द्रो बभूव' – 'इन्द्रोऽस्मान्' इति त्रयोदशेन्द्राः ॥ १० ॥

'यमो दाधार' - 'नमस्ते निर्ऋतय' इति द्वौ याम्यौ ॥ ११ ॥

'मित्रस्य चर्षणी' – 'मित्रो जनान्' – 'प्रसमित्र' इति त्रयो मैत्राः ॥ १२ ॥

**भूमियज्ञदेवत्यादयो व्याहृत्यन्ता इज्यन्ते ॥ १३ ॥**

**तस्मात् द्युत्तरशतमाहुतयो वास्तुसवनस्य ॥ १४ ॥**

**अन्तहोममिति विज्ञायते ॥ १५ ॥**

अत्र प्रयोक्तृसौकर्यार्थमस्मन्मातामहैः श्रीनिवासयज्वभिः कृता कारिका च लिख्यते ।

'आघारान्ते वास्तुहोमं हुत्वा वास्तोष्पतीयकम् ।
पञ्चैव भूमिदेवत्यं व्याहृत्या स्वस्तिवाचनम् ॥

अहमग्नेति मन्त्रेण पर्यग्निकरणं चरेत् ।
वारुणं वैश्वदेवत्यं वैष्णवं रौद्रमेव च ॥

ब्राह्मं तथैव कौबेरमग्नीषोमीयमित्यपि ।
बार्हस्पत्यं तथा चैन्द्रं याम्यं मैत्रमपि क्रमात् ।
व्याहृत्यन्तं पृथक् हुत्वा अन्तहोमं समाचरेत्' ॥ इति

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने तात्पर्यचिन्तामणौ तृतीयप्रश्ने सप्तदशः खण्डः ।



# अथ अष्टादशः खण्डः

**अथ दशमे द्वादशे वाऽह्नि भवत्युत्थानम् ॥ १ ॥**

**अथेत्यादि । अथ** जातकर्मानन्तरम् । **दशमे द्वादशे वाऽह्नि** । दशमदिवसे द्वादशदिवसे वा – कालान्तरे वाऽपि कर्तव्यताज्ञापनार्थं **वाशब्दः** । **अह्नि भवतीत्युक्तत्वात्** – न रात्रौ ।

**गृह्यः** — 'द्वादशाहोत्थानपक्षे दशमैकादशेऽह्नि वा ।
स्नापनं गृहशुद्धिः स्यात् उत्थानश्चात्र वा भवेत्' ॥ इति

सूतकान्ते अरिष्टागाराद्बहिर्निष्क्रान्तस्य शिशोर्मंगलस्नानादिकमुत्थानमित्युच्यते । श्रीकृष्णमुद्दिश्य श्रीभागवते दशमस्कन्धे सप्तमेऽध्याये उक्तम् । **यथा** —

'कदाचिदौत्थानिककौतुकाप्लवे
जन्मर्क्षयोगे समवेतयोषिताम् ।
वादित्रगीतद्विजमन्त्रवाचकैः
चकार सूनोरभिषेचनं सती' ॥ इति

**अन्यत्र** — 'औत्थानिके कर्मणि यास्समागताः' ॥ इति च

**गृह्यः** — 'सूतिका संगवे चोर्ध्वं मुद्गपिष्टादिलेपनैः ।
शीतोष्णाभिः स्नापयेत्तां बहुशश्चाल्पवासस्सम्' (अन्यवाससः) ॥ इति

**तथैव जातकाग्निं समारोप्य यावन्त्यस्य कर्माणि तानि सर्वाणि मथित्वा अस्मिन्नेव कुर्यात् ॥ २ ॥**

**तथैवेत्यादि** । पूर्ववदुपावरोहेति जातकाग्निं समिधि ! 'अयं ते योनि' रि... अरण्यां वा समारोप्य सम्यक् रक्षेत् । **अस्य** कुमारस्य **यावन्त्युत्थानादी**... **कर्माणि सर्वाणि** उत्थानादिकर्माणि मथित्वा तस्मिन्नेवाग्नौ कुर्यात् ॥

**विसृज्य लौकिकाग्नावित्येके ॥ ३ ॥**

विसृज्येत्यादि । इदमशक्तविषयम् ।

**स्नात्वाऽऽगारं यथोक्तं शोधयेत् ॥ ४ ॥**

**स्नात्वे**त्यादि । स्वयं नद्यादौ स्नात्वा अरिष्टागारं **यथोक्तं** धर्मोक्त-प्रकारेण शोधयेत् ।

**क्षुरकर्मादिना शुद्धो भूमियज्ञमसगोत्रेण याजयेदित्येके ॥ ५ ॥**

**क्षुरकर्मादिना शुद्धः** इत्यादि ।

स्मृत्यन्तरे — 'ब्रह्महत्यादिपापानि तत्समानि बहून्यपि ।
केशानाश्रित्य तिष्ठन्ति तस्मात्केशान् प्रवापयेत्' ॥ इति

**भूमियज्ञमिति** । इदं दशमाहोत्थानविषयम् । आशौचापगमाभावात् । **असगोत्र**शब्दोऽज्ञातिपरः । यद्वा – असमानोदकः ।

**तथा हरणमौपासनस्य ॥ ६ ॥**

**तथे**त्यादि । **तथा** अनेन समारोपितस्य औपासनस्य पुनरारंभ उच्यते । यद्वा – हरणशब्देन बलिहरणं वैश्वदेवश्चोच्यते ।

**धातादि पञ्चवारुणं मूलहोमो भोजनं ब्राह्मणानाम् ॥ ७ ॥**

**धातादी**त्यादि । एनं कुमारं उत्थानेन कर्मणा संस्करिष्यामि **इति** संकल्प्य आघारं कृत्वा धातादि होमः । अन्यत् स्पष्टम् ॥

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ तृतीयप्रश्ने अष्टादशः खण्डः ।

———

## अथ एकोनविंशः खण्डः

**अथ नामकरणम्** ॥ १ ॥

**अथेत्यादि** । ननु – उपनयनात्पूर्वं कृत्याकृत्यदोषविचाराभावात् क संस्कारोऽयमुपपद्यत इति चेत् – सत्यम् । 'प्रजापतिः प्रजाकामस्तपोऽतप्यत इत्यारभ्य अग्निवाय्वादित्यादीनामुत्पत्तिं तेषां रेतस्स्कन्दनञ्चोक्त्वा 'स प्रजापति हिंशयं चमसमकरेत् इषुमात्रमूर्ध्वबिलमेव तिर्यञ्चा तस्मिन् रेतस्समसिंच तत उदतिष्ठत् । सहस्राक्षस्सहस्रपात् । तत्सहस्रेण प्रतिहिताभिः । स प्रजापति पितरमभ्या यच्छत् । तमब्रवीत् । कथमभ्यायच्छसीति । नाम कुर्वित्यब्रवीत् न वा इदमहीनेन नाम्ना अन्नमश्यामीति । सर्वैत्वमित्यब्रवीत् । भव इवे सहप' इत्यारभ्य भवशर्वादिनामकरणं सलिलादिमूर्तिप्रदानञ्चोक्तम् । **शतपथे** च 'अभूद्वा इदं सर्वं प्रतिष्ठा' इत्यारभ्य 'भूतानां पतिस्संवत्सरायादीक्षत भूता पतिरिहपतिरासीत् उषा पत्नी' त्यादिकमुक्त्वा 'भूतानां पतिस्संवत्सर उषसि रेतो सिंचत संवत्सरे कुमारोऽजायत । सोऽरोदीत् तं प्रजापतिरब्रवीत् कुमार रोदिषि यच्छ्रमात्तपसोऽधिजातोऽसीति । सोऽब्रवीत् अनपहतपाप्मा वा अहमा अविहितनामा नाम मे धेहीति । पाप्मनोऽपहत्या इति । तमब्रवीत् रुद्रोऽसी तदस्य नाम करोत् दशिस्तद्रूपमभवत्' इत्यारभ्य शर्वपशुपतिप्रभृतिनामक जननानन्तरमेव दृश्यते । अतोऽन्नप्राशनात्पूर्वं नामकरणम् ।

**आचत्वारिंशद्दिवसादापञ्चाशद्दिनाद्वा पाके नैनां नियुंजीत** ॥

**आचत्वारिंश** दित्यादि ॥

**वसिष्ठः** — 'आशौचं सूतके तस्यां संसर्गं यदि गच्छति ।
स्त्रियो मासमघं विद्यात्तच्च पुंसो न विद्यते' ॥ इति

**पैठीनसिः** — 'स्त्रीप्रसूतां स्नानतो मासादूर्ध्वं कर्माणि कारयेत्' । इति । आशौ गौरवाभिप्रायेण पुंप्रसवे चत्वारिंशद्दिनानि स्त्रीप्रसवे पञ्चाशद्दिनानि भांडस्प निषिद्ध्यन्ते ।

:— 'मासे चेद्रजसः स्रावे त्रिरात्रं पूर्ववद्व्रतम् ।
गर्भलेपस्स्रवेद्यावत् तावद्वा साऽशुचिर्भवेत्' ॥ इति

सूतिकाया दर्शनादिविषये ।

'दशाहं दर्शनाद्यञ्च सूतिकायाः सृजेत्ततः ।
अघान्तं स्पर्शमेवेति पितुस्तु यमलोद्भवे' ॥ इति

दशाहं सूतिकायाः दर्शनादिकं वर्जयेत् । दशाहानन्तरं स्पर्शमेव
र्जेत् । अपत्यद्वयजनने जनकस्यापि स्पर्शनं त्यजेत् ।

**अत्रैव शुभे पुन्नाम्नि नक्षत्रे परिस्तीर्याग्निं तथा आसीनस्याक्षतं मारस्य मूर्ध्नि विन्यस्य पञ्चवारुणं प्राजापत्यं स्विष्टाकारञ्च हुत्वा र्ववत् त्रिवृत्प्राशनम् ॥ ३ ॥**

अत्रैवेत्यादि ।

यासः— 'नामधेयं दशम्यान्तु केचिदिच्छन्ति सूरयः ।
द्वादश्यामथ वा रात्रौ मासे पूर्णे तथा परे ॥
अष्टादशेऽहनि तथा वदन्त्यन्ये मनीषिणः ।
ज्येष्ठा त्रिपूर्वा याम्यार्द्रा सार्पाग्नीन्द्राग्निभं मघा ॥
वर्ज्याः शुभेषु सामान्याद्विशेषो वक्ष्यतेऽधिकः ।
नवान्नाशन उद्वाहे न तु कृत्या मघाश्शुभाः ॥
कर्णवेधे पुंसवननामविद्योपनीतिषु ।
अष्टमस्था ग्रहा नेष्टा नाम्नि श्राद्धे व्ययायगाः ॥
उच्चग्रहोदये दृष्टे राशौ स्यान्नाम यत्कृतम् ।
तन्नामश्रवणाल्लोके प्रियन्तामिति नामधृक् ॥
मित्रराशिस्थितः सौम्यः मित्रराशिं यदीक्षते ।
तल्लग्ने नामधृग्लोके मर्त्यो मित्रत्वमाप्नुयात् ॥

मित्रराशिस्थितः पापः शत्रुराशिं यदीक्षते ।
तल्लग्ने नामधृङ्मर्त्यः सर्वानिष्टत्वमाप्नुयात् ॥

नीचग्रहोदये दृष्टे राशौ स्यान्नाम यत्कृतम् ।
तन्नामश्रवणाल्लोके दुष्टो भवति नामधृक् ' ॥ इति

मनुः — 　'नामधेयं दशम्यान्तु द्वादश्यां वाऽथ कारयेत् ।
पुण्ये तिथौ मुहूर्ते वा नक्षत्रे वा शुभान्विते ' ॥ इति

**परिस्तीर्याग्नि**मिति —

गृह्यः — 　'वास्तुहोमोत्थाननामकर्माण्येकानले यथा ।
होमस्त्वलौकिके चेद्वै वास्तुहोमः पृथक् भवेत् ' ॥

समानतन्त्रश्चेत् आघारं हुत्वा पुनः परिस्तीर्य । **तथा आसीनस्य** उपनयनवत् दक्षिणे आसीनस्य ।

**दीर्घान्तमभिनिष्ठान्तं वा घोषवदाद्यन्तरं द्विः प्रतिष्ठितान्तस्स्थं मृष्टाक्षरपदस्वरं द्विवर्णं चतुर्वर्णं वा नाम शस्यते कुमारस्य ॥ ४ ॥**

**दीर्घान्त**मित्यादि । **दीर्घान्तं** दीर्घस्वरान्तं, भूरिश्रवाः — सुगर्भश्रवा इत्यादि । **अभिनिष्ठान्तं** ह्रस्वान्तं — विसर्गान्तमिति केचित् ।

'क्तक्तवतू निष्ठे ' त्युक्तनिष्ठाप्रत्ययान्तं वा — ' विष्णुदत्तः ' इत्यादि **घोषवदाद्यन्तरं** । ' घझढाश्च धभौ घोषाः चतुर्थः छन्दसस्तुभ ' इति ।

' घझढाश्च धभौ घोषावन्तस्था यरलवाः स्मृताः ' ।
' प्रथमद्वितीया अघोषा ' इति प्राति शाख्यम् ॥

वर्गतृतीया वर्गचतुर्था वा घोषाः । **द्विःप्रतिष्ठितान्तस्स्थम्** । आदौ मध्ये वा घोषवत्—आदौ मध्ये वा द्विःस्थितान्तस्थाक्षरं **मृष्टाक्षरपदं** राघवेन्द्रः — यादवेन्द्र — ' इत्यादि । **द्विवर्णं चतुर्वर्णं वा** । युग्माक्षरस्योपलक्षणम् नाम शस्तं भवेत् । कुमारस्येत्युक्तत्वात्—कुमार्याः त्रिवर्णपञ्चवर्णादि अयुग्मा क्षरान्तं नाम शस्तमिति दर्शितम् । ' वासवदत्ता — हरिणी देवी ' इत्यादि ।

**यथोक्तं 'मम नाम प्रथम' मिति गोत्रनामयुक्तं तदर्हं नाम कुर्यात् ॥ ५ ॥**

**यथोक्त**मित्यादि । विश्वामित्रकाश्यपभारद्वाजगौतमेत्यादिगोत्रनामसहितं विष्ण्वाद्युत्तमदेवतासंबन्धि–पितृभ्रातृसंबन्धि वा अन्यमनुष्यसंबन्धि वा दीर्घान्तमित्यादिना **यथोक्त**नामधेयं 'मम नाम प्रथम' मिति मन्त्रान्ते संबद्ध्य कुर्यात् ।

**देवलः** — 'नामकरणं कुलदेवतानामयुक्त' मिति ।

**आश्वलायनः** — 'युग्ममित्येव पुंसामयुग्ममित्येव स्त्रीणामभिधानञ्च' ॥ इति

**मनुः** — 'मंगल्यं ब्राह्मणस्य स्यात् क्षत्रियस्य बलान्वितम् ।
वैश्यस्य पुष्टिसंयुक्तं शूद्रस्य तु जुगुप्सितम् ॥

'स्त्रीणां सुखोद्यमक्रूरं विस्पष्टार्थं समाहरेत् ।
मंगलं दीर्घवर्णान्तमाशीर्वादाभिधानवत्' ॥ इति

**किञ्च** — 'मार्गशीर्षादिमासेषु जन्मयुक्तेषु सर्वदा ।
केशवादीनि नामानि कर्तव्यं मानुषेऽपि च' ॥ इति

**व्यासः** — 'कृष्णोऽनन्तोऽच्युतश्चक्री वैकुंठोऽपि जनार्दनः ।
उपेन्द्रो यज्ञपुरुषो वासुदेवस्तथा हरिः ।
योगीशः पुंडरीकाक्षो मासनामान्यनुक्रमात्' ॥ इति

**द्वे नामनी तु नक्षत्रनाम रहस्यमग्न्याधानात्परं आहिताग्न्यादिस्वकर्मान्तं प्रकाशं नाम भवेत् ॥ ६ ॥**

**द्वे नामनी**त्यादि । अश्विन्यां जात आश्वयुजः – भरण्यां जात आपभरण इत्यादि नक्षत्रनाम रहस्यम् । अत्र **बोधायनः** । 'नक्षत्राणि रोहिणी मृगशीर्ष मघा चित्त ज्येष्ठश्रवण शतभिषक्षु प्रथमाक्षरवृद्धिः । रोहिण्यां जातो रौहिणेय इत्यादि । तथा उत्तरातिष्याश्रेषाहस्तविशाखानूराधाऽषाढाश्रविष्ठासु प्रकृतिवत्–तिष्येषु तिष्याय' इत्यादि । तथा – फल्गुन्योः फल्गुनाय इति स्वातीपुनर्वस्वोः स्वातये पुनर्वसव इति । मूलार्द्रयोः 'मूलकाय आर्द्रकाय' इति ।

प्रोष्ठपदासु प्रोष्ठपादायेति वा । भरण्यामपभरणायेति । कृत्तिकायां कृत्तिकायेति व्याख्यातः' इति[1]। एवं नक्षत्रनामानि 'तस्माद्विनामा ब्राह्मणोऽर्धुकः' इति श्रुतिः। स्वाध्यायपरस्य सामान्येनाहिताग्न्यादि नाम नक्षत्रनाम चास्तीत्याशंक्य पुण्याहादिकर्मसु तेषां व्यवहारयोग्यता नास्तीति ज्ञापयितुं नक्षत्रनाम रहस्यमित्युक्तम्। अग्न्याधानात्परं आहिताग्न्यादेः स्वकर्मान्तं नाम प्रकाशं नाम भवेत्। यथा - अग्न्याधाने कृते आहिताग्निः, सोमे कृते सोमयाजी वाजपेये कृते वाजपेययाजी, अतिरात्रे कृते अतिरात्रयाजी इत्यादि—यद्वा रहस्यमित्युक्तत्वात् अग्न्याधानात्पूर्वमुपांशूच्चरेत् इति ।

**अक्षतोदकपुष्पान्नरसगन्धसमैः पाणिभ्यां दक्षिणेनराभ्यां कुमारस्य 'शांकरिरिव' इति कन्यायाः 'नन्देवानन्ददायीनी' इति वदन् पत्त आरभ्य क्रमेण देहांगसन्धौ शिरसि च निक्षिपेत्** ॥ ७ ॥

**अक्षते**त्यादि । अन्नरसशब्देन दूर्वा उच्यते । **ऋग्ब्राह्मणे** । 'अन्नस्य रस इव रसम् । अथो यद्दूर्वाः' इति । पाणिभ्यां गृहीत्वा कुमारस्य पादत आरभ्य क्रमेण 'शांकरिरिव सर्वत्राजय्यो भव' इति पादयोः । 'नरनारायणाविव तपोबलोत्कृष्टो भव' इति जान्वोः । केशलोकेशाविव सर्वभूताधिपतिर्भव' इति कट्युभयपार्श्वयोः । बृहद्ब्रह्मगुणा इव सर्वार्थसंसिद्धो भव' इति मूर्ध्नि च एवं देहांगसन्धौ शिरसि च क्षिपेत् ।

**पुण्याहम्** ॥ ८ ॥

**पुण्याह**मिति । पुण्याहं कुर्यात् । ब्राह्मणानन्नेन तर्पयति । दुकूलं तन्तुना निर्मितं हस्तसूत्रं कटिसूत्रं वा 'बृहत्साम' इति बद्ध्वा पुण्याहं कुर्यात् इति केचित् ।

अथ कर्णवेधः ।

'कर्णवेधे शुभं रौद्रं नाश्विमूलकवायुभम् ।
तद्दिनर्क्षादिसंधेः प्राक् नेष्टो मध्यंदिनेऽपि च ॥

1. एतद्विस्तरः प्रथमप्रश्न सप्तमखण्ड टिप्पण्यां (पुट १०५) द्रष्टव्यः ।

दशमे द्वादशे वाऽह्नि षोडशे वा प्रशस्यते ।
कर्णस्य वेधनं मासि सप्तमे मासि चाष्टमे ' ॥ इति

वसिष्ठः — 'वेधनन्तु न कर्तव्यं सन्ध्यारात्र्योस्तथैव च ।
पूर्वाह्णे वा प्रशस्तं हि मध्याह्ने च विशेषतः ॥
सिंहालिकुंभा नेष्यन्ते निशायामपि नेष्यते ' ॥ इति

स्मृत्यन्तरे — 'कार्तिके मासि पौषे वा चैत्रे वा फाल्गुनेऽपि वा ।
कर्णवेधं प्रशंसन्ति शुक्लपक्षे शुभे दिने ॥

शिशोरदन्तजातस्य मातुरुत्संगसर्पिणः ।
सौचिको वेधयेत्कर्णौ सूच्या द्विगुणसूत्रया ॥

'हस्ताश्विनीस्वातिपुनर्वसूषु
तिष्येन्दुचित्राहरिरेवतीषु ।
चन्द्रेऽनुकूले गुरुशुक्रवारे
कर्णौ तु वेध्यौ विमलेज्यलग्ने ' ॥ इति

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्तचार्यवर्येण श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने तात्पर्यचिन्तामणौ तृतीयप्रश्ने एकोनविंशः खण्डः

